प्रकाशकः—
श्रीमती सावित्रीदेवी बागड़िया ट्रस्ट
५ लेनिन सरणी
कलकत्ता-७०००१३

वितरकः—
रामलाल कपूर ट्रस्ट
बहालगढ़
(सोनीपत—हरयाणा)

प्रथम संस्करण ५००
मार्गशीर्ष सं० २०३९
दिसम्बर, सन् १९८२
मूल्य १००–००

मुद्रकः—
शान्तिस्वरूप कपूर
रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत)

ASX

# उपोद्घातः

## १. वेदः

स्मृतैतिहासिककालात् प्राग् भारते वर्षे सर्वप्रवृत्तिमूला वेदा आसन्निति न तिरोहितं विपश्चिताम् । प्रतिजनश्रद्धाभाजस्ते परमदेवस्याजरकाव्यपदवीं लेभिरे ।[1] अभ्युदय-निःश्रेयसनिमित्तस्य धर्मस्य[2] निगमयितारो वेदा एवेति घोषयामासुर्धर्मशास्त्रकृतः[3] । स्मृतिकारा ऐतिह्यलेखका दार्शनिकाश्चाचार्या अस्य परमपवित्रज्ञानराशेर्महिमानं मुक्तकण्ठेनाजेगीयन्त ।[4] वेदानामध्ययनं सर्वेषां द्विजानाम् अपरिहार्यं कर्त्तव्यमासीद्, एतत्कर्त्तव्यच्युताश्च दण्ड्या बभूवुः[5] । वेदस्य सर्वज्ञानमयत्वम् आस्थाय सर्वाणि शास्त्राणि स्वस्वमूलमात्रेनानुसंदधति । किं बहुना, **भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति** (मनु० १२।९७) इत्यातस्थिरे श्रुतिप्रामाण्यवादिनः । अतस्तद्रक्षणार्थो महान् प्रयासो व्यधायि वैदिकैः ।

## २. वेदरक्षोपायाः

तस्यैतस्यार्यजातेः प्राणभूतस्य वेदस्य स्वरूपरक्षणार्थ एव प्रथमः प्रयासः प्रारब्धः । स्वाध्यायोऽध्येतव्य इति नियमो विहितो द्विजानां कृते । किम्फलकं तदध्ययनमित्याकाङ्क्षायामवोचद् याज्ञवल्क्यः—

**यावन्तं ह वै इमां पृथिवीं वित्तेन पूर्णां ददद् लोकं जयति त्रिभिस्तावन्तं जयति भूयांसं चाक्षय्यं च य एवं विद्वान् अहरहः स्वाध्यायमधीते तस्मात् स्वाध्यायोऽध्येतव्यः** । शत० ब्रा० ११।५।६।१॥

---

१. देवस्य पश्य काव्यं न ममार न जीर्यति । अथर्व० १०।८।३२॥

२. यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । वैशेषिक० १।१।२॥

३. धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः । मनु० २।१३॥

४. स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः । मनु० २।७॥
अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ महा० शा० २३२।२४॥
तद्वचनादाम्नायस्य प्रामाण्यम् । वैशेषिक० १।१।५॥
बुद्धिपूर्वा वाक्यकृतिर्वेदे । वैशेषिक ६।१।१॥

५. योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ मनु० २।१६८॥

अपि च,स्वरवर्णाद्युच्चारणशुद्ध्यर्थं शिक्षानाम्नो वेदाङ्गस्याविर्भावः समजनि। कालान्तरे वेदेषु प्रक्षेपवारणायाष्टानां विकृतीनां प्रचारस्य महान् प्रयत्नो व्यधायि वैदिकैरनूचानैः। वेदमन्त्राणां पदार्थसंरक्षणार्थं (पदार्थावबोधार्थं) व्याकरण-निरुक्त-योर्वेदाङ्गयोरुद्भवो विकासश्च संजात,।[1] अत एव वेदं केवलमधीयानोऽर्थमप्रतिपद्यमानो निन्द्यते।[2] कर्मकाण्डबहुले भारतीयसमाजे यज्ञस्य प्राधान्याद् ऋग्यजुःसामानि तत्र तत्र कर्मसु विनियोक्तव्यानि बभूवुः। यथार्थं मन्त्रा विनियुज्यन्ते—**एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृग् यजुर्वाभिवदति** (गो० ब्रा० २।२।६) इति न्यायात्। कर्मकाण्डान्तर्गतवेदमन्त्राणां प्रासङ्गिकार्थावबोधार्थं ब्राह्मणग्रन्थानां प्रणयनं जातम्। यज्ञप्रसङ्गवशादेव खलु कल्प-छन्दो-ज्योतिर्नामधेयानां वेदाङ्गानाम् उद्भवो विकासश्च यथाकालं जातः। तदेतत् सर्वं यास्कः समासेन प्रतिपादयामास—

**साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च।** निरु० १।२०॥

त्रयोऽत्र कालविभागा लक्ष्यन्ते—दर्शनकालः, सम्प्रदायकालः, समाम्नायकालश्चेति। तत्र प्रथमस्तावद् दर्शनकालः,—मानवसभ्यताया उषःकाले पदार्थान् यथास्वभावं जानन्तो विमलशेमुषीका ऋषय ऋग्यजुःसामरूपान् रचनात्रैतयुतान् मन्त्रान् ददृशुः। सार्थानां मन्त्राणां द्रष्टारोऽत्रासन् ऋषयः। अथापरः सम्प्रदायकालः—सार्थानां मन्त्राणां द्रष्टारः स्वापेक्षयाल्पसामर्थ्यवद्भ्यो जनेभ्यो मौखिकेनोपदेशेन सार्थान् मन्त्रान् सम्प्रादुः। ततस्तेऽवरकाला अपि लब्धासाक्षात्करणसामर्थ्याः श्रुतर्षिपदभाजः शिष्योपाध्यायिकया वृत्त्या मन्त्रसम्प्रदानात् सम्प्रदायानां चरणाभिधानां प्रवर्तयितारो बभूवुः। चरणभेदप्रयोजकस्तु याज्ञिकप्रक्रियाभेदो बभूवेति सम्भाव्यते। अथान्तिमः समाम्नायकालः—सम्प्रदायकालानन्तरं संजाता जना मौखिकोपदेशवृत्त्या मन्त्रान् तत्पदार्थांश्च गृहीत्वा चिरं धारयितुं नापारयन्त। ततो वेदचिरसंरक्षणसमुत्सुकास्तत्तत्सम्प्रदाये वर्तमाना आचार्या निघण्टून्, शाखाः सब्राह्मणा, वेदोपकारकाणि च वेदाङ्गाभिधानि शास्त्राणि ग्रन्थरूपेण निबबन्धुः। तदेवं षडङ्गानि यज्ञप्रसङ्गे वेदोपकारकत्वेन प्रादुरभूवन्निति निष्कृष्यते।

---

१. रक्षार्थं वेदानामध्येयं व्याकरणम्। महा० पस्पशा०॥ अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते। निरु० १।१५॥

२. स्थाणुरयं भारहारः किलाभूद् अधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥ निरु० १।१८॥

## ३. ०. वेदाङ्गानि

### ३. १. वेदात् पृथग्भूतानि

वेदान् स्वरूपतोऽर्थतश्च रक्षितुकामा आचार्या वेदाङ्गानि निर्ममिरे इत्युक्तम्। दुर्गः खल्वेतदनुमोदयमान आह—'**सर्वकामप्राप्त्यादिर्मोक्षान्तः पुरुषार्थो वक्तव्य इति वेदः प्रवृत्तः। तत्परिज्ञानाय वेदाङ्गानि प्रवृत्तानि**' (दुर्गवृत्ति निरु० १।१)। सायणोऽपि तदेव संवदते—'**अतिगम्भीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि**' (ऋग्वेदभाष्यभूमिका)। तानि चैतानि स्वस्वनियतविषये प्रवृत्त्या वेदस्योपकुर्वन्ति तदवगमनेनेति वेदाङ्गत्वेन प्रसिद्धानि। ततो नैतेषां साक्षाद् वेदावयवत्वं चक्षुरादीनामिव पुरुषस्य। यत्तु कुमारिलः पतञ्जलिनोद्धृतं '**ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च** (महा० पस्पशा०)' इत्यागमवचनम् उद्दिश्य प्राह—

"**वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि षट्।**
**भवेद् वा तदभिप्राया षडङ्गाध्ययनस्मृतिः** ॥ तन्त्र० १।३।२४॥

**तद दध्नो दधित्वम् इत्येवमादीनि हि वैदिकार्थवादान्तर्गतान्येव हि निरुक्तव्याकरणादीनि। तैः सह विधायको वेदोऽवगन्तव्य इति स्मृत्यर्थो भवेद्**" इति, तन्न युक्तं प्रतीयते, महाभाष्यकृदुपक्रमोपसंहारविरोधात्। तथा हि—तत्र भवान् पाणिनीयानुशासनस्य वेदाङ्गत्वमास्थाय तदध्ययनप्रयोजनमुपक्रम्योपसंहरति—'**प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति। तस्माद् अध्येयं व्याकरणम्**' इति (महा० पस्पशा०)।

### ३. २. वेदाङ्गप्रवृत्तिकालः

वेदाङ्गप्रवृत्तेः कालः समनियतरूपेण न निर्धारितोऽद्यापि विद्वद्भिः। षडङ्गानां नामग्राहं प्राचीनतम उल्लेखो मुण्डकोपनिषदि (१।१।५) अपरविद्याप्रसङ्ग उपलभ्यते। तथाहि—

**तत्रापरा विद्या ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति।**

अपि च—

**शिक्षाव्याकरणनिरुक्तछन्दःकल्पज्योतिषाणि**—इति देवलः।[1]

**शीक्षां व्याख्यास्यामः**। तै० आ० ७।२॥

**तस्मादियं व्याकृता वाक्**। तै० सं० ६।४।७।३॥

---

१. संस्कृत व्याकरण शास्त्र का इतिहास पृ० ५७।

**स वै एष आत्मा हृदि । तस्यैतदेव निरुक्तं हृदि अयमिति** । छा० उप० ८।३।३।।

इत्यादीनि वचांसि वेदाङ्गानाम् उपनिषत्कालेऽस्तित्वं बोधयन्ति । सत्यव्रत-सामश्रमी तु कल्पयति—'**सर्वेषामेव वेदानामेकैकं निदानसूत्रमासीदेवैर्तीह तानि लुप्तानीव, सन्त्येव वास्मदगोचराणीति । तदेतेभ्य एव निरुक्तादीनि वेदाङ्गशास्त्राणि समुद्भूतानि**' इति[1] ।

**षडङ्गविदस्तत् तथाधीमहे** । गो० ब्रा० १।१।२७।।

**वेदाङ्गानि षट्** । प्रस्थानभेदे ।

**इमे सर्वे वेदा निर्मिताः सकल्पाः···सनिरुक्ताः···** । गो० ब्रा० १।२।१०।।

**नाषडङ्गविदस्तत्रास्ति** । रामायण बालकाण्ड ७।१५।।

इत्येवमादिषु स्थलेषु षडङ्गशब्देन शिक्षादिशास्त्राणि समुल्लिख्यन्ते ।

### ३. ३. वेदाङ्गानामुपकारकत्वम्

शिक्षा तावद् अकारादिवर्णानाम् उदात्तादिस्वराणां ह्रस्वादिमात्राणां कण्ठादिस्थानानां स्पृष्टाद्याभ्यन्तराघोषादिबाह्यप्रयत्नानां ग्रस्तादिदोषाणां माधर्यादि गुणानां चोपदेशेन तत्र तत्र वैगुण्यपरिहारायापेक्ष्यते । यथोपदेशमधीताः प्रयुज्यमानाश्च मन्त्रा अपूर्वाङ्गभावाय कल्पन्ते नान्यथेति इन्द्रशत्रुदृष्टान्तेन[2] सुतरां व्यज्यते । पाणिनीयशिक्षादय उपचत्वारिंशाः शिक्षाग्रन्थाः प्रसिद्धास्तेषु द्वित्राः सम्प्रति मुद्रिता उपलभ्यन्ते । ऋक्प्रातिशाख्यादयोऽपि ग्रन्थाः शिक्षाव्याकरणछन्दःप्रतिपादनपरत्वाद् वेदाङ्गेष्वेवान्तर्भाव्यन्ते[3] ।

यथाशिक्षमधीतस्य वेदस्याक्षरसंख्यामात्रापादव्यवस्थापरिज्ञानायापेक्ष्यते छन्दःशास्त्रम् । याज्ञे कर्मणि तत्र तत्र छन्दो विशेषैरनुष्ठेया विधयः श्रूयन्ते । तद् यथा—**गायत्रीभिर्ब्राह्मणस्यादध्यात् त्रिष्टुभी राजन्यस्य जगतीभिर्वैश्यस्य** (तै० ब्रा० १।१।९।६) इति । तत्राक्षरेयत्तामात्रापादव्यवस्थासाध्यो गायत्र्यादिभेदश्छन्दःशास्त्रमन्तरेण न शक्यतेऽवगन्तुम् । अनवगतच्छन्दाश्चेन् मन्त्रं प्रयुञ्जीत, न फलम् अवाप्नुयात् । अपि खलु तत्र महान् दोष उक्तः । तथा हि—

**यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा पद्यति प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति** । आर्षेयब्राह्मण आरम्भे ।।

---

१. निरुक्तालोचनम् पृ० १९८-१९९ ।

२. द्र०—'दुष्टः शब्दः' इत्यादिसन्दर्भो महाभाष्यपस्पशायाम् ।

३. कृत्स्नं च वेदाङ्गमनिन्द्यमार्षम् । ऋ० प्रा० १४।६९।।

छन्दःशास्त्रेषु पिङ्गलच्छन्दः प्रसिद्धम्[1]। ऋग्वेदप्रातिशाख्ये निदानोपनिदान सूत्रयोश्च छन्दोविषयो निरूप्यते[2]।

कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्त्या बौधायनादिसूत्रं कल्पशब्देनाभिधीयते। यथायथमधीतस्य परिज्ञातछन्दस्कस्यापि कर्मविशेषे विनियोगपरिज्ञानाय कल्पोऽपेक्ष्यते। तद् यथा—इषेत्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि—इत्यादिविनियोगं विज्ञायैव मन्त्रः शक्यते प्रयोक्तुम्। श्रौत-गृह्य-धर्मभेदात् त्रिविधः कल्पः। शुल्बसूत्राणि च श्रौतपरिशिष्टानीति पृथग् न गण्यन्ते। यद्यपि प्रतिशाखं स्वस्वश्रौत-गृह्य-धर्मसूत्रैर्भाव्यम् इति नियमः, तथापि प्रायेणोत्सन्नत्वात् तानि नोपलभ्यन्ते। तत्र श्रौत-गृह्य-धर्मसूत्रेषु यथासंख्यं दर्शादियागोपनयनादिसंस्कारवर्णाश्रमनियमादिविषया निरूप्यन्ते। सम्प्रत्युपलभ्यमानं कल्पवाङ्मयं संक्षेपतोऽनुवर्ण्यते—

**ऋग्वेदस्य**—आश्वलायन-शाङ्खायन-कौषीतकि-श्रौतगृह्यसूत्राणि।

**शुक्लयजुर्वेदस्य**—कात्यायनश्रौतसूत्रं पारस्करगृह्यसूत्रं च।

**कृष्णयजुर्वेदस्य**—बौधायन-आपस्तम्ब-हिरण्यकेशि ( सत्याषाढ ) -वैखानस-भारद्वाज-मानव-वराह-श्रौतसूत्राणि, बौधायन-आपस्तम्ब-हिरण्यकेशि-भारद्वाज-मानव-काठक-गृह्यसूत्राणि, बौधायन-आपस्तम्ब-धर्मसूत्राणि च।

**सामवेदस्य**—आर्षेय ( मशक ) -लाट्यायन-द्राह्यायण-जैमिनीय-श्रौतसूत्राणि, गोभिल-खादिर-जैमिनीयगृह्यसूत्राणि च।

**अथर्ववेदस्य**—वैतानश्रौतसूत्रं कौशिकगृह्यसूत्रं च। गौतम-वसिष्ठ-विष्णुधर्मसूत्राण्यप्युपलभ्यन्ते।

श्रुति(ब्राह्मण) विहितकर्माङ्गभूतकालपरिज्ञानाय ज्यौतिषशास्त्रमपेक्ष्यते। तथा हि ब्राह्मणे विधयः श्रूयन्ते—**वसन्ते ब्राह्मणोऽग्नीन आदधीत** (तै० ब्रा० १।१), **एकाष्टकायां दीक्षेरन्, फाल्गुनीपूर्णमासे दीक्षेरन्** (तां० महाब्रा० ५।९।१७), **कृत्तिकास्वग्निम् आदधीत** (तै० ब्रा० १।१।२।१)। तत्र संवत्सर-ऋतु-मास-पक्ष-तिथि-नक्षत्रादिकालविशेषपरिज्ञानार्थं ज्यौतिषशास्त्रम् उपयुज्यते। तथा चाह भास्कराचार्यः—

**वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यतः स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्॥**
सिद्धान्तशिरोमणि॥

वेदाङ्गज्यौतिषकारः स्वशास्त्रस्य वेदाङ्गेषु श्रेष्ठत्वं प्रतिपादयन्नाह—

---

१. वैदिक-छन्दोमीमांसा' ग्रन्थः साम्प्रतिक वैदिकछन्दोग्रन्थेषूपयोगितमो विद्यते।
२. सायणीय ऋग्वेदभाष्यभूमिका।

**यथा शिखा मयूराणां नागानां मणयो यथा ।**
**तद्वद् वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम् ॥** वेदाङ्ग ज्योतिष ॥४॥

सम्प्रत्युपलभ्यमानो वेदाङ्गज्यौतिषनामा ग्रन्थ ऋग्यजुर्भ्यां सम्बद्धो बहुधा-स्पष्टः सम्भवतो लगधकर्तृकः ख्रीष्टाब्दात् पूर्वस्यां चतुर्दशशताब्द्यां निर्मित इत्यनुमीयते । अन्येऽपि ज्यौतिषग्रन्थाः सूर्यसिद्धान्त-सिद्धान्तशिरोमणिप्रभृतयः सम्प्रत्युपलभ्यन्ते ।

व्याकरणं प्रकृतिप्रत्ययविभागकल्पनया वैदिकपदस्वरूप-तदर्थपरिज्ञानायापेक्ष्यते । सायणस्तैत्तिरीयश्रुतेरेकाम् आख्यायिकाम् उद्धृत्य व्याकरणस्य स्वरूपं प्रदर्शयामास । तथाहि—

**वाग् वै पराच्यव्याकृतावदत् ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुर्विति । ···तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्मात् इयं व्याकृता वाग् उद्यते ।** तै० स० ६।४।७।३॥

अयमाशयः—अग्निमीडे इत्यादिवाक् वाक्य-पद-प्रकृति-प्रत्ययादिविभागकारिशास्त्राभावाद् विभागरहितासीत् । इन्द्र एनां मध्यतो विच्छिद्य वाक्य-पद-प्रकृति-प्रत्ययविभागान् प्रदर्शयामास । तस्यानुकुर्वद्भिः पाणिन्यादिभिरपि तथैव व्याकृतेदानीमपि पठ्यते ।

प्राचीनकाले वेदाङ्गानि व्याकरणानि बहून्यासन्, परमद्य पाणिनीयव्याकरणमेवैकाकि वेदाङ्गपदभाग् दृश्यते, अन्येषु लौकिकमात्रपदानां व्याकृतित्वात् । महाभाष्यपस्पशायां पतञ्जलिनोपन्यस्तप्रयोजनानि पाणिनीयव्याकरणस्य वेदाङ्गत्वं सुतरां साधयन्तीति दिङ्मात्रमत्र निदर्श्यते—तथाहि—

**रक्षार्थं वेदानामध्येयं व्याकरणम् । लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यति । ऊहः खल्वपि—न च सर्वैलिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । तेऽवश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः । तान् नावैयाकरणः शक्नोति विपरिणमयितुम् । आगमः खल्वपि—ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च । प्रधानं च षड्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान् भवति ।**

तथैवान्येष्वपि प्रयोजनेषु पतञ्जलिर्वैदिकान्येवोदाहरणानि विन्यस्तवान् ।

यथायथोच्चारण-छन्दोविचय-विनियोग-कालविभाग-शब्दस्वरूपाणां पूर्वोक्तैर्वेदाङ्गैः परिज्ञाने लब्धेऽपि यावद् वेदार्थो नाधिगम्येत, तावद् वेदोऽनग्नाविव शुष्कैधोऽकृतकार्येव तिष्ठेत् । तस्मादर्थपरिज्ञानाय निरुक्तमपेक्ष्यते । अपि च वेदाङ्गप्रवृत्तेः प्रधानप्रयोजककर्मकाण्डाधारभूतविनियोगोऽपि मन्त्रार्थज्ञानादृते न सिध्येत् । अत एवोक्तं जैमिनिना—

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्** । पू० मी० ६।१।३६॥

यद्यपि व्याकरणमपि शब्दार्थबोधसहायस्तथापि साधुशब्दस्वरूपोपपत्तिरेव तस्य मुख्यं प्रयोजनम् । अत एव यास्को व्याजहार—**व्याकरणस्य कार्त्स्न्यम्** (निरु० १।१५) इति ।

## ४. ०. निरुक्तम्

### ४. १. निर्वचनविद्याया प्राचीनता

निर्वचनं नाम शब्दस्य यथार्थं व्युत्पत्तिः । इयं विद्या भारतीयवाङ्मये प्रत्नतमात् कालादारभ्याद्य यावत् सर्वत्रानुस्यूता दरीदृश्यते । प्रथमतोऽस्या बीजानि वेद एवोपलभ्यन्ते । तद्यथा—

**यज्ञेन यज्ञमयजन्त देवाः** । ऋ० १।१६४।५॥

**वात आ वातु भेषजम्** । ऋ० १०।१८६।१॥

**केतपूः केतं नः पुनातु** । मा० सं० ११।४॥

**येन देवाः पवित्रेणात्मानं पुनते सदा** । साम० उ० ५।२।८५॥

**तीर्थैस्तरन्ति** । अथर्व० १८।४।७॥

सोम-सत्रादिविशालयागावसर आयोजितेषु ब्रह्मोद्येषु निर्वचनविद्यायाः प्रचुरावकाशत्वाद् महान् विकासोऽजायत । अत एव ब्राह्मणग्रन्थेषु निर्वचनबाहुल्यम् उपलभ्यते । ब्राह्मणवर्त्तिनिर्वचनबाहुल्यात् शबरोद्धृतब्राह्मणलक्षणेषु[1] निर्वचनमपि समाविश्यते । यास्कः खल्वपि स्वप्रोक्तनिर्वचनान्युपोद्वलयितुं ब्राह्मणोक्तानि निर्वचनानि तत्र तत्रोपदर्शयति । उदाहरणरूपेणात्र कानिचन ब्राह्मणोक्तानि निर्वचनान्युपन्यस्यन्ते—

**यदरोदीत् तद् रुद्रस्य रुद्रत्वम्** ॥ तै० सं० १।५।१।१॥ निरु० १०।५॥

**तद् यदाभिवृं त्रमशकद्धन्तुं तस्माच्छक्वर्यः** । कौषी० ब्रा० २३।२॥ निरु० १।८॥

**तेनासुनासुरानसृजत् तदसुराणामसुरत्वम्** । तै० ब्रा० २।३।८।२॥ निरु० ३।८॥

**यदपश्यत् तस्मादेते पशवस्तेष्वेतमपश्यत् तस्माद्ध्वैते पशवः** । शत० ब्रा० ६।२।१।४॥ निरु० ३।१६॥

**आपेरोंकारः सर्वमाप्नोतीत्यर्थः** । गो० ब्रा० १।४।१४-२०॥

**स वा एष आत्मा हृदि । तस्य तदेव निरुक्तम्—हृदि अयमिति तस्माद् हृदयम्** । छा० उप० ८।३।३॥

अन्येष्वपि प्राचीनार्वाचीनग्रन्थेषु निर्वचनानि समुपलभ्यन्ते । तदत्रोदाहरणद्वयेन विरम्यते—

---

१. पू० मी० २।१।३३ शाबरभाष्यम् ।

**मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।**
**एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ मनु० ५।५५॥**

**महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।**
**निरुक्तमस्य यो वेद सर्वपापैः स मुच्यते ॥ महा० आदि० १।१।२७०॥**

निर्वचनविद्याया अयं सदुपयोगो दुरुपयोगो वेति सुधियो विभावयन्तु । नैरुक्ता इमां विद्यां परिष्कारपुरःसरं चरमोत्कर्षम् अनैषुरिति ध्रुवम् ।

## ४. २. निरुक्तलक्षणम्

आचार्या वेदेभ्यः पदान्याहृत्य निघण्टुसंज्ञकान् शब्दसंग्रहान् प्रास्ताविषुः, ततस्ते स्वस्वनिघण्टुभाष्याणि निरुक्ताभिधानि प्राणैषुः । निरुक्तपदप्रयोगः शास्त्रविशेषे तत् प्रतिपादितव्युत्पत्तिमात्रे[2] चार्थे उपलभ्यते । निघण्टुनिरुक्तशब्दयोः प्रयोगे प्राचीनाचार्याणामुपचारो नैकरूपं भजति । केचित् तावद् निघण्टुपदं निरुक्तार्थे प्रायुञ्जत, अन्ये पुनस्तद्विपर्ययेण निरुक्तपदं निघण्ट्वर्थे ।[3] मधुसूदनो निघण्टुं निरुक्तेऽन्तर्भावयति । तथा हि—**एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव** । प्रस्थानभेदे ॥

सायणः खल्वपि निघण्टुनिरुक्तयोरुभयोर्वेदाङ्गनिरुक्तत्वं प्रतिपद्यमानो निरुक्तं द्विधा परिभाषयति । तथा च निघण्टुमुद्दिश्याह—**अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्** (ऋग्वेदभाष्यभूमिकायाम्) इति । गवादिदेवपत्न्यन्ते निघण्टुसंज्ञके ग्रन्थे पदार्थावबोधाय परापेक्षाभावाल्लक्षणसमन्वयः । पुनर्निरुक्तमुद्दिश्याह—**एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेणोच्यन्ते तन्निरुक्तम्** (ऋग्वेदभाष्यभूमिकायां प्रोक्ताया व्युत्पत्तेराशयः) इति । समाम्नायः समाम्नात इत्यारभ्य ताद्भाव्यमनुभवतीत्यन्तायां द्वादशाध्याय्यां प्रतिपदं सम्भावितावयवार्थानां निःशेषेणोक्तत्वाल्लक्षणसमन्वयः । सत्यव्रतसामश्रमी तु सायणीयं प्रथमं लक्षणं न मृष्यति ।[4]

## ४. ३. निरुक्तप्रयोजनानि

वेदार्थं सुखेन बोधयितुकामा आचार्या निरुक्तशास्त्रं प्रणिन्युरित्यभिहितं पुरस्तात् । यास्कः खल्वप्याह—**अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते** (निरु० १।१५) इति । न च मन्त्रा अनर्थकाः, कौत्सपुरस्कृतमन्त्रानर्थक्यपक्षस्योदय एव सुसमा-

---

१. नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् । महा० ३।३।१॥
२. अर्थैकपदनिरुक्तम् । गङ्गा गमनात् । निरु० ६।२६॥
३. भगवद्दत्तः वै० वा० इ०, द्वितीय भाग, अ० १० ।
४. निरुक्तालोचनम्, पृ० १३-१६ ।

हित्वात् । अन्यान्यपि यानि त्रिचतुराणि निरुक्ताध्ययनप्रयोजनानि यास्केनोक्तानि, तान्यप्यर्थावबोधस्यानुषङ्गिकाण्येव । तत्र मन्त्रार्थज्ञानमन्तरेण मन्त्रस्थानां वाक्यानां पदानां च विभागः, तयोश्च समस्त-व्यस्तार्थो न ज्ञायेत । पदवाक्यार्थबोधाद् ऋते स्वरसंस्कारौ नावधार्येयाताम् । अत इदं शास्त्रं न केवलं स्वार्थं साधयति, अपि तु स्वरसंस्कारावधारणेन व्याकरणस्य पूर्णताम् आपादयति ।

पदपाठः खल्वप्यर्थाधीनः । अत एव स्वरार्थयोरनुपपत्तिं प्रदर्श्य यास्कः शाकल्यकृतं पदपाठं प्रत्याचख्यौ । तथा हि—

**वेति च य इति च चकार शाकल्यः । उदात्तं त्वेवमाख्यातमभविष्यद् असुसमाप्तश्चार्थः ।** निरु० ६।२८॥

अयमभिप्रायः—**वनेन वायो न्यधायि चाकन्** (ऋ० १०।२९।१) इत्यत्र पक्षिपर्यायो 'वायः'इत्येकं पदम्, शाकल्यस्तु 'वा' 'यः' इति पदद्वयं मेने । शाकल्यपक्षे **यद्-वृत्तान्नित्यम्** (अष्टा० ८।१।६६) इति तिङन्तस्य 'अधायि'पदस्य निघाते प्रतिषिद्धेऽट उदात्तत्वं श्रूयते । अपि च वाक्यार्थोऽत्र साकाङ्क्षः स्याद् वार्थानन्वयाद् यत्तदोर्नित्यसम्बन्धाच्च ।

अपि च, याज्ञे कर्मणि देवताज्ञानार्थं मन्त्रार्थावबोधो नान्तरीयकः । स चास्माच्छास्त्राद् ऋते न सम्भवति । तथा हि —**उपतिष्ठते गुच्छन्त्यामैन्द्रया सद आग्नेय्याग्नीध्रं वारुण्या हविर्धानम्** (मा० श्रौ० २।३।१।१) इति ज्योतिष्टोम इन्द्रादिदेवताकाभिः ऋग्भिः सद आदीनाम् उपस्थानं विधीयते । तत्रैन्द्री ऋक् केति निश्चयो मन्त्रार्थावबोधम् अपेक्षते । न च देवताभिधानसमर्थपदरूपेण लिङ्गेन निर्णयः स्यादिति वाच्यम्, प्रधाननैघण्टुकदेवतायोर्लिङ्गेन निर्णयस्याशक्यत्वात् । गुणदेवतया च क्रियमाणं कर्म वैगुण्यात् कर्तुरपध्वंसायैव प्रकल्पेत ।

किं च, मन्त्राणाम् अध्यात्माधिदैवताधियज्ञार्था नोपायान्तरेण शक्यन्ते विज्ञातुम् । इमे चैवार्था वेदवाचः पुष्पफलरूपेण विभक्ता आचार्यैः ।[१] यदाभ्युदयलक्षणो धर्मोऽभिप्रेयते, तदा याज्ञं पुष्पं दैवतं फलम् । यदा पुनः निःश्रेयसलक्षणो धर्मोऽभिप्रेयते, तदा उभे अपि याज्ञदैवते पुष्पत्वं बिभृतोऽध्यात्ममेव तु फलस्थानीयं भवतीति दिक् ।[२]

## ४. ४. यास्कात् पुरातना नैरुक्ताः

निर्वचनविद्याया अतिपुरातनत्वात् परश्शतानि नैरुक्ताः तत्प्रोक्तानि शास्त्राणि चाभूवन्निति सुकल्पः । परमद्य तेष्वङ्गुलिगण्यानि नामतः स्मर्यन्ते, ग्रन्थास्तु दुर्लभा

---

१. द्र० निरु० १।२०॥

२. दुर्गवृत्ति, निरु० १।२०॥

एवं संजाताः। केवलं यास्कीयं निरुक्तं सनिघण्टु सम्प्रत्युपलभ्यते। यास्कशौनकाभ्यां निरुक्तबृहद्देवतयोः केषाञ्चिदाचार्याणां नामग्राहं, परेषां 'एके' इत्यादिनिर्देशेन मतानि समुदलिख्यन्त। यास्कीयरचनां तत्रोद्धृतवचनानि च समीक्ष्यानुमीयते—प्राचीनाचार्या निघण्टुसमाम्नानपुरःसरं स्वीयनिरुक्तग्रन्थान् व्यरीरचन्, तेषां ग्रन्थेषु च विषयक्रमाद्यायोजनं प्रायेण यास्कीयनिरुक्तवद् आसीदिति।[1] यास्कात् पूर्ववर्तिनां नैरुक्तानां यथोपलब्धं वृत्तं समासतोऽत्र प्रस्तूयते—

(१) **औपमन्यवः**—निघण्टुः (निरु० १।१), दण्डः (निरु० २।२), परुषं (निरु० २।६), ऋषिः (निरु० २।११), पञ्चजनाः (निरु० ३।८), कुत्सः (निरु० ३।११), काकः (निरु० ३।१८), यज्ञः (निरु० ३।१९), शिपिविष्टः (निरु० ५।७), काणः, विकटः (निरु० ६।३०), इन्द्रः (निरु० १०।८) इत्येतानि पदानि निर्ब्रुवन् यास्क औपमन्यवं तत्कृतनिरुक्तिपुरःसरं सस्मार। शौनकः खल्वपि पञ्चजनप्रसङ्गे (बृह० ७।६९) औपमन्यवमतं प्रदर्शयामास। यास्कवद् औपमन्यवोऽपि निघण्टुसमाम्नायं विधाय निरुक्तग्रन्थं निघण्टुपदनिर्वचनेन समारेभ इति प्रथमोल्लेखत आक्षिप्यते। अयमाचार्यो द्रष्टृत्व-कर्तृत्वयोरेकत्वम् अभिमेन इत्यृषिकुत्सपदयोर्निर्वचनाज् ज्ञायते। यास्कीयनिरुक्तं शौनकीयबृहद्देवता चौपमन्यवमतोद्धरणे परस्परं न संवदेते। तथा हि यास्कोक्तिः—**चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः।** निरु० ३।८॥ शौनकस्त्वाह—

**मनुष्याः पितरो देवा गन्धर्वोरगराक्षसाः।**
**गन्धर्वाः पितरो देवा असुरा यक्षराक्षसाः॥**
**यास्कौपमन्यवावेतान् आहतुः पञ्च वै जनान्।**
**निषादपञ्चमान् वर्णान् मन्यते शाकटायनः॥**
बृह० (७।६८,६९।) शौनकोक्तेर्मूलं मृग्यम्।

(२) **औदुम्बरायणः**—अयमाचार्य एकस्मिन् स्थले स्मृतो यास्केन—**इन्द्रियनित्यं वचनमौदुम्बरायणः** (निरु० १।१)। गणरत्नमहोदधौ वाक्यप्रदीये चास्योल्लेखो दृश्यते। स्फोटसिद्धिकृद् भरतमिश्र एनं स्फोटसिद्धान्ताचार्यं मेने। अतोऽयं महान् वैयाकरणो बभूवेति निश्चप्रचम्, परमस्य नैरुक्तत्वं प्रसाधकप्रमाणाभावात् सन्दिह्यते।

(३) **वार्ष्यायणिः**—यास्क एकस्मिन् स्थलेऽस्याचार्यस्य भावविकारविषयकं मतमुद्धृत्य विवृतवान्। तद् यथा—**षड् भावविकारा भवन्तीति वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति** (निरु० १।२) इति। महाभाष्य-

---

१. भगवद्दत्तः वै० वा० इ० द्वितीयाभाग., अ० १०।

कारः पतञ्जलिरपि मतमेतद् उद्धरति । अन्योद्धरणाभावादस्याप्याचार्यस्य वैयाकरणत्वे सिद्धेऽपि नैरुक्तत्वं न शक्यते निश्चेतुम् ।

(४) **गार्ग्यः**—यास्केन गार्ग्यस्य मतत्रयम् उदलेखि—उपसर्गाणामुच्चावचपदार्थत्वम् (निरु० १।३), नाम्नां धातुजत्वव्यभिचरितत्वम् (निरु० १।१२), उपमायाः सादृश्यत्वम् (निरु० ३।१३) चेति। तत्र **'न सर्वाणीति गार्ग्यो वैयाकरणानां चैके'** (निरु० १।१२) इति यास्कवाक्येनास्य नैरुक्तत्वं सुसिध्यति । अपि च, **चतुर्थ्यं इति तत्राहुर्यास्कगार्ग्यरथीतराः** (बृह० १।२६) इति यास्करथीतराभ्यां नैरुक्ताभ्यां सहनिर्देशोऽस्य नैरुक्तत्वं द्रढयति। पाणिनीयाष्टकेऽस्य त्रिरुल्लेखः (अष्टा० ७।३।९९।।८।३।२०।।८।४।६६) वैयाकरणत्वं द्योतयत्येव। अयमेव सामवेदस्य पदपाठकारइति भगवद्दत्तः ।[1]

(५) **आग्रायणः (आग्रयणः)**—चतुर्णां शब्दानां निर्वचनानि यास्क आग्रायणमतेन प्रादीदृशत्—अक्षि (निरु० १।९), कर्णः (निरु० १।९), नासत्यौ (निरु० ६।१३), इन्द्रः (निरु० १०।८) इत्येतेषाम्। तत्रान्त्यं निर्वचनम् आग्रयणकृतमिति केचिदभिमन्यते ।

(६) **शाकपूणिः**—तडित् (निरु० ३।११), महान् (निरु० ३।१३), ऋत्विक् (निरु० ३।१९), शिताम (निरु० ४।३), विद्रधे (निरु० ४।१५), अक्षाः (निरु० ५।३), अप्सराः (निरु० ५।१३), अच्छा (निरु० ५।२८), अग्निः (निरु० ७।१४), वेधाभावाय (निरु० ७।२८।। १२।१९), इध्मः (निरु० ८।५) ,तनूनपात् (निरु० ८।५), नराशंसः (निरु० ८।६), द्वारः (निरु० ८।१०), त्वष्टा (निरु० ८।१४), वनस्पतिः (निरु० ८।१७, १८), विश्वेदेवाः (निरु० १२।४८), अक्षरम् (निरु० १३।१०) इत्येतेषां शब्दानां निर्वचनप्रसङ्गे यास्कः शाकपूणिवचनान्युदाजहार । शौनको बृहद्देवतायां सप्तसु स्थलेषु शाकपूणिनाम्ना[2] त्रिषु च रथीतरनाम्ना[3] शाकपूणिमतान्युल्लिलेख। रथीतर इति शाकपूणेरेवापरं नामधेयमासीदिति भगवद्दत्तः पुराणान्याधृत्य प्रत्यपीपदत्।[4] स्कन्दः स्वनिरुक्तभाष्ये शाकपूणिनिघण्टुं निरदिक्षत्—

**दाश्वान् इति यजमाननाम शाकपूणिना पठितम्** । निरु० भा० १।४।।

**व्याप्तिकर्माण उत्तरे धातवो दश…इन्वति…शाकपूणेरतिरिक्ता एते—विव्याक विव्याच उरुव्यचाः विव्रे इति व्याप्तिकर्माणः** । निरु० भा० ३।१०।।

शाकपूणीयनिघण्टुपाठक्रमः प्रायो यास्कीयनिघण्टुपाठक्रमवदासीदिति दुर्गकथ-

---

१. भगवद्दत्तः वै० वा० इ० द्वितीयो भागः, अ० १० ।
२. बृह० ३।१३०,१५५।। ५।८,३९।। ६।४६।। ७।७०।। ८।६१।।
३. बृह० १।२६।। ३।४०।। ७।१४५।।
४. भगवद्दत्तः वै० वा० इ० द्वितीयभागे दशमोऽध्यायः ।

नाद् आक्षिप्यते—**शाकपूणिस्तु पृथिवीनामभ्य एवोपक्रम्य स्वयमेव सर्वत्र क्रमप्रमोजनमाह** । (दुर्गवृत्ति ८।४) । अपि च, तत्रैव दुर्गो निरुक्तवार्त्तिकं प्रमाणत्वेनोद्धरति—

**क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम् ।**
**प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्** ॥ दुर्गवृत्ति ८।४॥

अन्येऽपि बह्वः सन्दर्भाः शाकपूणीयनिघण्टुनिरुक्तविषयका भगवद्दत्तेन संकलितास्तद् ग्रन्थ एवावलोकनीयाः किं पिष्टपेषणेन ।

(७) **शाकपूणिपुत्रः (राथीतरः)**--अक्षरम् (निरु० १३।११) इति व्याख्याप्रसङ्गे यास्कः शाकपूणेः पुत्रमपि नैरुक्तत्वेनोल्लिखति । शौनकोऽपि राथीतरमतम् उपन्यस्यति—

**प्रसङ्गात् त्विह यः सूक्ते देवताः परिकीर्तिताः ।**
**ता एव सूक्तभाजस्तु मेने राथीतर स्तुतौ** ॥ बृह० ५।१४२॥

अतोऽधिकमस्य विषये न किञ्चिज् ज्ञायते ।

(८) **और्णवाभः**—उर्वी (निरु० २।२६), नासत्यौ (निरु० ६।१३), होता (निरु० ७।१५), अश्विनौ (निरु० १२।१), त्रेधाभावाय (निरु० १२।१९) इत्येतेषु स्थलेष यास्क और्णवाभमतानि प्रदर्शयामास । शौनकोऽपि सकृद् अस्याचार्यस्य सस्मार ।[1]

(९) **तैटीकिः**—यास्कीयनिरुक्तेऽयमाचार्यः सकृत् स्मर्यते शिताम (निरु० ४।३) इत्यत्र । निरुक्तस्य बृहत्पाठे वीरीटम् (निरु० ५।२७) इत्यत्राप्यस्योल्लेखो दृश्यते, परमयं पाठो लघुपाठे दुर्गवृत्तौ चानुपलम्भात् सन्दिग्धः प्रतीयते ।

(१०) **गालवः**—शिताम (निरु० ४।३) इत्येकस्मिन् स्थले यास्को गालवमतम् उपन्यस्यति । शौनकस्तु चतुर्षु स्थलेषु[2] गालवमतान्युद्धरति । पाणिनीयाष्टकेऽप्ययमाचार्योऽसकृत् स्मृतः ।[3] गालवब्राह्मणस्य ऋग्वेदक्रमपाठस्य शिक्षायाश्च प्रवक्तायमाचार्य आसीदिति सम्भाव्यत ऐतिह्यविद्भिः ।[4]

(११) **स्थौलाष्ठीविः**—अग्निः (निरु० ७।१४), वायुः (निरु० १०।१) इत्यत्र स्थलद्वये स्मर्यतेऽयमाचार्यो यास्केन ।

(१२) **क्रौष्टुकिः**—द्रविणोदाः (निरु० ८।२) इत्यत्र यास्कोऽस्याचार्यस्य मतं प्रदर्शयामास । शौनकोऽपि सकृत् सस्मारास्य बृहद्देवतायाम् (४।१३७) ।

---

१. बृह० ७।१२५॥
२. बृह० १।२४॥ ५।३४॥ ६।४३॥ ७।३८॥
३. अष्टा० ६।३।६१॥ ७।१।७४॥ ७।३।९९॥ ८।४।६७॥
४. भगवद्दत्तः वै० वा० इ० द्वितीयभागे दशमोऽध्यायः ।

(१३) **कात्थक्यः**—निरुक्तकारो यास्क इध्मः, तनूनपात् (निरु० ८।५), नराशंसः (निरु० ८।६), द्वारः (निरु० ८।१०), वनस्पतिः (निरु० ८।१७), देवीजोष्ट्री (निरु० ६।४१), देवी ऊर्जाहुती (निरु० ६।४२) इत्येतेषु स्थलेषु कात्थक्यमतम् उपन्यस्तवान्। अस्याचार्यस्य मतानि यज्ञमेव प्रसजन्ति सतोऽपि नैरुक्तस्येति विशेषः। बृहद्देवतायाम् (३।१०) अपि यास्कद्वितीयोऽयमाचार्यो यज्ञेन सम्बद्धः स्मर्यते।

(१४) **चर्मशिराः** विधवा (निरु० ३।१५) इति शब्दनिर्वचनप्रसङ्गेऽयमाचार्यः स्मृतो यास्केन।

(१५) **शतबलाक्षो मौद्गल्यः**—मृत्युः (निरु० ११।६) इत्यत्रास्याचार्यस्य मतम् उद्धरति यास्कः। बृहद्देवतायाम् (८।६०) मुद्गलः स्मृतः, सोऽस्यैव शतबलाक्षस्य पूर्वजोऽन्यो वेति न निश्चितम्।

१६ **शाकटायनः**—यास्क उपसर्गार्थप्रसङ्गे (निरु० १।३), नाम्नामाख्यातजत्वविषये (निरु० १।१२), अनन्वितार्थे संस्कारसम्बन्धे (निरु० १।१३) च शाकटायनमतानि समुल्लिलेख। एतैस्तु शाकटायनस्य वैयाकरणत्वे प्रसिद्धेऽपि नैरुक्तत्वम् असन्दिग्धं न प्रतीयते। परन्तु बृहद्देवतायाम् उद्धृतमतानि नैरुक्तस्यैव सम्भवन्तीत्यस्य नैरुक्तत्वं निश्चप्रचम्। तत्र प्रतिपादिता विषयाः—इन्द्रस्य पञ्चदश-त्रिणवस्तोमवत्त्वम् (बृह० २।१), अच्छादीनामुपसर्गत्वम् (बृह० २।६५), शाकपूणितः (बृह० ३।१५६), क्रौष्टुकितः (बृह० ४।१३८), गालवतः (बृह० ६।४३) यास्कौपमन्यवशाकपूणितः (बृह० ७।६६), यास्कशौनकतः (बृह० ८।११), मुद्गसशाकपूणितः (बृह० ८।६०) भिन्नस्य मतस्य प्रदर्शनम्।

एवमेतान् षोडश नैरुक्तान् साक्षादुल्लिख्य, अन्यान् नामस्मरणं विनैव 'आचार्याः' (निरु० ७।२२), 'एके' (निरु० ३।४,५ ॥ ५।३ ॥ ७।१३॥ ८।२१), 'नैरुक्ताः' (विंशतिकृत्वः) इति शब्दैर्निर्दिदेश यास्कः।

## ५. ०. यास्कः—निघण्टुः—निरुक्तम्

### ५. १. यास्कः

सम्प्रति केवलं यास्कीयमेवैकं निरुक्तं सनिघण्टु समुपलभ्यते। अयमाचार्यः कं देशकालखण्डं स्वजनुषा समलंचकारेति यथायथं न ज्ञायते। निरुक्तपरिशिष्टभूतस्य चतुर्दशाध्यायस्यान्ते—'**नमो यास्काय नमः पारस्कराय**'[1]—इति क्वाचित्कं पाठमाधृत्य केचिद् यास्कं पारस्करवास्तव्यं कल्पयन्ति। पारष्करदेशोल्लेखः पाणिनिना पारस्करप्रभृतिगणे (अष्टा० ६।१।१५१) कृतः। निरुक्तपरिशिष्टस्यात्यर्वाचीनत्वान्नैतद् मतमनुमोदन्तेऽन्ये ऐतिह्यविदः। यास्क प्रादुर्भावकालविषयम् अवलम्ब्य

विप्रतिपद्यन्त इतिहासज्ञाः। तत्र पाणिनिम् अवधीकृत्य मतानि विकल्प्यन्ते। पाश्चात्त्यविद्वांसो गोल्डस्टुकर-बोथलिङ्क-स्कोल्डप्रभृतयः पाणिनित उत्तरकालजो यास्क इति पक्षं स्थापयामासुः। सत्यव्रतसामश्रमी खल्वपि तानेवानुसृत्य[1] यास्कस्य पाणिन्युत्तरकालजत्वं साधयितुं महान्तं प्रयासमकार्षीत्। अमुना पुरस्कृतानाम् अष्टानां हेतुनां[2] त्वयं सारः—

पाणिनिकाल ऋणशब्दे परतो वृद्धिविधानं नासीदिति पाणिनीयशास्त्रे तदर्थ-प्रयत्नविशेषाभावाद् आक्षिप्यते। निरुक्ते (६।८) 'अपार्ण' शब्दोपलम्भात् कल्प्यते—क्वचिद् तद्विधानं प्रचलितमिति। कात्यायनः पुनः षट्सु स्थलेषु वृद्धिविधानमनु-निशम्य—**प्रवत्सतरकम्बलवसनानां च ऋणे, ऋणदशाभ्यां च** (महाभाष्य वा० ६।१।८९) इति वार्त्तिकं रचयामास। परमात्रापार्णपदसाधनप्रयत्नाभावात् तत्प्रयोग-लोपः संजात इत्यनुमीयते। 'तदेतदेव पदं यास्कसमयनिर्णये बहु मन्यतेऽस्माभिः अपार्णम् अपार्णम् अपार्णम् इति' इत्युद्घोषः सामश्रमिणः। अपरं च, **परः सन्निकर्षः संहिता** (अष्टा० १।४।१०९) इति पाणिनीयं संहितालक्षणम् उद्धरति यास्कः (निरु० १।१७)। अपि च, पाणिनिपरजन्मन ऋक्प्रातिशाख्यकृतः शौनकादपि परा-चीनो यास्कः, **पदप्रकृतिः संहिता** (ऋ० प्रा० २।१) इति निरुक्ते (१।१७) उल्लि-खितत्वात्। पाणिनेरुत्तरकालजो व्याडिः संग्रहकारः स्वविकृतिवल्लीग्रन्थे (१।१५) शौनकम्, शौनकश्च ऋक्प्रातिशाख्ये (३।८,१३॥६।२१) व्याडिम् उल्लिखतीति तयोः समकालजत्वेऽवगते शौनकस्य पाणिनिपरजत्वं सिध्यत्येव। किं च, **न सर्वाणीति गार्ग्यो वैयाकरणानां चैके** (निरु० १।१२) इत्यत्र वैयाकरणपदेन पाणिनीया एव गृह्यन्ते तेषामेव व्युत्पत्त्यव्युत्पत्तिपक्षयोरभिमानत्वात्।

तदेतद् न रोचते मनीषिणाम्, साम्प्रतिकैरैतिह्यविद्भिर्यास्कस्य पाणिनितः पूर्वजत्वस्य स्वीकृतत्वात्। अपार्णशब्दस्य वार्त्तिककृतोऽसंग्रहत्वे यो हेतुः प्रस्तुतः सामश्रमिणा, स एव पाणिनेरपि संग्रहाभावे सुकल्प्य (अर्थात् पाणिनिकाले 'अपार्ण' प्रयोगो लुप्तः) इति विलीयते सामश्रमिणः प्रधानो हेतुः। संहितालक्षणे अपि पाणि-नीय-शौनकीये एवेत्यपि नैकान्तिको हेतुः, प्रोक्तग्रन्थेषु पूर्वाचार्यसामग्रीबाहुल्यदर्श-नात्। तथैव वैयाकरणपदेन पाणिनीयग्रहणमपि न युज्यते, व्याकरणशास्त्रस्य पाणिनितोऽतिप्राचीनत्वात्। अपि च, यास्कीयकृतौ शाकटायनादिवद् महावैयाकर-णस्य पाणिनेर्नाम्नोऽश्रवणात्, पाणिनीयकृतौ च यास्कशब्दसाधनार्थप्रयत्नस्य सत्त्वाद्[3]

---

१. पाश्चात्याध्यापकगोल्डस्टूकरोद्भावितप्रणालीतो बोथलिङ्गीयं प्लवमारुह्य चापार-कालपारावारे विचरन्तो वयमिमं यास्कं पश्यामः। निरुक्तालोचने पृ० १३१।

२. निरुक्तालोचने पृ० १०५-१०७।

३. यस्कादिभ्यो गोत्रे। अष्टा० २।४।६३॥

यास्कस्य पूर्वजत्वं सुतरां सिध्यति। अपरं च, यास्को व्याकरणसम्बन्धिनः कारित-चिकीर्षित-नामकरण-निर्वृत्तिस्थान-द्विप्रकृतिस्थानोपबन्धादीन् बहून् व्यरीरचत्। शब्दान् अन्वर्थरूपेणैव प्रयुयुजे, पाणिनिस्तु टिघुभादीः बह्वीः कृत्रिमाः संज्ञा न च यास्कीयशास्त्रे गुणोपधाभ्यस्तादिशब्दानां सिद्धवत् प्रयोगदर्शनात्, पाणिनीये च तेषां कृत्रिमसंज्ञाविधानाद् यास्कस्यैव परकालजत्वापत्तिरिति वाच्यम्, पूर्वाचार्यानुरोधात् पाणिनिकालेऽप्रचलितत्वाद् वा पाणिनेः प्रवृत्त्यौचित्यत्वात्। तथैव यास्कप्रयुक्तोऽनेकस्तद्धितः पाणिनिसमये विलुप्तः।[1] किं च पाणिनिः **प्रमाणे द्वयसज्दघ्नञ्मात्रचः** (अष्टा० ५।२।३७) इति प्रमाणे दघ्नच् प्रत्ययं विदधौ। यास्कश्चेत् पाणिनेरर्वाचीनोऽभविष्यत्, तर्हि आस्यदघ्नादिपदव्याख्यानावसरे (निरु० १।६) **'दघ्नं दध्यते स्रवतिकर्मणः'** इत्यस्य स्थाने दघ्नच्प्रत्ययमेव निरदेक्ष्यत्। अथ च, यास्कीयनिरुक्ते दह-कंश-नक्षादयो धातव उपलभ्यमाना अपि पाणिनीयपाठे न संगृह्यन्ते, दघ-नभ-विस-मृजादयश्च संगृह्यमाणा अप्यर्थान्तरेषु प्रयुज्यन्ते। एतत् सर्वमभिसमीक्ष्य यास्कस्यैव पूर्वजत्वं निश्चीयते। साम्प्रतिका ऐतिह्यविदः पाणिनिं खीष्टाब्दात् प्राक् पञ्चमशताब्द्यां जातमभिमन्यन्ते। अतो यास्कप्रादुर्भावकालः खाष्टाब्दात् प्राक् सप्तमशताब्दी सम्भवति।

## ५. २. निघण्टोः स्वरूपम्

वेदस्य (प्रायेणर्ग्वेदस्य) पदानां संग्रहभूतः समाम्नायापरनामधेयो ग्रन्थो निघण्टुरित्याख्यायते। त्रिविभागात्मकोऽयं ग्रन्थो यास्कविरचितस्य निरुक्ताभिधस्य भाष्यस्याधारः। तत्र प्रथमे भागे तावत् त्रयोऽध्याया विद्यन्ते। एतेष्वेकार्थकानामनेकपदानां संग्रहः क्रियते। अत एवाह यास्कः—**एकार्थमनेकशब्दमित्युक्तम्** (निरु० ४।१) इति। अत्र प्रातिपदिकानि प्रथमया धातवश्च श्तिपा निर्दिश्यन्ते। निघण्टुशब्दः प्रधानवृत्त्येदमेवाध्यायत्रयमभिदधाति, अवशिष्टाध्यायद्वयं तु गौण्या वृत्त्येति स्कोल्डादयः। अत एवेदं नैघण्टुककाण्डमिति व्यवह्रियते। नैघण्टुककाण्डस्थेषु प्रथमद्वितीयतृतीयाध्यायेषु यथासंख्यं सप्तदश-द्वाविंशति-त्रिंशत् संख्याकाः खण्डाः, तत्र च चतुःशतोत्तरपञ्चदश-पञ्चशतोत्तरषोडश-चतुशतोत्तरत्रयोदशसंख्याकाः शब्दाः, पूर्णयोगतः त्रयोदशशतोत्तरचतुश्चत्वारिंशच् छन्दाः संगृह्यन्ते। निघण्टोर्द्वितीयो भागश्चतुर्थाध्यायात्मकस्त्रिषु खण्डेषु विभक्तः। नैगमकाण्डाभिधेऽस्मिन् विभागेऽनेकार्थकाश्च क्लिष्टाः शब्दाः पठ्यन्ते। अत एवाह यास्कः—**यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमान्, तदैकपदिकमित्याचक्षते** (निरु० ४।१) इति। अस्मिन् काण्डे द्विशतोत्तराष्टासप्ततिसंख्याकाः शब्दाः संकलिताः। निघण्टोस्तृतीयो भागः पञ्चमाध्यायात्मकः षट्सु खण्डेषु विभज्यते। दैवतकाण्डाभिधेऽस्मिन् विभागे

---

१. यथा अध्वर्युं (यु), कक्ष्या (या), पारोवर्यं (य) [द्र० सि० कौ० ५।२।१०]।

देवतावाचकाः शतोत्तरैकपञ्चाशत् शब्दाः संगृहीताः। इत्थं सर्वयोगेन सप्तशतोत्तर-त्रिसप्ततिः शब्दा निघण्टौ संकलिताः। अत्र समाम्नातेषु केचन शब्दाः सम्प्रत्युप-लभ्यमाने वैदिकवाङ्मये नावाप्यन्ते, केचन शब्दाश्च नैघण्टुककाण्डे निर्दिष्टार्थेभ्यो भिन्नार्थेषूपलभ्यन्ते।[1]

## ५. ३. निघण्टोः कर्तृत्वम्

निघण्टोः कर्तृत्वमधिकृत्य विप्रतिपद्यन्ते विद्वज्जनाः।[2] प्राचीनपरम्पराप्राप्तोऽयं समाम्नायः, यं व्याख्येयत्वेनाश्रित्याचार्या निरुक्तानि व्यरीरचन्निति प्रथम पक्षः। प्रत्येकमाचार्यः स्वव्याख्येयं पदसमूहं संकलय्य तद्व्याख्यानरूपं निरुक्तं प्राणैषीदिति द्वितीयः पक्षः। तत्र दुर्ग-स्कन्द-राथ-सत्यव्रतसामश्रमि-कर्मकर-लक्ष्मणस्वरूप-सिद्धेश्वरवर्मादयः प्रथमपक्षम् अनुयन्ति। वेङ्कटमाधव-मधुसूदन-दयानन्द-भगवद्दत्तप्रभृतयो द्वितीयं पक्षम् अनुसरन्ति। तथा हि—

(१) दुर्गस्तावद् निरुक्तवृत्तिभूमिकायामूचे—"तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसंग्रहः। सा च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थम् उपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुजिघृक्षया वाक्यार्थसामर्थ्यादभिधेयान् उन्नीयोन्नीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता।"

पुनश्च—"एतस्मिन् मन्त्रे (ऋ० ५।३९।२) 'अकूपारस्य दावने' इत्ययमनयोः पदयोरनुक्रमः। समाम्नाये पुनः 'दावने अकूपारस्य' इति मन्त्रपाठव्यतिक्रमेणानुक्रमः। तेन ज्ञायतेऽन्यैरेवायम् ऋषिभिः समाम्नायः समाम्नातोऽन्य एव चायं भाष्यकारः। एको हि समाम्नानं भाष्यं च कुर्वन् प्रयोजनस्याभावाद् एकमन्त्रगतयोः पाठानुक्रमं नाभङ्क्ष्यत्।" दुर्गवृत्ति ४।१८॥

(२) स्कन्दः खलवप्याह—"समाम्नायशब्देनात्र गवादिदेवपत्न्यन्तः शब्दसमूह उच्यते न वेदः। समाम्नातः सम्भूयाभिमुख्येनाम्नातोऽभ्यस्तः। ग्रन्थीकृत्य पूर्वाचार्यैः पठित इत्यर्थः"। स्कन्दभाष्य १।१॥

(३) राथः स्वसम्पादितनिरुक्तभूमिकायामाह—"भारतीयवाङ्मयेतिहासे यास्कज्ञानप्रमाणरूपेण स्थितयोरवशिष्टग्रन्थयोरेकस्य निघण्टोस्तत्प्रणेतृत्वं स्वीकर्तुं न शक्यते"। ततो दुर्गप्रस्तुतहेतव उपन्यस्यन्ते।

(४) सत्यव्रतसामश्रमी निरुक्तालोचने (पृ० २२-२४) पूर्वोद्धृतदुर्गवचनान्युपन्यस्य—

१: राजवाडे, निरुक्तभूमिकायाम्।

२. भगवद्दत्तः वै० वा० इ० द्वितीयभागे दशमोऽध्यायः।

वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत ।
निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ॥
कपिर्वराहश्श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥

महा० मोक्षधर्मपर्व अ० ३४२ । श्लोक ८६,८७ ॥

इति महाभारतश्लोकावाधृत्य कश्यपं प्रजापतिं निघण्टुप्रणेतारम् अभिमन्यते, निघण्टौ (५।६) वृषाकपिपदस्य पठितत्वात् । सिद्धेश्वरवर्मणोऽपीदमेवाभिमतम् ।[1]

(५) कर्मकरमतेन[2] निघण्टुर्नैककर्तृको ग्रन्थः (क) पुनरुक्तिदर्शनात्—अन्धः (निघ० २।७), वराहः (निघ० १।१०) स्वसराणि (निघ० १।६), शर्याः (निघ० २।५) इत्येते शब्दाः पुनः (निघ० ४।२) पठ्यन्ते । (ख) शैलीभेदात्—दावने अकूपारस्य, विद्रधे द्रुपदे (निघ०४।१), बाहिष्ठः दूतः, दूतस्य चर्षणिः (निघ० ४।२), अनवायं किमीदिने, श्रुष्टी पुरन्धिः, चनः पचता, सदान्वे शिरिम्बिठः (निघ० ४।३) इत्यष्टौ युगला निघण्टौ चतुर्थाध्याये पठ्यन्ते । तत्र 'दावने' 'अकूपारस्य' इति मन्त्रक्रमाद् भिन्नक्रमः, मन्त्रे 'बाहिष्ठो दूतः' इति निघण्टौ पृथक्पाठः, 'अनवायं किमीदिने, चनः पचता' इति यथमन्त्रं पाठः । पुरन्धिं शिरिम्बिठस्य इति मन्त्रपाठो निघण्टौ प्रथमया विपरिणम्यते, परम् 'अकूपारस्य' इति यथामन्त्रं षष्ठ्यन्त एव । (ग) अर्थान्तरप्रदर्शनात्—निघण्टोरनुरोधात् (निघ० २।१६,१९) 'तडित्'शब्दस्य वधार्थं स्वीकुर्वाणोऽपि यास्कोऽन्तिकार्थमभिमेने (निरु० ३।११) । (घ) दोषनिर्देशात्—व्याप्तिकर्मसु (निघ० २।१८) द्वे नामनी (निरु० ३।१०) इति । तदत्र क-खौ विभिन्नकर्तृत्वं साधयतः, ग-घौ च यास्कस्याकर्तृत्वं प्रदर्शयतः । इत्थमेव बेलवलकर-विण्टरनित्जावपि ऐकपदिकेष्वनुपपत्तिम् उद्भाव्य यास्कभिन्नस्यानेकस्य कृतिं निघण्टुं मन्येते ।[3]

(६) लक्ष्मणस्वरूपः खल्वपि निघण्टुमनेकाचार्यप्रयासजनितपारम्परिककोशम् अभिमनुते ।[4]

अथातो द्वितीयपक्षानुयायिनां मतानि प्रदर्श्यन्ते—

(१) वेङ्कटमाधव ऋगर्थदीपिकायां (ऋ० ७।८७।४) प्राह—"तत्रैकविंशतिर्नामानि काचिद् गौर्बिभर्तीति पृथिवीमाह । तस्य हि यास्कपठितान्येकविंशतिर्नामानि" इति ।

---

१. यास्कीयनिर्वचनानि (एटिमालोजीज आव् यास्क) ।

२. निघण्टुप्रणेतृत्वम् (प्रथमप्राच्यविद्यासम्मेलनविवरणे ।

३. बेलवलकरः भारतीयदर्शनस्येतिहासः, द्वितीयभागः । विण्टरनित्जः प्राचीनसंस्कृतवाङ्मयेतिहासः ।

४. निरुक्तभूमिका ।

(२) मधुसूदनसरस्वती महिम्नस्तोत्रव्याख्यायाम् अवोचत्—"एवं निघण्ट्वादयोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव। तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः"। महि० श्लो० ७ व्याख्या ॥

(३) दयानन्दसरस्वती निघण्टुभूमिकायां प्राह—"अयं (निघण्टुः) मूलग्रन्थोऽस्य भाष्यं च निरुक्तमिति द्वावपि ग्रन्थौ यास्को मुनिः प्रणिनाय"।

यत्तु दुर्गः क्रमविपर्यासं दृष्ट्वा निघण्टुनिरुक्तकर्तृभेदं कल्पयामास, तन्नयुज्यते, 'दावने' पदव्यभिचारदर्शनात्। अपि च, येनापि श्रुतर्षिणा क्रमविपर्यासः कृतः, सोऽपि तथैव पर्यनुयोज्यः। शाखान्तरप्रयोज्यः स क्रम इति चेद्, न, यास्कस्य 'दाशतयीषु' प्रयोगात् सर्वर्ग्वेदशाखाभिः परिचितत्वात्। वस्तुतस्तु पूर्वाचार्यक्रमानुरोधाद् यास्कः क्रमविशेषमङ्गीचकार। पूर्वाचार्यकृतनिघण्टूनां चास्तित्वं शाकपूणिप्रसङ्गे पुरस्तात् प्रतिपादितमेव। एतेनैवान्यत्र नूचित् (निघ० ४।११), वाजपस्त्यम्, वाजगन्ध्यम् निघ० ४।२) इत्यादीनां क्रम-विपर्यासशङ्का निरस्ता। 'इमं ग्रन्थम्' (निरु० १।२०) इत्यत्र 'इमं' पदेन गवादिदेवपत्न्यन्तो ग्रन्थः परामृश्यत इति मान्यता दुर्गस्कन्दयोः पूर्वोद्धृतधारणाया मूलं प्रतीयते। वस्तुतस्त्वत्र 'इमं' पदं निघण्टुसामान्यपरम्, न तु गवादिदेवपत्न्यन्तनिघण्टुविशेषपरम्। दुर्गस्वीकृतपक्षमेव सत्यव्रतसामश्रम्यादयः समाशिश्रियन्। यदपि कर्मकरः पुनरुक्तत्वादिदोषभिया निघण्टोरनेककर्तृकत्वं यास्काप्रणेतृत्वं च समास्थितवान्, तदपि सर्वशास्त्राणां विविधस्रोतःसामग्रीसङ्कलनात्मकत्वाद् ईदृग्वैषम्यं नास्वाभाविकमिति सुपरिहरम्। दुर्गः खल्वपि तत्र समादधाति—"एतानि पूर्वाचार्यप्रामाण्याद् आभिश्राणि पठ्यन्ते" (दुर्गवृत्ति ३।१३) इति।

निघण्टुरयं यास्केन प्रणीत इति स्वयं यास्क आघोषयति किन्तर्हि प्रमाणान्तरैः। तथा हि—

**अथोताभिधानैः संयुज्य हविश्चोदयति— इन्द्राय वृत्रघ्ने, इन्द्राय वृत्रतुरे, इन्द्रायांहोमुच इति। तान्यप्येके समामनन्ति। भूयांसि तु समाम्नानात्। यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति तत् समामने। निरु० ७।१३॥**

देवतानां गुणाभिधानान्यपि केचिद् नैरुक्ताः स्वनिघण्टुषु सङ्कलयन्ति, अहं (यास्कः) तु प्रधानाभिधानान्येव सङ्कलयामीत्याकूतमत्र। तस्माद् यास्क एवास्य निघण्टोः प्रणेतेति निष्कर्षः।

## ९. ४. निघण्टोर्व्याख्याकारः

ख्रीष्टीयसंवत्सरस्य चतुर्दशशताब्द्यां लब्धजन्मा देवराजयज्वा निघण्टुनिर्वचननाम्नी निघण्टुव्याख्यां प्रणीतवान्। यज्ञेश्वरार्यस्य पुत्रो देवराजयज्वनः पौत्रोऽत्रिगोत्रो देवराजो रङ्गेशपुरीपर्यन्तग्रामवास्तव्य आसीत्। स भोज-दैव-हरदत्त-भरतस्वा-

भ्यादीनां कृतिभ्यः प्रचुरां सामग्रीं जग्राह । निघण्टुनिर्वचने बहुधा क्षीरस्वामि-व्याख्योद्ध्रियते । तत्र भूमिकायाम्—'इदं च······क्षीरस्वाम्यनन्ताचार्यादिकृतां निघण्टुव्याख्यां ···निरीक्ष्य क्रियते' इति सन्दर्भेण प्रतीयते यत् क्षीरस्वामिना काचिद् निघण्टुव्याख्या निरमायि । परं क्षीरस्वामिकृतामरकोशटीकामन्तेरण न किमपि निघण्टुभाष्यं देवराजसन्निधावासीदिति भगवद्दत्तः ।[1] देवराजो नैघण्टुककाण्ड-स्थपदान्येव विस्तरशो निरुवाच । तस्य ग्रन्थश्च मूलतः स्कन्दस्वामिकृतम् ऋग्वेद-भाष्यं स्कन्दमहेश्वरकृतां निरुक्तभाष्यटीकां च समाश्रयति । देवराजकृतौ मौलिकत्वं स्वल्पमेव प्रतीयते ।

## ५. ५. निरुक्तस्य स्वरूप-परिमाण-पाठाः

निघटुमाधृत्य यास्कस्तद्भाष्यं निरुक्तं नाम प्रणिनाय । निरुक्ते परिशिष्टवर्जं द्वादशाध्याया विद्यन्ते । अध्यायाः पादेषु पादाश्च खण्डेषु विभज्यन्ते । पादखण्डयोः संख्या न सर्वत्र समा वर्त्तते । खण्डविभागस्याधारोऽन्वेषणीयस्तिष्ठत्यद्ययावत् । निघण्टुवद् निरुक्तमपि त्रिषु काण्डेषु विभक्तम्—नैघण्टुकं नैगमं, दैवतं चेति ।

तत्रारम्भप्रभृतिद्वितीयाध्यायप्रथमपादान्तं सप्तसु पादेषु यास्क उपोद्घातम् उपबबन्ध । तत्र चत्वारि पदजातानि, नामान्याख्यातजानि, निरुक्तप्रयोजनानि, अर्थवन्तो मन्त्राः, निर्वचनसिद्धान्ताश्चेत्येते विषया विशदीकृताः । ततः 'अथातोऽनु-क्रमिष्यामः' इत्युदीर्य निघण्टावादित अध्यायत्रयपठितानां नैघण्टुकपदानां निर्वच-नानि समारेभिरे । अत्र केषाञ्चिद् विशिष्टानामेव पदानां निर्वचनानि प्रदर्शितानि न समेषाम् । तद्यथा—पृथिवीनामस्वेकविंशतिषु गोपदमेव निरुच्यते केवलम् । एवं त्रीनध्यायान् अनुक्रम्याग्रिमे नैगमप्रघट्टकेऽनेकार्था अनवगतसंस्काराश्च निगमशब्दा अर्थोदाहरणपुरःसरा निरुच्यन्ते । निघण्टौ चतुर्थाध्याये त्रिषु खण्डेषु सामाम्नातानां निगमपदानां यथासंख्यं निरुक्ते चतुर्थपञ्चमषष्टाध्यायेषु प्रतिपदं निर्वचनं प्रदर्श्यते । ततो दैवतकाण्डप्रविभागे निघण्टुपञ्चमाध्याये षट्सु खण्डेषु सङ्कलितानि देवतावाचीनि पदानि निरुक्तोत्तरषट्के यथाक्रमं निरुच्यन्ते । निरुक्तस्य त्रयोदशचतुर्दशावध्यायौ परिशिष्टनाम्ना प्रसिध्यतः । तावपि निरुक्तान्तर्गतौ यास्कप्रणीतौ न वेति विप्रतिपत्तिमनुपदं परीक्षिष्यामहे ।

सामश्रमी निरुक्तालोचने (पृ० ४५-५०) अतिस्तुत्यूर्ध्वमार्गगतिप्रकरणे (निरु० अ० १३,१४) अत्यर्वाचीने इति प्रतिपाद्य ते निरुक्ते नान्तर्भावयति । तथा चेयममुष्य विचारसरणिः—देवराजस्तावद् निघण्टुनिर्वचनभूमिकायां 'भगवता यास्केन समाम्नायं नैघण्टुकनैगमदेवताकाण्डरूपेण त्रिविधं गवादिदेवपत्न्यन्तं निब्रु-वता ··' इति द्वादशाध्यायात्मकमेव निरुक्तमभिमेने । ततोऽवरकालिको दुर्गः—

१. भगवद्दत्तः वै० वा० इ० द्वितीयभागे, एकादशोऽध्यायः ।

'अयं च तस्या द्वादशाध्यायीभाष्यविस्तरः' (निरुक्त दुर्गवृत्ति १।१) इत्युपक्रम्यान्त्यपुष्पिकायाम् 'ऋज्वर्थायां निरुक्तवृत्तौ अष्टादशाध्यायः समाप्तः। इति सपादसप्तदशाध्यायी ऋज्वर्था नाम निरुक्तवृत्तिः समाप्ता' इत्युपसंहरन् अतिस्तुतिरूपत्रयोदशाध्यायस्य निरुक्तत्वमङ्गीचकार। ततोऽप्यर्वाचीनः सायण ऋग्वेदभाष्यभूमिकायां—'तद् व्याख्यानं च समाम्नायः समाम्नात इत्यारम्भ तस्यास्तस्यास्तद्भाव्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे' इत्यवोचत्, परं 'द्वा सुपर्णा' (ऋ० २।१७।५) मन्त्रव्याख्याने—'द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ (निरु० १४।३०) इत्यादि निरुक्ते गतमस्य मन्त्रस्य व्याख्यानमनुसन्धेयम्' इत्यप्यचकथत्। तदत्रायं सामश्रमिणो निष्कर्षः—समाम्नायः समाम्नात इत्यादिः 'य ऋतुः कालो जायानाम्' इत्यन्तो द्वादशाध्यायी-ग्रन्थ एव यास्कीयः। देवराज काले अतिस्तुत्यूर्ध्वमार्गगतिप्रकरणयोः (त्रयोदशचतुर्दशाध्याययोः) सत्तापि नासीत्। दुर्गकाले ऊर्ध्वमार्गगतेः स्थिति तथैव, परमतिस्तुतिप्रकरणस्य निरुक्तत्वे संशय एवासीत्। सायणकाले पुनः अतिस्तुतिनिरुक्तान्तर्गता, परं द्वादशाध्यायप्रवादः पूर्ववदेव प्रचलति स्म। ऊर्ध्वमार्गगतिस्तदानीमपि निरुक्ते न प्रविष्टा। 'द्वा सुपर्णा' इत्यत्रत्य सन्दर्भस्तु न सायणीयः किन्त्वाधुनिक इति। लक्ष्मणस्वरूपादिभिरपि प्रायशः सामश्रमिमतमूरीकृतम्।

चन्द्रमणि[1]-भगवद्दत्त[2]-प्रभृतयस्तु त्रयोदशचतुर्दशाध्यायावपि परिशिष्टरूपेण निरुक्तेऽन्तर्भावयन्ति। तैः प्रस्तुतानां हेतूनामयं सारः—

(क) उपरिष्टाद् उद्धृतं 'तद्व्याख्यानं...निर्ममे' इति सायणीयं वचनं साम्प्रतिकत्रयोदशाध्यायस्य निरुक्तद्वादशाध्यायान्तर्गतत्वं ज्ञापयति।

(ख) ताण्ड्यब्राह्मणभाष्ये (४।८।३) सायणः—'तथा च यास्कः—शुक्रातिरेके पुमान् भवति। शोणितातिरेके स्त्री भवति। द्वाभ्यां समाने नपुंसको भवति' (निरु० १४।६) इत्युदीर्य चतुर्दशाध्यायस्य सत्तां द्योतयति स्वकाले।

(ग) दुर्गः परिशिष्टपाठान् बहुषु स्थलेषूद्धृतवान्। तथा हि—'देवताभिधाननिर्वचनफलं देवतातादभाव्यमित्येष समासतो निरुक्तशास्त्रचिन्ताविषयः' (दुर्गवृत्तिः १।४)। 'वक्ष्यति हि—यां यां देवतां निराह' (निरु० १३।१३) (दुर्गवृत्तिः १।२०)।

"उदाहरिष्यति च—'अथैतं महानात्मानम्' अधिकृत्य 'क ईषते तुज्यत' इति" (निरु० १४।१।। १४।२६)। दुर्गवृत्तिः १०।२३।।

(घ) पूर्वेऽप्याचार्या इमा अतिस्तुतीः पेठुरिति 'अथेमा अतिस्तुतय इत्याचक्षते (निरु० १३।१), इति यास्कीयवचनस्य दुर्गस्कन्दव्याख्याभ्यां स्पष्टीभवति। तथा हि—

---

१. वेदार्थदीपिका, द्वितीयभागभूमिका।

२. वै० वा० इ० द्वितीयभागे दशमोऽध्यायः।

'अन्येऽप्याचार्या एवमेवैता आचक्षते कथयन्ति' । दुर्गवृत्तिः ॥

'यथाप्रतिज्ञातं समाम्नायो व्याख्यातः । इदानीं पूर्वाचार्याणां मतानुवृत्तितत्परतया अथेमा अतिस्तुतय इत्याचक्षते' । स्कन्दव्याख्या ।

सम्प्रत्युपलभ्यमानो निरुक्तपाठो विभिन्नप्रक्षेपैराकीर्णत्वात् मूलस्वरूपं न भजति । तत्र केचन प्रक्षेपास्तावत् पूर्वापरसम्बन्धाभावाद् आपातपाठमात्रेणापि संज्ञायन्ते । लक्ष्मणस्वरूप-वै०का०राजवाडेभ्यां निरुक्तपाठशोधे महान् प्रयासो व्यधायि । लक्ष्मणस्वरूपो हस्तलिखितकोशान् विविच्य निरुक्तपाठस्य तिस्रोऽवस्थाः प्राकल्पयत्—दुर्गपाठो, लघुपाठो, बृहत्पाठश्चेति[1] । तत्र दुर्गपाठः प्राचीनतरस्ततो लघुपाठस्ततश्च बृहत्पाठः प्रादुरभूत् । यास्क-दुर्गकालयोरन्तरालेऽपि पाठभेदाः समजनिषतेति दुर्गेण तत्र तत्र निर्दिष्टेभ्यः पाठान्तरेभ्यः कल्प्यते ।[2] राजवाडे लघुपाठबृहत्पाठयोः स्थाने यथाक्रमं गुर्जरपाठ-महाराष्ट्रपाठपदे प्रयुङ्क्ते । एतेषां पाठानां स्वरूपमेकेनोदाहरणेन व्यक्तीक्रियते—

**दुर्गपाठः**—आचार्यश्चिद् इदं ब्रूयादिति पूजायाम् । दधिचिदित्युपमार्थे । कुल्माषांश्चिदाहरेत्यवकुत्सिते । नु इत्येषो···। निरु० १।४॥

**लघुपाठः**—आचार्यश्चिद् इदं ब्रूयादिति पूजायाम् । आचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा । दधिचिदित्युपमार्थे । कुल्माषांश्चिदाहरेत्यवकुत्सिते कुल्माषाः कुलेषु सीदन्ति । नु इत्येषो··· ।

**बृहत्पाठः**—आचार्यश्चिद् इदं ब्रूयादिति पूजायाम् । आचार्यः कस्मात् ? आचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा । दधिचिदित्युपमार्थे । कुल्माषांश्चिदाहरेत्यवकुत्सिते । कुल्माषाः कुलेषु सीदन्ति । नु इत्येषो··· ।

बृहद्देवताकारस्य समक्षेऽपि लघुपाठ एवासीदिति—**रुद्रेण सोमः पूष्णा च पुनः पूषा च वायुना** (बृह० २·४) इति पाठादनुकल्पयन्ति मैक्डानलादयः ।[3] अयमत्र लघुपाठः—'पूष्णा रुद्रेण च सोमः । वायुना च पूषा' (निरु० ७।१०) इति । बृहत्पाठः खल्वपि—'पूष्णा रुद्रेण च सोमः । अग्निना च पूषा' इति । अपि च, बृहद्देवतायां निरुक्तसमुच्चये च यस्कनामग्राहं भाष्यकारपदेन च विषया निर्दिष्टाः, परं तत्प्रतिपादकवचनानि यास्कीये निरुक्ते नोपलभ्यन्ते ।[4] एतद्विषयकाणि वचनानि क्वचिद् निरुक्तबृहत्पाठे विद्येरन्नित्याक्षिप्यते ।

---

१. निरुक्तभूमिका पृ० ४५, ४६ ।

२. राजवाडेसम्पादितनिरुक्तपरिशिष्ट पृ० ६८१-८२ ।

३. भगवद्दत्तः वै० वा० इ० द्वितीयभागे दशमोऽध्यायः ।

४. विष्णुपदभट्टाचार्यः यास्कीयनिरुक्तम्, पृ० ४६–६० ।

### ५. ६. यास्कीयनिर्वचनानिः

### ५. ६. १. निर्वचनसिद्धान्ताः

वेदार्थावबोधोद्देश्येन निर्वचनशास्त्रं प्रावर्त्ततेत्युक्तं पुरस्तात् । वेदे तावत् त्रिविधाः शब्दाः—प्रत्यक्षवृत्तयः परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्चेति । तत्र प्रत्यक्षवृत्तीन् शब्दान् नेदं शास्त्रं प्रयोजयति । अवशिष्टवृत्तिद्वयात्मकाः शब्दा नेदमन्तरेण व्यक्तपदार्थाः स्युरित्यपेक्ष्यत इदं शास्त्रम् । अत एव दुर्गो निर्वचनं लक्षयति—**अपिहितस्य परोक्षवृत्तावतिपरोक्षवृत्तौ वा शब्द निष्कृष्य विगृह्यवचनं निर्वचनम्** (दुर्गवृत्ति २।१) इति । यावन्तोऽर्थाः केनचिच्छब्देनाभिधीयन्तेऽपि वा लक्ष्यन्ते,तावतो मनसिकृत्यैवं नाम तच्छब्दविभागा प्रदर्श्येरन् येन ते कृत्स्ना अर्थाः स्फुटमभिव्यज्येरन् इत्याशयः । तथा च यास्कः '**तस्योत्तरा भूयसे निर्वचनाय**' इत्यत्र कृत्स्नव्याख्यानपरं निर्वचनपदं प्रयुयुजे । पदार्थः क्रियागुणाभ्यामेव शक्यते प्रतिपत्तुमितिनाम्नामाख्यातजत्वराद्धान्त आस्थीयते नैरुक्तैः । यास्क प्रदर्शिता निर्वचनसिद्धान्ताः समासतोऽत्रोपन्यस्यन्ते—

(१) **निर्वचनस्यानिवार्यता**—वेदार्थं बुबोधयिषितुर्निर्वचनावश्यकर्त्तव्यतामालक्ष्य प्रोवाच यास्कः—**न त्वेव न निर्ब्रूयात्** (निरु० २।१) इति । केचिदस्मिन् नियमेऽतिवादगन्धमनुभवन्ति तन्न युज्यते, दुर्बोधवैदिकपदार्थप्रतिपादनप्रसङ्ग एवास्य नियमस्य प्रवृत्तत्वात् ।

(२) **प्रकरणानुरोधः**—प्रकरणाद् उपपदाद् वोच्छिद्य पदानि नैव निर्वक्तव्यानीत्याशयम् अभिव्यनक्तचार्यः—**नैकपदानि निर्ब्रूयात्** (निरु०२।१) इति । प्रकरणज्ञ एवार्थमवधारयितुं शक्नुयात् । तद्यथा—'जहा' इति पदं हन्तेर्वा स्याद् जहातेर्वेति प्रकरणाद् ऋते न शक्यते निर्णेतुम् । **जहा कोऽस्मदीषते** (ऋ० ८।४५।३७)इत्यत्र श्रूयमाणं 'जहा' पदं हन्तेर्निरुच्यते, पूर्वस्यामृचि (ऋ० ८।४५।३४) 'मा वधीः' इति श्रवणात् ।

(३) **अर्थप्राधान्यम्**—अर्थोऽस्मिन् शास्त्रे प्राधान्येनाश्रीयते तद्गुणः शब्दः । तस्माद् '**अर्थनित्यः परीक्षेत**' (निरु० २।१) इति नैरुक्तानां मौलिकः सिद्धान्तः । अस्य च प्राधान्येनार्थमभिसमीक्षमाणस्तत्तत् पदं निर्ब्रुवीतेत्यभिप्रायः । अन्यत्र खल्वपि यास्कस्तथैव निर्दिशति –**तानि चेत् समानकर्माणि समाननिर्वचनानि, नानाकर्माणि चेन्नानानिर्वचनानि यथार्थं निर्वक्तव्यानि** (निरु० २।७) इति । अस्यायमाशयः—तानि नामानि यद्येकार्थानि स्युस्तर्हि निर्वचनमप्येकमेव स्यात्' अथानेकार्थानि स्युस्तर्हि निर्वचनमप्यनेकमेव स्यात् । अर्थप्राधान्यस्वीकारेऽपि प्रश्नोऽयमत्र जागर्ति–किम् अभिधेयमात्रार्थमधिकृत्य निर्वक्तव्यम् आहोस्विद् अभिधेयलक्ष्योभयविधार्थमधिकृत्येति ? अभिधेयलक्ष्योभयविधार्थमधिकृत्य निर्वक्तव्यम् इति तु यास्कप्रवृत्त्या ज्ञायते । तथा

चानेनाहिशब्दो (निरु० २।१७) द्विधा निरुक्तः। तथैव गोपदस्यापि (निरु० २।५) निर्वचनानि द्रष्टव्यानि। यास्कस्य लक्षणा ज्ञातैव नासीद् इति तु न शक्यते कल्पयितुम्, क्वचित् तस्या अप्याश्रितत्वात्। तद्यथा—**पादः पद्यतेः। तन्निधानात् पदम्। पशुपादप्रकृतिः प्रभागपादः। प्रभागपादसामान्याद् इतराणि पदानि** (निरु० २।७) इति। अपि च, क्वचिद् ध्वन्यनुकरणमपि निरुक्तनिमित्तमुच्यते। यथा—काकः (निरु० ३।१८), कृकवाकुः (निरु० १२।१३)। लक्षणाध्वन्यनुकरणयोर्निर्दिष्टयोरपि न तत्र बलाधानं यास्कस्य।

अर्थमात्रमधिकृत्य केनचिद् वृत्तिसामान्येन सुबन्ततिङन्तरूपसामान्येन पदं निर्वक्तव्यम्। एतादृशि सामान्येऽविद्यमाने वर्णमात्रसामान्यं गृहीत्वा निर्ब्रूयात्। निर्वचनम् अभिप्रेतार्थम्, अर्थस्य प्रतिपिपादयिषितत्वात्।

(४) **संस्कारानाश्रयः**—संस्कारो नाम व्याकरणरीत्या शब्दनिष्पत्तिः। तत्रादरातिशयो न प्रदर्शयेद् नैरुक्तः, तत्प्रदिष्टवृत्तीनां सांशयिकत्वात्। तथा च यास्कादेशः—**न संस्कारमाद्रियेत विशयवत्यो हि वृत्तयो भवन्ति** (निरु० २।१) इति। नावैयाकरणाय (निरु० २।३) निरुक्तशास्त्रम् उपदिश्यते। व्याकरणस्य कार्त्स्न्यम् (निरु० १।१५) इदं शास्त्रम् इति व्याकरणमभ्यस्यैव निरुक्तम् अध्येतव्यम्। किमर्थं तर्हि संस्कारानादरः? उच्यते—दुरवबोधाः परोक्षातिपरोक्षवृत्तयः शब्दा एव निरुक्तस्य विषयाः। त एवार्थसामान्येन शब्दसामान्येन वा निरुच्यन्ते। तत्र सुबन्ततिङन्तरूपात्मकानां वृत्तीनां नानाप्रकारैरर्थेषु प्रवृत्तानां सांशयिकत्वाद् संस्कारे आदरातिशयः पर्युदस्यते। न चोणादिबाहुलकत्वात् तत्सिद्धिरिति वाच्यम्, उणादिक्षेत्रस्य परिमितत्वाद्धेतुवचनानिर्देशाच्च।

**विभक्तिविपरिणामः**—पूर्वोत्तरप्रकरणम् अनुरुध्य विभक्तयो विपरिणमयितव्याः। तथा चाह यास्कः—**यथार्थं विभक्तीः सन्नमयेत** (निरु० २।१) इति। वैयाकरणा अपि छन्दःसु व्यत्ययमिच्छन्ति—**व्यत्ययो बहुलम्** (अष्टा० ३।१।८५), **सुपां सुलुक्**० (अष्टा० ७।१।३९) इति।[1] यास्को मन्त्रव्याख्याने बहुधेमां प्रवृत्तिं प्रदर्शयामास। तद् यथा—हृत्सु शोकैः हृदयानि शोकैः (निरु० ६।३३) इति।

आधुनिकभाषाविज्ञानानुयायिनां पूर्वे विद्वांसः स्कोल्ड-भण्डारकर-लक्ष्मणस्वरूपप्रभृतयो यास्कप्रदर्शितान् निर्वचनसिद्धान्तान् अनुनिशम्य प्राचीनभारतीयगम्भीरविद्यां प्रति महतीमादरभावनां प्राकाशयन्। साम्प्रतिकास्तु राजवाडेप्रमुखा यास्कीयनिर्वचनानि 'अविचारितरमणीयानि' 'अविकसितानि' इत्याद्यपशब्दैरुपदूषयन्तः कृतकृत्यताम् अनुभवन्ति? प्राचीनभारतीयनिर्वचनविद्यायाः साम्प्रतिकनिर्वचनशास्त्रस्य च प्रयोजने

१. सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन॥ महाभाष्य ३।१।८५॥

भिद्यते इति वस्तु स्वीकृत्यैव पारस्परिकतुलना न्याय्या स्यात् । तत्र निरुक्त-प्रयोजनमसकृदुक्तं पुरस्तात् । साम्प्रतिकनिर्वचनशास्त्रं त्वैतिहासिकपरिप्रेक्षणे शब्द-प्रवृत्तिमूलम् आविष्कर्तुं प्रयतते । तस्मात् स्कोल्डादिदृष्टिरेवात्र न्याय्यासीदित्यल-मतिप्रसङ्गेन ।

## ५. ६. २. निर्वचनोपायाः

नामान्याख्यातजानीति नैरुक्तानामाधारभूतः सिद्धान्तः । अतो नामानि तथा निरुच्यन्ते यथा तत्प्रवृत्तिनिमित्तभूतो धातुः स्पष्टीभवति । एवं कृदन्तशब्देषु धातु-मात्रनिर्देशो धातुप्रत्ययनिर्देशो वा विधीयते । तत्र प्रायो धातुप्रत्ययावुभावपि छान्दसौ भवतः । कदाचिद् लौकिकधातोश्छान्दसः प्रत्ययः, छान्दसधातोश्च लौकिकः प्रत्ययो निर्वचने आश्रीयते । कृदन्तशब्देषु व्याकरणप्रसिद्धा उपायाः प्रचुरतयोपयुज्यन्ते । तथा हि तत्त्वादिषु लोपः, राजादिषु विकारः, सिकतादिषु विपर्ययः, मेघादिषु व्यापत्तिः, द्वारादिषु वर्णोपजनः, पृथ्वादिषु सम्प्रसारणम्, दमूनआदिषु लौकिकधातुभ्यो वैदिकप्रत्ययाः, घृतादिषु वैदिकधातुभ्यो लौकिकप्रत्ययाः ।

तद्धितप्रत्ययान्तेषु शब्देषु पूर्वं तद्धितार्थं निरुच्य ततः प्रकृतिः (कृदन्तः शब्दः) पूर्ववद् निरुच्यते । तद् यथा—दण्ड्य (निरु० २।२) इत्यत्र 'दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा' इति तद्धितार्थं निरुच्य 'दण्डो ददतेर्धारयतिकर्मणः' इति दण्डोऽपि निरुच्यते । समस्तपदेषु खल्वपि पूर्वं समासार्थं निरुच्य ततो विगृहीतपदान्यपि निरुच्यन्ते । तद् यथा—राजपुरुष (निरु० २।३) इत्यत्र 'राज्ञः पुरुषः' इति समासार्थं निरुच्य 'राजा राजतेः' 'पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा' इति विगृहीतपदे निरु-च्येते । अनेकपर्वसु तद्धितसमासेष्वप्ययमेव मार्गो निरुक्तकारेण प्रदर्शितः । स्त्री-प्रत्ययान्तेषु पदेष्वपि पूर्वं स्त्रीत्वं निरुच्य ततः प्रकृतिर्निरुच्यते । तद् यथा—अग्नायी इत्यत्र 'अग्नेः पत्नी' इति स्त्रीत्वं निरुच्य पुनः अग्निरिति पद 'अग्रणीर्भवति' इत्यादि वाक्यैर्निरुच्यते ।

## ५. ६. ३. निर्वचनशैली

(१) **धातुनिर्देशः**—यास्कीयनिरुक्तेनिर्वचनानि नैकेन प्रकारेण प्रदर्श्यन्ते । तत्र धातुनिर्देशस्तावत् प्रधानः । धातुनिर्देशः खल्वपि बहुविधैः क्रियते । तत्रापि श्तिप् प्रत्ययान्तेन (प्रथमपुरुषैकवचनान्तेन वावाप्रसिद्धरूपेण) निर्देशाः प्रायिकाः । तद्यथा—'अध्वरः—ध्वरतिः हिंसाकर्मा' (निरु० १।८) इति प्रथमया, 'पयः पिबतेर्वा प्यायतेर्वा' (निरु० २।५) इति पञ्चम्या । क्वचित् तिङन्तेन निर्देशः—तद् यथा—'अहिः···आहन्तीति' (निरु० २।१७), 'हिरण्यम्···ह्रियते जनाज्जनम्' (निरु० २।१०) । बहुधा कृदन्तशब्दैः प्रायः प्रथमा—पञ्चमीभ्यां निर्देशः क्रियते ।

तद्यथा—'ऋत्विक्...ऋतुयाजी भवति' (निरु० ३।१९), 'अहिरयनात्' (निरु० २।१७), 'अपत्यम्...अपततम्' (निरु०३।१), कम्बलः कमनीयो भवति' (निरु० २।२)। बहुषु स्थलेषु धातुना सह धात्वर्थनिर्देशोऽपि क्रियते। तद्यथा—'विरिति शकुनिनाम वेतेर्गतिकर्मणः' (निरु० २।६)।

(२) **हेतुपूर्वकं निर्वचनम्**—यास्को निर्वचनं हेतुना सम्बध्नाति। तद्यथा—'गौरिति पृथिवी...यद् दूरं गता भवति यच्चास्यां भूतानि गच्छन्ति' (निरु० २।५), 'ज्यापि गौरुच्यते... गमयति इषून् इति' (निरु० २।६)।

(३) **निर्वचनपूर्वको हेतुः**—क्वचित् पदनिर्वचनानन्तरं हेतुः प्रस्तूयते। तद् यथा—'दक्षिणा दक्षतेः समर्धयतिकर्मणः। व्यृद्धं समर्धयति' (निरु० १।७), 'पाणिः पणायतेः पूजाकर्मणः। प्रगृह्य पाणी देवान् पूजयन्ति' (निरु० २।२६)। अत्र 'व्यृद्धं समर्धयति' 'प्रगृह्य पाणी देवान् पूजयन्ति' इति हेतू प्रदर्श्येते।

(४) **हेत्वाक्षिप्तं निर्वचनम्**—क्वचिद् धेतुवचनमात्रम् उदीर्यते, निर्वचनं तु तत आक्षेप्तव्यं भवति। तद्यथा—'निपाता उच्चावचेष्वर्थेषु निपतन्ति' (निरु० १।४) इति हेतुवचनाद् नि+पत् इति निरुक्तिः कल्प्यते। तथैव—'ब्रह्मा परिवृढः श्रुततः, ब्रह्म परिवृढं सर्वतः' (निरु० १।८) इति हेतुनिर्देशाद् बृहतेर्ब्रह्मनिरुक्तिरनुमीयते।

(५) **निर्वचनाक्षिप्तो हेतुः**—क्वचिद् निर्वचनवाक्याद् धेतुराक्षेप्तव्यो भवति। तद्यथा—'मृगो मार्ष्टेर्गतिकर्मणः' (निरु० १।२०) इति पशोर्गतिविशेषाद् धेतोर्मृगाख्या। 'लोम लुनातेर्वा लीयतेर्वा' (निरु० ३।५) इत्यत्र लवनाच्छरीरे विलयाद् वा हेतोर्लोमेत्याख्यायते।

(६) **'कस्मात्' पदप्रयोगः**—यास्कः केषाञ्चित् पदानां 'कस्माद्' इति हेतुप्रश्नपुरःसरं निर्वचनं निर्दिशति। तद्यथा–'निघण्टवः कस्मात्? निगमा इमे भवन्ति, (निरु० १।१)। अत्राह दुर्गः—'येष्वभिधाननिर्वचनप्रारम्भकेष्वाचार्यः कस्माच्छब्दम् उत्तरत्र न कुर्यात् तेष्वपि व्याख्याकालेऽयं समुत्पाद्यः, तथा हि व्याख्यासाकल्यं भवति' (दुर्गवृत्तिः १।१) इति।

(७) **'इति सतः' प्रयोगः**—केषुचित् स्थलेषु निर्वचनानन्तरम् 'इति सतः' 'इति सत्याः' 'इति सताम्' इतीमे निर्देशा यथालिङ्गवचनं क्रियन्ते भाष्यकृता। तद् यथा—'ऊर्क् इत्यन्ननाम, ऊर्जयतीति सतः' (निरु० ३।८)। अस्यायमभिप्रायः—ऊर्जयतोऽन्नस्य ऊर्ग् इति नाम भवति। तथैव—'उषाः कस्मात्? उच्छतीति सत्याः। रात्रेरपरः कालः' (निरु० २।१८)। उच्छन्त्या उषस उषा इति नाम भवतीत्यर्थः। एवमेव—'गृहाः कस्मात्? गृह्णन्तीति सताम्' (निरु० ३।१३)। गृह्णतां गृहाणां गृहा इति नाम भवतीत्यर्थः।

(८) 'पुनः' पदप्रयोगः—निर्वचनप्रसङ्गे यास्केन क्वचित् क्वचित 'पुनः' इति पदमपि प्रयुज्यते। समस्तं पदं निरुच्य, अवयवपदनिर्वचनं 'पुनः' इति पदेनोपक्रम्यते। तद्यथा—'पर्ववान् पर्वतः। पर्व पुनः पृणातेः प्रीणातेर्वा' (निरु० १।२०)। सुखं कस्मात्? सुहितं खेभ्यः। खं पुनः खनतेः' (निरु० ३।१४)।

(९) 'स्यात्' प्रयोगः—नामग्रहणं विनैव परमतप्रदर्शनार्थं यास्कः 'स्यात्' 'स्युः' इति प्रयुङ्क्ते इति प्रतिभाति। तद्यथा—'निघण्टवः कस्मात्?—अपि वाहननादेव स्युः' (निरु० १।१)।

(१०) अर्थमात्रनिर्देशः—क्वचिदर्थमात्रं निर्दिश्यते, निरुक्तिस्तु तत आक्षेपगम्या भवति। तद्यथा—'सेना सेश्वरा समानगतिर्वा' (निरु० २।११) इत्यत्रार्थनिर्देशात् कल्प्यते सह वा समानं वा पूर्वपदम् इन इति चोत्तरपदम्। तथैव—'यज्ञः बहुकृष्णाजिनः' (निरु० ३।१९) इत्यत्राजिनशब्दाद् यज्ञ निरुक्तिराक्षिप्यते।

## ९. ७. यास्कस्मृतमन्त्रव्याख्यानमार्गाः

यास्ककाले ततः पूर्वं च मन्त्रार्थान् अवलम्ब्य बहूनि दर्शनानि प्रचेलुरिति यास्कग्रन्थेऽनेकमन्त्रव्याख्यानमार्गाणां नामनिर्देशपुरःसरं स्मरणाद् व्यज्यते। तत्रैतेषां पक्षाणां वैशिष्ट्यमिदं लक्ष्यते—परस्परं भिन्नाः सन्तोऽपि न विरुध्यन्ते, अपि तु परस्परसहकारेण बहुधा मन्त्रार्थान् विस्फोटयन्तीति। पक्षविशेषेऽभिनिवेशस्तु तत्र प्राधान्यद्योतनपरो न तु पक्षान्तरव्यावर्त्तकः। यास्केन साक्षाद् ये मन्त्रव्याख्यानमार्गा निर्दिष्टास्तेऽत्र संक्षेपतो निरूप्यन्ते—

(१) अधिदैवतपक्षः—नैरुक्तैरभिमतोऽयं पक्षः। यास्को विंशतिषु स्थलेषु 'नैरुक्त'पदेन, पञ्चसु च 'अधिदैवत'पदेनेमं पक्षमुपन्यस्तवान्। शतशो मन्त्रा निरुक्ते एनामेव व्याख्यानसरणिमाश्रित्य विवृताः। अहोरात्रप्रवृत्तिः, ऋतुपरिवर्त्तनं, वर्षणादि-जलप्रदानप्रक्रिया, ओषधिसमुद्भववृद्धिक्षयाः, ग्रहगतिः, नक्षत्रप्रकाशादिक्रिया एतत्सदृशाश्चासंख्याता घटनाः प्रतिक्षणं जाघटयमानास्तिसृभिर्देवताभिरग्निवाय्वादित्य-नामभिर्यथासंख्यं पृथिव्यन्तरिक्षद्युलोकाधिष्ठात्रीभिर्नियम्यन्त इत्यास्था विद्यते मूलम् अस्याधिदैवतपक्षस्य। तथा चाहुर्नैरुक्ताः—**तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः** (निरु० ७।५) इति। तिस्रः सत्योऽपि देवतामन्त्रेषु बहुभिर्नामरूपकर्मभिः स्मर्यन्ते। तथा हि—अस्मिन् पृथिवीलोके सर्वं दार्ष्टिकं कर्माग्निना, अन्तरिक्षलोके सर्वं बलकृत्यं वायुना, द्युलोके च प्रकाशजलाकर्षणादिकं सर्वं कर्मादित्येन सम्पाद्यते। वर्षणप्रक्रिया नैरुक्तैरित्थं निरूप्यते—उत्तरायणकाले सूर्यरश्मयो भूमिस्थं जलमाकृष्य सूर्यमण्डले संचिन्वन्ति, दक्षिणायनकाले तदेव संचितं जलं मध्यस्थाने वृत्रेणावृत्य सन्निरुद्धं वायुवज्रप्रहारविशीर्णं पुनर्भूमिम् आपद्यत इति।

यास्केनायं पक्षः क्वचिद् याज्ञिकपक्षप्रतिद्वन्द्वित्वेन (निरु० ५।११।। ७।४।। ११।४, २६, ३१), क्वचित् परिव्राजकप्रतिपक्षित्वेन (निरु० २।८), क्वचिद् ऐतिहासिकप्रतियोगित्वेन (निरु० २।१६।। १२।१०), क्वचिद् आख्यानद्वितीयत्वेन (निरु० ११।१६।। १२।४१), क्वचिच्चाध्यात्मप्रतियोगित्वेन (निरु० ३।१२।। १०।२६।। १२।३७,३८) समुपस्थाप्यते । इमं पक्षमूरीकुर्वाणा अपि नैरुक्ता याज्ञिकादिपक्षान् न सर्वथा त्यजन्ति, किन्तु समाविविक्षन्त्येवेति – **वहनं च हविषाम् आवहनं च देवानाम्** (निरु० ७।८), **आश्वमेधिको मन्त्रः** (निरु० ६।२२), **पशुसमाम्नाये** (निरु० १२।१३), **आप्रीदेवता** (निरु० ८।४–२२) इत्यादिभिर्यास्कवचोभिः सुव्यज्यते ।

(२) **अधियज्ञपक्षः**—अतिप्राचीनोऽयं मन्त्रव्याख्यानमार्गो ब्राह्मणग्रन्थेषु सुपरिबृंहितो दृश्यते । मन्त्रा यज्ञेष्वनुष्ठीयमानानां कर्मणाम् अङ्गभूता इति तत्तत्प्रसङ्गेनैव व्याख्यानम् अर्हन्तीति यज्ञपक्षानुयायिनः संगिरन्ते । यज्ञश्च पुनर्ब्रह्माण्डे प्रवर्त्तमानानां घटनानां प्रतीकैरनुकारप्रदर्शनम् । एतच्च गवामयनादिषु स्पष्टं परिलक्ष्यते । तत्र देवतानामानन्त्यं विशिष्टैश्वर्यमत्त्वं चाङ्गीक्रियते । अग्निहोत्रादिचयनान्ता यज्ञा ब्राह्मणश्रौतसूत्रादिषु विधीयन्ते । तत्र नामन्त्रका क्रिया काचिदिति न्यायानुरोधाद् मन्त्रविनियोगमनुसृत्य मन्त्रा विव्रियन्तेऽधियज्ञप्रक्रियया । एतत्पक्षधरैर्वाचस्तोमादिषु सर्वेषामेव मन्त्राणां कर्मसु विनियोग इष्यते । यास्केन पूर्वे याज्ञिकाः (निरु० ७।२३), याज्ञिकाः (निरु० ५।११।। ७।४।। ११।२६,३१,४२,४३), अधियज्ञम् (निरु० ११।४) इति शब्दैरयं पक्षः प्रदर्शितः ।

(३) **अध्यात्मपक्षः**—'यद् ब्रह्माण्डे तत् पिण्डे' इति सिद्धान्तमूरीकृत्य प्राचीनैर्मनीषिभिर्मन्त्रा व्याख्याताः । आत्मेन्द्रियशरीराण्यधिकृत्य मन्त्रा विव्रयन्ते येन मार्गेण सोऽध्यात्मपक्ष इत्यभिधीयते । यास्कोऽधिदैवतपक्षस्य प्रतियोगित्वेनेमम् अध्यात्मपक्षं (निरु० ३।१३।। १०।२६।। १२।३७, ३८) प्रतुष्टाव । एकस्मिन् स्थले (निरु० २।८) परिव्राजकपक्षोऽप्युपन्यस्तः, सोऽप्यध्यात्मपक्ष एवान्तर्भवति ।

(४) **ऐतिहासिकपक्षः**—प्राचीनकालत एवायमपि मन्त्रव्याख्यानमार्गः प्रसरति । **तत्र ब्रह्मेतिहासमिश्रम् ऋङ्मिश्रं गाथामिश्रं च भवति** (निरु० ४।६) इत्यैतिहासिकपक्षपातिनः संगिरन्ते । वृत्रनिर्णयप्रसङ्गे (निरु० २।१६), अश्विद्वयनिरूपणे (निरु० १२।१), सरण्यूप्रसूतमिथुनविवरणे (निरु० १२।१०) च यास्को नैरुक्तपक्षप्रतिद्वन्द्वित्वेनैतिहासिकपक्षम् उपातिष्ठिपत् । मन्त्रे खल्वपि यास्को देवापिशन्तन्वोः (निरु० २।१०), विश्वामित्रस्य (निरु० २।२४), मुद्गलस्य (निरु० ९।२३), विश्वकर्मणः (निरु० १०।२६), सरण्व्याः (निरु० १२।१०) चेतिहासं **'तत्रेतिहासमाचक्षते'** इति वाचोयुक्तिपुरःसरं प्रदर्शयामास । आख्यानपदेनापि केचनेतिहासांशा निरुक्ते निर्दिश्यन्ते । तद्यथा—सूर्यग्रस्तोषसोऽश्विद्वयकृतमुक्तिः (निरु० ५।२१), अथर्वणां

(८) **'पुनः' पदप्रयोगः**—निर्वचनप्रसङ्गे यास्केन क्वचित् क्वचित् 'पुनः' इति पदमपि प्रयुज्यते। समस्तं पदं निरुच्य, अवयवपदनिर्वचनं 'पुनः' इति पदेनोपक्रम्यते। तद्यथा—'पर्ववान् पर्वतः। पर्व पुनः पृणातेः प्रीणातेर्वा' (निरु० १।२०)। सुखं कस्मात्? सुहितं खेभ्यः। खं पुनः खनतेः' (निरु० ३।१४)।

(९) **'स्यात्' प्रयोगः**—नामग्रहणं विनैव परमतप्रदर्शनार्थं यास्कः 'स्यात्' 'स्युः' इति प्रयुयुजे इति प्रतिभाति। तद्यथा—'निघण्टवः कस्मात्?—अपि वाहननादेव स्युः' (निरु० १।१)।

(१०) **अर्थमात्रनिर्देशः**—क्वचिदर्थमात्रं निर्दिश्यते, निरुक्तिस्तु तत आक्षेपगम्या भवति। तद्यथा—'सेना सेश्वरा समानगतिर्वा' (निरु० २।११) इत्यत्रार्थनिर्देशात् कल्प्यते सह वा समानं वा पूर्वपदम् इन इति चोत्तरपदम्। तथैव—'यज्ञः बहुकृष्णाजिनः' (निरु० ३।१९) इत्यत्राजिनशब्दाद् यज्ञ निरुक्तिराक्षिप्यते।

### ९. ७. यास्कस्मृतमन्त्रव्याख्यानमार्गाः

यास्ककाले ततः पूर्वं च मन्त्रार्थान् अवलम्ब्य बहूनि दर्शनानि प्रचेलुरिति यास्कग्रन्थेऽनेकमन्त्रव्याख्यानमार्गाणां नामनिर्देशपुरःसरं स्मरणाद् व्यज्यते। तत्रैतेषां पक्षाणां वैशिष्टचमिदं लक्ष्यते—परस्परं भिन्नाः सन्तोऽपि न विरुध्यन्ते, अपि तु परस्परसहकारेण बहुधा मन्त्रार्थान् विस्फोटयन्तीति। पक्षविशेषेऽभिनिवेशस्तु तत्र प्राधान्यद्योतनपरो न तु पक्षान्तरव्यावर्त्तकः। यास्केन साक्षाद् ये मन्त्रव्याख्यानमार्गा निर्दिष्टास्तेऽत्र संक्षेपतो निरूप्यन्ते—

(१) **अधिदैवतपक्षः**—नैरुक्तैरभिमतोऽयं पक्षः। यास्को विंशतिषु स्थलेषु 'नैरुक्त'पदेन, पञ्चसु च 'अधिदैवत'पदेनेमं पक्षमुपन्यस्तवान्। शतशो मन्त्रा निरुक्ते एनामेव व्याख्यानसरणिमाश्रित्य विवृताः। अहोरात्रप्रवृत्तिः, ऋतुपरिवर्त्तनं, वर्षणादिजलप्रदानप्रक्रिया, ओषधिसमुद्भववृद्धिक्षयाः, ग्रहगतिः, नक्षत्रप्रकाशादिक्रिया एतत्सदृशाश्चासंख्याता घटनाः प्रतिक्षणं जाघटचमानास्तिसृभिर्देवताभिरग्निवाय्वादित्यनामभिर्यथासंख्यं पृथिव्यन्तरिक्षद्यु लोकाधिष्ठात्रीभिर्नियम्यन्त इत्यास्था विद्यते मूलम् अस्याधिदैवतपक्षस्य। तथा चाहुर्नैरुक्ताः—**तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः** (निरु० ७।५) इति। तिस्रः सत्योऽपि देवतामन्त्रेषु बहुभिर्नामरूपकर्मभिः स्मर्यन्ते। तथा हि—अस्मिन् पृथिवीलोके सर्वं दार्ष्टिकं कर्माग्निना, अन्तरिक्षलोके सर्वं बलकृत्यं वायुना, द्यु लोके च प्रकाशजलाकर्षणादिकं सर्वं कर्मादित्येन सम्पाद्यते। वर्षणप्रक्रिया नैरुक्तैरित्थं निरूप्यते—उत्तरायणकाले सूर्यरश्मयो भूमिस्थं जलमाकृष्य सूर्यमण्डले संचिन्वन्ति, दक्षिणायनकाले तदेव संचितं जलं मध्यस्थाने वृत्रेणावृत्य सन्निरुद्धं वायुवज्रप्रहारविशीर्णं पुनर्भूमिम् आपद्यत इति।

यास्केनायं पक्षः क्वचिद् याज्ञिकपक्षप्रतिद्वन्द्वित्वेन (निरु० ५।११।। ७।४।। ११।४, २६, ३१), क्वचित् परिव्राजकप्रतिपक्षित्वेन (निरु० २।८), क्वचिद् ऐतिहासिकप्रतियोगित्वेन (निरु० २।१६।। १२।१०), क्वचिद् आख्यानद्वितीयत्वेन (निरु० ११।१९।। १२।४१), क्वचिच्चाध्यात्मप्रतियोगित्वेन (निरु० ३।१२।। १०।२६।। १२।३७,३८) समुपस्थाप्यते । इमं पक्षमूरीकुर्वाणा अपि नैरुक्ता याज्ञिकादिपक्षान् न सर्वथा त्यजन्ति, किन्तु समाविविक्षन्त्येवेति –**वहनं च हविषाम् आवहनं च देवानाम्** (निरु० ७।८), **आश्वमेधिको मन्त्रः** (निरु० ६।२२), **पशुसमाम्नाये** (निरु० १२।१३), **आप्रीदेवता** (निरु० ८।४–२२) इत्यादिभिर्यास्कवचोभिः सुव्यज्यते ।

(२) **अधियज्ञपक्षः**—अतिप्राचीनोऽयं मन्त्रव्याख्यानमार्गो ब्राह्मणग्रन्थेषु सुपरिबृंहितो दृश्यते । मन्त्रा यज्ञेष्वनुष्ठीयमानानां कर्मणाम् अङ्गभूता इति तत्तत्प्रसङ्गेनैव व्याख्यानम् अर्हन्तीति यज्ञपक्षानुयायिनः संगिरन्ते । यज्ञश्च पुनर्ब्रह्माण्डे प्रवर्त्तमानानां घटनानां प्रतीकैरनुकारप्रदर्शनम् । एतच्च गवामयनादिषु स्पष्टं परिलक्ष्यते । तत्र देवतानामानन्त्यं विशिष्टैश्वर्यमत्त्वं चाङ्गीक्रियते । अग्निहोत्रादिचयनान्ता यज्ञा ब्राह्मणश्रौतसूत्रादिषु विधीयन्ते । तत्र नामन्त्रका क्रिया काचिदिति न्यायानुरोधाद् मन्त्रविनियोगमनुसृत्य मन्त्रा विव्रियन्तेऽधियज्ञप्रक्रियया । एतत्पक्षधरैर्वाचस्तोमादिषु सर्वेषामेव मन्त्राणां कर्मसु विनियोग इष्यते । यास्केन पूर्वे याज्ञिकाः (निरु० ७।२३), याज्ञिकाः (निरु० ५।११।। ७।४।। ११।२९,३१,४२,४३), अधियज्ञम् (निरु० ११।४) इति शब्दैरयं पक्षः प्रदर्शितः ।

(३) **अध्यात्मपक्षः**—'यद् ब्रह्माण्डे तत् पिण्डे' इति सिद्धान्तमूरीकृत्य प्राचीनैर्मनीषिभिर्मन्त्रा व्याख्याताः । आत्मेन्द्रियशरीराण्यधिकृत्य मन्त्रा विव्रयन्ते येन मार्गेण सोऽध्यात्मपक्ष इत्यभिधीयते । यास्कोऽधिदैवतपक्षस्य प्रतियोगित्वेनेमम् अध्यात्मपक्षं (निरु० ३।१३।। १०।२६।। १२।३७, ३८) प्रतुष्टाव । एकस्मिन् स्थले (निरु० २।८) परिव्राजकपक्षोऽप्युपन्यस्तः, सोऽप्यध्यात्मपक्ष एवान्तर्भवति ।

(४) **ऐतिहासिकपक्षः**—प्राचीनकालत एवायमपि मन्त्रव्याख्यानमार्गः प्रसरति । **तत्र ब्रह्मेतिहासमिश्रम् ऋङ्मिश्रं गाथामिश्रं च भवति** (निरु० ४।६) इत्यैतिहासिकपक्षपातिनः संगिरन्ते । वृत्रनिर्णयप्रसङ्गे (निरु० २।१६), अश्विद्वयनिरूपणे (निरु० १२।१), सरण्यूप्रसूतमिथुनविवरणे (निरु० १२।१०) च यास्को नैरुक्तपक्षप्रतिद्वन्द्वित्वेनैतिहासिकपक्षम् उपातिष्ठिपत् । मन्त्रे खल्वपि यास्को देवापिशन्तन्वोः (निरु० २।१०), विश्वामित्रस्य (निरु० २।२४), मुद्गलस्य (निरु० ९।२३), विश्वकर्मणः (निरु० १०।२६), सरण्व्याः (निरु० १२।१०) चेतिहासं **'तत्रेतिहासमाचक्षते'** इति वाचोयुक्तिपुरःसरं प्रदर्शयामास । आख्यानपदेनापि केचनेतिहासांशा निरुक्ते निर्दिश्यन्ते । तद्यथा—सूर्यग्रस्तोषसोऽश्विद्वयकृतमुक्तिः (निरु० ५।२१), अथर्वणां

पितृत्वम् (निरु० ११।१९), देवशुनी-पणिसंवादः (निरु० ११।२५), यम-यमी-संवादः (निरु० ११।३४), पूर्वदेवयुगे साध्यदेवोद्भवः (निरु० १२।४१)। बृहद्देवतादिष्वप्येतादृश इतिहासांशा वर्ण्यन्ते। परम् एतान् अंशान् संयोज्य केनापि कश्चित् सम्बद्धो मानवेतिहासोऽद्ययावत् न प्रकटीकृत इतीतिहासाभासा एवमेंऽशाः। एतेषां रहस्यमपि यास्कः स्वयमेवोदघाटयत्—**ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता** (निरु० १०।१०,४६) इति।

(५) **नैदानपक्षः**—स्यालपदस्य (निरु० ६।९), सामपदस्य (निरु० ७।१२) च निर्वचनप्रसङ्गे यास्को नैदानपक्षस्य सस्मार। निदानो नाम ग्रन्थविशेष इति तत्रैव व्याख्यातार आहुः। निदानसंज्ञकग्रन्थस्य सम्प्रत्यनुपलम्भात् तत्स्वरूपं न ज्ञायते।[1] दुर्गसंकेततस्त्वेतावन्मात्रमाक्षिप्यते—मन्त्रसाक्षात्कारप्रयोजको घटनाविशेषो निदानमित्यभिधीयत इति। तथा च—'अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्साञ्चकार। इन्द्र एत्य परिदेवयाञ्चक्रे—न नूनमिति' (निरु० १।५) इति निरुक्तसन्दर्भं व्याचक्षाणो दुर्गोऽवोचत्—**उदाहरणमत्र निर्विवक्षुर्निदानमेवाह—अगस्त्य इन्द्रायेत्यादि। निदानवतां मन्त्राणां निदानमेव पूर्वं वक्तव्यम्। तेन ह्यतितरामर्थ उच्यमानः प्रकाशते** (दुर्गवृत्तिः १।५)। यास्केनानेकमन्त्रव्याख्यानावसरे निदानानि प्रकाशितानि[2], बृहद्देवतादिष्वपि तथाविधानि कानिचिदुपलभ्यन्ते[3]।

## ९. ८. यास्कीयमन्त्रव्याख्यानम्

यास्को यद्यप्यानुपूर्व्यशः कस्या अपि मन्त्रसंहिताया भाष्यं न निर्ममे, तथापि निर्वचनप्रसङ्गेन शतशो मन्त्रान् उद्धृत्य व्याचख्यौ। तत्कृते मन्त्रव्याख्यान उपलभ्यमाना विशेषा दिङ्मात्रेणेहोपन्यस्यन्ते—

(१) **संक्षेपः**—प्राचीनतममिदं मन्त्रव्याख्यानम् अतीव सक्षिप्तं वर्तते। परिमितसंख्यान् मन्त्रान् विहाय व्याख्यानोत्थानिकारूपं निदानमपि प्रायो न प्रकाश्यते। यत्र खल्वपि निदानम् ऐतिहासिकी वा पूर्वपीठिकोपस्थाप्यते, तत्रापि समासशैलीमेवाङ्गीचकार मुनिः। बहुषु स्थलेषु 'सा निगदव्याख्याता' इत्येव व्याख्यानरीतिः।

(२) **मन्त्रपदानुपूर्व्यनुरोधः**—मन्त्रस्थपदानाम् आनुपूर्वीम् अनुसृत्य विव्रियन्ते मन्त्राः। वैदिकपदस्थाने लौकिकपदविन्यास इति विवरणस्वरूपम्। तद्यथा—वृक्षस्य नु ते पुरुहूत वयाः=वृक्षस्येव ते पुरुहूत शाखाः' (निरु० १।४)। 'न वा अमु लोकं जग्मुषे किञ्च नाकम्=न वै अमु लोकं जग्मुषे किञ्च नासुखम्' (निरु० २।१४) इति।

---

१. सम्प्रत्युपलभ्यमानो निदानसूत्रग्रन्थो नात्राभिप्रेतः।

२. निरु० ४।६।। ५।२।।

१. बृह० ४।४६–५५।। ४।१०५–१०८।।

(३) **उपसर्गाख्यातान्वयः**—उपसर्गाख्यातयोः समन्वयः क्रममपि भङ्क्त्वा विधीयते। तद्यथा—'रमध्वं मे' (निरु० २।२५) इति मन्त्रस्य व्याख्याने 'उपरमध्वम्' 'प्राभिह्वयामि' इत्युपसर्गौ तिङन्ताभ्यां सह समन्वीयेते। 'अभि देवा असाम' (निरु० ३।८) इति 'अभिभवेम देवाः' इति व्याख्यायते।

(४) **क्रमभङ्गः**—केषुचित् स्थलेषु क्रमभङ्गेणापि व्याख्यानमुपलभ्यते। तत्र हेतुं नावकल्पयामहे। तद्यथा—पर्याया इव त्वदाश्विनम्=आश्विनं च पर्यायाश्च' (निरु० १।९)। 'आ विवासेम धीतिभिः=कर्मभिः परिचरेम' (निरु० २।२४)। उद्देशविधेययोः प्रतिपिपादयिषया यत्र क्रमभङ्गो नान्तरीयकस्तत्र तथैव व्याख्यानं विधीयते। तद्यथा—

**वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः।**
**इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण॥ ऋ० १।९८।१॥**

'इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्येण। राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्याम' (निरु० ७।२२) इति।

(५) **पदपूरणनिपातत्यागः**—मन्त्रव्याख्यानावसरे मन्त्रस्थाः पदपूरणार्था निपाताः परित्यज्यन्ते। तद्यथा—'नूनं सा ते=सा ते' (निरु० १।७), 'शिशिरं जीवनाय कम्=शिशिरं जीवनाय' (निरु० १।१०), 'तमिद् वर्धन्तु=तं वर्धयन्तु' (निरु० १।१०) इति।

(६) **अध्याहारः**—मन्त्रार्थस्फुटीकरणार्थं पदं पदसमूहो वा यथेष्टम् अध्याह्रियते। तद्यथा—'न जामये' इति मन्त्रव्याख्याने वह्निपदव्याख्यानन्तरम् 'अर्वाह्नि च स्त्रियम्' (निरु० ३।६) इत्यध्याहारः। 'य ईं ददर्श' (निरु० २।८) इत्यत्र 'स एवास्य वेद मध्यमः' इत्यध्याहारः। तथैव 'तमेतद् ब्रूमः' (निरु० ११।३८, ३९) इत्याह्रियते।

(७) **पदनिर्वचनानि**—पदनिर्वचनमेव भाष्यकारस्य प्रधानं लक्ष्यम्। अतो मन्त्रव्याख्यानं कुर्वन्नपि प्रसक्तानुप्रसक्तरीत्या निर्वचनलोभं संवरितुं न शक्नोति यास्कः। यद्यपि 'इमं मे गङ्गे' (निरु० ९।२६) इत्यत्र प्रदर्शिता—'इति समस्तार्थः। अथैकपदनिरुक्तम्। गङ्गा गमनात्...' इति रीतिः सुपरिग्रहा अभविष्यत्, तथापि भाष्यकारेण न साङ्गीकृता। 'अभीदमेकमेको०' (निरु० ३।१०) इत्यत्र मन्त्रव्याख्या निर्वचनैर्व्यवहिता दुरवगाहा समजनि। तथैव 'शासद् वह्नि' (निरु० ३।४) इति मन्त्रस्योत्तरार्द्धांशः सुबहुव्यवधानानन्तरं व्याख्यायते (निरु० ३।५)। 'आर्ष्टिषेणो होत्रम्' (निरु० २।११) इत्यत्र चतुर्थचरणस्य व्याख्या निर्वचनव्यग्रेण भाष्यकृता परित्यक्ता। प्रसक्तानुप्रसक्तकथनस्वभावो यास्कः 'तस्योत्तरा भूयसे निर्वचनाय' इत्युदीर्य मन्त्रान्तरं व्याचिख्यासति तत्र तत्र।

(८) **विभक्तिविपरिणामः**—'यथार्थं विभक्तीः सन्नमयेत्' (निरु० २।१) इति नैरुक्तसिद्धान्तो यास्केन मन्त्रव्याख्याने भृशमाश्रीयते। तद्यथा—'पूरुषादः=पुरुषान् अदनाय' (निरु० २।६)।

## ६.०. निरुक्तव्याख्याकारः

निरुक्तप्रणयनानन्तरम् अनतिचिरमेव तद्व्याख्यानान्यपि समारब्धानि स्युः। महाभाष्यकृतः पतञ्जलेः काले निरुक्तव्याख्यानानि सुप्रचलितान्यासन्निति तदुदाहृतवचनेन समाक्षिप्यते। तथा हि—'शब्दग्रन्थेषु चैषा प्रसृततरा गतिर्भवति—'निरुक्तं व्याख्यायते, व्याकरणं व्याख्यायत इत्युच्यते, न कश्चिदाह पाटलिपुत्रं व्याख्यायते' (महा० ४।३।६६) इति। परं पतञ्जलिकालिका निरुक्तव्याख्यानग्रन्थाः कालकवलिताः सम्प्रति नाममात्रतोऽपि न स्मर्यन्ते। तत्र ये केचन क्वचिद् नाममात्रेण वा प्रासङ्गिकोद्धरणरूपेण वा श्रूयन्ते, तेषां रचयितृकाल-स्वरूप-परिमाणादिकम् अतीतगहनतमसि निलीनम्। मध्यकालिकैः कैश्चिदाचार्यवरैर्वैदिकवाङ्मये कृतभूरिश्रमैर्यानि निरुक्तभाष्यवृत्तिव्याख्यादीनि प्रणीतानि, तान्यंशतस्त्रुटितान्यपि लभ्यन्त इति महत उपकाराय प्रभवन्ति विदुषाम्। तत्र प्राचीनानां मध्यकालिकानां च व्याख्यातॄणां यथोपलब्धं वृत्तमिह संकल्यते।

## ६.१. निरुक्तवार्त्तिककारः

निरुक्तवृत्तिकारो दुर्गः स्ववृत्तौ व्याख्याप्रसङ्गे यत्र तत्र पद्यान्युपन्यस्यति प्रमाणत्वेन, प्रायो नामग्रहणं विनैव क्वचिच्च नामस्मरणपुरःसरम्। तत्र तेन चत्वारः श्लोका वार्त्तिकनाम्नोद्धृताः। तथा हि—

(१) **अपि चोक्तं वार्त्तिककारेण—**

**यावतामेव धातूनां लिङ्गं रूढिगतं भवेत्।**
**अर्थश्चाभिधेयस्थस्तावद्भिर्गुणविग्रहः॥ निरुक्तवृत्ति १।१॥**

(२) **वार्त्तिककारेणाप्युक्तम्—**

**निगमवशाद् बह्वर्थं भवति पदं तद्धितस्तथा धातुः।**
**उपसर्गगुणनिपाता मन्त्रगता सर्वथा लक्ष्याः॥ निरु० वृ० ६।३१॥**

(३) **तदुक्तं वार्त्तिककारेण—**

**क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्।**
**प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्॥ निरु० वृ० ८।४॥**

(४) **उक्तं च वार्त्तिके—**

**मध्यमा वाक् स्त्रियः सर्वाः पुमान् सर्वश्च मध्यमः।**
**गणाश्च सर्वे मरुतो गणभेदाः पृथक् कृतेः॥ निरु० वृ० ११।१३॥**

तद् दुर्गोद्धृतवचनान्यनुमापयन्ति—कश्चिद् वार्तिकनामा प्रामाणिको निरुक्त-व्याख्यानग्रन्थो दुर्गकाल आसीदिति, परं तस्य कर्तृ-काल-परिमाणादिविषये किमपि न ज्ञायते सम्प्रति। वै० का० राजवाडे-लक्ष्मणस्वरूपौ तु शौनकीयबृहद्देवतैव वार्त्तिक-समाख्यया दुर्गेणोदलेखीत्यातिष्ठेते। उद्धृतश्लोकचतुष्टये प्रथमस्तावद् बृहद्देवता-याम् (२।१०२) अविकलरूपेणोपलभ्यते। द्वितीयश्लोके राजवाडे टिप्पणयति—'अयं श्लोको बृहद्देवतायां नोपलभ्यते। बृहद्देवताकारान्नान्यो वार्त्तिककारः' इति[१]। तृतीयश्लोकेऽपि तथैव स टिप्पणयति—'अयं श्लोकोऽधुनोपलब्धबृहद्देवतायां न विद्यते' इति।[२] चतुर्थश्लोके च तस्य टिप्पणी—'दुर्गकाले बृहद्देवताग्रन्थे भिन्नाः पाठा आसन् अधिकाश्च श्लोकाः। च० ट० पुस्तकयोः—

**सर्वा स्त्री मध्यमस्थाना पुमान् वायुश्च सर्वगः।**
**गणाश्च सर्वे मरुत इति वृद्धानुशासनम्[३]॥**

इति पाठान्तरं प्रान्ते दीयते' इति।[४] अयं पाठान्तरयुक्तः श्लोकः स्कन्दस्वामि-नोद्धृतः।[५] तत्र लक्ष्मणस्वरूपः टिप्पणयति—'इमानि पाठान्तराणि बृहद्देवताया एव' इति।

## ६. २. बर्बरस्वामी

निरुक्तव्याख्यातॄणामन्यतमो बर्बरस्वामी बभूव, स च दुर्गात् पूर्ववर्त्तीति स्कन्दस्वामिवचनाज् ज्ञायते। तथा हि—'तस्य पूर्वटीकाकारैर्बर्बरस्वामिभगवद्दुर्ग-प्रभृतिभिर्विस्तरेण व्याख्यातस्य…' (निरुक्त भाष्यटीका १।१) इति स्कन्दो बर्बर-नामग्राहं टीकाकारं स्मरति। परं तद्विषयेऽन्यत् किमपि नावबुध्यते। किमयमेव वार्त्तिककार आसीदिति भगवद्दत्तः प्रश्नपुरःसरं सम्भावयते।[६]

## ६. ३. ० दुर्गः

निरुक्तव्याख्याकारेषु प्रख्याततमो बहुश्रुतो विचक्षणो दुर्गो दुर्गसिंह-दुर्गाचार्या-परनामा बभूव। तत्कर्तृको निरुक्तवृत्तिनामको ग्रन्थः सुप्रौढोऽतिविस्तीर्णो निखिल-निरुक्तविवरणात्मकः (चतुर्दशाध्यायं विहाय) सम्प्रत्युपलभ्यते। दुर्गः स्ववृत्ति वेद (विशेषतो मैत्रायणीसंहिता) ब्राह्मणानुक्रमणी-बृहद्देवता-रामायण-महाभारत-पुराण-मनुस्मृति-कल्पसूत्र-पूर्वमीमांसा-सांख्य-वात्स्यायनभाष्यादिग्रन्थानां वाक्यजातैः सम-

---

१. राजवाडे सम्पादित दुर्गवृत्ति पृ० ६००। २. तत्रैव पृ० ७४०।
३. अत्र निरुक्तसमुच्चयस्यादौ वररुचिनोद्धृतं वृद्धानुशासनमप्यनुसंधेयम्।
४. तत्रैव पृ० ८९७। ५. स्कन्दस्वामि-महेश्वरकृत-निरुक्तभाष्यटीका ११।१३॥
६ वै० वा० इ० द्वितीयभागे द्वादशाध्यायः।

लङ्घकृत्य स्वशास्त्रविचक्षणतां प्रमाणयति । अत्रोपन्यस्ततथ्यैरस्य ग्रन्थस्य महत्त्वं सुव्यज्यते—

## ६. ३. १. निरुक्तवृत्तिः

(१) निरुक्तवाक्यानां स्पष्टं, सुसंगतं, विस्तृतं च विवरणमत्र प्रस्तूयते । यत्तु कैश्चित् 'निरुक्तस्य प्रतिशब्दं व्याख्यानं दुर्गेण स्ववृत्तावुपन्यस्तम्' इत्युक्तम्[1], तत् कीर्तनातिशयमात्रम्, व्यभिचारदर्शनात् ।[2]

(२) दुर्गः पाठापाठविवेचने दत्तावधानः स्वतन्त्रप्रज्ञया पाठान् योजयामास । तथा हि—'एवमेतद् भाष्यं दुर्योज्यं यद्येष भाष्यस्य सम्यक्पाठः । अथ पुनरसम्यक्पाठस्ततः सम्यक्पाठोऽत्रान्वेष्टव्यः । अहं तु लक्षये यथैष मया मन्त्रो व्याख्यातः, स एव सम्यक्पाठः स्यात्' (निरुक्तवृत्ति ५।१०) ।

प्रभूतानि पाठान्तराणि निर्दिष्टानि दुर्गेण । तद्यथा—'अथवा संविज्ञानानि तानि संविज्ञातानि तानि वेत्युभावप्येतौ पाठौ' (निरु० वृ० १।१२) । 'असन् स्युरित्यर्थः । भाष्येऽपि स्युरित्येष पाठः । असन् इत्येष प्रमादपाठः' (निरु० वृ० ४।१९) । 'केचिदत्र अबनेनान्नम् इत्येवमधीयते भाष्यम् केचिद् अनेनान्नम् इत्येवमधीयते भाष्यम्' (निरु० वृ० ६।४) ।

(३) यास्कीयामतिसंक्षिप्तामांशिकीमस्पष्टां मन्त्रव्याख्यां दुर्ग ऋषि-देवता-छन्दो-विनियोग-प्रसङ्गैः संयोज्य सुसंगतां बुद्धिगम्यां विधत्ते । इयं च व्याख्या परवर्तिवेदभाष्यकाराणां सायणादीनाम् आदर्शरूपा बभूव ।

(४) निघण्टुक्रमसूक्ष्मेक्षिका प्रदर्शिता दुर्गेण । तथा हि—दावने-अकूपारस्य-पदयोर्व्युत्क्रमेण कृतं यास्कव्याख्यानमभिसमीक्ष्य निघण्टोर्भिन्नकर्तृत्वं कल्पयामास सः ।

(५) ब्राह्मणादिग्रन्थप्रमाणैः स्वव्याख्यानं समुपोद्बलयति दुर्गः । तत्रापि विद्वदुचितविनयं प्रदर्शयति सः—'इदृशेषु शब्दार्थन्यायसङ्कटेषु मन्त्रार्थघटनेषु दुरवबोधेषु मलिमतां मतयो न प्रतिहन्यन्ते । वयं त्वेतावदत्रावबुध्यामहे' (निरु० वृ० ७।३१) इति ।

## ६. ३. २. दुर्गवृत्तिपरिमाणम्

दुर्गवृत्तेर्हस्तलिखितकोशेषूत्तरषट्क एकादशाध्यायसमाप्तिसूचिकान्त्यपङ्क्तिः सर्वतो विलक्षणा प्रतीयते । अन्यासु तावदध्यायान्त्यपङ्क्तिषु दुर्गोल्लेखः पादनिर्देशश्च

१. लक्ष्मणस्वरूपेण निरुक्तभूमिकायाम्, रामगोपालेन स्टर्नवाख-अभिनन्दनग्रन्थे ।
२. वै० का० राजवाडे निरुक्तभूमिकायां पृ० १०-१२ ।

नोपलभ्यते । एकादशाध्यायान्त्यपङ्क्तौ पुनर्विरुदावलीभूषितग्रन्थकारनाम पादसमाप्तिश्च निर्दिश्यते । तथा हि—'ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमनिवासिन आचार्यभगवद्दुर्गसिंह[स्य]कृतौ षोडशस्याध्यायस्य[1] चतुर्थः पादः समाप्तः ।' एतद्वैलक्षण्यम् अभिसमीक्ष्य लक्ष्मणस्वरूपोऽनुमिमीते—दुर्गकृतिरेकादशाध्यायान्ते परिसमाप्ता, केनचित् तच्छिष्येण द्वादशाध्यायव्याख्या विहिता सन्नियोजिता च । या तु त्रयोदशाध्यायव्याख्या मुद्रितसंस्करणेषु समुपलभ्यते, सा भिन्नकर्तृका चावरकालसन्नियोजिता च, प्राचीनकोशेषु तत्समावेशाभावाद्, द्वादशाध्यायान्ते च 'समाप्तो ग्रन्थः' इति स्पष्टोल्लेखात्, निरुक्तवृत्तेरारम्भे 'अयं तस्या द्वादशाध्यायी भाष्यविस्तरः । तस्येदमादिवाक्यम्—'समाम्नायः समाम्नातः' इति निर्देशाच्च ।[2]

## ६. ३. ३. दुर्गस्य देश-गोत्र-शाखाः

'जम्बूमार्गाश्रमनिवासिनः' इति पूर्वोद्धृतसन्दर्भे निर्देशात् लक्ष्मणस्वरूपः परिकल्पयति—दुर्गो वर्त्तमानजम्मूप्रदेशवास्तव्य आसीद् गृहीततुरीयाश्रमश्च भगवत्पदभाक्त्वाद् आश्रमवासित्वनिर्देशाच्चेति ।[3] भगवद्दत्तस्तु प्राह—दुर्गो जम्बूसरसविधे गुर्जरप्रदेशे वसतिं चकार, यतः स प्रायो मैत्रायणीयपाठान् स्ववृत्तौ समुद्धृतवान्, मैत्रायणी शाखा च तत्काले गुर्जरप्रदेशे प्रथितप्रचारासीत् । तुरीयाश्रमवासित्वं खल्वपि तस्यासिद्धम्, स्वगोत्रशाखानिर्देशानुपपत्तेः । दुर्गः स्वगोत्रशाखे उल्लिखति—**'अहं च कापिष्ठलो वासिष्ठः'** (निरु० वृ० ४।१४) इति । नहि संन्यासिनो गोत्रशाखाद्यभिमान उपपद्यते, संन्यासे दीक्षितस्य तत्त्यागात् ।[4] रामगोपालो विष्णुपुराण-महाभारतप्रमाणानि प्रस्तुत्य भगवद्दत्तपक्षं परिपोषयति ।[5] लक्ष्मणस्वरूपेणापि पश्चाद् एतन्मतम् ऊरीकृतम् ।[6]

## ६. ३. ४. दुर्गस्य कालः

दुर्गकालमधिकृत्य विवदन्त ऐतिह्यविदः । तत्र लक्ष्मणस्वरूपस्तावदाह—देवराजयज्वकृते निघण्टुभाष्ये निरुक्तटीकाकृतो दुर्गस्योल्लेखाभावाद् दुर्गो देवराजाद् अवरकालजन्मेति सिध्यति । दुर्गस्यावरकालावधिस्तु आक्सफोर्डस्थिते बोडलीनग्रन्थागारे विद्यमानाया दुर्गवृत्तिपाण्डुलिपेः कालनिर्देशः खीस्ताब्दः १३८७ तमः शक्यते

---

१. निघण्टुपञ्चाध्यायीं संयोज्यायं संख्यानिर्देशः ।

२. निरुक्ताङ्ग्लानुवादभूमिका पृ० ५२, ५३ ।

३. तत्रैव ।

४. वै० वा० इ० द्वितीयभागे द्वादशाध्याये ।

५. लुड्विग स्टर्नबाख-अभिनन्दनग्रन्थे ।

६. निरुक्तभाष्यटीका-तृतीयभागे भूमिकायाम् ।

वक्तुम् । अतो दुर्गकालः प्रायेण खीस्तीया त्रयोदशाब्दीति ।[1] कालान्तरे तु लक्ष्मण-स्वरूपेण दुर्गः स्कन्दस्वामिनः पूर्ववर्त्तित्वात् खीस्तीयां प्रथमशताब्द्यां जन्म लेभ इति मतमङ्गीकृतम् ।[2]

भगवद्दत्तस्त्वभिमन्यते—ऋग्वेदभाष्यकारावुद्गीथस्कन्दौ दुर्गकृतं मन्त्रव्याख्यानम् उपजीवत इति दुर्गस्य तत्पूर्ववर्तित्वं सिध्यति । उद्गीथ-स्कन्दयोश्च कालः ६८७ तमो विक्रमीयाब्द इति प्रमाणान्तरेण निर्णीतः । तस्माद् दुर्गः प्रायेण खीस्तीयायां षष्ठशताब्द्यां जज्ञ इति ।[3]

रामगोपालस्य नवीनं मतं पुरत आयातम् । तथा हि—दुर्ग उद्गीथभाष्यमुपजीवति, न तु तद्विपरीतं यद् भगवद्दत्त आस्थित । तद्यथा—'अरुषीः अरोचः' (ऋ० १०।५।५) इत्युद्गीथभाष्यं दुर्गो व्याचष्टे—'अरोचनाः दीप्ता इत्यर्थः' । 'वावशानः वावश्यमानः अत्यर्थं शब्दायमानः' इत्युगीद्थभाष्यं दुर्गः—'कामयमानो वावश्यमानो वा शब्दं कुर्वाणः' इत्यनुवदते । तथैव दुर्गः स्कन्दस्वामिनाप्युपकृतः प्रतीयते (ऋ० १।३४।१०) (निरु० ३।२०) इत्यादिषु । उद्गीथ-स्कन्दौ सहयोगिनौ समकालिकाविति वेङ्कटमाधवो जुघोष । स्कन्दो निरुक्तटीकाकृत् तु वेदभाष्यकारात् स्कन्दस्वामिनो भिन्नः, दुर्गतोऽवरकालवर्त्ती च स्कन्दकृतनिरुक्तटीकायां दुर्गोल्लेखात् । अपि च, दुर्गकृतमन्त्रव्याख्यानस्योवटकृतवाजसनेयसंहिताभाष्यस्य च परस्परं तुलनया प्रकटीभवति—दुर्गो न केवलमुवटव्याख्यानम् अनुकरोति, अपि तु सरलीकृत्य विवृणोति । तद्यथा—उवटः 'वा० सं० १२।३८) 'युनक्त' 'वितनुध्वम्' इति मन्त्रपदे यथासंहितम् अव्याख्याते उपन्यस्यति, दुर्गस्तु 'योजयत' 'वितनुत' (निरु० ५।२८) इति विवृणुते । उवटो भोजकालिक इति स वेदभाष्यं खीस्तीयैकादशशताब्द्याः पूर्वार्द्धे रचयामासेति सम्भाव्यते । तस्माद् दुर्गवृत्तिरचनाकालः खीस्तीयः ११५०-१२५० स्थिरीभवतीति निष्कर्षः ।[4]

इममपि मतं नासन्दिग्धं प्रतिभाति । देवराजयज्वा हि निरुक्तटीकाकृद्-वेदभाष्यकारयोः स्कन्दयोरेकत्वम् अनुदृष्टवान् । तथा हि—'उप प्रयोभिरागतम् इत्यादिषु निरुक्तटीकायां स्कन्दस्वामिना प्रय इत्यन्ननामेत्युच्यते । तथा च अक्षितिश्रवः इत्यादिनिगमेषु वेदभाष्ये श्रव इत्यन्ननामेति स्पष्टमुच्यते' (निघण्टुभाष्य २।७।४) । अतोऽसंदिग्धरूपेण दुर्गकालो नाद्यापि निर्णीतः ।

---

१ निरुक्ताङ्ग्लानुवादभूमिकायाम् ।
२. निरुक्तभाष्यटीकातृतीयभागभूमिकायाम् ।
३. वै० वा० इ० द्वितीयभागे द्वादशाध्याये ।
४. लुड्विग् स्टर्नबाख-अभिनन्दनग्रन्थे पृ० १३३-१३४ ।

## ६. ४. ०. स्कन्द-महेश्वरौ

स्कन्द-महेश्वराभ्यां सुविस्तीर्णा निरुक्तटीका रचिता, सा च लक्ष्मणस्वरूप-पुरुषकारेण प्रकाशमागता । तस्या हस्तलिखितकोशेषु पादाध्यायसमाप्तिसूचक-वाक्येषु क्वचित् स्कन्दस्वामीति क्वचिच्च महेश्वर इति कर्तृत्वेन निर्दिष्टः (अध्याय-द्वयं शबरकृतमित्यपि सूच्यते) । तत्र खल्वस्या नामनिर्देशे नैकरूपतोपलभ्यते—निरुक्तभाष्यटीका, निरुक्तटीका, निरुक्तवृत्तिः, निरुक्तविवरणसमुच्चयः, निरुक्त-विवरणम्, निरुक्तभाष्यविवरणसमुच्चयः, निरुक्तभाष्यविवरणम्, निरुक्तभाष्यम्—इति विभिन्नशब्दैर्निदिष्टत्वात् । सम्पादको लक्ष्मणस्वरूपस्त्वस्या 'निरुक्तभाष्यटीका' इति नामाङ्गीकृतवान् । कोशग्रन्थेषु ग्रन्थकारनिदर्शकोऽयं श्लोक उल्लिख्यते--

**निरुक्तमन्त्रभाष्यार्थपूर्ववृत्तिसमुच्चयः ।**
**महेश्वरेण विरचितः सूनुना पितृशर्मणः ।।**

अतः स्पष्टं प्रतीयते यदियं वृत्तिर्महेश्वरनाम्ना केनचिद् विदुषा कदाचिद् रचिता, तस्य च पितुर्नामधेयं पितृशर्मेत्यासीदिति । अन्यत् किमपि तद्विषये न ज्ञायते । ऋग्वेदभाष्यकारः स्कन्द एवेमं ग्रन्थं महेश्वरसहकारेण प्रणिनायेति भगवद्दत्तस्य सुदृढं मतमित्यनुपदं स्पष्टयिष्यते । स्कन्दस्वामी ऋग्वेदभाष्य आत्मानं पर्यचीचयत्—

**वलभीविनिवास्येताम् ऋगर्थागमसंहृतिम् ।**
**भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ।। ऋग्वेदाष्टकप्रथमाध्यायान्ते**

अतोऽस्य स्वकीयवचनाद् व्यज्यते यदयं बलभीनगरस्य (गुर्जरप्रदेशस्थस्य) वास्तव्य आसीत्, पिता चास्य भर्तृध्रुवनामा बभूवेति । वलभीराजो ध्रुवसेन एव भर्तृध्रुवः स्याद् इति कुन्जनराजस्य सम्भावना, प्रमाणविशेषाभात् सन्दिग्धेति भगवद्दत्तः ।[1]

## ६. ४. १. स्कन्द-महेश्वरयोः कालः सम्बन्धश्च

शतपथब्राह्मणभाष्यकारो हरिस्वामी प्रथमकाण्डभाष्यान्ते स्वगुरुं स्कन्दस्वामिनं सस्मार—

**व्याख्यां कृत्वाध्यापयन् मां श्रीस्कन्दस्वाम्यस्ति मे गुरुः ।**
**ततोऽधीतमहातन्त्रो विश्वोपकृतिहेतवे ।**
**व्याचिख्यासुः श्रुतेरर्थं हरिस्वामी नतो गुरुम् ।।**

---

१. वै० वा० द्वितीयभागे द्वितीयाध्याये ।

तस्मिन्नेव ग्रन्थे स्वभाष्यरचनाकालमपि हरिस्वामी निर्दिदेश—

**यदाब्दानां कलेर्जग्मुः सप्तत्रिंशच्छतानि वै ।**
**चत्वारिंशत् समाश्चान्यास्तदा भाष्यमिदं कृतम् ॥**

अतोऽवगम्यते—स्कन्दस्वामिशिष्यो हरिस्वामी कलिसंवत्सरे ३७४० तमे (खीस्तीयाब्दे ६३८ तमे) शातपथीं श्रुतिं व्याचख्याविति । स्कन्दस्वामी च ततः प्राग् ऋग्वेदभाष्यं रचयामास, तस्य रचनाकालः खीस्तीयाब्दः ६३० तम इति निष्कृष्यते । सायणेन (ऋग्वेदभाष्य १।६।१४।६), देवराजयज्वना (निघण्टुभाष्ये), वेङ्कटमाधवेन (ऋग्वेदानुक्रमणी ८।४ ६) च स्वकृतिषु स्मृतः स्कन्द इति तस्य कालः खीस्तीय-सप्तमशताब्द्याः पूर्वार्द्ध इति सुनिर्णीतः । ऋग्वेदभाष्यकारो निरुक्तटीकाकारश्च स्कन्द एक एवेति देवराजयज्ववचनं प्रसाधयति । तथा हि—'उप प्रयोभिरागतम् इत्यादिषु निरुक्तटीकायां स्कन्दस्वामिना प्रय इत्यन्ननामेत्युच्यते । तथा च अक्षिति श्रव इत्यादिनिगमेषु वेदभाष्ये श्रव इत्यन्ननामेति स्पष्टमुच्यते' (निघण्टुभाष्य २।७।४) ।

महेश्वरस्तु केनापि न स्मर्यते, अथ च निरुक्तभाष्यटीकायाः कोशेषु ग्रन्थकार-त्वेनोल्लिख्यते । तत्र लक्ष्मणस्वरूपस्य तावदयं निष्कर्षः स्कन्दस्वामिकृतनिरुक्तभाष्य-स्येयं टीका महेश्वरप्रणीता, महेश्वरश्च देवराजयज्वनोऽर्वाग्जन्मेति । तत्र हेतुचतुष्टय-मुपन्यस्यते—

(१) केषुचिदध्यायान्त्यवाक्येषु टीकेयं महेश्वरकृतेत्युक्ता ।

(२) निरुक्तभाष्यटीकेति नाम्ना संकेत्यते—निरुक्तस्य यद् भाष्यं (व्यक्तं स्कन्दकृतं) तस्य टीका (महेश्वरकृता) इति ।

(३) देवराजोद्धृतस्कन्दवचनस्य तुलनात्मकसमीक्षणात् स्कन्दभाष्यस्येयं टीकेति सिद्धम् ।

(४) देवराजनिघण्टुभाष्ये—उद्धृतानाम् उर्व्यादिपदजातस्कन्दकृतव्याख्याना-नाम् अस्यां टीकायामुपलम्भाच्च नेयं स्कन्दकृतेति ।[1]

भगवद्दत्तस्तु प्रस्तुतान् हेतून् प्रत्याचष्टे—

(१) तत्र प्रथमो हेतुस्तावदसिद्धो व्यभिचारी च—केषुचिदध्यायान्त्यवाक्येषु महेश्वरकृतेति निर्देशे सत्यपि, ततोऽधिकेषु स्कन्दकृतेति निर्देशस्य सत्त्वात्, अध्यायद्वये शबरकृतेति निर्देशाच्च ।

(२) निरुक्तभाष्यटीकेति नायं षष्ठीतत्पुरुषः, किन्तु कर्मधारयो निरुक्तं यद् भाष्यं तस्य टीकेति । तस्माद् द्वितीयो हेतुरप्यसिद्धः । निरुक्तस्य च भाष्यत्वं सर्व-

१. निरुक्तभाष्यटीकाभूमिकायाम् ।

जनेनम् । तथा चास्यामेव टीकायां—भगवतो यास्कस्य भाष्यम् (निरु० १।१) इति प्रयोगः । निरुक्तस्य हस्तलिखितकोशाः खल्वपि निरुक्तभाष्यशब्देनोपचर्यन्ते ।

(३) देवराजः स्कन्दवाक्यानि सर्वत्र साकल्येन यथानुपूर्व्यं च नोद्धरति, तथाप्यन्यत्र सर्वतः साम्यमुपलभ्यते । तद्यथा—अत्र स्कन्दस्वामीत्यादिसन्दर्भः (निघण्टुभाष्य २।१।७) ।

(४) उर्व्यादिपदानां व्याख्यानानि 'साध्य'पदवर्जम् अस्यां टीकायां समुपलभ्यन्त एवेति चतुर्थोऽपि हेतुरसिद्धः । यदपि महेश्वरनामानुल्लेखो देवराजनिघण्टुभाष्ये, तद् ब्राह्मणग्रामन्यायेन स्कन्दनिर्देशान्न दोषावहम् ।[1]

अधुना स्कन्द-महेश्वरयोः सम्बन्धोऽवशिष्यते । तत्र भगवद्दत्तो निरुक्तभाष्यटीकायाम् उपाध्यायनाम्नोद्धृतं सन्दर्भम् अभिसमीक्ष्य, स्कन्दऋग्वेदभाष्ये च तमन्वेष्य परिकल्पयते—महेश्वरः स्कन्दं वोदगीथं वोपाध्यायशब्देन व्याजहारेति महेश्वरस्कन्दयोः शिष्योपाध्यायसम्बन्धः, तौ च समकालिकौ स्त इति ।[2]

### ६. ४. २. निरुक्तभाष्यटीका

इयं टीकातीवमहत्त्वपूर्णा वर्त्तते । अग्रविन्यस्तानि तथ्यान्यस्याः टीकाया वैशिष्ट्यं द्योतयन्ति सुतराम्—

(१) दुर्गनिरुक्तवृत्तिरिवेयमपि टीका निरुक्तवाक्यानि विस्तरेण प्रमाणपुरःसरं व्याचष्टे । यद्यप्यत्र बहुशः पाठभ्रंशाः समजायन्त, तथापि न केवलं मूलवाक्यानाम् अपि तु मन्त्राणां स्पष्टार्थाधिगमोऽनया जायते । आचार्यान्तरपक्षाश्च 'अन्ये' 'अपरे' 'केचित्' इति शब्दैरुपन्यस्यन्ते । आकरपाठान्तराण्यपि सूचयति यथावसरमत्र स्कन्दः ।

(२) नैकग्रन्थसन्दर्भा ग्रन्थकाराश्चात्र प्रमाणत्वेनोल्लिखिताः । तद्यथा—काठकादिसंहिताः, चरकादिब्राह्मणानि, मनुस्मृतिः, शाकपूणि-निघण्टुः, पदकाराः, चूर्णिकारः (महाभाष्यकारः), भगवद्गीता, अनुक्रमण्यः, पूर्वमीमांसा, वाक्यपदीयम्, काव्यालंकारः, अभिधानकोशः, तन्त्रवार्त्तिकम् इत्यादि ।

(३) उर्वी-जिघर्त्ती छान्दसौ धातू, व्याकरणस्य शाखान्तर आपिशलादौ स्मरणात् (निरु० २।२), अयं च व्याकरणस्य शाखान्तरे क्वचिदन्वाख्यातः (निरु० २।३) इत्यादिवचनैष्टीकाकृतो व्याकरणान्तराभिज्ञता ध्वन्यते ।

(४) अस्यां टीकायां चरकब्राह्मणवचनान्युद्ध्रियन्ते—यथा निरु० २।६,

१. वै० वा० इ० द्वितीयभागे द्वितीयाध्याये ।
२. तत्रैव ।

निरु० ४।१६, निरु० ५।४ इत्यत्र।[1] शाकल्यगार्ग्यात्रेयाः पदपाठकारा अत्र स्मृताः (निरु० २।१३)। चूर्णिकारशब्देनात्र महाभाष्यकारः पतञ्जलिरुल्लिख्यते (निरु० ३।१६)। महाभाष्यसन्दर्भ इह पदकारवचनतयोपन्यस्यते (निरु० १।३) तद्यथा—अभ्युपगम्यैतत्सामर्थ्यं पदकार आह—उपसर्गाश्च पुनरेवमात्मकाः "क्रियामाहुः (तु०—महा० ५।२।२८) इति।

(५) अस्यां टीकायां भर्तृहरिकृत-वाक्यपदीयस्य (खी० ६२०), भामहकृत-काव्यालंकारस्य (खी० ६५०), कुमारिलभट्टकृत-तन्त्रवार्त्तिकस्य (खी ७००) च वचनानि समुद्ध्रियन्ते, यान्यैतिह्यविदां पुरतो दुःसमाधेयान् प्रश्नान् उपस्थापयन्ति।[2]

(६) तत्त्वा यामि (निरु० २।१) इत्युदाहरणस्य छान्दसत्वम् 'एतदप-व्याख्यानम्' इति वाक्येन प्रत्याख्याय लौकिकत्वं प्रतिपादयामास स्कन्दः। किमिह 'अपव्याख्यान'पदेन दुर्गव्याख्यानं लक्ष्यते ? एवमेवान्यत्र—'एवं तु व्याख्यायमाने घोटारूढस्य विस्मृतो घोट इत्येतद् आपद्यते "पूर्वमुत्तरेण न संगच्छते, अतोऽन्यथा व्याख्यायते' (निरु० ३।१० इत्यत्र ऋ० १०।४८।७ मन्त्रव्याख्याने) इत्युद्गीथ-भाष्येऽसंगतिं प्रदर्श्य, स्वव्याख्यानं पुरस्कृत्य, पुनरुद्गीथभाष्यमपि संगमयति ग्रन्थ-कारः। ननु उद्गीथस्कन्दसहकारेण कृतं मन्त्रभाष्यं कथं स्कन्दो निरुक्तटीकायां प्रत्याचक्षीतेति चेत्; न, प्रत्याख्यानस्य महेश्वरकृतत्वात्। निरुक्ततृतीयाध्यायस्य टीका महेश्वरविरचितेति भगवद्दत्तः।[3]

### ६. ९. श्रीनिवासः

देवराजयज्वा निघण्टुभाष्यभूमिकायां वेदभाष्यकारेषु श्रीनिवासमपि समा-वेशयति। पुनः स शृङ्गपदनिर्वचने उल्लिखति—शृङ्गं श्रयतेः (निरु० २।७) इत्यत्र 'स्नातेर्वा इति निर्वचनस्य पाठः श्रीनिवासीयव्याख्याने दृष्टः' (निघण्टुभाष्य १।१७।११) इति। अन्यत्र खल्वपि—'अत्र श्रीनिवासः' (निघण्टुभाष्य ३।२।१) इति निर्देशः। यद्यपीमौ सन्दर्भौ तस्य वेदभाष्याद् उद्धृतावुत निरुक्तव्याख्यानाद् इति न तावन्निश्चितम्, तथापि भगवद्दत्तो निरुक्तव्याख्यानमपि तत्कृतं कल्पयति, विशेषतो द्वितीयेन सन्दर्भेण।[4] अतोऽधिकमस्य विषये न किमपि ज्ञायते।

### ६. १०. नीलकण्ठो गार्ग्यः

### ६. १०. १. ग्रन्थोपलब्धिः

दुर्गः स्वनिरुक्तवृत्तौ श्लोकचतुष्टयं निरुक्तवार्त्तिककारकृतित्वेन समुद्धृतवान्

---

१. अन्त्यः सन्दर्भः सायणेनापि ऋ० ८।६६।१० भाष्य उद्धृतः।
२. वै० वा० इ० द्वितीयभागे द्वादशाध्याये।
३. तत्रैव। ४. तत्रैव।

तत्र श्लोकद्वयस्य बृहद्देवतायाम् उपलम्भात् लक्ष्मणस्वरूपो वै० का० राजवाडे च निरुक्तवार्त्तिककारं बृहद्देवताकारादभिन्नम् अमन्येताम् इत्यभिहितं पुरस्तात् । भगवद्दत्तस्तु तदभिमतं पक्षं निराकृत्य प्रत्यपीपदत्—निरुक्तवार्त्तिककारः कश्चित् प्राचीन आचार्यो बृहद्देवताकाराद् भिन्न इति । तत्र खलु मण्डनमिश्रकृतस्य 'स्फोट-सिद्धि' नाम्नो ग्रन्थस्य परमेश्वररचित-'गोपालिका' टीकायाम् उद्धृतान् निरुक्त-वार्त्तिकीयान् षट् श्लोकान् उपन्यस्य स स्वपक्षम् उपोदवलयत् ।[1] कुञ्जनराजो दुर्ग-स्कन्द-माधवग्रन्थेभ्यः सम्भावितनिरुक्तवार्त्तिकपद्यानि संगृह्य तद्विषयकम् अध्ययनं प्रास्तावीत् ।[2] ततः स महता प्रयासेनैकाकिनीं निरुक्तवार्त्तिकपाण्डुलिपिं तालपत्राधारे केरलीयाक्षरैर्निबद्धाम् अन्वेष्टुमशकत्, अघोषयच्च तामेतां स्वोपलब्धिम् अडयार-पुस्तकालयपत्रिकामाध्यमेन १९४३ तमे खीस्तीयाब्दे । विष्णुपदभट्टाचार्यस्तु तदन्वेषणानभिज्ञो निरुक्तवार्त्तिकसमस्याम् अधिकृत्य निबन्धमेकं प्रकाशयत् ।[3] कालान्तरे कुञ्जनराजे दिवं गतेऽस्य ग्रन्थस्य प्रतिलिपिरूपः कोशः कुञ्जुन्नीराज-स्याधिकारे समायातः ।

स च ग्रन्थस्य पुनरीक्षणं विधाय, तत्परिचयं विदुषां पुरत उपन्यस्तवान् ।[4] तत एवेदं तथ्यं प्रकाशितम्—नायं ग्रन्थो दुर्गोद्धृतो निरुक्तवार्त्तिकनामा, किन्तु गोपालिकोद्धृतः । दुर्गोद्धृतं निरुक्तवार्त्तिकं त्वन्यदेवेति ।

## ६. ६ २. ग्रन्थनाम—निरुक्तश्लोकवार्त्तिकम्

स्फोटसिद्धिटीकायां गोपालिकायां स्मृतं निरुक्तवार्त्तिकम् इदमेवेत्यत्र नास्ति सन्देहलेशः । तत्र प्रमाणोपन्यासः क्रियते । मण्डनमिश्रेण स्फोटसिद्धौ प्रस्तुतं 'साक्षा-त्कृतधर्माणः' (निरु० १।२०) इत्यादिसन्दर्भं व्याचक्षाणः परमेश्वरो गोपालिकाया-माह—"यथोक्तं निरुक्तवार्त्तिक एव—

**असाक्षात्कृतधर्मभ्यस्तेऽपरेभ्यो यथाविधि ।**
**उपदेशेन सम्प्रादुर्मन्त्रान् ब्राह्मणमेव च ॥१॥ इति ।**

उपदेशश्च वेदव्याख्या । यथोक्तम्—

**अर्थोऽयमस्य मन्त्रस्य ब्राह्मणस्यायमित्यपि ।**
**व्याख्यैवात्रोपदेशः स्यात् वेदार्थस्य विवक्षितः ॥२॥ इति ।**

---

१. वै० वा० इ० द्वितीयभागे द्वादशाध्याये ।
२. मद्रासविश्वविद्यालयीय 'एनल्स आव् ओरयण्टल रिसर्च' ५।२।१९४०-४१।
३. इण्डियन हिस्टोरिकल क्वार्टर्ली, २६।२।१९५०।
४. ब्रह्मविद्या, २८।३,४ १९६४।

उपदेशाय ग्लायन्त इति उपदेशेन ग्राहयितुमशक्या इत्यर्थः। अपरे द्वितीयेभ्यो न्यूना इति। बिम्मग्रहणाय उपायतो वशीकरणायेमं ग्रन्थं वक्ष्यमाणं समाम्नासिषुः समाम्नातवन्तः। तमेवाह—वेदं च वेदाङ्गानि चेति। अङ्गशब्द उपाङ्गादेरप्युपलक्षणार्थः। वेदमुपदेशमात्राद् ग्रहीतुमशक्ता वेदं समाम्नासिषुः। वेदार्थं चोपदेशेन ग्रहीतुमशक्ता अङ्गानि च समाम्नासिषुरिति। यथोक्तम्—

**अशक्तास्तूपदेशेन ग्रहीतुमपरे तथा।**
**वेदमभ्यस्तवन्तस्ते वेदाङ्गानि च यत्नतः॥३॥** इति।

बिम्मशब्दो ह्यनन्तरमेव तत्र निरुक्तः—बिम्मं भिम्मं भासनम् इति। व्याख्यातं च—

**बिम्मं भिम्ममिति त्वाह बिभर्त्यर्थविवक्षया।**
**उपायो हि बिभर्त्यर्थमुपेयं वेदगोचरम्॥४॥**
**अथवा भासनं भिम्मं भासतेर्दीप्तिकर्मणः।**
**अभ्यासेन हि वेदार्थो भास्यते दीप्यते स्फुटम्॥५॥** इति।

यथा हि स्वामी वीक्षणमात्रेण कर्मकरान् नियुङ्क्ते, तत्पुरुषस्तु तदभिप्रायनिवेदनेन, इतरे तु स्वार्थं सामादिभिरुपायैः कारयन्ति, एवमिहापि। यथोक्तम्—

**प्रथमाः प्रतिभानेन द्वितीयास्तूपदेशतः।**
**अभ्यासेन तृतीयास्तु वेदार्थं प्रतिपेदिरे॥६॥** इति।"[1]

सैषा षट्श्लोकी निरुक्तवार्त्तिकनाम्नोद्धृता कुञ्जनराजान्वेषितग्रन्थे प्रकृतप्रसङ्गेऽविकलतयोपलभ्यते।[2] तदेवमस्य ग्रन्थस्य निरुक्तवार्त्तिकम् इति नाम्ना भाव्यम्; परन्तु हस्तलिखितमातृकायां त्वध्यायपादसमाप्तिवाक्येषु ग्रन्थनिर्देशो नैकरूपतां भजते। तथा हि—

१. १. निरुक्तश्लोकवार्त्तिके [3]षष्ठाध्यायस्य प्रथमः पादः।
१. २. निरुक्तवार्त्तिके षष्ठस्य द्वितीयः पादः।
१. ३. निरुक्तश्लोकवार्त्तिके तृतीयः पादः समाप्तः।
१. ४. निरुक्तश्लोकवार्त्तिके चतुर्थः पादः।
१. ५. निरुक्तश्लोकवार्त्तिके पञ्चमः पादः।
१. ६. इति निरुक्तवार्त्तिके षष्ठः पादः।

---

१. स्फोटसिद्धि-गोपालिकाटीका पृ० १५६-१५७, मद्रपुरीय-विश्वविद्यालयीयसंस्करणे।

२. द्र०—वर्त्तमानसंस्करणे १।६।१६२, २०४, २०५, २०६, २१०, १६८॥

३. निघण्टुपञ्चाध्यायीं सयोज्यायं संख्यानिर्देशः। ग्रन्थवपुषि तु न तादृशो व्यवहारो दृश्यते। तु०—४।२।५, २६॥

२. १. इति प्रद्मभगवत्प्रणीते निरुक्तश्लोकवार्त्तिके द्वितीयस्याध्यायस्य प्रथमः पादः ।
२. २. भगवत्प्रणीते निरुक्तवार्त्तिके द्वितीयस्याध्यायस्य द्वितीयः पादः ।
२. ३. निरुक्तवार्त्तिके द्वितीयस्याध्यायस्य तृतीयः पादः ।
२. ४. निरुक्तवार्त्तिके द्वितीयस्य चतुर्थः पादः ।
२. ५. इति निरुक्तवार्त्तिके द्वितीयस्य पञ्चमः पादः ।
२. ६. इति भगवत्प्रणीते निरुक्तवार्त्तिकश्लोके द्वितीयोऽध्यायः समाप्तः ।
३. १. इति पद्मपादवार्त्तिके तृतीयस्य प्रथमः पादः ।
३. २. इति पद्मभगवत्प्रणीते निरुक्तश्लोके तृतीयस्य द्वितीयः पादः ।
३. ३. इति निरुक्ते पद्मभगवत्प्रणीते निरुक्तश्लोकवार्त्तिके तृतीयाध्यायस्य तृतीयः पादः ।
३. ४. भाष्यमिदं भगवच्छंकरमुखारविन्दात् प्रवृत्तमिदम् । शुभमस्तु ।
४. १. निरुक्तवार्त्तिके ऐकपदिके प्रथमाध्यायस्य प्रथमः पादः ।
४. २. निरुक्तश्लोकवार्त्तिके ऐकपदिके प्रथमस्य द्वितीयः पादः ।
५. २. इति निरुक्तश्लोकवार्त्तिके द्वितीयस्य द्वितीयः पादः ।
५. ३. निरुक्तवार्त्तिके ऐकपदिके द्वितीयस्य तृतीयः पादः ।
५. ४. निरुक्तवार्त्तिके ऐकपदिके द्वितीयोऽध्यायः ।
६. १. निरुक्तवार्त्तिके ऐकपदिके तृतीयस्य प्रथमः पादः ।
६. २. निरुक्तवार्त्तिके तृतीयस्य द्वितीयः पादः ।
६. ३. निरुक्तवार्त्तिकैकपदिके तृतीयस्य तृतीयः पादः ।

इत्थं 'निरुक्तश्लोकवार्त्तिकम्' 'निरुक्तवार्त्तिकम्' इत्युभे अपि नामनी अस्य ग्रन्थस्य स्याताम् । यद्यपि परमेश्वरेणायं ग्रन्थो 'निरुक्तवार्त्तिकम्' इति संज्ञया निरदेशीति सम्प्रति तथैव संज्ञया व्यवहार आपाततो युक्तः प्रतीयते, तथापि ग्रन्थकारस्य स्वयमेव ग्रन्थशरीरे—**अकरोच्छ्रद्धया युक्तो निरुक्तश्लोकवार्त्तिकम्** (३।४।४३) इति निर्देशाद् 'निरुक्तश्लोकवार्त्तिकम्' इत्येवाभिधानं युक्ततरकं प्रेक्षामहे ।

संस्कृतशास्त्रीयवाङ्मये वार्त्तिकनामानो ग्रन्थाः प्रकारविशेषे प्रसिद्धा वर्त्तन्ते । व्युत्पत्तिदृष्ट्या ते वृत्तिमुपजीवन्ति,[१] वृत्तिश्च सूत्रार्थप्रधानः संक्षिप्तविवरणात्मको ग्रन्थः । तस्मात् सूत्रात्मकवाक्यानां विस्तरेण विवरणं वार्त्तिकपदेनाभिधीयते । अत एव प्रसिद्धं वार्त्तिकलक्षणं संगच्छते । तथा हि—

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र विधीयते ।**
**तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥** पराशरोपपुराणे सप्तमेऽध्याये ।

---

१. वृत्तौ साधु वार्त्तिकम् । कथादिभ्यष्ठक् (अष्टा० ४।४।१०२) ।

निरुक्तश्लोकवार्त्तिकेऽस्मिन् ग्रन्थे यास्कीयवाक्यानि यया शैल्या विव्रियन्ते, सा श्लोकवार्त्तिक-तन्त्रवार्त्तिक-न्यायवार्तिकप्रभृतीन् ग्रन्थान् स्मारयति। अत्र हि ग्रन्थकारो निरुक्तवाक्यानां न केवलं साधारणान् अर्थान् स्फुटीकरोति, अपि त्वनुक्तानर्थानाविष्करोति चोद्यपरिहाररीत्या, निगूढांश्चार्थान् अन्विष्य शास्त्रकृतस्तात्पर्यं सुतरामधिगमयति। एवमस्य ग्रन्थस्य वार्त्तिकत्वं नूनं घटते।

### ६. ६. ३. ग्रन्थकारः—नीलकण्ठो गार्ग्यः (पद्मपादः)

गार्ग्येण नीलकण्ठेन सूनुना कीरशर्म्मणः।
नैघण्टुकमिदं काण्डं व्याख्यातमनुपूर्वशः॥
जामदग्न्येन रामेण गार्ग्याय प्रतिपादिते।
कोण्टयूरिति विख्याते ग्रामे केरलपूजिते॥
ब्राह्मणानां सहस्रेण जुष्टे शिष्टजनार्चिते।
याज्ञिकैर्वेदविद्भिश्च सर्वदैवोपशोभिते॥
अव्यवच्छिन्नयज्ञानां यजुर्वेदविदां कुले।
कुले महति गर्गाणां नीलकण्ठोऽप्यजायत॥
कीरशर्मा पिता यस्य यज्वा यज्ञविशारदः।
नीलकण्ठश्चतुर्वेदः पितृव्यो यस्य धार्मिकः॥
बहुयाजी चतुर्वेदो रुद्रशर्मा पितामहः।
भारद्वाजी च कौवेरी नीली माता बहुप्रजा॥
रुद्राद्या भ्रातरो यस्य दत्ताद्या जामयस्तथा।
किञ्चित् सोऽधीत्य वेदस्य मस्करी समपद्यत॥
पद्म इत्यपरां संज्ञां लब्धवान् स गुरोः पुनः।
श्रुत्वा किञ्चित् स शास्त्राणां वेदान्तेषु कृतश्रमः॥
अकरोच्छ्रद्धया युक्तो निरुक्तश्लोकवार्त्तिकम्।
पदवाक्यप्रमाणज्ञः श्रद्धावान् अनसूयकः॥
गुरुभक्तस्तपस्वी च शक्तो वोढुम् इदं यतः।
तस्मिन् नैघण्टुकं काण्डं समाप्तमिदमञ्जसा॥
बोद्धव्यं हि प्रयत्नेन वेदार्थं बोद्धुमिच्छता।
नमो नारायाणायस्तु नमोऽस्तु ब्रह्मणे सदा॥
नमो महेश्वरायास्तु गुरुभ्यश्च सदा नमः।

इदमत्र वृत्तं निबध्यते—केरलप्रदेशे कोण्टयूरिति विख्यातः कश्चिद् ग्राम आसीद्। तत्र यजुर्वेदविदां यज्वनां गार्ग्यगोत्रीयाणां प्रसिद्धे कुले नीलकण्ठोऽजायत।

तस्य पिता यज्ञविधानिष्णातः 'कीरशर्मेति नाम्ना प्रसिद्ध आसीत्। तस्य पितृव्य-श्चतुर्वेदपारंगतो धार्मिको नीलकण्ठनामासीत्। रुद्रशर्मा नाम चतुर्वेदविचक्षणो याज्ञिकस्तस्य पितामह आसीत्। तस्य माता नीलीतिख्याता भारद्वाजगोत्रोत्पन्ना बह्वपत्यासीत्। नीलकण्ठस्य भ्रातरो रुद्रादयो भगिन्यश्च दत्तादय आसन्। कुबेरोऽस्य यवीयान् भ्रातासीदिति—**पितृभूतः कुबेरस्य नीलकण्ठ इतीह तु** (निरु० श्लो० वा० १।१।२७१) इति वचनाद् अनुमीयते।

नैघण्टुककाण्डपरिसमाप्तौ पद्यद्वयम् उपलभ्यते। तथा हि—

**इति भवार्णवदीर्णसदात्मा प्रथनवेदशिरोन्वयलक्षणः।**
**करदृग्बन्धमुनिग्रथितागमं गमितवान् मुनिशंकरः॥**
**श्रीमति विजयादित्ये वल्लभराजे जयत्यजातरिपौ।**
**भाष्यं भगवच्छंकरमुखारविन्दात् प्रवृत्तमिदम्॥** इति।

एताभ्यां पद्याभ्यां कुञ्जनराजः पर्यकल्पयत्—शङ्करभगवानासीदस्य ग्रन्थस्य रचयितेति।[2] यतोऽस्य निरुक्तवार्त्तिकग्रन्थस्य रचयितासीद् नीलकण्ठः पद्मपादा-पराभिधानः, अयं ग्रन्थश्च वार्त्तिकपदेनोद्धृतो न तु भाष्यपदेन; अतो नैते पद्ये प्रकृत-ग्रन्थेन सम्बध्येते इति कुञ्जुन्निराजस्य निष्कर्षः। नीलकण्ठः संन्यसित्वाच्छंकरपदेन लक्ष्येतेति कल्पनाप्यकिञ्चित्करा बल्लवुनाडराजस्य (वल्लभराजस्य) विजयादित्यस्य वृत्तस्य परिज्ञानाभावात्।[3]

नीलकण्ठस्य पद्मपादस्य वैदुष्यम् एतद्ग्रन्थालोचनया सुतराम् अवगम्यते। यद्यपि स्वयमेवात्मनः पदवाक्यप्रमाणज्ञत्वोक्तिर्विकत्थनं प्रदर्शयति, तथापि सूक्ष्मेक्षि-कया तस्या याथार्थ्यं प्रकटीभवति। स व्याकरण-न्यायमतानि पूर्वपक्षीकृत्य, युक्ति-प्रमाणपूर्वकं तानि निराकृत्य मीमांसामतं स्थापयति सिद्धान्तरूपेण। भावप्रधानमा-ख्यातम् (निरु० १।१) इति सन्दर्भस्य विवृतिः (निरु० श्लो० वा० १।१।१०४-१७५) अत्र निदर्शनम्। वैयाकरणाभिमत-स्फोटवादस्य (१।१।२०६–२२०), बौद्धा-स्थितशून्यवादस्य (१।१।४७०, ६७६), नैयायिकसंकीर्त्तित-वेदपौरुषेयत्वस्य (१।१। ४८८–५०७) च निराकरणप्रकारो नीलकण्ठस्य शास्त्रावगाहनं विलक्षणां प्रतिभां च प्रमाणयतितमाम्। नीलकण्ठो वेदान्ते कृतश्रम आसीदिति परमार्थत ऐकात्म्यदर्शनम् आतस्थे (३।२।३३५–३४०)। तस्य चिन्तनप्रज्ञा पुराणप्रभावितासीद् अन्येषा

---

१. कीरशब्दपर्यायो मलयभाषायां 'तत्त' (तु० 'तोता' हिन्दी) इति प्रसिद्धः। केरलीय-नम्बूतिरिब्राह्मणेष्वेतद् नाम प्रचुरप्रचारं वर्त्तते, तच्च देवदत्तस्य यज्ञदत्तस्य वा संक्षिप्तं रूपं विद्यत इति कुञ्जुन्निराजः। द्र०—ब्रह्मविद्या २८।३-४।१९६४॥

२. अडयारलाइब्रेरी बुलेटिन, ८।१९४४॥

३. ब्रह्मविद्या, २८।३-४।१९६४॥

मध्ययुगीयानाम् आचार्याणाम् इव । अत एव ग्रन्थादौ नैरुक्तोचितरीत्या मङ्गलमाचर्याप्यसावन्यत्र (द्र०—नैघण्टुकाण्डान्ते) पौराणिकसरणिम् अशिश्रियत् । निरुक्तसन्दर्भाणां व्याख्यानविकल्पा ग्रन्थकर्तुः प्रतिभास्फूर्त्ति ज्ञानसम्पदं च सम्यक् परिचाययन्ति । पदार्थविवेचनेऽसौ परमोदारतया प्रसक्तानुप्रसक्तानपि विषयानुपपाद्य सिद्धान्तान् हृदयं गमयति ।

नीलकण्ठो निरुक्तस्य प्राचीनव्याख्यातॄन् 'केचित्' 'अपरे' 'अन्ये' इत्यादिभिः सर्वनामपदैर्निर्दिशति, न क्वचित् कञ्चिद् नामग्राहं स्मरति । यांस्त्वाचार्यान् असौ प्रमाणत्वेनोल्लिखति तेषु प्रसिद्धास्त्विमे—जैमिनिः, पाणिनिः, अक्षपादः, शौनक आर्षेयानुक्रमणीकारः (१।५।११२), शौनकः प्रातिशाख्यकारः (१।६।६४), भाष्यकृत् भाष्यकारो वा शबरः (१।१।२२५), पाराशर्यः (व्यासः), मनुः (१।६।११७),······

यास्कोऽमुना 'भाष्यकृत्-भाष्यकार-ऋषि-मुनि' पदैः स्मर्यते । व्याख्याप्रसङ्गेऽनेन ग्रन्थकारेणानेकस्य ग्रन्थस्य सन्दर्भा उद्धृताः, ग्रन्थनामनिर्देशस्तु क्वचिदकारि क्वचिन्न । तत्र जैमिनीयपूर्वमीमांसासूत्राणि (१।१।२५८), पाणिनीयाष्टाध्यायीसूत्राणि (बहुत्र), पाणिनीयधातुसूत्राणि (१।१।३०७), महाभाष्यवार्त्तिकानि (बहुत्र) पातञ्जलमहाभाष्यवचनानि (१।१।२७५), शौनकीयश्लोकाः (१।५। ११३–११५) चोपन्यस्यन्ते । गोतमीयन्यायसूत्राणि शब्दान्तरैः स्मर्यन्ते (१।१।३४२–३४३) । काठकसंहिता (१।३।१७२), तैत्तिरीयसंहिता (१।६।१८२), आथर्वणी श्रुतिः, ऐतरेयब्राह्मणम् (१।३।८२), महाभारतम्, मनुस्मृतिः, वेदाङ्गानि चोल्लिख्यन्तेऽत्र ।

## ६. ६. ४. ग्रन्थवैशिष्ट्यम्

निरुक्तश्लोकवार्त्तिके निरुक्तस्य विशदं स्पष्टं च व्याख्यानं वर्तते । नीलकण्ठगार्ग्यः पद्मपादो वेदार्थं बुभुत्सून् प्रति कृपायमाणो महत्या श्रद्धयेमं ग्रन्थं प्रणिनाय । तथा चायं ग्रन्थप्रणयनप्रयोजनं प्राह—

**ननु व्याख्यातमेवेदं बहुभिर्मतिमत्तमैः ।**
**न दोषस्तत्प्रसादेन तदेव स्पष्टयिष्यते ॥**
**अथापि स्पष्टमेवेदं तथापि श्रद्धयेरितः ।**
**व्याचष्टे हि निरुक्तार्थं यथाप्रज्ञं यथागमम् ॥ (१।१।४,५)**

सम्प्रत्यस्य ग्रन्थस्यैकाकिन्यां मातृकायाम् उपपञ्चसहस्रैरनुष्टुप्श्लोकैर्निबद्धं निरुक्तपूर्वाध्यायषट्कदेशीयं व्याख्यानम् उपलभ्यते । ग्रन्थकृतावशिष्टं निरुक्तम् अपि व्याख्यायि न वेति संदिग्धम् (द्र०—२।२।४२॥ ४।२।३०) । अथास्य ग्रन्थस्य विशेषाः केचनात्र निदर्श्यन्ते—

(१) ग्रन्थस्य भाषा प्राञ्जला, प्रवाहमही, व्याकरणपरिष्कृता, भावबोधनसमर्था, स्वाभाविकी च वर्त्तते ।

(२) नैघण्टुकं काण्डमत्र सुविस्तरेण व्याख्यायते। न केवलानि निरुक्तवाक्यानि व्याख्यायन्ते, अपि तु यास्केनांशत उदाहृता अपि मन्त्राः सकला विव्रियन्ते। ऐकपदिकेकाण्डे तु केवलानि निरुक्तवाक्यानि संक्षेपतः स्फुटीक्रियन्ते, उदाहरणानि तद्व्याख्यानं च परित्यज्यन्ते।

(३) प्रतिपदं यास्कीयनिरुक्तम् अनुसृत्य शब्दस्वरूपनिष्पत्तिर्व्याकरणप्रक्रिययानल्पप्रयासेन प्रदर्श्यते। स्कन्दस्वामिना समारब्धैषा प्रवृत्तिर्नीलकण्ठेन चरमविकासं नीतेति दरीदृश्यते।

(४) मन्त्रव्याख्यानं यद्यपि सुस्पष्टं सविस्तरं विधीयते, तथापि ऋषि-देवता-छन्दो-विनियोगनिर्देशः प्रायः पृथग् न निबद्ध्यते।

(५) ग्रन्थकारप्रदर्शिता निरुक्तपाठभेदा अतिमहत्त्वभाजः सन्ति। तथा हि— 'समाहृत्य समाहृत्य मनसा' (निरु० १।१) इति नीलकण्ठोद्धृते मूलपाठे 'मनसा' पदं दुर्गस्कन्दाभ्यां न संगृह्यते।

(६) न्याय-मीमांसा-व्याकरण-वेदान्त-बौद्धमतानाम् आलोचनं विस्तरेणात्र प्रस्तूयते।

(७) संहिता-ब्राह्मण-स्मृति-दर्शन-वेदाङ्ग-लक्षणग्रन्थानां वचनानि प्रचुराण्युद्ध्रियन्ते।

### ६. ६. ९. नीलकण्ठ-कालः

पद्मपादो नीलकण्ठः कस्मिन् कालविशेषे स्वजनुषा केरलीयभूभागम् अलमकरोदिति स्वयं नोदलिखत्। कुशकाशावलम्बनन्यायेन यच्छक्यतेऽधिगन्तुं तदत्र प्रस्तूयते। परमेश्वरेण गोपालिकाटीकायां नीलकण्ठीया षट्श्लोकी समुद्धृतेति पुरस्तादभिहितम्। तस्माद् नीलकण्ठः परमेश्वरतः पूर्वकालज इति निश्चप्रचम्। तत्र परमेश्वरः केरलप्रदेशे पोक्कलमुपकण्ठे निवासिनि पय्युरितिख्याते मीमांसककुले जनिं लेभे खीस्तीये चतुर्दशशताब्द्यन्त इति कुञ्जुन्निराजः।[1] एवं खीस्तीय-चतुर्दशशताब्द्यन्तो नीलकण्ठस्यार्वाक्कालावधिरिति निश्चीयते। नीलकण्ठः केरलराजस्य गोदवर्मणो द्विः स्मरति। तथा हि—

**सिंहोऽयं केरलो राजा गोदवर्मेति भाषिते।** (नि० श्लो० वा० ३।४।१२)
**केरलो गोदवर्मायमित्यप्यस्य विशेषणम्** (नि० श्लो० वा० ३।४।१४)।

केरलराजवंशेषु गोदवर्मनामानो बहवः पुरुषा बभूवुरिति गोदवर्मविशेषो

---

१. दि कांण्ट्रिब्यूशन आव् केरल टु संस्कृत लिटरेचर, मद्रासविश्वविद्यालय १९५८, पृ० ९०-९८।

निर्धारयितुं न शक्यते इति कुञ्जुन्निराजः ।[1] तस्माद् गोदवर्मसाक्ष्येण नीलकण्ठकाल-निर्णये न किञ्चित् साहाय्यम् अवाप्यते ।

अथ नीलकण्ठस्य पूर्वकालावधिं निर्धारयितुं प्रयस्यते । दुर्ग-स्कन्द-महेश्वर-नीलकण्ठकृतानां निरुक्तव्याख्यानां परस्परतुलनयैतत् तथ्यं प्रकटीभवति—नीलकण्ठः स्कन्द-महेश्वरयोरनुवदत इति । तत्र कतिपयान्युदाहरणान्युपन्यस्यन्ते—

(१) नीलकण्ठः स्कन्द-महेश्वरव्याख्यानं हेतुना संयोज्योपपादयति । यथा—

**यास्कः**—ब्रह्म परिवृढं सर्वतः । निरु० १।८॥

**दुर्गः**—ऋगादि परं चोभयमपि तत् परिवृढं सर्वासु दिक्षु । नि० वृ० १।८॥

**स्कन्द-महेश्वरौ**—ब्रह्म ह्येवमृग्यजुःसामलक्षणमपरं जगतः कारणमपरमन्नं तत्सर्वं परिवृद्धं सर्वतोऽन्यतः । निरुक्तभाष्यटीका १।८॥ (प्रथमभागे पृ० ७३) ।

**नीलकण्ठः**—

**प्रसङ्गेन्व निर्वक्ति ब्रह्म तत्कारणं परम् ।**
**तद्धि सर्वगतं ब्रह्म प्रवृद्धं कार्यरूपतः ॥**
**देहाद्यात्मप्रवृद्धत्वाद् ब्रह्मान्नमपि कथ्यते ।**
**तथा कर्मप्रवृद्धत्वाद् ऋग्यजुः सामलक्षणम् ॥**

निरु० श्लो० वा० १।३।८४,८५॥

(२) नीलकण्ठः क्लिष्टां कल्पनापोढां दुर्गव्याख्यां विहाय स्कन्द-महेश्वर-व्याख्याम् अनुसरति—

**यास्कः**—अथानन्वितेऽप्रादेशिके विकारे… । निरु० १।१३॥

**स्कन्द-महेश्वरौ** निरुक्तभाष्यटीकायाम्, प्रथमभागे पृ० ८६ ।

**नीलकण्ठो** निरुक्तश्लोकवार्त्तिके १।४।७७–८६ ॥

(३) नीलकण्ठेन स्कन्द-महेश्वरव्याख्या नामनिर्देशं विना ह्यनूद्यते—

**यास्कः**—सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूनाः…दर्विहोमीति । निरु० १।१४॥

**दुर्गः**—सन्त्येवाल्पप्रयोगाः प्रतीतार्थक्रिया अपि केचित् कृत्प्रत्ययान्ताः शब्दा ऐकपदिका एकपदप्रकरणान्तर्वर्त्तिनस्तद्धर्माणः । तद्यथा व्रतति…इति । नि० वृ० १।१४॥

**स्कन्दमहेश्वरौ**—सन्त्यल्पप्रयोगा इत्यादि । अस्यायमर्थः—प्रत्ययोपात्तरूढ्यर्थ-सम्बन्धस्य स्वार्थेन विशिष्टरूपस्य सततस्तत्रैव धातोः प्रयोगात् तत्राल्पप्रयोगत्वम् ।

---

१. ब्रह्मविद्या, २८।३-४।१९६४॥

अतोऽल्पप्रयोगत्वाद् रूढ्या चापहृतबुद्धित्वात् सत्यपि धातोः कर्माभिधानसामर्थ्येऽप्रतीतिरेषां भवतो जाता, न तु शब्दस्य कर्माभिधानसामर्थ्याभावात् । यथा कृदन्तेष्वैकपदिकप्रकरणाधीतेषु व्रततिर्दमूना इत्यादिषु । नि० भा० टी० १।१४॥

नीलकण्ठः—

**अविस्पष्टार्थतायाश्च हेतुरल्पप्रयोगता ।**
**केचिदाहुर्व्रततत्यादेः अन्यथान्ये प्रचक्षते ॥**
**प्रत्ययोपात्तरूढ्यर्थसम्बन्धस्वार्थवृत्तिता ।**
**अप्रयोगात् ततोऽन्यत्र भवत्यल्पप्रयोगता ॥**
**धातोरेवाथवा कश्चिदेकदेशः प्रयुज्यते ।**
**एवमल्पप्रयोगत्वं कृतां व्याख्यायते बुधैः ॥**

नि० श्लो० वा० १।४।१४७-१४९॥

(४) **एक एव रुद्रोऽवतस्थे न द्वितीयः**— (निरु० १।१५) इति मन्त्रस्य स्कन्द-महेश्वरोद्धृतः पाठविशेषस्तद्व्याख्यानं चानुस्रियते नीलकण्ठेन । लक्ष्मणस्वरूपसम्पादिते निरुक्तभाष्यटीकासंस्करणे प्रथमभागे पञ्चनवतितमे पृष्ठे पादटिप्पणे मुद्रितो बी० सी० मातृकापाठो नीलकण्ठेन निरुक्तश्लोकवार्त्तिके (१।४।४४-४९) समाश्रायीति स्पष्टं प्रतीयते ।

(५) स्कन्द-महेश्वराभ्यामास्थितो निरुक्तपाठस्तद्व्याख्यानं चानुक्रियते नीलकण्ठेन । तथा हि—

**निरुक्तपाठः**—योनिरन्तरिक्षम् । महानवयवः । परिवीतो वायुना । अयमपीतरो योनिरेतस्मादेव, परियुतो भवति । निरु० २।८॥

**दुर्गाश्रितः पाठः**—योनिरन्तरिक्षम् । वायुना परियुतो भवति । अयमपीतरो योनिरेतस्मादेव, परियुतो भवति ।

**स्कन्द-महेश्वरौ**—निरुक्तपाठमाधृत्य समासतो व्याख्याय प्राहतुः—नानाकर्मत्वाच्च निर्वचनान्यत्वम् । पूर्वं वेतेर्वकारस्योकारः । स चेकारात्परः । तस्मिन्नीकारस्य यणादेशः । इतरो यौतेः । उभयोर्निर्नामकरणः । वायुनैकः परिवेष्टितः । इतरः प्रजननेन मिश्रीयते, मिश्रितो वा रक्तमांसादिभिः । निरुक्तभाष्यटीका द्वितीयभागे पृ० ६३ ॥

**नीलकण्ठः**—स्कन्द-महेश्वरावनुसरन्नाह—

**वेतेर्योनिरिति प्राह परिवीत इति ब्रुवन् ।**
**वकारात् परतो वृत्तात् प्रत्यये निरितीदृशे ॥**
**ईकारस्य यणादेशो वकारस्य प्रसारणम् ।**
**उकारस्य गुणे योनिरुक्तार्थ उपपद्यते ॥**

**तस्मिन्नेव गुणे योनियौतेरिष्टस्तथेतरः ।**
**एतस्मादिति नानेन वेतिर्धातुर्विवक्षितः ॥**

नि० श्लो० वा० २।२।१६५-१६८ ।

(६) यास्कः 'स्वरादित्यो भवति' (निरु० २।१४) इत्यत्रोदाहरणं नोपन्यस्यति, तथैव दुर्गोऽपि । स्कन्द-महेश्वरौ तु 'दिव उदाहरणं भूर्भुवःस्वरिति, आदित्यस्य त्वेभिर्नो (ऋ० ४।१०।३)' इत्युदाहरणे प्रदर्शयतः । नीलकण्ठः पुनराह—

**एभिर्न इति मन्त्रे हि स्वरादित्योऽभिधीय ।**
**हविभिरेक इत्यस्यां द्यौरेव प्रतिपादिता ॥** निरु० श्लो० वा० २।४।५७॥

(७) यास्कोद्धृतस्य (निरु० २।११।१२) देवापि-शन्तनुविषयकस्य मन्त्रद्वयस्य स्कन्द-महेश्वरव्याख्यानं (निरु० भा० टी० द्वितीयभागे पृ० ७३-७५) नीलकण्ठेन श्लोकीकृतमिति प्रतीयते ।

(८) 'अनुसन्तवीत्वत् तनोतेः पूर्वया प्रकृत्या निगमः' (निरु० १।२८) इति सन्दर्भं व्याचक्षाणो दुर्गो धातोः षड्विधत्वमुक्त्वाह—'आसां षण्णां या पूर्वा प्रकृतिस्तयैष निगमो, न सन्प्रकृत्यादीनामन्यतमया' इति । स्कन्द-महेश्वरौ तत्रावोचताम्—'अनुसन्तनोतीति अनुसन्तवतेः । तनोतिनार्थप्रदर्शनम् । अनुसन्तनोति वेगमविच्छिन्नं सम्पादयति । तवतेः पूर्वया पूर्वोऽभ्यास इत्यभ्यासलक्षणया प्रकृत्या सह साभ्यासस्य निगम इत्यर्थः । तनोतेः इति तु पाठे बहूत्प्रेक्ष्यम्' इति । तस्यानुकुर्वन्नाह नीलकण्ठः—

**तवतेर्यङ्लुकोष्टं स्याद् ईकि चैव गुणे तथा ।**
**लेटस्तिपि गुणाभावे सन्तवीत्वत् तु नैगमः ॥**
**पूर्वा प्रकृतिरभ्यासः पूर्वोऽभ्यास इति स्मृतेः ।**
**धातोः प्रकृतिरित्याख्या प्रयोगो नैगमस्त्विह ॥**
**सन्तवीत्वत् पदं कैश्चित् तनोतेः परिकल्पितम् ।**

निरु० श्लो० वा० २।६।८३,८४॥

(९) 'तूणाशम्' इति पदस्य निर्वचने (निरु० ५।१६) स्कन्द-महेश्वराभ्यां प्रस्तुतं विवेचनम् (निरु० भा० टी० द्वितीयभागे पृ० ३५७,३५८) आत्मसात्कृत्य नीलकण्ठः पद्यात्मकरूपेणोपन्यस्तवान् (नि० श्लो० वा० ५।३।३३-३६) ।

(१०) 'यो रेवान्' (निरु० ३।२१) इति मन्त्रस्य व्याख्याने स्कन्द-महेश्वराभ्यां प्रस्तुतं पुत्रपक्षविकल्पं (निरु० भा० टी० द्वितीयभागे पृ० १९१) प्रदर्श्यापि नीलकण्ठस्तत्रारुचिं प्रकटयति—

**पुत्रोऽध्याहार्य एव स्याद् इत्यर्थोऽयं न पुष्कलः ।**

(निरु० श्लो० वा० ३।४।९७)

दुर्गव्याख्याने त्वस्य पक्षस्य गन्धोऽपि नोपलभ्यते । अतो मन्यामहे—नामग्रहणं विनैव नीलकण्ठः स्कन्द-महेश्वरपक्षं मधुरया वाचा प्रत्याचष्ट इति ।

अन्यान्यपीदृशि स्थलानि यथेष्टं शक्यन्ते निर्देष्टुम् (निर्दिष्टानि खल्वपि प्रस्तुत-संस्करणे पादटिप्पणेषु) । एतदुदाहृतिजातोपन्यासस्यायं निष्कर्षः—नीलकण्ठः स्कन्द-महेश्वराभ्याम् अर्वाग्जन्मा समुपक्रतश्च ताभ्यामिति । ततश्च स्कन्द-महेश्वरयोः परमेश्वरस्य चान्तराले काले नीलकण्ठः शक्यते स्थापयितुम् । महेश्वरकालः ख्रीस्तीया द्वादशशताब्दी वा ततः प्राङ्वेति विदुषां विप्रतिपत्तिः, निरुक्तटीकाकारः स्कन्दः ऋग्वेदभाष्यकारादभिन्नो भिन्नो वार्वाक्कालिक इत्यपि विवादास्पदम् । अतोऽयं मध्यमः पक्षः साधीयान् प्रतीयते—ख्रीस्तीयायां द्वादशशताब्द्यां वा त्रयोदशशताब्द्यां वा नीलकण्ठः पद्मपादः समजायतेति । अपि च, वेङ्कटमाधवकृतायाम् ऋगर्थदीपिकायाम् उद्धृताः शौनकीयाः श्लोका निरुक्तश्लोकवार्त्तिके समानानुपूर्व्या समुपलभ्यमानाः, अभियोगादिशब्दाश्चोभयत्र समानेऽर्थविशेषे प्रयुज्यमाना उपोद्बलयन्ति—अमू ग्रन्थकारौ कालतो नातिविप्रकृष्टावास्तामिति । वेङ्कटमाधवस्य कालोऽपि ख्रीस्तीयद्वादशशताब्दीदेशीयः स्वीक्रियत ऐतिह्यविद्भिः ।[1]

## ७. ०. अन्यद् निरुक्तवाङ्मयम्

वररुचिप्रणीतो निरुक्तसमुच्चय इति नाम्ना ख्यातो ग्रन्थः सम्प्रत्युपलभ्यते । नायं ग्रन्थः साक्षाद् निरुक्तेन सम्बध्यते, किन्तु निरुक्तसिद्धान्तान् आधृत्यात्र १०२ मन्त्रा व्याख्यायन्ते । अयं ग्रन्थश्चतुर्षु कल्पेषु विभज्यते । तत्र प्रथमकल्पे निर्वचनक्रमः प्रदर्श्यते । द्वितीये कल्पे नित्यकर्म-विहिता मन्त्रा व्याख्यायन्ते । तृतीये कल्पे दर्शपूर्णमासयोराज्यभागादि-स्विष्टकृदन्तानां याज्यानुवाक्यानां विवरणं क्रियते । चतुर्थे कल्प एकत्रिंशद्विधा मन्त्रा विव्रियन्ते । वररुचिविषयेऽन्यत् किमपि न ज्ञायते, परमस्य कोऽपि सम्बन्धः स्कन्दस्वामिना सहासीद् इति निरुक्तसमुच्चय-निरुक्तभाष्यटीकयोः परस्परतुलनया सम्यगधिगम्यत इत्यैतिहासिकाः ।[2] अस्य ग्रन्थस्य समालोचनात्मकं संस्करणम् आचार्यप्रवरैः श्रीमद्भिर्युधिष्ठिरमीमांसकपादैः प्रकाशितम् ।

आथर्वणपरिशिष्टेष्वन्यतमो ग्रन्थः कौत्सव्यप्रणीतो निरुक्तनिघण्टुनाम्ना प्रख्यात उपलभ्यते । अस्मिन् ग्रन्थे १४८ गणाः संगृहीताः । ते च ६९ खण्डेषु विभक्ता वर्त्तन्ते । अयं ग्रन्थो यास्कीयनिघण्टुना साम्यं भजते । ग्रन्थान्ते कतिपयानि वाक्यानि निरुक्ताभासानि दृश्यन्ते, अत एव निरुक्तनिघण्टुरिति नामेति परिकल्पयन्ते विचक्षणाः ।[3]

आधुनिकैर्विद्वद्भिः प्रणीताः केचन ग्रन्था निरुक्ताभिप्रायप्रकाशनसहायकाः समुपलभ्यन्ते । तद्यथा—

मुकुन्दशर्मकृता निरुक्तलघुविवृतिः, छाजूरामरचिता निरुक्तव्याख्या, ब्रह्ममुनि-

१. द्र०—वेङ्कटमाधवकृत-ऋग्वेदानुक्रमण्या उपोद्घातः ।
२. वै० वा० इ० द्वितीयभागे द्वादशाध्याये ।
३. तत्रैव ।

कृतो निरुक्तसम्मर्शः, चन्द्रमणिप्रणीतं निरुक्तभाष्यम् (हिन्दी), ब्रह्मलीनमुनिकृता निरुक्तव्याख्या (हिन्दी), भगवद्दत्तरचितं निरुक्तभाष्यम् (हिन्दी), विश्वेश्वरप्रणीता निरुक्तपूर्वार्द्धहिन्दीव्याख्या, लक्ष्मणस्वरूपरचितो निरुक्ताङ्गलानुवादः, सत्यव्रतसामश्रमिप्रणीतं निरुक्तालोचनम्, यास्कीयनिर्वचनानि (एटिमालाजीज़ ग्राव् यास्क) इति सिद्धेश्वरवर्मरचितो ग्रन्थः, राजारामकृता निरुक्तहिन्दीव्याख्या, शिवनारायणप्रणीता निरुक्तमीमांसा चेति ।

## ८. ०. प्रस्तुतं निरुक्तश्लोकवार्त्तिकसंस्करणम्

### ८. १. नागराक्षरकोशः

निरुक्तश्लोकवार्त्तिकस्यैकैव मातृका मलयलिप्यां तालपत्रेषु लिखिता कुञ्जन्राजप्रयासेन कथमपि विद्वत्समक्षे समायाता । तस्य नागरलिपिनिबद्धः कोश आचार्यश्रीयुधिष्ठिरमीमांसकैः कथमवापीति वृत्तं तत्र भवद्भिर्निरुक्तसमुच्चयग्रन्थस्य द्वितीयावृत्तेर्भूमिकायां २०२२ तमे विक्रमीयसंवत्सरे प्रकाशितम् । तथा हि —

"तत्र भवद्भिः पण्डितप्रवरैः 'डाक्टर' कुञ्जन्राजमहोदयैर्बहोः कालात् पूर्वं निरुक्तवार्त्तिकनाम्नो ग्रन्थस्यैको हस्तलेखः समुपलब्ध ग्रासीत् । तस्योल्लेखस्तदानीमेव स्वमित्रेभ्यःपण्डितभगवद्दत्तमहोदयेभ्यः प्रहिते स्वकीये पत्रे कृतोऽभूत् । विविधकार्यव्यासङ्गात् तैर्विद्वद्वर्यैः स्वजीवनकाले न प्राकाशि । सम्प्रत्येते महाभागा अपि यशोमात्रशेषतां गताः । निरुक्तवार्त्तिकस्य स हस्तलेखः कुत्र कस्य चाधिकारे वर्तत इत्यस्यापि ज्ञानं नासीत् । निरुक्तसमुच्चयस्यैतत्संस्करणमुद्रणकाल एव मम मनसि विचारः समुदपद्यत यन्निरुक्तवार्त्तिकग्रन्थस्योपलब्धये कश्चित् प्रयत्नो विधेयः । दैवात् ततः किञ्चित्कालपूर्वमेव मद्रासविश्वविद्यालयस्य संस्कृतविभागाध्यक्षैर्विद्वद्वर्यैः श्रीपण्डित वे० राघवमहानुभावैः सह काशिकावृत्तेर्हिन्दीभाषानुवादमधिकृत्य कश्चित् पत्रव्यवहारः समजनि । पत्राचारेण तत्र भवतां राघवमहोदयानाम् उदारचेतस्त्वं विज्ञाय निरुक्तवार्त्तिकग्रन्थविषये एत एव महानुभावा मया पृष्टाः, यदयं ग्रन्थ इदानीं कुत्र कस्य च सविधे वर्त्तत इति । मम पत्रोत्तररूपं निरुक्तवार्त्तिकमधिकृत्य यत् प्रथमं पत्रं तत्र भवतां समुपलब्धम्, तदित्थम्—

यूनिवर्सिटीबिल्डिंग,[1]
मद्रास—५
१५।१२।६४

श्रीमन्तो मित्रवराः

प्राप्तो भवदीयः लेखः ।

कीर्त्तिशेषाणां श्रीकुञ्जन्राजमहाभागानां पुस्तकसंग्रहे निरुक्तवार्त्तिकस्य मातृका अथवा प्रतिलिपिरेका वर्तते । तत्र किमपि तैः प्रस्तुतं संशोधनकार्यम्, किन्तु न अनुस्यूततया कृतं वा पूरितं वा ।

---

१. आङ्गलभाषायां रोमनलिप्यां मुद्रितम् ।

अस्मिन् विषये कीदृशी भवतामपेक्षा वर्तत इति ज्ञात्वा उपरि कर्तुं शक्यते ।

इत्थं मित्रम्
वे० राघवः

एतत्पत्रस्योपलब्ध्यनन्तरं निरुक्तवार्त्तिकस्य प्रतिलिपिः कथञ्चिदपि मया प्राप्तुं शक्यते न वा, प्रतिलिपिः प्राप्तुं शक्यते चेत् तस्याः सम्पूर्णो व्ययो मया प्रदास्यते इत्यभिप्राययुतमपरं पत्रं तत्र भवद्भ्यो राघवमहोदयेभ्यो लिखितम् । तस्योत्तरमित्थं तैर्महाभागैः प्रदत्तम्—

यूनिवर्सिटी आफ मद्रास[1]
१६।१।६५

सुहृदः

यथा निवेदितं प्राक् तथा निरुक्तवार्त्तिकस्य मातृका कीर्त्तिशेषाणां कुञ्जन्-राजानां भागिनेयस्य हस्ते वर्तते । सा कांकितपत्रेषु केरललिप्यां वर्तते । यदि इष्यते, इतः देवनागरी प्रतिलिपिः अत्रत्येन लेखकेन सम्पाद्य प्रेषयितुं शक्यते ।

अत्र ५००० श्लोका वर्त्तन्ते । ग्रन्थोऽयं गार्ग्यनीलकण्ठेन याजुषेण केरले कोण्डयूर् ग्रामवासिना गृहीततुरीयाश्रमेण पद्मेति संन्यसिनामधृता कृतः । मातृकेयं कियत्पर्यन्तं वर्तते इति अद्य परिशील्यते । द्वित्रदिनैः विषय एव निवेदयिष्यते

इत्थं मित्रम्
वे० राघवः

एवं पत्राचारेणैवायमत्यन्तं दुर्लभो ग्रन्थो मया तत्र भवतां मित्रमणीनां वे० राघवमहोदयानां परमया कृपया प्रयत्नेन च समुपलब्धः ।"

## ८. २. सम्पादनम्

इत्थं देवनागरीलिपिनिवद्धं ग्रन्थकोशं समुपलभ्य श्रीमन्त आचार्यवरा अस्य ग्रन्थस्य द्वितीयाध्यायचतुर्थपादपर्यन्तं संशोधनं विधाय, टिप्पणीश्च संयोज्य, मुद्रण-प्रतिकां निरमिमत । ततस्तत्र भवद्भिर्नियुक्तः प्रस्तुतोपोद्घातस्य लेखकः सकलग्रन्थ-स्य पर्यवेक्षणं, संशोधनं, टिप्पणीयोजनं च विधाय मुद्रणप्रतिकां निर्मितवान् । मद्रासतः प्राप्ते नागराक्षरकोशे स्थले-स्थले रिक्तयः, पाठभ्रंशाः, पाठविपर्यासाः, लिपिकर प्रमादाश्च दरीदृश्यन्ते । बहुषु स्थलेषु लिपिकरदृष्टिदोषात् पाठपरित्यागाः समजा-यन्तेति पूर्वापरासङ्गत्या स्पष्टम् अनुभूयते । क्वचिद् ईदृशाः पाठत्यागा अनुमित्यो-हिताष्टिप्पणीषु प्रदर्शिताः । ऊहिताः पाठाः कोष्ठकेष्वन्तर्हिताः । कोश उपलभ्यमाना अपपाठाः संशोधिताः, यथाकोशं पाठाश्च पादटिप्पणीषु प्रदर्शिताः । कतिपयेषु स्थलेषु

---

१. द्र०—पूर्वपृष्ठगतः टिप्पणी ।

सन्दिग्धाः पाठा मूले प्रकाश्यन्ते, सम्भावितपाठाश्च टिप्पणीषु विमृश्यन्ते। कोशे निर्दिष्टाः श्लोकसंख्याः प्रायेणाव्यवस्थिता भिन्नक्रमाश्चोपलभ्यन्ते, ताः संशोध्य यथाक्रमं व्यवस्थापिता अत्र संस्करणे। पाठकानां सौविध्यं मनसिकृत्य निरुक्तस्य व्याख्येया सन्दर्भास्तत्तद्व्याख्यानस्थलेषु पादटिप्पणीषु निर्दिशिताः। ये मन्त्रा मन्त्रांशा वा स्वरूपत आकरे नोद्दिष्टाः, अथ नीलकण्ठेन व्याख्याताः, तेऽपि टिप्पणीषु संगृह्यन्तेऽत्र। ग्रन्थ उद्धृतानां सन्दर्भाणां मूलस्रोतांसि यथाशक्त्यन्विष्य टिप्पणीषु संकेत्यन्ते। ग्रन्थसंगतिं पदार्थस्पष्टीकरणं चोद्दिश्य तत्र तत्र टिप्पण्यः प्रदीयन्ते।

सावधानेन मनसा मुद्रणपत्रेषु संशोधितेष्वपि दृष्टिदोषाद् यन्त्रदोषाद् वा यास्त्रुटयः समजनिषत, तत्परिमार्जनाय ग्रन्थान्ते निबद्धं संशोधनपत्रं समवलोकन्तां सहृदयाः सुधियः।

## ९. कृतज्ञताप्रकाशः

देववाणीसेवैकव्रतोपार्जितराष्ट्रियपण्डितपदवीसम्मानानां श्रीरामलालकपूरन्यासाध्यक्षपदम् अलंकुर्वतां वैदिकवाङ्मयोन्नयनबद्धपरिकराणां पदवाक्यप्रमाणज्ञानाम् आचार्यप्रवराणां श्रीमतां युधिष्ठिरमीमांसकपादाम्बुजानां शुभाशंसनेन सत्प्रोत्साहनेन प्रौढनिर्देशेन चायमल्पमतिरस्य ग्रन्थस्य सम्पादनकर्मनिर्वाहे समर्थोऽभवदिति ते तत्र भवन्तः प्रणिपातशतेन वन्दनीयाः। येषां विमलशेमुषीकाणां वैदिकवाङ्मयाकरग्रन्थप्रवक्तॄणां तद्विवृतिकृतां च विद्वद्वरेण्यानां ग्रन्थेभ्यः साहाय्यम् उद्गृह्य तद्ग्रन्थसम्पादनकर्म विधातुमशकम्, तांस्तत्र भवतः प्रति महतीं कृतज्ञतामनुभूय प्रणतोऽस्मि। प्रस्तुतग्रन्थोपलब्ध्यर्थंकृतभूरिप्रयासा विद्वद्वरा दिवंगता श्रीयुताः कुञ्जन्राजाः, विद्वच्छिरोमणयः स्वर्गीयाः श्रीमन्तो वे० राघवन् महाभागाः, मद्रासविश्वविद्यालये संस्कृतविभागस्य भूतपूर्वाध्यक्षाः श्रीमन्तः कुञ्जुन्निराजाश्च शतशो धन्यवादान् अर्हन्ति, येषां साहाय्यमन्तरेणायं ग्रन्थः प्रकाशमेव नाद्रक्ष्यत्। मुद्रणपत्रसंशोधनेऽस्माकमन्तेवासिभिः परिमल-ओंकार-वेदमित्र-जगद्देवैर्यत् साहाय्यं प्रादायि,तदर्थं तेभ्य आशीर्वचांसि वितीर्यन्ते। महतावधानेन मुद्रणपत्रे शोधितेऽपि काश्चन दृष्टिदोषकृता यन्त्रदोषकृता वा त्रुटयः संजाताः, तासां परिमार्जनं ग्रन्थान्ते शोधनपत्रे विहितम्। विद्वज्जना सारं पाठान् संशोध्य ग्रन्थमधीयीरन्निति प्रार्थयामहे। ये त्वस्माकमल्पज्ञत्वाद् अनवधानत्वाच्च स्खलनविशेषाः समजायन्त, तान् विज्ञाप्यास्मान् अनुगृह्णन्तूदारचेतसो विपश्चित इति विनिवेद्य विरमति—

विदुषां विधेयः
विजयपालः

१६८२ तमे खीस्तीयाब्दे नवम्बरमासे सप्तम्यां तिथौ।

# संक्षेप-विवरणम्

| | |
|---|---|
| अ० | अध्यायः |
| अथर्व (शौ०) | अथर्ववेदः (शौनकसंहिता) |
| अष्टा०, अ० | अष्टाध्यायी (पाणिनीया) |
| आप० श्रौ० | आपस्तम्बश्रौतसूत्रम् |
| आश्व० गृह्य० | आश्वलायनगृह्यसूत्रम् |
| उ०, उणा० | उणादिकोशः |
| ऋ० | ऋग्वेदः |
| ऋ० प्रा० | ऋग्वेदप्रातिशाख्यम् |
| ऋ० भा० भू० | ऋग्वेदादिभाष्यभूमिका |
| ऐ० आ० | ऐतरेयारण्यकम् |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् |
| कठोप० | कठोपनिषद् |
| का० | काशकृत्स्नीयम् |
| का० श्रौ० | कात्यायनश्रौतसूत्रम् |
| कौषी० आ० | कौषीतकीयारण्यकम् |
| गो० ब्रा० | गोपथब्राह्मणम् |
| गोभिलगृह्य० | गोभिलगृह्यसूत्रम् |
| गौ० धर्म० | गौतमधर्मसूत्रम् |
| छा० उप० | छान्दोग्योपनिषद् |
| टि० | टिप्पणी |
| ता० महाब्रा० | ताण्ड्यमहाब्राह्मणम् |
| तु० | तुलनीयम् |
| तै० आ० | तैत्तिरीयारण्यकम् |
| तै० उप० | तैत्तिरीयोपनिषद् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० सं० | तैत्तिरीयसंहिता |
| द्र० | द्रष्टव्यम् |
| धा० | धातुपाठः (पाणिनीयः, बोथलिङ्ग-संकलितः) |
| निघ० | निघण्टुः (यास्कीयः) |
| नि० टी० | निरुक्तभाष्यटीका (स्कन्दीया) |
| नि० टी० भा० | निरुक्तभाष्यटीकाभागः |
| निरु० | निरुक्तम् |
| न्याय० | न्यायदर्शनम् |
| पार० गृह्य० | पारस्करगृह्यसूत्रम् |
| पु० | पुराणम् |
| पू० मी० | पूर्वमीमांसा |
| पृ० | पृष्ठम् |
| बृह० उप० | बृहदारण्यकोपनिषद् |
| बृह०, बृ० दे० | बृहद्देवता |
| बौ० स्मृ० | बौधायनस्मृतिः |
| ब्रा० | ब्राह्मणम |
| मनु० | मनुस्मृतिः |
| महा० | महाभाष्यम् |
| महा० आदि | महाभारत-आदिपर्व |
| महाना० उप० | महानाम्नी-उपनिषद् |
| महाभा०वा० | महाभाष्यवार्त्तिकम् |
| मान० श्रौ० | मानवश्रौतसूत्रम् |
| मा० सं० | माध्यन्दिनसंहिता |

| | |
|---|---|
| मै० सं० | मैत्रायणीसंहिता |
| यजु० | यजुर्वेदः |
| याज्ञ० स्मृ० | याज्ञवल्क्यस्मृतिः |
| रघु० | रघुवंशम् |
| रामा० | रामायणम् |
| वन० | वनपर्व |
| वाक्य० | वाक्यपदीयम् |
| वै० वा० इ० | वैदिकवाङ्मय का इतिहास |
| शत० ब्रा० | शतपथब्राह्मणम् |
| श्लो० | श्लोकः |
| श्वेता० उप० | श्वेताश्वतरोपनिषद् |
| सं० | संस्करणम् |
| सं० | संहिता |
| सि० कौ० | सिद्धान्तकौमुदी |

—:०:—



# अथ निरुक्त-श्लोकवार्त्तिकम्

## प्रथमोऽध्यायः

अग्निं वायु[1] तथा सूर्यं ज्योतिरेकं त्रिधा[2] स्थितम् ।
प्रणिपत्य सुबोधार्थं निरुक्तं विवृणोम्यहम् ॥१॥
निरुक्तं नाम वेदाङ्गं मन्त्रव्याख्यानलक्षणम् ।
बोद्धव्यं हि प्रयत्नेन मन्त्रार्थं बोद्धुमिच्छताम् ॥२॥

---

१. तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वान्तरिक्षस्थानः, सूर्यो द्युस्थानः (निरुक्त ७।५) इति नैरुक्तमतानुसारमन्तरिक्षस्थानदेवताया वैकल्पिकत्वं बोध्यते । तत्रानेके नैरुक्ताचार्या वायुमेवान्तरिक्षस्थां देवतामुररीकुर्वन्ति । स्वयं यास्कोऽपि इन्द्रदेवतां प्रधानां मन्यमानो मध्यस्थानानां देवतानां व्याख्यानावसरे 'तासां वायुः प्रथमागामी भवति' इत्युपन्यस्यन् पूर्वाचार्याणामनुरोधेन वायुदेवतामेव प्रथमं निर्वक्ति (द्र० निरुक्त १०।१)। निरुक्तसमुच्चयकारो वररुचिरपि मङ्गलाचरणे मध्यस्थानां वायुदेवतामेव नमस्यति (पृष्ठ १) ।

अत्रेदमपि बोध्यम् । ये खल्वाचार्या वायुदेवतां प्रधानां मन्यन्ते त इन्द्रपदव्याख्यान इन्द्रपदस्य वाय्वर्थमेव ब्रुवते । तथाहि 'इन्द्र क्रतुं न आभर' (ऋ० ७।३२।२६) मन्त्रव्याख्यानावसरे निरुक्तसमुच्चयकारो वररुचिराह—'नैरुक्तपक्षे—इन्द्र दानादिगुण ! इन्द्रो मध्यस्थानो वायुरुच्यते । हे ईन्द्र वायो !' (पृष्ठ ८४) । अनयैव प्रक्रियया इन्द्रपक्षे वाय्वादिपदघटितमन्त्रेषु वाय्वादीनां पदानामिन्द्रार्थे वृत्तिर्द्रष्टव्या ।

२. एक एवाग्निर्नाम ज्योतिस्स्थानभेदेन नामत्रयं दधातीति वैदिकानां राद्धान्तः । तथाहि अग्निदेवताके 'स्तोमेन हि दिवि देवासः' (ऋ० १०।८८।१०) मन्त्रे श्रूयते—'तमू अकृण्वंस्त्रेधा भुवे कम् ।' व्याख्यातं च यास्केन—'तमकुर्वंस्त्रेधाभावाय । पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः' (निरुक्त ७।२८) इति ।

मन्त्रार्थविषयं ज्ञानं न विनाऽनेन विद्यते ।
इत्येतद् वक्ष्यते स्पष्टम् 'अथापीदम्' इतीह तु ॥३॥
ननु 'व्याख्यातमेवेदं बहुभिर्मतिमत्तमैः[3] ।
न दोषस्तत्प्रसादेन तदेव स्पष्टयिष्यते ॥४॥
अथापि स्पष्टमेवेदं[4] तथापि श्रद्धयेरितः ।
व्याचक्षे हि निरुक्तार्थं यथाप्रज्ञं यथागमम् ॥५॥
अर्थवत्त्वे तु वेदस्य प्रामाण्ये च विनिश्चिते ।
वेदं प्रत्यङ्गता चास्य तेन तद्[5] द्वयमुच्यते[6] ॥६॥
हिताऽहितफलौ पुंसां धर्माधर्मौ ससाधनौ ।
विदधाति स्वयं वेदः प्रत्यक्षादेरगोचरौ ॥७॥
तयोरगोचरत्वं च प्रत्यक्षादेरशक्तितः ।
प्रत्यक्षादेरसामर्थ्यं जैमिनिर्न्यायतो[7] [ऽब्रवीत्] ॥८॥

---

१. तदुक्तं भगवता निरुक्तकारेण – 'अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते । अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः । तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थ-साधकं च' (निरुक्त १।१५) इति ।

२. निरुक्तव्याख्यानस्य प्रवृत्तिर्भगवतो महाभाष्यकारस्य कालेऽप्यासीत् । तदुक्तं पतञ्जलिना— निरुक्तं व्याख्यायते, व्याकरणं व्याख्यायते' (महा० ४।३।६६) इति ।

३. स्कन्दस्वामिना निरुक्तव्याख्यानस्यादौ 'पूर्वटीकाकारैर्बर्बरस्वामिभगवद्दुर्गप्रभृतिभि-र्विस्तरेण व्याख्यातस्य…' इत्युक्तम् (भाग १, पृष्ठ ४) । ततोऽपि पूर्वं केनचिदाचार्येण 'निरुक्तवार्त्तिक' नाम्ना निरुक्तस्य व्याख्यानं कृतम् । तस्य केचन श्लोका दुर्गाचार्येण स्वनिरुक्तवृत्तावुद्धृताः । सम्प्रति दुर्गस्कन्दस्वामिनोरेव निरुक्तव्याख्यानमुपलभ्यते । वररुचिना-ऽपि निरुक्तप्रक्रियामाश्रित्य शतमन्त्राणां व्याख्यानभूतो 'निरुक्तसमुच्चय' नामा ग्रन्थो व्यरचि । सोऽपीदानीमुपलभ्यते ।

४. अनेन ग्रन्थकारः स्वस्य वैनत्यं प्रदर्शयति ।

५. कोशे 'तद्वयम्' इत्यपपाठः ।

६. वेदस्यार्थवत्त्वं प्रामाण्यं चेत्यर्थः ।

७. तदुक्तं भगवता जैमिनिना—'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् अनिमित्तं विद्यमानस्योपलम्भकत्वात्' (पूर्वमीमांसा १।१।४) इति प्रत्यक्षस्यानिमित्तत्वे तत्पूर्व-कत्वाच्चानुमानोपमानार्थापत्तीनामप्यसामर्थ्यमनेनैव सूत्रेण सूचितम् ।

... ... .... ... .... बाध्यज्ञानहेतुतः ।
वेदस्य हि प्रमाणत्वं मीमांसाङ्गमुपाश्रितम्[1] ॥९॥
आक्षिप्य शब्दे नित्यत्वं[2] ... .... ।
... .... ... त्रियानित्यत्वहेतुता ॥१०॥
अर्थवत्त्वमतः सिद्धं वेदस्य पुरुषं प्रति ।
एवं सत्यङ्ग-[ताप्यस्य वेदं प्रति सुसिध्य]ति ॥११॥
यदेकदेशता चैव समाम्नायत्वकारणम् ।
पक्षञ्चास्य ... .... .... .... ह ॥१२॥
समाम्नायः समाम्नात[3] इत्येतदवधार्यते ।
अव्याख्यातत्व [एवास्य व्याख्यानमपि युज्यते]॥१३॥
व्याख्यातो यद्ययं पूर्वं पुनर्व्याख्या ह्यनर्थिका ।
वृत्रहादिपदैर्युक्तो न युक्तस्तैरयं यतः[4] ॥१४॥
तान्यप्येक[5] इतीहापि वक्ष्यते[6] [मुनिना स्वयम्] ।
... .... दृष्यते यथा .... .... .... ॥१५॥

---

१. वेदप्रामाण्यविचारो जैमिनिना—'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' (पू० मी० १।१।५) इत्यस्मिन् सूत्रे विहितः । उपपादितं च वेदस्य प्रामाण्यं महता विस्तरेण शबरस्वामिना स्वभाष्ये ।

२. शब्दस्यानित्यत्वमुपपाद्य महता प्रयत्नेन तस्य नित्यत्वं जैमिनिना सिद्धान्तितम् । द्र०—पू० मी० १।१।६—२३।।

३. समाम्नायः समाम्नातः । स व्याख्यातव्यः । निरु० १।१।।

४. अस्यायं भाव—यतः पूर्वाचार्यैर्निघण्टुसमाम्नाये देवतानां विशेषणभूतान्यपि पदानि समाम्नायन्ते, अतः पूर्वाचार्याणां तद्व्याख्यानमपि न युक्तम् ।

५. कोशे 'तान्यप्येति' इत्यपपाठः ।

६. तदुक्तं यास्केन—'अथोताभिधानैः संयुज्य हविश्चोदयति—इन्द्राय वृत्रघ्ने, इन्द्राय वृत्रतुरे, इन्द्रायांहोमुच इति । तान्यप्येके समामनन्ति । भूयांसि तु समाम्नानात् । यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति तत्समामने । अथोत कर्मभिर्ऋषिर्देवताः स्तौति—वृत्रहा, पुरन्दर इति । तान्यप्येके समामनन्ति । भूयांसि तु समाम्नानात् । व्यञ्जनमात्रं तत्तस्याभिधानस्य भवति । यथा ब्राह्मणाय बुभुक्षितायोदनं देहि, स्नातायानुलेपनं, पिपासते पानीयमिति ।' निरुक्त ७।१३।।

आम्नात एव तेनायं व्याख्यातो येन केनचित् ।
व्याख्यातव्यस्तथा[1] चायमिति हेतुविशेषणम् ॥१६॥
पूर्वं व्याख्यातमेवेदं यथाभाष्यं पुनः स्वयम् ।
व्याख्यायते तथाम्नायो यास्केनेत्यपि[2] युज्यते ॥१७॥
घटते यदि तेनापि व्याख्यातोऽयमसंशयम् ।
व्याख्यातो नैव तेनेति[3] तत्त्वमेवोपपादितम्[4] ॥१८॥
तमिमन्त्वित्युपन्यस्तं[5] समाम्नायं निघण्टवः[6] ।
इत्येवाचक्षते सर्वे संज्ञाऽस्यैवमनूद्यते ॥१९॥
प्रसिद्धत्वञ्च संज्ञाया आचक्षत[7] इतीरितम् ।
तदुपज्ञा[8] न संज्ञेयं नित्येत्येवं विवक्षितम् ॥२०॥
नित्यत्वे[9] संज्ञिनित्यत्वं वेदवन्नित्य एव सः ।
अङ्गान्तराण्यपि त्वेवं नित्यानीत्यवगम्यते ॥२१॥

---

१. कोशे 'व्याख्या चायमिति चायमिति हेतु०' इति पाठः ।

२. कोशे 'यास्तेनेत्यपि' इत्यपपाठः ।

३. कोशे 'तेने…तत्त्व०' इति त्रुटितः पाठः ।

४. पूर्वाचार्यैर्यथा समाम्नायः समाम्नातो यथा च तस्य व्याख्यानं कृतम्, तेन नायं निघण्टुसंज्ञकः समाम्नायो व्याख्यायते । अत एव यास्केन 'स व्याख्यातव्यः' इत्युक्तम्, इति ग्रन्थकृदभिप्रायो लक्ष्यते ।

५. तमिमं समाम्नायं निघण्टव इत्याचक्षते । निरु० १।१॥

६. निघण्टुशब्दो लोके कोशपर्यायः । कोशग्रन्थाश्च त्रिविधाः । एकार्थशब्दसंग्राहकाः, अनेकार्थपदसंग्राहकाः, विशिष्टपदसंग्राहकाश्च । तथैवात्रास्मिन् समाम्नाये त्रयो भागाः—त्रिष्वध्यायेष्वेकार्थाः संगृह्यन्ते, चतुर्थेऽनेकार्था अनवगतसंस्काराश्च, पञ्चमे स्थानभेदेन देवताः । प्रतिभागं निघण्टुशब्दप्रयोगमाश्रित्य 'निघटवः' इति बहुवचनेन निर्देशोऽत्र क्रियते ।

७. 'तमिमं समाम्नायं निघण्टव इत्याचक्षते' इत्यत्र 'आचक्षते' क्रियायाः कर्त्तारः पूर्वाचार्या लभ्यन्ते । तेन विज्ञायते यदस्य समाम्नायस्य 'निघण्टु' इति संज्ञा प्रसिद्धा नित्या चेतिभावः ।

८. कोशे 'यदुपज्ञान संज्ञेयं' इत्यपपाठः ।

९. उक्तैर्हेतुभिर्वेदाङ्गानामपि वेदवन्नित्यत्वं प्रतिपादयति ग्रन्थकारः ।

नित्यत्वे सति चैतेषां नित्यं प्रत्यङ्गता भवेत् ।
अन्यथा न ह्यपेक्ष्यन्ते[1] वेदेन स्वार्थसिद्धये ॥२२॥
अर्वाचीनानि पूर्वस्य नोपकुर्युः कथञ्चन ।
तेषामविद्यमानत्वात्तदानीमिति गम्यते ॥२३॥
एतानि तु न नित्यानि[2] कर्तृमत्त्वप्रसिद्धितः ।
नैवं[3] तद् रचनैवैषां प्रसिद्धा कर्तृमत्तया ॥२४॥
विद्यास्थानानि [सर्वाणि नित्यानि हीति गम्यताम्] ।
[विद्याश्च] विस्तरोपेताः प्रतिकल्पं भवन्ति वै ॥२५॥
शिक्षेत्यादि[4]-श्रुतिश्चैषां नित्यत्वे सति युज्यते ।
प्रागभावे हि नैतेषां[5] श्रुतिराथर्वणी[6] भवेत् ॥२६॥
अनुवादश्च संज्ञाया व्याख्याहेतुविवक्षया ।
नाव्याख्यातत्वमात्रेण व्याख्येयत्वं प्रसिद्ध्यति ॥२७॥
ग्रन्था हि बहवो लोके व्याख्याता नैव केनचित् ।
तेषामपि भवेद्भाष्यं तच्च व्याख्यानकारणम् ॥२८॥
निघण्टवः समाम्नायः [7]कस्माद्धेतोरुदीर्यताम् ।
निघण्टुशब्दवाच्यत्वे हेतुः[8] कोऽस्येत्यचोदयत्[9] ॥२९॥

---

१. कोशे 'ह्यपेक्ष्यस्ते' इत्यपपाठः ।

२. कोशे 'एतानां त्वनन्यानि' इत्यपपाठः ।

३. 'नैवं तद्' इत्यनेन पूर्वपक्षं निराकृत्य नित्यानामपि वेदाङ्गानां रचनाप्रसिद्धिं कर्तृमत्तया=प्रवचनकर्तृमत्तयोपपादयति । अत्र वेदानित्यत्वपूर्वपक्षनिराकरणे 'आख्याप्रवचनात्' (पू० मी० १।१।३०) इति जैमिनिनोक्तं सूत्रं स्मर्तव्यम् ।

४. द्र०—अथ शीक्षां व्याख्यास्यामः । तै० उप० १।२।१॥ अपि द्र०—शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । मुण्डक० १।१।५॥

५. कोशे 'तैवेषां' इत्यपपाठः ।

६. द्र०'—षडङ्गविदस्तत् तथाधीमहे' । गो० ब्रा० १।१।२७॥ अपि द्र०—मुण्डक० १।१।५॥ ७. कोशे 'तस्मा०' इत्यपपाठः ।

८. निघण्टवः कस्मात् ? निरु० १।१॥

९. कोशे '०चोदयेत्' इत्यपपाठः ।

तदपाकरणायेदं निगमा[1] इत्युदाहृतम् ।
प्रश्नप्रतिवचोयुक्तं व्याख्यानं बुद्धिवर्द्धनम् ॥३०॥
इमे गवादयः शब्दा निगमा नियमेन तु ।
मन्त्रार्थं गमयन्तीति निगमास्स्युरसंशयम् ॥३१॥
अथवा नियमेनैतैर्मन्त्रार्थो[2] गम्यते स्फुटम् ।
निगमास्तेन ते प्रोक्ता निगमाः स्युर्निघण्टवः ॥३२॥
कथं गवादयः शब्दाः मन्त्रार्थं गमयन्ति ते ।
छन्दोभ्य[3] इति तु प्राहुस्तस्याप्यर्थोऽयमुच्यते ॥३३॥
समाहृत्य समाहृत्य मनसा[4] वेदवाक्यतः ।
आम्नाता ग्रन्थभावेन विज्ञातार्थाश्च[5] वैदिकाः ॥३४॥
छन्दस्येव स्थिता ह्येते यद्यपि ज्ञातवाचकाः ।
मन्त्रार्थपरिबोधस्य भवेयुः प्रतिबन्धकाः ॥३५॥
समाहृत्य समाम्नाता निर्ज्ञातार्था यदा त्विमे ।
गमयन्त्येव मन्त्रार्थं शिष्टा[6] न प्रतिबन्धकाः ॥३६॥
प्रत्यक्षवृत्तितस्तेषां स्पष्टार्थत्वेन हेतुना ।
पठिता बहवस्तेम परोक्षा ह्यर्थवृत्तयः[7] ॥३७॥
गमेस्तुत्व प्रत्ययेतु[8] चैव[9] निग्र……… ।
… … … … … … … … निघण्टुना ॥३८॥

---

१. निगमा इमे भवन्ति । निरु० १।१॥ २. कोशे 'नियमेनैतन्मन्त्रार्थो' इत्यपपाठः ।

३. छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः । ते निगन्तवः एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः । निरु० १।१॥

४. 'मनसा' इति मूले न विद्यते । ५. कोशे 'विज्ञानार्थाश्च' इत्यपपाठः ।

६. समाम्नायपठितेभ्यो व्यतिरिक्ता मन्त्रपठिताः शब्दा अर्थप्रतिबन्धका न भवन्तीति भावः ।

७. तेषाम्=अवशिष्टानां प्रत्यक्षवृत्तित्वात् स्पष्टार्थत्वम् इति ते न प्रतिबन्धकाः; अतो निघण्टुषु बहवस्ते शब्दाः पठिता येषां ह्यर्थवृत्तयः परोक्षा इति भावः ।

८. धा० १।१०३१॥ । ९. अत्रैवं पाठः स्यात्—'गमेस्तुन्प्रत्यये चैव निगन्तुरुपपद्यते' । सितनिगमिमसि…तुन् (उ० १।६९) इति तुन्प्रत्ययः ।

गकारस्य घकारत्वं मकारस्य णकारता[1] ।
तकारस्य [टकारत्वं व्यापत्त्या सम्भवेदिह] ॥३९॥
[व्यापत्तिरन्त्यवर्णस्य यो-]त्तरत्राभिधास्यते[2] ।
असौ प्रदर्शनार्थैव सर्वव्यापत्तिरत्र तु[3] ॥४०॥
व्यापत्तिर्नैव वर्णानां नित्यत्वादुपपद्यते ।
प्रसिद्धार्थैरतो [वर्णै] रसिद्धार्थार्थबोधनम् ॥४१॥
व्यापत्तिरिति मन्यन्ते तेन गौणी प्रकल्पिता ।
शब्दान्तरं[4] विकारश्च तथा जैमिनिरब्रवीत्[5] ॥४२॥
आङ्पूर्वस्यैव वा हन्तेः[6] पाठार्थस्य निघण्टवः ।
अपि[7] वेति विकल्पार्थो यद्वोक्तस्य निवर्तकः ॥४३॥
आहतं ब्राह्मणे सूत्रे[8] मन्त्रेष्वाहतमित्यपि ।
प्रयोगो दृश्यते पाठे[9] हन्तेरेवंविधस्य हि ॥४४॥

---

१. कोशे 'नकारस्य ङकारता' इत्यपपाठः ।    २. निरु० २।१॥

३. व्यापत्तिशब्देन वर्णादेश उच्यते । ग्मृत् सर्वेषामेव वर्णानां स्थाने घ् ण् ट् विधानादत्र सर्वव्यापत्तिरुक्ता ।

४. कोशे 'शब्दान्तरविकारञ्च' इत्यपपाठः ।

५. जैमिनिराचार्यः 'वर्णान्तरमविकारः' (पू० मी० १।१।१६) इति सूत्रेण 'दध्यत्र' इत्यादौ वर्णान्तरवचनाद् विकारभावं प्रत्याचष्टे । व्याख्यातं च शबरस्वामिना—'न च दध्यत्र इत्यत्र प्रकृतिविकारभावः । शब्दान्तरमिकाराद् यकारः । ......तस्मादयमदोषः । भगवता पतञ्जलिनाऽप्यमर्थो विस्तरेणोपपादितः । तथाहि - 'अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः ? वाढं युक्तम् । शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तरस्य शब्दान्तरप्रतिपत्तियुक्ता । आदेशास्तर्हीमे भविष्यन्ति, अनागमकानां सागमकाः । तत्कथम् ?

सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥ महा० १।१।२०॥

भगवता दयानन्दस्वामिनैतद् भाष्यवचनं स्वीयर्ग्वेदभाष्यभूमिकायां वेदनित्यत्वप्रकरणे सोदाहरणं विस्तरेण व्याख्यातम् । तत् तत एव द्रष्टव्यम् (ऋ० भा० भू० पृष्ठ ३१, ३२; रामलाल कपूर ट्रस्ट संस्करणम्) ।

६. धा० २।२॥    ७. अपि वाहननादेव स्युः, समाहता भवन्ति । निरु० १।१॥

८. कोशे 'सूते' इत्यपपाठः ।    ९. कोशे 'पाठो' इत्यपपाठः ।

परि[1] सोमेति चैतस्यां मद्रा अाहनसस्त्विति ।
वक्ष्यत्यपि तथा चास्य[2] पाठार्थत्वमसंशयम्[3] ॥४५॥
आङ्स्थाने निशब्दोऽत्र तेनास्याङ्पूर्वता भवेत् ।
व्यत्ययश्चोपसर्गाणां वक्ष्यते[4] निष्कृतं त्विति ॥४६॥
हकारस्य घकारत्व नकारस्य तु णत्वता[5] ।
जिघांसति जघानेति दृष्टत्वाद् घन्तु[6] गम्यते ॥४७॥
समाहृता[7] यतो वैते तस्मादेव निघण्टवः ।
आङः[8] स्थाने समश्चैव निशब्दोऽत्र प्रयुज्यते ॥४८॥
हकारस्य घकारत्वं [9]हरतेरपि युज्यते ।
'वाग्[10] घरत्यस्य मे वित्त' मित्येवं दृश्यते[11] तथा ॥४९॥
समाहृता हि वेदेभ्यो मन्त्रार्थपरिबुद्धये ।
ततश्च हरतेर्वा स्यात् हन्तेर्वेत्यवधार्यते[12] ॥५०॥
'तु' प्रत्ययः[13] पुनस्ताभ्यां[14] बहुलग्रहणाद्[15] भवेत् ।
रेफो णकारतां[16] याति ततस्ते स्युर्निघण्टवः ॥५१॥

---

१. ऋग्वेद ९।७५।५॥ २. 'चार्थः' इति कोशेऽनन्वितः पाठः ।

३. आहननवन्तो वचनवन्तः । निरु० ४।१५॥

४. तदुक्तं यास्केन—"निरित्येष समित्येतस्य स्थाने, एमीदेषां निष्कृतं जारणीव' (ऋ० १०।३४।५) इत्यपि निगमो भवति ।" निरु० १२।७॥

५. कोशे 'गकारस्य तु घत्वतः' इति पाठः ।

६. कोशे 'दृष्टत्वाद्धधु' इत्यपपाठः ।

७. यद्वा समाहृता भवन्ति । निरु० १।१॥

८. कोशे 'आङ्स्थाने' इत्यपपाठः । ९. धा० १।९४७॥

१०. कोशे 'वा घर०' इति भ्रष्टः पाठः ।

११. लोक इति शेषः । वाग्+हरति=वाग्घरति ।

१२. कोशे 'हन्तोर्वं०' इत्यपपाठः ।

१३. कोशे 'पुतु प्रत्ययः' इत्यपपाठः । १४. ताभ्यां हन्तिहरतिभ्यामिति भावः ।

१५. उणादयो बहुलम् ( अष्टा० ३।३।१ ) इत्यत्र बहुलग्रहणाद् हन्तिहरतिभ्याम् अनुक्तोऽपि प्रत्यय ऊह्यते ।

१६. हृधातोर्गुणे कृते यो रेफस्तस्य णकार इत्यर्थः ।

पाठाहरणयोर्भेदो नेह कश्चित्[१] प्रतीयते ।
समाहृत्य समाहृत्य मनसेति[२] यथोदितम् ॥५२॥
व्यापारो मानसस्तत्र पाठादन्यः[३] प्रतीयते ।
विशेषाभावतस्तेन धातुमात्रं विकल्प्यते ॥५३॥
निगमत्वं भवेत् तावद् व्याख्येयत्वस्य कारणम् ।
पठितत्वं न हेतुस्स्याद् येन तन्न प्रयोजकम् ॥५४॥
समाम्नातो यथा हेतुस्तथा चेत् पुनरुक्तता ।
तेनैव सिद्धमित्येवमन्यथाऽतोऽभिधीयते ॥५५॥
पठितत्वेन[४] चैतेषामर्थवत्त्वैव वर्ण्यते ।
यद्येतेऽनर्थकास्त्वेव न पठ्येरन्[५] प्रयत्नतः ॥५६॥
पठिता वेदविद्भिश्च तस्मान्न स्युर्निरर्थकाः ।
अर्थो[६] मन्त्रार्थविज्ञानमिति दूरं न तद्गमे ॥५७॥
व्याख्येयत्वे यथा हेतुर्गमिर्निर्वचनेरितः ।
तथा धात्वन्तरोक्त्यापि तेनैषामविशिष्टता[७] ॥५८॥
गत्यर्थस्याथवा [८]हन्तेर्निघण्टव इमे मताः ।
निघातयन्ति मन्त्रार्थं गमयन्ति स्फुटं हि ते ॥५९॥
आहर्तवोऽथवैते स्युर्हरतेः[९] प्राप्तिकर्मणः ।
प्रापयन्ति हि मन्त्रार्थमिति हेतुस्समर्थितः ॥६०॥
एवं त्रिधापि हेतुत्वं व्याख्येयत्वस्य युज्यते ।

---

१. अतोऽग्रे—'भवेत् ॥ व्यत्ययश्चोपसर्गाणां वक्ष्यते निष्कृतस्त्विति । हकारस्य घकारत्वं शकारस्य तु षत्वतः ॥" इति पाठः कोश उपलभ्यते । प्रकृतेऽस्यान्वयाभावात् पूर्वत्र (४६–४७ श्लोकयोः) चोपलम्भात् प्रमादोऽयं लिपिकरस्येति सुकल्पः ।

२. द्र०—पृ० ६ टि० ४ ।

३. कोशे 'पाठादत्यः' इत्यपपाठः ।

४. कोशे 'पठितत्वैन' इत्यपपाठः ।

५. कोशे 'पठ्येतत्प्रयत्नतः' इत्यपपाठः ।

६. कोशे 'अर्थां' इत्यपपाठः ।

७. कोशे 'तेनैषामविशिष्यते' इत्यपपाठ ।

८. धा० २।२॥

९. धा० १।९४७॥

बहुधैवं निरुक्तिः स्यादेकस्य[1] तु कथं ध्वनेः[2] ॥६१॥
परोक्षवृत्तितो व्यक्तं विशेषानवधारणात् ।
गमेरप्यर्थपौष्कल्यात् केवलो[3] गमिसङ्ग्रहः ॥६२॥
मन्त्रार्थज्ञानहेतुत्वादव्याख्या तत्त्वतस्तनः ।
व्याख्यातव्यः समाम्नाय[4] इत्येवमुपपादितम् ॥६३॥
तद् यानि[5] हीति वाक्यन्तु भवेदाशङ्कितोत्तरम् ।
आशङ्कितमिदं चात्र युक्त्या हासेन वर्ण्यते ॥६४॥
न व्याख्येयस्त्वशक्यत्वाच्छान्दसत्वादशक्यता ।
छन्दोभ्यो[6] ह्याहृतत्वेन[7] छान्दसत्वं त्वयेरितम् ॥६५॥
अत्यर्थं छान्दसानां च लौकिकेभ्यः प्रतीयते ।
छान्दसा लौकिकाश्चेति व्यपदेशस्य भेदतः ॥६६॥
छन्दस्येवं भवेदेतद् भाषायामेतदीदृशम् ।
इत्येवं लक्षणं [8]प्राह भेदेनैव च पाणिनिः[9] ॥६७॥
देवेभिरिति चाप्येतच्छन्दस्येव प्रयुज्यते ।
रूपभेदात् तथा भेदः स्पष्ट एवावधार्यते ॥६८॥
ग्रहणं छान्दसानां च [10]धर्मेणोत्पद्यते सदा ।
यथेष्टं लौकिकानां च भेदस्तेनापि शक्यते ॥६९॥

---

१. कोशे 'स्यादेतस्य' इत्यपपाठः । २. कोशे 'ध्वते' इत्यपपाठः ।

३. कोशे 'केवला' इत्यपपाठः । ४. कोशे 'तथा व्याख्याप्यसमाम्नाय' इत्यपपाठः ।

५. कोशे 'तद्यथा' इत्यपपाठः ।

६. कोशे 'छन्देभ्यः' इत्यपपाठः । यद्यप्यकारान्तछन्दशब्द उक्तपाठोऽप्युपपद्यते तथाप्यत्र भाष्यस्थस्य 'छन्दोभ्यः' शब्दस्यानूदितत्वाद् अकारान्तछन्दशब्दो न युज्यते ।

७. कोशे 'व्याहृतत्वेन' इति पाठः ।

८. 'प्राहुर्भेदेनैव' इत्यपपाठः कर्तुः पाणिनेरेकवचनान्तत्वात् ।

९. आचार्यः पाणिनिः यं शब्दं छान्दसं मनुते तदर्थं लक्षणे 'छन्दसि मन्त्रे ब्राह्मणे' इत्येवं निर्दिशति, यं च भाषिकं तदर्थं 'भाषायाम्' । एवं पृथङ्निर्देशात् पाणिनेर्मते छान्दसानां भाषिकाणां च भेदोऽध्यवसीयते ।

१०. स्वरसंस्कारेणोत्पद्यते अध्ययननियमविशेषैश्च ।

शब्दभेदेऽर्थभेदश्च स चार्थो नावधारितः ।
लोके प्रयुज्यमानस्य शब्दस्यार्थोऽवधार्यते ॥७०॥[1]
अप्रयुक्तस्य लोकेऽर्थो[2] ज्ञातुमेव न शक्यते ।
शब्दार्थस्य परिज्ञाने लोक एव हि कारणम् ॥७१॥
तदभावादशक्यत्वात् प्रतिज्ञेयमनर्थिका ।
अपनेतुमिमां शङ्कां [3]तदित्याद्यभिधीयते ॥७२॥
तद्यान्येतानि चत्वारि पदजातानि लोकतः ।
प्रसिद्धानि प्रतीयन्ते तान्येवेमान्यसंशयम् ॥७३॥
प्रत्यभिज्ञायमानत्वाद् बाधकप्रत्ययादृते[4] ।
सादृश्यप्रत्ययो नास्ति तान्येवेति दृढा मतिः ॥७४॥
व्यपदेशादिभेदास्तु प्रत्यभिज्ञानबाधिताः ।
भेदसिद्धावशक्तास्स्युस्तथैव व्यभिचारिणः ॥७५॥
आगतान् ब्राह्मणान् विद्धि[5] वसिष्ठं च समागतम् ।
भिन्नोऽपि व्यपदेशोऽयं भेदं नैव प्रसाधयेत्[6] ॥७६॥
ब्राह्मणत्वाद् वसिष्ठस्य सिद्धैव व्यभिचारिता ।
रचनायां तु नित्यायां लक्षणं तस्य तादृशम् ॥७७॥
अन्यत्रान्यादृशस्तस्य लक्ष्यभेदो न तावता ।

---

१. इत उत्तरं कोशे ६९ तम एव श्लोकः प्रमादात् पुनर्लिखित उपलभ्यते ।

२. कोशे लोकेस्य' इत्यपपाठः ।

३. तद् यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति । निरु० १।१॥

४. य एव लौकिकास्त एव वैदिका इत्येवमेकत्वरूपेण प्रत्यभिज्ञानं विना नैव प्रत्याख्यातुं शक्यते । तस्मान्नायमेकत्वप्रत्ययसादृश्यनिबन्धन इति भावः ।

५. कोशे 'आगताद् ब्राह्मणाद् विद्धि' इत्यपपाठः । 'ब्राह्मणा आयाता वसिष्ठोऽप्यायातः' इत्यनेन वाक्येन वसिष्ठस्य ब्राह्मणेषु प्राधान्यं बोध्यते न तु ब्राह्मणेभ्यो व्यतिरिक्तत्वम् । अयमेव च 'ब्राह्मणवसिष्ठन्यायः' उच्यते ।

६. कोशे 'भेदेनैव प्रसाधये' इत्यपपाठः ।

लक्ष्यश्च शब्द एवात्र स च वर्णात्मको मतः[1] ॥७८॥
वर्णाश्च लौकिकास्सर्वे वेदश्चैव तदाकृतिः ।
न वर्णव्यतिरिक्तोऽस्ति शब्द इत्यभिधास्यते ॥७९॥
देवेभिरिति चार्चस्य प्रकृतिप्रत्ययौ पृथक् ।
प्रयुज्येते[2] सदा लोके समुदायस्तु वैदिकः ॥८०॥
एतावता गतार्थत्वे लौकिकेऽपि प्रयुज्यते ।
वेदैक्यादप्रसङ्गश्चेद्[3] वर्णैक्यादपि युज्यते ॥८१॥
देवकर्मभिरित्यादौ प्रकृतिप्रत्ययौ ययोः ।
अर्थयोर्वाचकौ दृष्टौ तयोर्वेदेऽपि नान्ययोः ॥८२॥
धर्मेण ग्रहणं चापि विशिष्टरचनाकृतम्[4] ।
तदभावाद् यथेष्टं तु न भेदादिति[5] निश्चयः ॥८३॥
छन्दोभ्यश्चाहृतत्वञ्च गौरवार्थं भिदेर्न तत्[6] ।
वेदविद्ग्रहणं[7] चास्य गौरवेण विवक्षितम् ॥८४॥
एकत्वे चैव शब्दानामेवं न्यायेन निश्चिते[8] ।
अर्थैकत्वसुसिद्धत्वात् प्रतिज्ञार्थवती गुरोः[9] ॥८५॥

---

१. अयं मीमांसकानां राद्धान्तः । एतद्विषये पू० मी० १।१।५ सूत्रस्य शाबरभाष्यस्य 'अथ गौरित्यत्र कः शब्दः' इत्यारभ्य 'अतो न तेभ्यो व्यतिरिक्तं पदं नामेति' इत्यन्तः सन्दर्भो द्रष्टव्यः ।
२. कोशे 'प्रयुज्यते' इति पाठः ।

३. अस्यायं भावः—'देवेभिः' पदमृचि दृष्टं यजुष्यपि दृश्यते । यदि तत्र वेदत्वेनैक्ये भेदस्याप्रसङ्गस्तर्हि वैदिकलौकिकयोर्वर्णानामैक्येऽपि भेदस्य प्रसङ्गो न युज्यते ।

४. वेदे नियतवर्णानुपूर्वीका विशिष्टा रचना, लोके तु यथेष्टं पदानि प्रयुज्यन्ते-आहरपात्रम्, पात्रमाहर । तस्माद् रचनाविशेषकृतमेव धर्मविशेषेण वेदस्याध्ययनं भवति; न शब्दभेदात् ।

५. कोशे 'नाभेदादिति' इत्यपपाठः ।
६. 'प्रयोजकम्' इति शेषः ।

७. 'छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता.' इत्यत्र 'वेदविद्भिः' इत्येवं शेषभूतं पदं स्वीकृत्य 'वेदविद्ग्रहणं' इत्युक्तम् ।

८. 'य एव लौकिकास्त एव वैदिकाः, त एव च तेषामर्थाः' इति मीमांसायां लोकवेदाधिकरणे निर्णीतम् । द्र०—शाबरभाष्यम् १।३।३०॥

९. गुरोः शास्त्रप्रवक्तुर्यास्कस्य 'तद् यान्येतानि···तानीमानि भवन्ति' इति प्रतिज्ञेत्यर्थः ।

चत्वारीत्यनुवादोऽयं लोकसिद्धेरुदाहृतः ।
संज्ञा च लोकसिद्धैव नामेत्यादिरनूद्यते ॥८६॥
शब्दशास्त्रप्रसिद्ध्या[1] वा चतुष्ट्वं त्ववधार्यते ।
पाठेनैव तु सिद्धत्वादन्यथेदमनर्थकम् ॥८७॥
एकमेव पदं केचिद्[2] द्वे चान्ये[3] त्रीणि चापरे[4] ।
स्वशास्त्रसमयेनाहुः पञ्चैके[5] षट् तथापरे[6] ॥८८॥
नैरुक्तानां[7] तु सर्वेषां चत्वारीत्येव निश्चयः ।
लोकप्रसिद्धिसिद्धत्वादिति न्यायः समाश्रितः ॥८९॥
लक्षणं वक्ष्यमाणञ्च चतुष्ट्वस्यैव[8] साधकम् ।
पक्षयोरुभयोश्चैव[9] तेष्वेवान्तर्गतिं विदुः ॥९०॥

---

१. तु०—'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च'—महाभाष्य-पस्पशा० ।

२. 'अर्थः पदम्' इत्यैन्द्राः । सं० व्या० शास्त्र का इति० भाग १, पृष्ठ ८६ टि० ४ ।

३. 'सुप्तिङन्तं पदम्' इत्यापिशलपाणिनीयाः । सं० व्या० इति० भाग १ पृष्ठ ८७ टि० १ ।

४. निपातोपसर्गविकीकृत्य इति दुर्गः । तन्न, तथा सति निपातभिन्नानामव्ययानामसंग्रहापत्तेः । तेन सुबन्तं तिङन्तम् सुप्तिङ्विरहितमव्ययं चेति त्रीणि पदानि ।

५. निपातेभ्यो गतिसंज्ञकान् पृथग् गणयित्वा पञ्च । कर्मप्रवचनीयेनैव पञ्चमेन सह पदस्य पञ्चविधत्वमिति हेलाराजो व्याख्यातवान् । सायण ऋग्भाष्योपक्रमणिका ।

६. निपातेभ्यो गतिकर्मप्रवचनीयसंज्ञकान् पृथग्गणयित्वा षट् ।

७. कोशे 'नैरुक्तकानां' इत्यपपाठः । ८. कोशे 'चतुष्टस्यैव' इति लिपिकरप्रमादः ।

९. पञ्चत्वषट्त्वपक्षयोरिति भावः । नैरुक्तानां समये निपातभिन्नानि स्वरादीन्यव्ययानि कथं संगृह्यन्ते इति न केनचिदपि व्याख्यात्रा स्पष्टीक्रियते । संभाव्यते यथा पाणिनिना अव्ययेषु निपातानां स्वरादीनां च समुच्चयः कृतस्तथा कैश्चन पूर्वाचार्यैर्निपातेष्वेव स्वरादीनि पठितानि स्युः । गोपथब्राह्मणे ब्रह्मवाचिन ओङ्कारस्य निपातत्वमुक्तम् । तथाहि—'निपातेषु चैनं वैयाकरणा उदात्तं समामनन्ति तदव्ययीभूतमन्वर्थवाची शब्दो न व्येति कदाचन' इति (१।१।२४) । पाणिनीयास्तु निपातसंज्ञायां 'चादयोऽसत्त्वे' (अष्टा० १।४।५७) इत्यसत्त्ववचनं पठन्ति । ब्रह्मवाची चोङ्कारः सत्त्ववाची । नहि तेन तस्य निपातसंज्ञा सम्भवति । अत एव भट्टोजिदीक्षित उणादिप्रकरणे 'अवतेष्टिलोपश्च' (पाद १) सूत्रव्याख्याने आह—'चादिपाठादव्ययत्वमित्युज्ज्वलदत्तः । तन्न, तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम्' इति ।

चतुष्ट्वे व्याहृते[1] सोऽर्थश्शब्दानामवगम्यते ।
सर्वेषामेव संक्षेपादिति तस्यावधारणम् ॥९१॥
सिद्धसाध्यविभागस्तु[2] नामाख्यातार्थगोचरः ।
नैकत्वे शक्यते वक्तुं भेद एव समाश्रितः ॥९२॥
एवञ्च त्रित्वमेवास्तु लघुतैवं च जायते ।
उच्चावचार्थवाचित्वात् [3]तेषामेकत्वसम्भवः ॥९३॥
उपसर्गः क्रियायोगान्निपातेभ्योऽन्य एव हि ।
उच्चावचार्थवाचित्वं [4]पूर्वयोरपि विद्यते ॥९४॥
शब्दत्वेन पदत्वेन वस्तुत्वेनार्थवत्तया ।
एकत्वं शक्यते वक्तुं प्रमेयत्वादिना तथा ॥९५॥
अस्त्येव तु तथाप्येषां भेदः पूर्वोक्तया दिशा ।
चत्वार्येव पदानीति चत्वारीत्यनयेरितम् ॥९६॥
शास्त्रे लाघवसिद्ध्यर्थम् एकत्वाद्यपरे श्रिताः ।
कर्मप्रवचनीयादिसंज्ञा भेदं न साधयेत् ॥९७॥
पदाद्वित्वविबोधित्वात् तेन कार्यार्थमेव च ।
द्वितीयादिविधानं[5] च तस्याः[6] कार्यं प्रचक्षते ॥९८॥
नामार्थविषयार्थत्वात् पश्चादाख्यातकीर्तनम् ।
क्रियासङ्गतिहेतुत्वाद् उपसर्गास्ततः परे ॥९९॥
पारिशेष्यान्निपातस्तु पश्चात्तेभ्यः प्रकीर्तिताः ।
बहुत्वादेकवक्तृत्वात् क्रमो यद्वाऽयमाश्रितः ॥१००॥

---

१. कोशे 'चतुर्ष्वेव हृते' इति पाठः ।

२. कोशे 'सिद्धिसाध्य॰' इत्यपपाठः । नामार्थः सिद्धः; आख्यातवाच्या च क्रिया साध्या ।

३. निपातोपसर्गाणामिति भावः । ४. पूर्वयोर्नामाख्यातयोरिति भावः ।

५. कोशे 'सा द्वितीयादि॰' इत्यपपाठः । अत्रत्यं 'सा' इति पदं पूर्वचरणस्थस्य चपदस्य स्थाने चेत् स्यात् तर्हि समीचीनं स्यात् ।

६. तस्याः कर्मप्रवचनीयसंज्ञायाः । तदुक्तम्—'कर्मप्रवचनीययुक्ते द्वितीया' (अष्टा॰ २।३।८) इति ।

सुखावबोधसिद्धयर्थं तेषां लक्षणमुच्यते ।
निर्धारणार्थे[1] [2]तत्रेति तेषां मध्ये तु पूर्वयोः ॥१०१॥
लक्षणं वक्ष्यमाणञ्च बुद्धौ कृत्वैतदित्यपि ।
लक्ष्यते[3] येन नामादि लक्षणं तस्य तद्विदुः ॥१०२॥
नाम्नस्तु लक्षणं विद्याद् [4]आख्यातस्यैतदीदृशम् ।
प्रविभज्य वदन्त्येवं लक्षणं लक्षणार्थिने[5] ॥१०३॥
भावप्रधानमाख्यातं[6] क्रिया भाव इहोच्यते ।
लक्षणं वक्ष्यमाणं हि भावस्याह क्रियां मताम्[7] ॥१०४॥
प्राधान्येनोच्यते भावो येनाख्यातं तदिष्यते ।
प्राधान्यञ्च गुणापेक्षं को गुणस्तत्र कथ्यताम् ॥१०५॥
शब्दश्चेद्वाचकत्वेन वाच्यं प्रति गुणो मतः ।
व्यर्थं प्रधाननिर्देशः भाववाचीति निर्दिशेत् ॥१०६॥
भावार्थमिति वा वाच्यमक्षराणां लघुत्वतः ।
सा [हि] प्रधानशब्दोक्तिर्गुणान्तरविवक्षया ॥१०७॥
कर्ता कालस्तथा संख्या[8] पुरुषोपग्रहौ तथा ।
आख्यातादेव गम्यन्ते स्पष्टं कर्मापि वा क्वचित् ॥१०८॥
प्राधान्यं यदि सर्वेषां गुणाभावोऽथवा भवेत् ।
परस्परानपेक्षत्वात् सम्बद्धा न[9] परस्परम् ॥१०९॥
तत्र शब्दप्रयोगस्य नैरर्थक्यं प्रसज्यते ।
अतोऽत्र केनचिद्भाव्यं प्राधान्येनापरैर्गुणैः ॥११०॥
प्रतीयते च भावोऽत्र [10]साध्यस्सिद्धास्तथेतरे ।

---

१. यथाकोशं पाठः ! 'सर्वत्र लघु पञ्चमम्' इति नियमस्य व्यभिचारो वा बाहुलकत्वात् । २. तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति । निरु० १।१॥
३. कोशे 'वक्ष्यते' इत्यपपाठः । ४. कोशे 'व्याख्यात०' इति पाठः ।
५. कोशे 'लक्षणार्थिते' इत्यपपाठः । ६. निरु० १।१॥
७. कोशे 'क्रिया मतात्' इति पाठः । ८. कोशे 'संख्यौ' इत्यपपाठः ।
९. कोशे 'सम्बद्धौ त' इत्यपपाठः । १०. कोशे 'साद्धयसिद्धा०' इत्यपपाठः ।

सिद्धसाध्यसमुत्थो[1] च साध्यार्थस्सिद्ध इष्यते ॥१११॥
सिद्धेन साध्यते साध्यस्सिद्धस्साध्येत नैव हि ।
नासतः कारणत्वं हि कथञ्चिदुपपद्यते ॥११२॥
असतोऽप्यथ चेदिष्टं शशशृङ्गेण साधय ।
न च शक्नोषि तेन त्वं कार्यं साधयितुं क्वचित्॥११३॥
अतोऽत्र साध्यमानेन सम्बन्धस्सम्प्रतीयते ।
कर्तृद्वारेण कालादेः क्रियासम्बन्धसम्भवः ॥११४॥
कर्त्ताऽभिसाधयेत् साद्ध्यं काले [संख्यानरान्वितः] ।
[परार्थं यजतोत्यस्मा] दात्मार्थं यजते त्विति ॥११५॥
नन्वेकेनैव शब्देन युगपत् प्रतिपादिताः ।
तुल्या एवावतिष्ठन्ते विचित्रकथनात् कथम् ।११६॥
प्रतीयन्ते ततः स्पष्टमेवं[2] स्वभावकारणात्[3] ।
तथैवोच्यमानो[4] पालक्याः पयस्तथा ॥११७॥
यद्यथा दृश्यते वस्तु सर्वदाऽव्यभिचारतः ।
तत्तथैवाभ्युपेतव्यं गतिर्नान्याभिविद्यते ॥११८॥
धात्वर्थं भावमिच्छन्ति केचित्तस्य[5] क्रिया मतः ।
क्रियाणि[6] भावशब्देन पुरस्तात् प्रतिपादिता ॥११९॥
क्रियाया वाचको धातुरिति शब्दविदां मतम्[7] ।
यद्यसौ प्रत्ययस्यार्थो धात्वर्थः को भविष्यति ॥१२०॥
क्रियायां प्रत्ययस्यार्थे[8] धातुरेव निरर्थकः ।
क्रियावाचिनि धातौ[9] तु प्रत्ययो न निरर्थकः ॥१२१॥

---

१. कोशे 'सिद्ध०' इत्यपपाठः । २. कोशे 'स्फुटं मेवं' इत्यपपाठः ।
३. कोशे 'स्वभावकारुतु' इत्यपपाठः । ४. अत्र कश्चित् पाठो भ्रष्टः ।
५. अर्थं इति शेषः । 'सा च क्रिया मता' इति पाठो युक्तः स्यात् ?
६. कोशे 'क्रियाभि' इत्यपपाठः ।
७. द्र०—'यदि पुनः क्रियावचनो धातुरित्येतल्लक्षणं क्रियेत' । महाभाष्य १।३।१॥
८. कोशे 'प्रत्ययस्यार्थो' इत्यपपाठः । ९. कोशे 'क्रियावाचि निपातौ' इत्यपपाठः ।

कर्त्रादेर्वाचकत्वेन भिन्नार्थौ तावतः स्फुटम् ।
अतश्च धातुवाच्यत्वं भावस्यात्रोपपद्यते[1] ॥१२२॥
उच्यतां भावशब्देन धात्वर्थो न निवार्यते ।
व्यापारस्तु ततोऽप्यन्यः कश्चित् सर्वत्र गम्यते ॥१२३॥
तमाहुर्भावशब्देन भावनां[2] भावनाविदः[3] ।
भावार्था[4] इति सूत्रेण सैव तत्र क्रिया मता ॥१२४॥
धातुवाच्या क्रियाऽन्यैव यागदानादिलक्षणा ।
अन्यैव प्रत्ययोक्तापि धातुर्नैव निरर्थकः ॥१२५॥
यजेतेत्यादिशब्दोक्तौ यज्याद्यर्थश्च गम्यते ।
भावयेदिति चाप्यन्यस्तदुक्तौ जैमिनेर्मते[5] ॥१२६॥
प्रत्ययस्यैव वाच्येयम्[6] अन्वयव्यतिरेकतः ।
आख्यातप्रत्यये नित्यं भावना सम्प्रतीयते ॥१२७॥
असति प्रत्यये[7] तस्मिन् धातौ सत्यपि नेष्यते ।
प्रयोजकस्य व्यापारः स उदासीनताच्युतिः ॥१२८॥
तत्रैव[8] पुरुषो नित्यं प्रत्ययेन नियुज्यते ।
शक्यते पुरुषेणासौ कर्तुं नान्यद्धि किञ्चन ॥१२९॥
ताञ्च कुर्वन्नसौ कर्ता कारयन्नपरं तथा ।
सिद्धः प्रयोजको लोके तद् द्वैविध्यमपेक्षया[9] ॥१३०॥

---

१. कोशे 'भावस्यातोपपद्यते' इत्यपपाठः ।

२. कोशे 'भावानां' इत्यपपाठः । ३. मीमांसका इत्यर्थः ।

४. तथा च जैमिनीयं सूत्रम्—'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते । पू० मी० २।१।१॥

५. मीमांसकानां मते 'यजेत' इत्यस्य 'यागेन भावयेत्' इत्ययमर्थं इष्यते । तत्र 'यज' धातुना यागार्थं उच्यते लिङा च भावयेदिति । अत्र उभे अपि क्रिये, तथापि धातुवाच्यप्रत्यय-वाच्यक्रिययोर्भेदो ज्ञेयः ।

६. इयं भावनेत्यर्थः ।

७. लिङादिप्रत्ययाभावे धातौ सत्यपि भावना न प्रतीयते इत्यर्थः ।

८. भावनायामित्यर्थः । ९. कोशे 'तद्द्वैविद्ध्यमपेक्षया' इत्यपपाठः ।

स्वव्यापारातिरिक्तोऽपि[1] घटादिः क्रियते ननु ।
नरेणैवोच्यतेऽथापि कृतोऽनेन घटस्त्विति[2] ॥१३१॥
जायते स्वयमेवासौ पुरुषे प्रच्युते तथा ।
व्यापारो जायमानस्य जन्मकर्ता घटोऽस्य तु ॥१३२॥
जननात् पुरुषस्यापि स शक्तस्तत्र वर्तितुम् ।
स्वव्यापारे घटोऽपीति घटस्यैवात्र कर्तृता ॥१३३॥
नरव्यापारहेतुत्वादकृतोऽप्युच्यते कृतः ।
लक्षणा चेन्न दोषस्स्याल्लौकिक्येव हि लक्षणा[3] ॥१३४॥
कृषत्यसौ हलैष्षड्भिरित्यकुर्वन्[4] विलेखनम् ।
नरोऽपि लेखयन्नेव तथा लोकेऽभिधीयते ॥१३५॥
स्वव्यापारमतः कुर्वन् कारयत्यपरं नरः ।
व्यापारः[5] प्रच्युतिर्भावो भावनेत्यपि[6] वर्ण्यते ॥१३६॥
तस्यामप्यविशिष्टायां[7] नियोगः स्यादनर्थकः ।
नियोगेन विनाप्यस्यां प्रवृत्तिः स्यात् स्वभावतः ॥१३७॥
साध्यादिभिरतश्चेयं विशेष्यांशैस्त्रिभिः स्फुटम्[8] ।
पदान्तराभिधेयोऽर्थः साध्यांशः पुरुषार्थतः ॥१३८॥
धात्वर्थः[9] करणं च स्याद् योग्यार्थात् सन्निधानतः[10] ।
अकृतः सोऽपि नास्तीति तस्य साध्यत्वमर्थतः ॥१३९॥

---

१. कोशे 'स्वव्यापाराति निरुक्तोपि' इत्यपपाठः ।
२. कोशे 'घटस्थितिः' इत्यपपाठः ।
३. द्र०—'लौकिकी हि लक्षणा' । शाबरभाष्य १।४।२॥
४. कोशे '०त्यकुर्वंद्' इत्यपपाठः । ५. कोशे विसर्गरहितः पाठः ।
६. कोशे 'भावतेत्यपि' इत्यपपाठः ।
७. कोशे '०प्यविशिष्टाया' इत्यपपाठः ।
८. इयम् (भावना) साध्यसाधनेतिकर्त्तव्यताभिस्त्रिभिरंशैः स्फुटं प्रतीयत इति भावः ।
९. कोशे 'धात्वर्थं कारणं न' इत्यपपाठः ।
१०. कोशे 'योग्यार्थात्सन्ति धानतः' इत्यपपाठः ।

तत्सन्निधौ प्रयाजादेरङ्गत्वमफलत्वतः ।
त्रिरूपा[2] भावनैवं स्यात् प्रत्ययेन समर्पिता[3] ॥१४०॥
आख्यातालौकिकाच्चापि पदस्यैवावगम्यते ।
फले त्वगम्यमानेऽपि न्यायेन[4] वचनेन[5] वा ॥१४१॥
धात्वर्थं साध्यमिच्छन्ति फलं तेन प्रकल्पितम् ।
यद्यपि प्रत्ययस्यार्थो भाव ईदृग्विधोऽपरः ॥१४२॥
तथापि भाष्यकारेण[6] धात्वर्थोऽत्र विवक्षितः ।
कथं पुनरिदं ज्ञातं[7] प्रत्युदाहरणेक्षणात्[8] ॥१४३॥
अर्थवत्ता हि तस्यैवं नान्यथेत्यभिधीयते[9] ।
धात्वर्थलक्षणे भावे वाच्ये ह्याख्यातलक्षणे ॥१४४॥

---

१. 'दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः' इत्येवमादिवाक्यानां मीमांसकानां मते 'दर्शपौर्णमाससंज्ञकाभ्यां यागाभ्यां स्वर्गं भावयेत्' इत्यर्थोऽभिप्रेतः । तत्र केन भावयेद् इत्यपेक्षायां 'यजेत' पदान्तर्गतो यजधात्वर्थो करणत्वेनान्वेति । किं भावयेद् इत्यपेक्षायां 'स्वर्गकामः' पदान्तर्गतः स्वर्गः फलत्वेन व्याप्रियते । कथं भावयेद् इत्यपेक्षायां तत्सन्निधौ पठिताः फलरहिताः प्रयाजादयोऽङ्गत्वेनानुयन्ति । एवं केन भावयेत् किं भावयेत् कथं भावयेद् इत्येवं त्रिरूपा भावना लिङादिप्रत्ययेनोच्यते ।

२. कोशे 'त्रिरूपता' इत्यपपाठः ।        ३. कोशे 'समर्पिताः' इत्यपपाठः ।

४. यत्र कर्मणः साक्षात् फलं न श्रूयते तत्र विश्वजिन्न्यायेन किञ्चित् फलं कल्प्यते । तच्च फलं स्वर्गरूपमेव । तदुक्तं जैमिनिना—'अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्येत' (पू० मी० ४।३।११) इति, 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' (पू० मी० ४।३।१५) इति च ।

५. यागवचनमनर्थकं मा स्त्विति किञ्चित् फलं कल्प्यते । तदुक्तम्—'वाक्यार्थश्च गुणार्थवत्' (पू० मी० ४।३।१२) इति ।

६. तत्र भवता शबरस्वामिनेत्यर्थः । अत्र पू० मी० २।१।१ सूत्रस्य शाबरभाष्यमनुसन्धेयम् ।        ७. कोशे 'ज्ञात' इत्यपपाठः ।।

८. अत्र मीमांसाभाष्यकार एवमाह—'कस्मादुभयं सूत्रितम्—भावार्थाः कर्मशब्दा इति । उच्यते । भवन्ति केचित् कर्मशब्दाः यथा श्येनैकत्रिकादयः (?)। केचिद् भावार्था न कर्मशब्दाः—यथा भवनं भावो भूतिरिति । पू० मी० २।१।१।।

९. द्र०—भव्यस्य (धात्वर्थस्य) पुनर्भूतार्थतायां न किञ्चिद् दृश्यते (प्रयोजनम्) कल्प्यते चादृष्टम् । तस्मान्न यागो द्रव्यार्थः । शाबरभाष्य २।१।४।।

आख्यातार्थस्तदर्थत्वाद्[1] व्रज्येत्यादेः[2] प्रसज्यते ।
अतश्च तन्निवृत्त्यर्थं भावलक्षणमब्रवीत्[3] ॥१४५॥
नहि पूर्वापरीभूतो भावस्तस्मात्[4] प्रतीयते ।
सिद्धस्तु[5] गम्यते तस्मात् तत्प्राधान्य[म]लक्षणम् ॥१४६॥
गुणत्वं नहि कर्त्रादेस्सिद्धप्राधान्यसंश्रये ।
एवं लक्षणशुद्धयर्थं प्रत्युदाहरणेरणम् ॥१४७॥
अर्थवद्भावनार्थत्वे [6]व्रज्यादेस्सा प्रसज्यते ।
नहि तज्ज्ञापनावाची[7] धात्वर्थस्यैव वाचकः ॥१४८॥
तस्माद्धात्वर्थ एवेह भाव इत्युपपद्यते ।
प्राधान्यात् प्रत्ययार्थस्तु प्राधान्यं साध्यभावतः ॥१४९॥
अप्रधानश्च धात्वर्थः करणत्वेन हेतुना[8] ।
करणत्वञ्च तस्योक्तं[9] साध्यता याऽस्य साऽर्थतः[9] ॥१५०॥
साध्यता प्रत्ययार्थस्य श्रौतत्वेन बलीयसी[10] ।
प्रत्युदाहरणोक्तिस्तु तवापि स्यादनर्थिका ॥१५१॥

---

१. कोशे 'आख्यातार्थं तदर्थत्वाद्' इत्यपपाठः । २. कोशे 'यजेत्यादेः' इत्यपपाठः ।

३. यास्क इति शेषः । ४. तस्मात् कृदभिहिताद् भावादिति भावः ।

५. सिद्धो निष्पन्नो द्रव्यवद् भावो कृत्प्रत्ययान्तेन गम्यते । तदुक्तं महाभाष्यकृता—कृदभिहितो भावो द्रव्यवद् भवति । महा० २।२।१९॥ ३।१।६७॥ ५।४।१९॥ बृहद्देवताकारोऽप्याह—क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात् । संख्याविभक्तिव्ययलिङ्ग-युक्तो भावस्तदा द्रव्यमिवोपलक्ष्यः ॥ बृ० दे० १।४५॥

६. कोशे 'प्रज्यादे०' इत्यपपाठः ।

७. कोशे ०वाचिवात्व०' इति पाठः । अत्रेदं शाबरभाष्यमनुसन्धेयम्—'न तु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्ति—नैव द्रव्यगुणशब्दाः । पूर्वमीमांसा २।१।१॥

८. धात्वर्थो यागो भावनायां करणत्वेनान्वेति—'यागेन स्वर्गं भावयेत्' ।

९. द्र०—श्लोक १३९ ।

१०. अत्रेदं शाबरभाष्यमनुसन्धेयम्—'न च द्रव्यसम्बन्धे विधीयमाने यजेतेत्यनेन सबन्धः । अनूद्यमाने तु सम्भवति । न च यौगपद्येन विध्यनुवादौ सम्भवतः । तस्माच्छ्रुतिवाक्ययोर्विरोधः । विरोधे च श्रुतिर्बलीयसी । तेनार्थिना न द्रव्यसंबन्धः । पू० मी० २।१।४॥

प्राधान्यं यदि साध्यत्वात् कृत्सु तत्र प्रसज्यते ।
वाच्यत्वेन प्रधानत्वे कर्त्रादेः केन वार्यते ॥१५२॥
अतश्च तन्निवृत्त्यर्थं प्रत्युदाहरणं मुधा ।
सामर्थ्यसिद्धमेवाथ तदुक्त्या स्पष्टयिष्यते ॥१५३॥[1]
मत्पक्षेपि तथैवेति सममेवावयोरिदम् ।
न समं भावनेत्यादि प्रत्युदाहरणं तव ॥१५४॥
भावनार्थविशेषत्वात् प्रसक्तौ तन्निवृत्तये ।
व्रज्येत्यादि[2] ममैव स्याद् धात्वर्थः स्याद्विशेषतः ॥१५५॥
आख्याततत्वस्य सम्प्राप्तौ तस्यैव विनिवृत्तये ।
अतन्त्रत्वादनेनैव भावनेत्यप्युदाहृतम् ॥१५६॥
न व्रज्यापत्तिरित्येतद् द्वयमेव विवक्षितम् ।
अतन्त्रत्वेऽपि नैतेन भावनेत्यादि गृह्यते ॥१५७॥
वैलक्षण्येन तच्चापि प्रत्ययार्थत्वहेतुतः ।
पाठादेव[3] तु तुल्यत्वात् तेनेह परिगृह्यते ॥१५८॥
एवं समञ्जसं[4] [5]भाष्यमन्यथा क्लिष्टयोजना ।
भावप्रधानमित्येतत् त्वत्पक्षेऽपि तथाविधम् ॥१५९॥
धात्वर्थस्याप्रधानत्वादप्राधान्यं पुरेरितः ।
व्रज्येत्याद्यनुरोधेन[6] लक्षणार्थस्य गौणता ॥१६०॥
अथवा लक्षणार्थस्य वशेनेतरगौणता ।
प्रथमं वा नियम्येत [7]कारणादिति युक्तितः ।१६१॥
लक्षणार्थानुरोधेन युक्ता तस्यैव[8] गौणता ।
अनुत्पन्नविरोधित्वाल्लक्षणार्थं तथेतरत्[9] ॥१६२॥

---

१. अत्र कोशे संख्याविपर्यासः, तथैवान्यत्र बहुषु स्थलेषूपलभ्यते । स सर्वः संशोधितः ।
२. कोशे 'प्रसज्येत्यादि' इत्यपपाठः । ३. कोशे 'पाठाद्येव' इत्यपपाठः ।
४. कोशे 'सामञ्जसं' इत्यपपाठः । ५. शाबरभाष्यमित्यर्थः ।
६. कोशे 'व्रजेत्या०' इत्यपपाठः ।
७ अत्र कदाचित् 'करणादिति' युक्तः पाठः स्यात् । ८. धात्वर्थस्येति यावत् ।
९. कोशे 'तथेतरम्' इति पाठः ।

प्रत्युदाहरणे त्वेवं विमर्दः स्याद् [1]द्वयोरयम् ।
प्रत्युदाहरणं नेदमतिव्याप्तेरभावतः ॥१६३॥
तदभावश्च निर्दिष्टः पक्षयोरुभयोरपि ।
भावनार्थप्रधानत्वं तेनाख्यातस्य लक्षणम् ॥१६४॥
आख्यातत्वं पदस्यापि प्रत्ययेन न धातुना ।
प्रत्यये सति तत्सिद्धेस्तदभावेऽप्यसिद्धितः ॥१६५॥
अतश्च यत्प्रसादेन तत् तदर्थप्रधानता[2] ।
युक्तैव शब्दशास्त्रेऽपि तत्प्राधान्यं समाश्रितम् ॥१६६॥
प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति[3] ।
धात्वर्थस्य प्रधानत्वे वचनं तन्निरर्थकम् ॥१६७॥
उच्यते येन यस्तावत् स तस्यार्थ इति स्थितिः ।
प्रत्ययस्यैव नार्थोऽत [4]उभाभ्यामुच्यते यतः ॥१६८॥
ब्रूतेऽथ प्रत्ययः स्वार्थं[5] प्रकृत्येति विवक्षितम् ।
तथैव प्रकृतिः स्वार्थं[6] तेनैवेत्यविशिष्टता[7] ॥१६९॥
इयानित्यादिके यत्र [8]प्रत्ययोऽथ प्रदर्श्यते ।

---

१. कोशे 'द्वयोरिदम्' इति पाठः ।

२. कोशे 'तदर्थं प्रधानता' इत्यपपाठः । अतोऽग्रे च 'युक्तैव तत्प्रसादेपि तत्तदर्थं प्रधानता' इत्यधिकः पाठः ।

३. 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति वैयाकरणानां सिद्धान्तः । द्र०—काशिका १।२।५६ ॥

४. प्रकृतिप्रत्ययाभ्यामित्यर्थः । अयं भावः—यथा धात्वर्थप्रधानत्वे 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति वचनं निरर्थकम्, तथैव प्रत्ययस्यैवार्थ इति पक्षेऽपि तद्वचनं निरर्थकम् । यद्वा धात्वर्थस्य प्राधान्ये प्रत्ययवचनं निरर्थकम्, एवं प्रत्ययस्यैव सोऽर्थ इति मते प्रकृतिवचनं निरर्थकम् ।

५. कोशे 'प्रत्ययस्यार्थं' इत्यपपाठः ।

६. कोशे 'प्रकृति सार्थत्वे' इत्यपपाठः । ७. कोशे 'तेनैवेत्यत्रि शिष्टता' इत्यपपाठः ।

८. अयं भावः—इदं शब्दात् किमिदंभ्यां वो घः (अष्टा० ५।२।४०) इत्यनेन परिमाण उत्पन्नस्य वतुपो वकारघत्वे 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' (अष्टा० ७।१।२) इत्यनेन घकारस्य इयादेशे 'इदम्+इयत्' इत्यवस्थायां 'इदं किमोरीश् की' (अष्टा० ६।३।९०)

तत्रापि [1]प्रकृतेर्भावः [2]प्रकृतौ प्रत्ययो न किम् ॥१७०॥
एकैकस्येत्र[3] शक्तत्वमभिधेये तथा द्वयोः ।
तथैव सर्वथा दृष्टेः शक्तौ द्वावेव यत्र तौ ॥१७१॥
एकदेशानुमानस्य नास्ति तेऽवसरस्ततः ।
अदृष्टस्तृप्तितो युक्तं शक्तिमात्रप्रकल्पनम् ॥१७२॥
प्रकृत्यर्थानुरक्तोऽथ प्रत्ययार्थो विवक्षितः ।
प्रत्ययार्थानुरक्तोऽपि प्रकृत्यर्थः प्रतीयते ॥१७३॥
लिङादिप्रत्ययार्थेन[4] प्रकृत्यर्थो विशेषितः ।
गम्यते देवदत्तादिरिति तच्च न युज्यते ॥१७४॥
न[5] दोषः प्रत्ययार्थस्य प्राधान्यं यत्र दृश्यते ।
तदभिप्रायनिष्ठं तु प्रकृतिप्रत्ययाविति ॥१७५॥
भावप्राधान्यमस्यैवम् [6]आख्यातस्यावधारितम्[7] ।

---

इत्यनेन ईशादेशः । स च शित्वाद् इदमः सर्वस्य स्थाने भवति (द्र० अष्टा० १।१।५५) । 'ई+इयत्' इत्यवस्थायां 'यस्येति च' (अष्टा० ६।४।१४८) इत्यनेन 'ई' इत्यस्य लोपे 'इयत्' (इयान्) इति प्रत्ययमात्रमवशिष्यते । तत्र प्रकृतेरन्तर्भावो द्रष्टव्यः ।

१. कोशे 'प्रकृते भावः' इत्यपपाठः ।

२. इत्थमेव यत्र प्रकृतिमात्रं श्रूयते, यथा विट् क्विन् क्विप् प्रत्ययादिषु तत्र प्रत्ययस्याप्यन्तर्भावो ज्ञेय इति भावः ।

३. अस्यायं भावः— यत्र केवला प्रकृतिर्वा प्रयुज्यते प्रत्ययो वा तत्र तस्यैवोभयार्थत्वशक्तेः स्वीकारे यत्र द्वावेव प्रयुज्येते तत्र द्वयोरेव शक्तत्वं कथं न । अत एवोत्तरश्लोके उभयोः प्रयोगेऽपि एकदेशस्यैव शक्तत्वेऽनुमानं न शक्यते वक्तुम् इत्याह ।

४. पूर्वश्लोके प्रत्ययार्थानुरक्तो धात्वर्थ इति प्रतिपाद्य लिङादिप्रत्ययेनापि प्रत्ययार्थानुरक्तो धात्वर्थो विशेषितो द्रष्टव्य इत्यनेन श्लोकार्धेनोच्यते ।

५. अयं भावः—'स्वर्गकामो यजेत' इत्युक्ते देवदत्तादिपुरुषोऽपि प्रतीयते । तेन लिङादिप्रत्ययेन भावनैवोच्यते इति वचनं न युज्यते इति चेन्न दोषः । यत्र प्रत्ययार्थस्यैव प्राधान्यं तन्निष्ठमेव प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति वचनं ज्ञेयम् ।

६. कोशे 'आख्यातस्यैवा०' इत्यपपाठः ।

७. मीमांसकैरिति शेषः । तदुक्तं शबरस्वामिना— 'तान्याख्यातानीति भावशब्दान् पर्यायशब्देनोपदिशति । कथं पर्यायशब्दता भावशब्दानाम्? एषां विभक्तय आख्यातिक्य उच्यन्ते । पू० मी० २।१।४॥

लक्षणञ्चैतेदेवास्य नाम्नां लक्षणमुच्यते ॥१७६॥
ततः कर्त्रधिकरणं[1] ... ... धात्वप्रधानता ।
सत्त्वप्रधानता[2] [नाम्नां] सर्वेशामेव लक्षणम् ॥१७७॥
लक्ष्यन्ते हि तयैतानि व्यभिचारो न दृश्यते ।
पाचको लावकः कर्ता गौरश्वः[3] पुरुषस्त्विति ॥१७८॥
प्रधानं गम्यते वाच्यं पदानां सत्त्वमीदृशाम् ।
यत्किञ्चिदिह [4]निष्पन्नं वस्तु तत् सत्त्वमुच्यते ॥१७९॥
जातिर्वाऽप्यथवा सत्ता व्यक्तिर्वा गुण एव वा ।
तत्र[5] सत्त्वं सतो भावः सत्तैवेह प्रतीयते ॥१८०॥
सत्यं प्रतीयते साऽपि न तु सैव जिघृक्षिता[6] ।
लक्षणाऽव्यापिता दोषो[7] व्यापकत्वे च लक्षणम् ॥१८१॥
इष्टस्याऽव्यापकञ्चैव[8] लक्षणं नेष्यते बुधैः ।
सत्ताप्रधानतैवैषां लक्षणं यदि गृह्यते ॥१८२॥
सत्त्वं सत्ता तथा भाव इत्येषामेव नामता[9] ।
प्राप्नोति तत्प्रधानत्वादन्येषां[10] नैव सिद्धयति ॥१८३॥

---

१. कोशे 'कर्णाभरणं' इत्यपपाठः । अग्रे द्वावक्षरौ त्रुटितौ ज्ञेयौ ।

२. कोशे 'धात्वप्रधानता' इति पाठः । सत्त्वप्रधानानि नामानि । निरु० १।१॥

३. कोशे 'गौरश्च' इत्यपपाठः ।

४. तदुक्तं जैमिनिना—येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि । पू० मी० २।१।३॥ व्याख्यातं च शबरस्वामिना—'येषां शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेव उत्पन्नमात्रं विनश्यतीत्यर्थः । तानि नामानि । ते द्रव्यगुणशब्दाः ।

५. अयं भावः—तत्र नाम्नामुच्चारणे तावत् सत्त्वं प्रतीयते, तदनन्तरं भावः सत्ता प्रतीयते । तस्मात् नाम्नामुच्चारणेऽपि सत्तारूपो भाव एव यदा प्रतीयते तदा नाम्नामाख्यातैस्तुल्यतैव । अयमेवार्थो जैमिनिनाऽपि पूर्वपक्षरूपेणोपस्थापितः—'सर्वेषां भावोऽर्थ इति चेत्' । पू० मी० २।१।२॥

६. अयं भावः—यद्यपि नाम्नामुच्चारणेऽपि सत्तारूपो भावः प्रतीयते तथाऽपि न तस्य वक्तुर्विवक्षा ।

७. 'कोशे 'दोषा' इत्यपपाठः । ८. कोशे 'इष्टस्याव्यपक०' इत्यपपाठः ।

९. कोशे 'नामतः' इत्यपपाठः । १०. कोशे '०दन्यैषां' इत्यपपाठः ।

इष्यते त्वेव नामत्वं कर्त्रादीनामपि स्फुटम् ।
अतो निष्पन्नमात्रस्य जात्यादेरेव वस्तुनः[1] ॥१८४॥
वाचकस्सत्त्वशब्दः स्यात् प्रत्ययः [2]सार्थकस्तथा ।
यदेव[3] सत्त्वमित्युक्तं निष्पन्न सिद्धमेव तत् ॥१८५॥
भावप्रत्ययतुल्यं वा भवेच्छब्दान्तरन्त्विदम् ।
सर्वं[4] तत्सत्त्वमित्यत्र सत्त्वभूवं[5] इतीह च ॥१८६॥
सत्त्वं रजस्तमश्चेति सत्त्वाविष्टोऽयमित्यपि ।
शब्दान्तरं प्रसिद्धं हि सिद्धस्यार्थस्य वाचकम् ॥१८७॥
तथेह सिद्धमात्रस्य सत्त्वशब्दोऽभिधायकः ।
सत्त्वस्यापि प्रधानत्वमवेक्ष्यैव गुणान्तरम् ॥१८८॥
यमवेक्ष्य प्रधानत्वं स गुणः कोऽत्र कथ्यताम् ।
निष्पन्ना बहवस्तावत् पाचकादिपदश्रुतौ ॥१८९॥
द्रव्यादयः प्रतीयन्ते न च सर्वप्रधानता ।
द्रव्यं[6] वा पुरुषस्तत्र प्रधानस्स्याद् विशेष्यकः ॥१९०॥
तद्विशेषणभावेन संख्यादिर्गुण इष्यते ।
संख्यया[7] चैत्र लिङ्गेन क्रियया च विशेषितः ॥१९१॥
तथा कारकशक्त्या च पुरुषादिः प्रतीयते ।
भावस्य तत्प्रधानत्वं साध्यत्वेनैव हेतुना ॥१९२॥
विशेष्यत्वेन सत्त्वस्य गुणस्तस्य विशेषणम् ।
विशेषणं क्वचित्किञ्चिद् विशेष्यं किञ्चिदिष्यते ॥१९३॥

---

१. कोशे 'वस्तुतः' इति पाठः । २. कोशे 'सार्थिक०' इत्यपपाठः ।
३. कोशे 'यदेवं सत्यम्' इत्यपपाठः । ४. द्र०—निरुक्त १।१२॥
५. द्र०—निरुक्त १।१३॥
६. संशोधितः पाठः । कोशे 'द्रव्यमापुरुषस्तत्र' इति पाठः । अत्र 'वा' इति पक्षान्तर-द्योतकः स्यात् ।
७. कोशे 'संख्याया' इत्यपपाठः ।

न सर्वस्यैव सिद्धस्य प्राधान्यमभिधित्सितम् ।
घटते यस्य यत्रैव तत्र तस्याभिधित्सितम्[1] ॥१९४॥
गुणभावस्तथैवेति सम्भवापेक्षमुच्यते ।
गौरश्व[2] इति लिङ्गेन संख्यया क्रियया तथा ॥१९५॥
व्यक्तेरेव विशेष्यत्वं घटते नाकृतेः स्फुटम् ।
निष्पन्नो व्रीहिरेवैक इति जातेः स्वसंख्यया ॥१९६॥
लक्ष्याभिधेययोरेवं विशेष्यत्वं व्यवस्थया ।
जातिरेव तु वाच्येष्टा[3] कैश्चिद् व्यक्तिः[4] परैर्द्वयम्[5] ॥१९७॥
लक्षणं सर्वथैतेषां सत्त्वप्राधान्यमिष्यते ।
आख्यातस्य तथा नाम्नः[6] [7]पदस्यार्थो निरूपितः ॥१९८॥
तद्यत्रेत्यादिवाक्येन[8] वाक्यार्थोऽप्यधुनोच्यते ।
लक्षणोक्तिप्रसङ्गेन निर्दिष्टोऽपि निरूपितः ॥१९९॥
पदार्थः[9] पूर्वं तत्त्वेन वाक्यार्थोऽपि तथोच्यते ।
तत्रेत्यर्थे तदित्येतद्यत्रेत्युक्तेरवेक्षणात् ॥२००॥
तत्रेत्येतत्[10] तदेत्यर्थे यत्रेत्येतद्यदेत्यपि ।
नामाख्याते प्रयुज्येते यदा वाक्यार्थसिद्धये ॥२०१॥

---

१. कोशे 'तस्यैवाभिधित्सितम्' इत्यपपाठः ।   २. कोशे 'गौरश्च' इत्यपपाठः ।

३. द्र०—आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः । महा० १।२।६४॥ आकृतिः= जातिः । मीमांसका आकृतिं पदार्थमाहुः । द्र०—पूर्वमीमांसा १।३।३३ ।

४. द्र०—द्रव्याभिधानं व्याडिः । महा० १।२।६४॥ द्रव्यम् = व्यक्तिः ।

५. द्र०—'किं पुनराकृतिः पदार्थं आहोस्विद् द्रव्यम् । उभयमित्याह । कथं ज्ञायते ? उभयथा ह्याचार्येण सूत्राणि पठितानि । आकृतिं पदार्थं मत्वा जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् (अष्टा० १।२।५८) इत्युच्यते । द्रव्यं पदार्थं मत्वा सरूपाणाम् (अष्टा० १।२।६४) इत्येकशेष आरभ्यते' । महा० पस्पशा० ॥ नैयायिकास्तु 'व्यक्त्याकृतिजातयस्तु पदार्थाः' (न्यायदर्शन २।२।६५) इत्याहुः । अत्राकृतिशब्देनाकार (नियतावयवव्यूहः) उच्यते ।

६. कोशे 'नाम्नां' इति पाठः ।   ७. कोशे 'पादस्यार्थो०' इत्यपपाठः ।

८. तद् यत्रोभे भावप्रधाने भवतः । निरु० १।१॥

९. कोशे 'पदार्थं' इत्यपपाठः ।   १०. कोशे 'तत्रेत्येत्तदेत्यर्थे' इत्यपपाठः ।

उभे भावप्रधाने तु तदा स्यातामितीरितम् ।
नामाख्याते [1]विनिर्दिष्टे [2]उभे इत्यधिकारतः ॥२०२॥
आख्यातम्[3] एकमेवेष्टं[4] वाक्ये नाम्नां[5] तु नावधिः ।
उभे इत्यपि निर्देशः पदजातिविवक्षया ॥२०३॥
आख्यातपदजात्यैका[6] तद्वृत्तिः परिगृह्यते ।
तयैव नाम सम्बद्धं[7] वाक्यं सम्पूर्णमेव तत् ॥२०४॥
आख्यातानां बहुत्वे हि वाक्यानि स्युर्बहून्यपि ।
नामजात्या पुनर्नाम्नां बहूनामुपसङ्ग्रहः ॥२०५॥
यावद्भिर्वाक्यसम्पत्तिरित्येवमविरुद्धता[8] ।
वाक्यस्फोटनिरासार्थमुभे[9] इत्यथवेरितम् ॥२०६॥
वाक्यस्फोटो हि निर्भागो नोभयोरस्ति सम्भवः ।
पदं पदान्तराद्भिन्नं वर्णो वर्णान्तरादपि ॥२०७॥
प्रतीयते यथा लोके तथा सोऽनुप्रतीयते ।
पदज्ञानस्य मिथ्यात्वं न च युक्तं प्रभाषितुम् ॥२०८॥
बाधकप्रत्ययाभावात् [10]कारणादोषतस्तथा ।
उपपन्ने पदार्थेभ्यो वाक्यार्थप्रत्यये सदा ॥२०९॥

---

१. कोशे 'नामाख्यातापि नि०' इत्यपपाठः । २. कोशे 'उभेत्यधि०' इत्यपपाठः ।
३. कोशे 'आख्यामेक एवेष्टं' इत्यपपाठः ।
४. तु०—एकतिङ् वाक्यम् ॥ महाभा० २।१।१॥
५. कोशे 'नाम्ना' इत्यपपाठः । ६. कोशे 'जात्येका' इत्यपपाठः ।
७. कोशे 'सम्बद्धो' इत्यपपाठः । ८. कोशे '०विरुद्धचता' इत्यपपाठः ।
९. वैयाकरणाः स्फोटानामष्टविधत्वं मन्वते । तत्राखण्डवाक्यस्फोटो निष्कृष्टसिद्धान्तत्वेनास्थीयते । तथा चाह भट्टोजिदीक्षितः—

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः । (वैयाकरणसिद्धान्तकारिका ६१)

भर्तृहरिः—खल्वप्याह—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥ वाक्यपदीय १।७३॥

१०. तैमिरिकस्य चन्द्रे द्वित्वंबुद्धिः कारणदोषाज्जायते, न त्वेवं वाक्ये पदत्वबुद्धिरित्यभिप्रायः ।

अर्थापत्तिरपि क्षीणा वाक्यस्फोटप्रकल्पने ।
व्यतिरिक्तः पदेभ्योऽसौ न च प्रत्यक्षगोचरः ॥२१०॥
पदान्येव हि गम्यन्ते व्यावृत्तानि परस्परम् ।
तत्त्वेऽपि[1] बुद्धिगम्येन व्यतिरिक्तेन केनचित् ॥२११॥
भवितव्यं पदेभ्योऽत्र ज्ञानमेकं दृढं यतः ।
न विनाऽऽलम्बनेनापि विज्ञानमुपजायते ॥२१२॥
आलम्बनं पदेभ्योऽन्यदनेकत्वविरोधतः ।
नैकाकारं[2] तु विज्ञानं पदेष्वाकल्पितेषु नः[3] ॥२१३॥
वाक्यार्थज्ञानतो भिन्नं यद्वा शब्दत्वबुद्धितः ।
नन्वस्त्येव ततो भिन्नं वाक्यमेकमितीदृशम् ॥२१४॥
यद्यप्यस्ति ततो भिन्नं नेदृशोऽसौ[4] प्रतीयते ।
पदानामेककार्यत्वादेकज्ञानस्य[5] हेतुना ॥२१५॥
तथा हि बहवो वृक्षा वनैकज्ञानहेतवः ।
छाया हि बहुलैतेषां कार्यमेकं प्रतीयते ॥२१६॥
न चैकं वाक्यमित्येतदर्थज्ञानात् पुरो भवेत् ।
ऐकार्थ्याद्धेव वाक्यत्वं नहि शब्दस्वरूपतः ॥२१७॥
एकार्थत्वादतो ज्ञानं वाक्यं मतमितीष्यताम् ।
एवमेकत्वविज्ञाने सम्भवत्यपरो न नः ॥२१८॥
युक्तः कल्पयितुं हेतुरित्यसौ न प्रसिद्ध्यति ।
अनुमाविषयो[6] नासौ न चाप्यागमगोचरः ॥२१९॥
उपमानं[7] न तस्यास्ति तेनाभाववशं गतः ।
पदेभ्यो व्यतिरिक्तस्य स्फोटस्यास्तु निराकृतिः ॥२२०॥
पदार्थप्रत्ययो नैव वाक्यार्थज्ञानकारणम् ।

---

१. कोशे 'तत्वेति' इति पाठः ।
२. कोशे 'नैकाकारस्तु' इत्यपपाठः ।
३. कोशे '०तेष्ठनः' इत्यपपाठः ।
४. कोशे 'नेद्दशाऽसौ' इत्यपपाठः ।
५. कोशे 'वेदा०' इत्यपपाठः ।
६. अनुमानविषय इत्यर्थः ।
७. कोशे 'उपमानस्य तस्या०' इत्यपपाठः ।

वाक्यस्यार्थो हि वाक्यार्थो वाक्यादेवावगम्यताम् ॥२२१॥
पदान्येव च वो वाक्यं[1] पदार्थेषु न वाक्यधीः ।
एककार्यत्वमप्येवं पूर्वोक्तमुपपद्यते ॥२२२॥
पदार्थैर्गम्यमानस्य न च स्यात्पदकार्यता ।
पदार्थैर्गम्यमानश्च वाक्यार्थः कथमुच्यते ॥२२३॥
पदार्थैर्गम्यमानोपि पदार्थार्थोऽभिधीयताम् ।
भावप्रधाननिर्देशं[2] पदयोरेव नार्थयोः ॥२२४॥
ततश्च भाष्यकारोऽपि[3] वाक्यार्थं पदमब्रवीत् ।
विशिष्टो ननु वाक्यार्थः पदं सामान्यगोचरम् ॥२२५॥
सामान्येनैव सम्बन्धो नेतरेण पदस्य तु ।
विशिष्टेनैव सम्बन्धः केवलस्याप्रयोगतः ॥२२६॥
व्यवहाराङ्गभावो हि केवलस्य न युज्यते ।
प्रवृत्तौ वा निवृत्तौ वा पदं लोके प्रयुज्यते ॥२२७॥
केवलान्न च सोऽस्तीति सद्वितीयं प्रसज्यते[4] ।
पदस्य सद्वितीयस्य विशिष्टस्वार्थवाचिना ॥२२८॥
ग्राह्यैव सर्वशब्दानां व्यवहारोपपत्तितः ।
प्राधान्ये चैव सर्वेषां सम्बन्धो न परस्परम ॥२२९॥
ततः प्रधानता तस्य परेषां गुणता तथा ।
तत्रैवं सति यत्किञ्चित् पदं युक्तं पदान्तरैः ॥२३०॥
वाक्यं स्यान्नियमाभावादाख्यातं वेतरान्वितम् ।
साध्यस्य वाचकत्वेन तिङन्तस्य प्रधानता ॥२३१॥

---

१. कोशे 'वाक्य' इत्यविभक्त्यन्तोऽपपाठः ।

२. अत्र '०निर्देशः' इति पाठः प्रकल्प्यः, लिङ्गान्यत्वं वा ।

३. मीमांसाभाष्यकारः शबरस्वामी । तथा हि स उक्तवान्—'न च पदार्था एव वाक्यार्थः । सामान्ये हि पदं प्रवर्त्तते, विशेषे वाक्यम् । पूर्वमीमांसा १।१।२४।

४. प्रवृत्तिनिवृत्तिरूपो व्यवहारः केवलात् पदाद् न सम्भवतीति सद्वितीयं पदं प्रयुज्यत इत्यभिप्रायः ।

साध्यसाधनवाचित्वान्नाम्नामेवाङ्गतेष्यते ।
पदानां नहि सम्बन्धो विनाऽऽख्यातेन युज्यते ॥२३२॥
नाम्नामपि ततो नैव बहूनामपि वाक्यता ।
अतो विशिष्टमाख्यातं [1]नामभिर्वाक्यमुच्यते ॥२३३॥
तदर्थश्चैव वाक्यार्थस्तस्य वाक्यं[2] हि वाचकम् ।
चोदनालक्षणश्चैवमिष्टो [3]धर्मः प्रसिद्ध्यति ॥२३४॥
वाक्यत्वे वाचके[4] धर्मः [5]प्रसज्येतार्थलक्षणः[6] ।
पदार्थप्रत्ययादेव वाक्यार्थः सम्प्रतीयते ॥२३५॥
तद्भवे तस्य [7]सद्भावात् तदभावेऽप्यभावतः ।
पदार्थानां च सामर्थ्ये वाक्यार्थप्रत्ययं प्रति ॥२३६॥
अन्वयव्यतिरेकाभ्यां स्फुटमेवं विनिश्चिते ।
अर्थापत्तिर्ध्रुवं क्षीणा[8] पदानां शक्तिकल्पने ॥२३७॥
स्वार्थोपक्षीणशक्तीनां शक्तिं को न्वत्र कल्पयेत् ।
अभिधायाभिधायार्थमात्मीयमविशेषतः ।
निवर्तते पदं सर्वं सम्बन्धस्तस्य तावता[9] ॥२३८॥
सामान्येनैव सम्बन्धश्शक्यो लक्षयितुं ध्वनेः ।
विशेषाणामनन्तत्वान्नास्य तैरवधार्यते ॥२३९॥
विशिष्टेनापि सम्बन्धे सुबोधो व्यापकस्तथा ।
एवं विशिष्टताबुद्धेरभावान्न प्रयुज्यते ॥२४०॥
अतस्सामान्यमेवार्थः पदस्येत्यवधार्यताम् ।

---

१. कोशे 'नाभि०' इत्यपपाठः । २. कोशे 'वाक्या' इत्यपपाठः ।
३. कोशे 'धर्मात्' इत्यपपाठः । ४. कोशे 'वाचको' इत्यपपाठः ।
५. कोशे 'धर्मं' इत्यविभक्त्यन्तोऽपपाठः ।
६. कोशे '०र्थवत्क्षणाः' इत्यपपाठः । ७. कोशे 'सद्भाव तदभावे' इत्यपपाठः ।
८. पदेभ्योऽन्यद् वाक्यम् अर्थापत्त्या सिद्ध्यतीति पूर्वपक्षमुद्भाव्य तस्य निराकरणं शबरस्वामिना १।१।२५ सूत्रभाष्येऽभिहितम् ।
९. अत्र षट्चरणानन्तरं संख्या निर्दिश्यते ।

तावन्मात्रप्रतीत्या च व्यवहारो न युज्यते ॥२४१॥
अतो विशिष्टबोधाय पदान्तरमपेक्ष्यते[1] ।
अपेक्षितार्थसिद्धयर्थं पदमन्यत्प्रयुज्यते ॥२४२॥
विशेषितः[2] पदार्थोऽन्यैरेको वाक्यार्थ इष्यते ।
आख्यातस्य प्रधानार्थो नामवाच्यैर्विशेषितः ॥२४३॥
अंशत्रयेण[3] सम्पूर्णो वाक्यार्थो[4]भावनान्वितः ।
आख्यातार्थं विशिषन्ति[5] नामार्था हि स्वभावतः ॥२४४॥
विशेषणविशेष्यत्वमेषां[6] योग्यतया स्थितम् ।
द्रव्यं तु साधनत्वेन विशिनष्टि कियां[7] सदा ॥२४५॥
तद्द्वारेण[8] गुणाश्चान्ये तथोपायात्मनापरे ।
एवमाख्यातवाच्योऽयमितरार्थैर्विशेषितः ॥२४६॥
वाक्यार्थ इति [9]वाक्यज्ञैर्युक्त्या सम्यङ् निरूपितः ।
वाक्यार्थप्रत्ययो नैव मिथ्या बाधकवर्जनात् ॥२४७॥
मिथ्यात्वकल्पनायाञ्च लोको मूकः प्रसज्यते ।
मिथ्यात्वं यदि तस्येष्टं मिथ्येति कथमुच्यते ॥२४८॥
मिथ्यात्वज्ञापनार्थं चेत्[10] तेनैव व्यभिचारिता ।
मिथ्यात्वं येन वाक्येन तस्येह प्रतिपाद्यते ॥२४९॥
तदर्थज्ञानमिथ्यात्वे न वाक्यार्थमतिर्मृषा[11] ।
पदात्मकस्य वाक्यस्य निमित्तत्वे व्यवस्थिते ॥२५०॥

---

१. कोशे 'पदान्तरमवेक्ष्यते' इत्यपपाठः । २. कोशे 'विशेषतः' इत्यपपाठः ।
३. किं भावयेत् केन भावयेत् कथं भावयेद् इत्येवं रूपांशत्रयेणेत्यर्थः ।
४. कोशे 'भावनान्मतः' इत्यपपाठः ।
५. कोशे 'विशिक्षन्ति' इत्यपपाठः । ६. एषाम् नाम्नामाख्यातानां च ।
७. कोशे 'क्रिया' इत्यपपाठः । ८. कोशे 'तद्वारेण' इत्यपपाठः ।
९. मीमांसकैरित्यर्थः । अत्र पू० मी० १।१।२४,२५,२६ सूत्राणां शाबरभाष्यमनुसन्धेयम् । १०. कोशे 'चेतेनैव' इत्यपपाठः ।
११. कोशे 'वृषा' इत्यपपाठः ।

पदार्थज्ञानविज्ञानौ[1] वाक्यार्थस्याप्रसिद्धितः ।
चोदनालक्षणत्वं [च] तन्निमित्तत्वमेव नः[2] ॥२५१॥
तत्प्रामाण्यं पुनस्तत्र सति नैव विरुद्धयते ।
पदात्मकस्य[3] वाक्यस्य यद्वार्थस्य प्रयोजनम् ॥२५२॥
एवं वाक्यार्थनिर्देशो मुख्य एवोपपद्यते ।
प्रयोजनं पदानाञ्च प्रमेयमिति गम्यते ॥२५३॥
पदार्थानां प्रमाणत्वं यतस्तैस्तत् प्रमीयते ।
वाक्यार्थज्ञानसम्बन्धात्[4] वाक्यार्थं गमयन्ति ते ॥२५४॥
नहि सम्बन्धविज्ञानं सर्वत्राङ्गत्वमश्नुते ।
यत्रैव तत्परिज्ञानादृते नार्थोऽवगम्यते[5] ॥२५५॥
तत्रैव तत्परिज्ञानं धूमादेः पावकादिना ।
रूपादिना न सम्बन्धश्चक्षुरादेः प्रतीयते ॥२५६॥
तथापि [6]तत्कृतं ज्ञानं प्रमाणत्वेन सम्मतम् ।
पदार्थानाञ्च हेतुत्वं वाक्यञ्चावाचकं यथा ॥२५७॥
तद्भूतानामिति[7] त्वत्र [8]वाक्यज्ञैस्सुनिरूपितम् ।
भावप्रधाननिर्देशः पदयोरिति यत्पुनः ॥२५८॥
अर्थद्वारेण तत्प्रोक्तमन्यथा [9]न्यायबाधनम् ।
ततः कर्णाभरणं ........................... ॥२५९॥

---

१. अत्र '०विज्ञाने' इति रूपं साधीयः स्यात् ।

२. मीमांसकानामित्यर्थः ।

३. कोशे 'पदात्कस्य' इत्यपपाठः ।

४. कोशे 'सम्बन्धा' इत्यपपाठः ।

५. कोशे 'नार्थोपगम्यते' इत्यपपाठः ।

६. तत्कृतं चक्षुरादिभिः कृतं रूपादीनां ज्ञानमित्यर्थः ।

७. कोशे 'तद्भूतानमिति' इत्यपपाठः । तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' (पू० मी० १।१।२५) इति सूत्रभाष्य इति भावः ।

८. मीमांसकैः शबरस्वाम्यादिभिः ।

९. वाक्याधिकरण (पू० मी० १।१।२५) प्रोक्तन्यायबाधनमित्यर्थः ।

प्रच्युतिः प्रच्युतस्येह भावना भाव उच्यते ।
स दीर्घकालसंयोगात् पौर्वापर्यं समश्नुते ॥२६०॥
यतः पूर्वापरे भागाः तस्य सन्त्येव भूरयः ।
ततः पूर्वापरीभूतमित्येवं नोपपद्यते ॥२६१॥
प्रत्ययोऽभूततद्भावे स्मर्यते न विपर्यये ।
तत्र पूर्वापरोपेतमिति युक्तं विशेषणम् ॥२६२॥
सद्भावो वस्तुता चास्य सद्भावोऽन्यत्र वक्ष्यते ।
सोऽपि नित्योऽथवाऽनित्यः सर्वदा भाग एव तु ॥२६३॥
नित्य एवेष्यते कैश्चिद् व्यज्यते न तु जन्यते ।
अभिव्यक्तात् फल[ाद]स्मात् सर्वदा न प्रसज्यते ॥२६४॥
अनादित्वादमध्य[त्वा]दनन्तत्वादभागता ।
अनादित्वान्नयः सिद्धा भावा नित्यत्वसंश्रये ॥२६५॥
अनित्यस्त्वपरैरिष्टः न व्यङ्ग्यो जन्य एव सः ।
तस्यापि क्षणिकत्वेन पौर्वापर्यं न विद्यते ॥२६६॥
पौर्वापर्यविभागेन कारकाणां स्वभावतः ।
अतद्रूपोऽपि भावो यस्तद्रूप इव लक्ष्यते ॥२६७॥

---

१. पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीति, उपक्रमप्रभृत्यपवर्गपर्यन्तम् । निरु० १।१॥

२. 'पूर्वापरीभूतम्' इत्यत्र विधीयमानश्च्विः प्रत्ययो वैयाकरणैरभूततद्भावे स्मर्यते । तथा चोक्तं वार्तिककारेण—'च्विविधावभूततद्भावग्रहणम्' (महा० ५।४।५०) इति ।

३. कोशे 'सद्भावे' इत्यपपाठः । ४. षड्भावविकाराः (निरु० १।२) इत्यादिना ।

५. सोऽपि भावः क्रियेति यावत् ।

६. कोशे 'नित्य' इत्यविभक्त्यन्तोऽपपाठः ।

७. तथा चाह हरिः—जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् । असाध्या व्यक्तिरूपेण सा साध्येवोपकल्पते ॥ (वाक्य० तृतीयकाण्डक्रियासमुद्देशे)

८. कोशे 'व्यजते' इत्यपपाठः ।

९. फलाभिव्यक्त्या भावः=क्रिया व्यज्यते, तदभावेऽभिव्यञ्जनं न प्रसज्यत इत्यर्थः ।

१०. वैयाकरणैर्नैयायिकैर्मीमांसकैश्च ।

११. अपौर्वापर्यरूपोऽपि भावः पूर्वापर इव लक्ष्यत इत्यर्थः ।

एवं सत्युपपद्येत प्रत्ययः [1]स्वार्थभावतः ।
अतः पूर्वापरीभूतमित्येतेनास्य साध्यता ॥२६८॥
लक्षणस्य विशुद्ध्यर्थमाख्यातस्य निवक्षिता ।
सत्त्वभूतः[2] पुनर्भावो मूर्त्तो व्यज्येत नामभिः[3] २६९॥
आचष्टे सिद्धमेवैनमतो नातिप्रसज्यते[4] ।
मूर्त्तशब्दो घनं ब्रूते भूतशब्दस्तथोपमाम् ॥२७०॥
वक्ष्यत्यप्युपमार्थत्वं मेषो भूत[5] इतीह तु[6] ।
पितृभूतः[7] कुबेरस्य[8] नीलकण्ठ इतीह च ॥२७१॥
पितेव नीलकण्ठोऽयं कुबेरस्येति गम्यते ।
सत्त्ववत् तं घनं सिद्धमाचष्टे सत्त्वनामभिः ॥२७२॥
कृदन्तानि पदान्याह सत्त्वनामानि कानिचित् ।
धातोरित्यधिकृत्योक्ताः[9] प्रत्यया भावगोचराः[10] २७३॥
पदेषु येषु दृश्यन्ते सत्त्वनामानि तानि वै ।
सत्त्वनाम्नां हि सर्वेषां भावार्थत्वाद्विशेषतः ॥२७४॥
आख्यातत्वनिवृत्त्यर्थं भात्र [11]एवं निरूपितः ।

---

१. अभूततद्भावरूपार्थतः ।        २. कोशे 'सत्त्वभूतं पुनर्भावं मूर्त्तं' इति पाठः ।
३. मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्यज्या पक्तिरिति । निरु० १।१॥
४. पूर्वापरीभूतमित्येवं रूपम् आख्यातलक्षणं कृत्प्रत्ययान्तेषु भाववाचिषु इत्यर्थः ।
५. ऋ० ८।२.४० ॥ निरु० ३।१६॥
६. कोशे 'इतीहते' इत्यपपाठः ।        ७. कोशे 'पितृभूतं' इति पाठ ।
८. कुबेरोऽयं ग्रन्थकर्तुर्नीलकण्ठस्य यवीयान् भ्राता । अत एव स नीलकण्ठः कुबेरस्य पितेवेहोक्तः । एतेनेदं ज्ञायते यत् नीलकण्ठस्य पिता यदा स्वर्गमगमत् तदा कुबेरो बालक एवासीत् । तेनैव च कुबेरस्य परिपालनं व्याधायि । अग्रे ग्रन्थकारः स्वयं वक्ष्यति – 'रुद्राद्या भ्रातरो यस्य' ।
९. कोशे 'धातोरित्यपि कृत्योक्ताः' इत्यपपाठः । पाणिनिना 'धातोः'(अष्टा० ३।१ ९१) इत्यधिकृत्य भावगोचराः कृत्प्रत्ययास्तृतीयाध्यायस्य तृतीये पादे (१८—१०८) उक्ताः ।
१०. कोशे 'गोचरः' इत्यपपाठः ।
११. कोशे एव' इति पाठः ।

कृद्भिश्चाभिहितो[1] भावो द्रव्यवद् भवतीत्यपि ॥२७५॥
शब्दशास्त्रविद.[2] प्राहुः सिद्धो द्रव्यवदेव सः ।
आख्यातात्साध्यसिद्धिः स्यात् सिद्धबुद्धिः कृदन्ततः ॥२७६॥
सत्त्वनाम्नामतश्चैवं नाख्यातत्वं प्रसज्यते ।
सर्वथा साध्यमानस्तु भावो यस्मात्प्रतीयते ॥२७७॥
तदेवाख्यातमिष्टं[3] नो न[4] तु सिद्धे यतो मतिः[5] ।
आख्यातेनेति[6] निर्देशस्सत्त्वनामभिरित्यपि ॥२७८॥
करणत्वमभिप्रेत्य शब्दस्येत्येव गम्यते ।
तत्रैवं सति वक्ताऽन्यो लोको बोधयिता ध्रुवम् ॥२७९॥
आख्यातात्तादृशं भावं बुद्ध्वा लोको विवक्षति[7] ।
अतश्च लोकसिद्धोऽयमीदृगाख्यातगोचरः ॥२८०॥
कृदन्तगोचरश्चापि सत्त्वभूतोऽवधार्यताम् ।
प्रत्युदाहरणे त्वेवं लक्षणस्य विशोधनम् ॥२८१॥
अतिव्याप्तेरभावे स्याद्[8] भावभेदनिरूपणम् ।
आख्यातगोचरो भावस्साध्यो नित्यं प्रतीयते ॥२८२॥
सत्त्वानामभिधेयोऽपि सिद्धस्तस्माद् विलक्षणः ।
भावे प्रतीतिभेदोऽयं शब्दमाहात्म्यहेतुतः ॥२८३॥
सा द्विधा शब्दशक्तिश्च कार्यभेदानुवर्तनी ।
शब्दार्थयोः स्वभावोऽयं सुहृद्भूतेन[9] वर्णितः ॥२८४॥

---

१. कोशे '०भिहिते' इत्यपपाठः ।

२. कृदभिहितो भावो द्रव्यवद् भवति । महाभाष्य २।२।१९; ३।१।६७॥ बृहद्देवताकारेणाप्युक्तम्—

> क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात् ।
> संख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्यः ॥१।४५॥

३. कोशे 'तदैवा०' इत्यपपाठः ।
४. कोशे 'स' इत्यपपाठः ।
५. कोशे 'मति' इति विसर्गरहितः पाठः ।
६. कोशे 'आख्येतेनेति' इत्यपपाठः ।
७. कोशे 'विवक्षितः' इत्यपपाठः ।
८. कोशे 'स्या' इत्यपपाठः ।
९. कोशे 'सुभृज्जुतेन' इत्यपपाठः । सुहृद्भूतेन यास्केनेत्यर्थः ।

स्वभावस्स च वस्तूनां विचित्र इति वेदितम् ।
वस्तुस्वभावभेदज्ञस्सम्यग् ज्ञानमिदन्त्विति ॥२८५॥
मिथ्याज्ञानमिदञ्चेति शक्तो बोद्धुमितीरितम् ।
असाध्यमानभावत्वात् कृतो[1] नाव्ययलक्षणाः ॥२८६॥
आख्यातत्वं प्रपद्यन्ते सिद्धार्था इव ते तथा ।
स्वातन्त्र्येणार्थवत्त्वाच्च नोपसर्गादयः स्फुटम् ॥२८७॥
नामजातेषु तेनैषां ब्रुवतेऽन्तर्गतिं बुधाः ।
द्वैविध्यं त्वधुना नाम्नामाख्यातानां च वर्ण्यते ॥२८८॥
वस्तुद्वैविध्यसिद्ध्यर्थं व्यवहारप्रसिद्धये ।
सामान्यञ्च विशेषश्च वस्तुद्वयमिहेष्यताम् ॥२८९॥
लौकिको वैदिकश्चैव व्यवहारस्तदाश्रयः ।
सामान्यमेव केषाञ्चिद् विशेषो[2] नैव कश्चन ॥२९०॥
विशेषस्त्वेव चान्येषां सामान्यं भ्रान्तिकल्पनम्[3] ।
निरस्य शाबलेयादीन्विशेषान्विविधान्बहून् ॥२९१॥
सामान्यान्यपि चैतेषां गोत्वादीनि बहून्यथ ।
महासामान्यमेवेष्टं कैश्चित् तद्[4] ब्रह्म शाश्वतम्[5] ॥२९२॥
परमार्थं पदं नान्यदन्यद् भ्रान्तिप्रकल्पितम्[6] ।
इष्टं यद्येतदेवं स्याद्विशिष्टाभावतस्तदा ॥२९३॥

---

१. तुमुन्नादयः ।  २. विशेषो व्यक्तिर्द्रव्यमिति ।
३. यथा वृक्षसमूहे वनकल्पनम् ।  ४. कोशे 'तं' इत्यपपाठः ।

५. अत्राह स्कन्दस्वामी—अन्येषां दर्शनम्—भावः सत्ता महासामान्यम् तथा च प्रयोगः—'न द्रव्यं न कर्म न गुणो वा भावः' इति । अत्र द्रव्यादिव्यतिरिक्ता सत्तेत्यर्थः । सा च सत्ता कैश्चित् परमात्मत्वेनाध्यवसिता । स एष महानात्मा सत्तालक्षणः तत्परं ब्रह्म इति ब्रह्मवादिभिः । भाग १, पृष्ठ २७ ॥ अथैष महानात्मा सत्त्वलक्षणः । तत्परं तद् ब्रह्म । निरु १४।३॥

६. ब्रह्मवादिनां मते ब्रह्मणः परमार्थत्वप्रतिपादनं तस्य प्राधान्यद्योतनपरमेव, न जीव-प्रकृत्योर्निरासार्थम् । नवीनवेदान्तिभिरिदं तत्त्वमबुभुत्समानैः परब्रह्मण एवैकस्य सत्तां स्वीकृत्य जगतो भ्रान्तिमूलकत्वं व्याख्यातम् ।

विशिष्टार्थावबोधार्थं व्याख्यानं नोपपद्यते ।
वाक्यार्थश्च पदार्थश्च विशिष्टा ह्यत्र[1] भूतयः ॥२९४॥
व्याख्यायन्ते विभागेन न सामान्यं पुरोदितम् ।
व्यावृत्तेषु विशेषेषु केवलेषु परस्परम् ॥२९५॥
वृत्तिसामान्यतो व्याख्या तथा नैवोपपद्यते ।
द्विविधस्यापि, स भावष्षड् भावेत्यत्र वक्ष्यते[2] ॥२९६॥
वस्तुनि द्विविधे चैवमद[3] इत्यादि वर्ण्यते ।
सत्त्वानामद इत्येतद्विप्रकृष्टे[4][5] प्रयुज्यते ॥२९७॥
तच्चोदाहरणत्वेन[5] तादृशामुपलक्षणम् ।
सन्निकृष्टार्थवाचीनि विद्यन्ते[6] तैर्विरोधतः ॥२९८॥
सादृश्यात् साहचर्याद्वा विरोधाद्वा विलक्षणात् ।
सर्वनाम परोक्षार्थं सर्वेषां सर्वमेव तु ॥२९९॥
उपदेश परोक्षाणां सत्त्वानामविशेषतः ।
परोक्षसिद्धसामान्यं तस्य वाच्यमितीरितम् ।।३००॥
सन्निकृष्टार्थसामान्यमर्थस्स्यात्तादृशामपि ।
निष्पन्नार्थविशेषाणां वाचकास्स्युर्गवादयः[7] ॥३०१॥
व्यावृत्ता एव गम्यन्ते तेभ्यो[8] गोत्वादयोऽन्यतः ।
सामान्यमपि गोत्वादि विशेषोऽन्यमवेक्ष्य हि ॥३०२॥
विशेषश्चापि सामान्यमात्मव्यक्तिमपेक्ष्य[9] नः ।
सामान्येष्वपि सामान्यमपरं यदि विद्यते ॥३०३॥
अस्त्वेतन्न तु नो हानिस्तदेवेति तु नेष्यते ।

---

१. कोशे 'ह्यत्र' इत्यपपाठः ।
२. षड भावविकारा भवन्तीति वार्ष्यायणिः । निरु० १।२॥
३. अद इति सत्त्वानामुपदेशः । निरु० १।१॥
४. कोशे 'विप्रकृष्टेः' इति पाठः ।
५. त्यद्-तद्-इदमादीनाम् ।
६. कोशे 'वक्ष्यन्ते' इत्यपपाठः ।
७. गौरश्वः पुरुषो हस्तीति । निरु० १।१।
८. कोशे 'तेभ्योऽङ्गत्वा०' इत्यपाठः ।
९. कोशे 'व्यक्तिमपेक्ष्यतः' इत्यपपाठः ।

भवतीत्येतदाख्यातमस्तीत्याद्युपलक्षणम्[1] ॥३०४॥
भावमात्रस्य तच्चापि क्रियामात्रस्य वाचकम् ।
नन्वत्र धातुनाप्युक्तो भाव एव प्रतीयते ॥३०५॥
सत्यं तद्धातुवाच्यस्तु भावनाया विलक्षणम् ।
भावना प्रत्ययेनोक्ता भवनं[2] धातुनोदितम् ॥३०६॥
सत्तैवेत्यपरे प्राहुः [3]भू सत्तायामिति स्मृतेः ।
भवत्युत्पद्यते कोऽपि कुरुते भावमात्मनः ॥३०७॥
भावश्च[4] भवनं जन्म सत्ता वात्र विवक्षिता ।
आत्मनो भवनं [5]सत्तामथवा कुरुते त्विति ॥३०८॥
भवतीत्यस्य वाच्योऽर्थ इत्यत्रैतद्विवक्षितम् ।
सत्ता विशेष्यताप्येषा जन्मभावेन भावना ॥३०९॥
घटाद्युपपदाभावात् सामान्येनावतिष्ठते ।
सत्ताविशिष्टतैवास्य साध्यांशो जन्म साधनम् ॥३१०॥
व्यापारश्च कुलालादेरितिकर्तव्यता भवेत्[6] ।
ततः सिद्धस्य कर्तृत्वम् असिद्धस्य तु साध्यता[7] ॥३११॥
मृत्पिण्डादिस्तु सिद्धोऽत्र घटादेस्स्यादसिद्धता ।
कुर्वंद्व्यापारमात्मीयं [8]सिद्धोऽसिद्धस्य कारकः ॥३१२
मृदाद्यवयवाः[9] सिद्धाः स्वव्यापारव्यवस्थिताः ।
बाहुव्यापारसंयुक्ता मृत्पिण्डादेस्तु कारकाः ॥३१३॥
अर्थसिद्धमिदं सर्वं भवतीत्यत्र वल्गितम् ।
भावमात्रस्तु[10] [10]शब्दोक्तस्तद्भेदोऽप्यधुनोच्यते ॥३१४॥

---

१. भवतीति भावस्यास्ते शेते व्रजति तिष्ठतीति । निरु० १।१॥

२. कोशे 'भावनं' इत्यपपाठ ।

३. धातुपाठ १।१॥

४. कोशे 'तापश्च' इत्यपपाठः ।

५. कोशे 'सात्ता०' इत्यपपाठः ।

६. तथा च 'घटो भवति' इति वाक्येन 'घटाभिन्नकर्तृका जन्माभिन्नकरणिका कुलालव्यापारेतिकर्तव्यताका भावना' इति बोधः ।

७. कोशे 'सध्यता' इत्यपपाठः ।

८. कोशे 'सिद्धासिद्धस्य' इत्यपपाठः ।

९. कोशे 'यदाद्यवयवा सिद्धाः' इत्यपपाठः ।

१०. क्लीबत्वमत्र युज्यते ?

आख्यातादास्त इत्यादेर्भिन्नो[1] भावः प्रतीयते ।
आसनादिविशिष्टत्वाद् व्यावृत्तो हि परस्परम् ॥३१५॥
आसनं शयनं चैव व्रजनं स्थानमेव च ।
भिद्यन्ते[2] विषयास्तस्य तद्वद्भावो हि भिद्यते ॥३१६॥
करणत्वं यदा चैषां तदाप्यन्यत्वमीयते ।
शब्दभेदात्तथा भेदो युक्तोऽपर्यायतास्थितौ ॥३१७॥
कुरुते कश्चिदात्मानमासनेन विशेषितम् ।
शयनेनापरश्चापि व्रजनेनापरस्तथा ॥३१८॥
स्थानेनैव [3]तथा त्वन्यो विशिष्ट इति गम्यते ।
एवं विशेष्यमाणत्वाद्[4] भावोऽयं भिद्यते स्फुटम् ॥३१९॥
आसनादिषु साध्यांशः पीठाद्येवात्र साधनम् ।
इतिकर्तव्यतांशोऽपि [5]पीठादेरेव संस्कृतिः ॥३२०॥
आसने शयने स्थाने धात्वर्थे करणेन[6] तु ।
स्वास्थ्यमेवात्मनः [7]साध्यं ग्रामादिप्रापणं त्विह ॥३२१॥
पदाद्युत्क्षेपणं च.ङ्क्रमश्वाद्यारोह एव च ।
एवं सामान्यरूपेण विशेषात्मतया तथा ॥३२२॥
नामाख्याताभिधेयस्य द्विविधत्वं प्रसाधितम् ।
अद [8]इत्यादिकं ग्रन्थमन्यथान्ये[9] प्रचक्षते ॥३२३॥
नामोदाहरणं पूर्वं द्विधादो गौरितीरितम् ।
आख्यातोदाहृतिश्चैव भवतीत्यादिनोदिता[10] ॥३२४॥

---

१. कोशे 'इत्यादे भीतो०' इत्यपपाठः ।
२. कोशे 'भिद्यते विषयान्तस्य' इत्यपपाठः ।
३. कोशे 'तथात्वन्य··· इति गम्यते' इत्येवं त्रुटितः पाठ उपलभ्यते ।
४. कोशे '०णत्वा' इत्यपपाठः ।
५. कोशे 'पाठादेरेव संस्कृति' इत्येवमपपाठः ।
६. कोशे 'कारणेन' इत्यपपाठः ।
७. कोशे 'सध्यं' इत्यपपाठः ।
८. कोशे 'इत्यादितं' इत्यपपाठः ।
९. तु०—स्कन्दव्याख्या (प्रथमभाग पृ० १२) ।
१०. कोशे '०त्यादितोदिता' इत्यपपाठः ।

एवं व्याख्यायमाने तद् व्रजतीत्याद्यनर्थकम् ।
इहैवोदाहृतैरेतैर्यादृशो भाव उच्यते ॥३२५॥
तादृशस्यावबोधार्थमिति वाऽल्पं प्रयोजनम् ।
ततः कर्णाभरणं[1] ........................ ॥३२६॥
शब्दानित्यत्वमाश्रित्य शास्त्रमाक्षिप्यतेऽधुना[2] ।
अनित्यत्वे हि शब्दानां वेदस्यैवाप्रमाणता ॥३२७॥
तदप्रामाण्यसिद्धेश्च शास्त्रमेतदनर्थकम् ।
अनर्थकस्य शास्त्रस्य व्याख्यानं चाप्यनर्थकम् ॥३२८॥
शब्दाऽनित्यत्वपक्षे हि बलाद् वेदस्य कार्यता ।
कार्यत्वे चाप्रमाणत्वमदृष्टार्थत्वहेतुतः ॥३२९॥
नातीन्द्रियार्थवित्[3] कश्चित् सत्यवाद्येव लभ्यते ।
उन्मत्तो वापि कर्त्ता स्यात् कदाचित् स्यात्प्रलम्भकः ॥३३०॥
इन्द्रिये नित्यमित्येवं भवेद् योगविभागतः[4] ।
समासो नित्यशब्देन तत्रैवास्तित्वमीप्सितम्[5] ॥३३१॥
दृश्यते गृहनित्योऽयमित्यादावेवमादृतः[6] ।
उच्यतेऽर्थस्त्वनेनेति वचनं शब्द उच्यते ॥३३२॥

---

१. इतोऽग्रे कोशे पाठो नष्टः ।

२. इन्द्रियनित्यं वचनमौदुम्बरायणः । निरु० १।१॥

३. अस्याय भावः—वेदे 'स्वर्गकामो यजेत' इत्यादिना अतीन्द्रियार्थाः स्वर्गादय उच्यन्ते । तन्निर्देशो नातीन्द्रियार्थवित्त्वे सम्भवति । लोके च नातीन्द्रियार्थवित् कश्चित् पुरुषो दृश्यते, तस्मात् तद् वचनमप्रमाणं स्यात् । न च लौकिकः कश्चित् सर्वथा सत्यवादी संभवति 'अनृतसंहिता वै मनुष्याः' ( ऐ० ब्रा० १।६ ) इत्युक्तत्वात् । तथा सति तत्प्रणीतं वेदवचनं प्रमाणं नोपपद्यते । वेदे 'गावो वै सत्रमासत', (ऐ० ब्रा० ४।३।३) 'वनस्पतयः सत्रमासत' (उद्धृतं शाबरभाष्ये १।१।३२) इत्येवं श्रूयते । कथं हि नाम पशवो वनस्पतयश्च सत्रं कुर्युः । तस्मादेतादृशि वचनानि प्रमत्तगीतानीति गम्यते । यद्वा कश्चिद् वञ्चकः प्रलम्भनार्थमतथ्यमपि वदेत् तादृगेव वेदे स्वर्गादिवचनं स्यात् ।

४. 'सप्तमी शौण्डैः' (अष्टा० २।१।२९) इति योगे 'सप्तमी' इति विभागतः ।

५. कोशे '०मीप्सितः' इत्यपपाठः । ६. कोशे 'आदृता' इत्यपपाठः ।

यद्वा भवेद् [1]बहुव्रीहिर्नित्यं [2]कारणमुच्यते ।
स्याद्वा [3]षष्ठीसमासोऽयमायत्तं नित्यमुच्यते ॥३३३॥
इन्द्रिये वचनं नित्यं [4]नान्यत्रानुपलब्धितः ।
तद्धेतुकं बहुव्रीहिरन्वयव्यतिरेकतः[5] ॥३३४॥
आयत्तमिति चानेन तज्जन्यत्वं विवक्षितम् ।
पक्षत्रयेऽपि[6] कार्यत्वं सर्वथेह विवक्षितम् ॥३३५॥
इन्द्रिये नित्यतां वापि तद्धेतुत्वमथापि वा ।
जन्यत्वमथवाप्याह शब्दस्यौदुम्बरायणः ॥३३६॥
अविशेषेण चाप्युक्तं सामार्थ्याद्वागिहेन्द्रियम् ।
वचनस्य हि सम्बन्धो वाचा स्पष्टं प्रतीयते ॥३३७॥
श्रोत्रेण श्रूयमाणत्वात् तथा तेनापि गम्यते ।
अतश्चेन्द्रियशब्देन वागुक्ता श्रोत्रमेव वा ॥३३८॥
ग्रहणं तु सदा वाचस्तत्कार्यं लक्ष्यते तथा ।
व्यापारश्चैव तत्कार्यं तेन तस्य हि सङ्गतिः ॥३३९॥
व्यापारे वाचिके नित्यं वचनं ह्युपलभ्यते ।
ततः[7] प्रागूर्ध्वसम्भावे प्रमाणं नोपविद्यते ॥३४०॥
वाचिकेन प्रयत्नेन शब्दो निष्पाद्यते ततः ।
प्रयत्नानन्तरीयत्वात् कार्यः[8] शब्दो घटादिवत् ॥३४१॥

---

१. इन्द्रिये नित्यं नियतत्वमस्य । यद्वा इन्द्रियं नित्यं कारणमस्य । उभयथापि शब्दस्येन्द्रियाधीनत्वाद् अनित्यत्वं ज्ञेयम् ।

२. कोशे 'नित्यकारण०' इति पाठः ।  ३. इद्रियस्य नित्यम्=आयत्तम् जन्यत्वम् ।

४. यतो हि कर्णेन्द्रियतोऽन्यत्र वचनं नोपलभ्यतेऽतस्तदिन्द्रियनित्यमुच्यते ।

५. सति कर्णेन्द्रिय एव शब्द उपलभ्यते, तदभावे च नोपलभ्यते इत्यन्वयव्यतिरेकौ ज्ञेयौ । अन्वयव्यतिरेकयोर्दर्शनादत्र बहुव्रीहिरेव युक्त इति भावः ।

६. उपसंहरति पूर्वोक्तं पक्षत्रयम् ।

७. वाचोच्चारणात् प्रागपि शब्द आसीद्, उच्चारणक्रियाया उपरतावपि शब्दो विद्यत इति न केनचित् प्रमाणेन सिध्यति । एवं श्रोत्रविषयेऽपि ज्ञेयम् ।

८. कोशे विसर्गरहितः पाठः ।

कृतकस्य हि नित्यत्वं कस्यचिन्नोपलभ्यते ।
यद्वैन्द्रियकतैवेयम्[१] ईरितेन्द्रियनित्यता ॥३४२॥
अक्षपादस्तदावोचत्[२] तथा शब्दस्य नाशिताम्[३] ।
तस्यैन्द्रियकता[४] का स्यादिन्द्रियग्राह्यतैव हि ॥३४३॥
नहि तज्जन्यतोक्ताऽसौ प्रयत्नानन्तरत्वतः ।
यत्किञ्चिदिन्द्रियग्राह्यमनित्यं तद्धि दृश्यते ॥३४४॥
शब्दश्चेन्द्रियनित्यत्वाद् अनित्यः स्याद्घटादिवत्[५] ।
तत्रैवं[६] सति शब्दानां चतुष्ट्वं नोपपद्यते ॥३४५॥
चतुष्ट्वानुपपत्त्या च शब्दैकत्वं निषिध्यते ।
तावन्मात्रं निषेधो हि प्रवृत्ते नोपयुज्यते ॥३४६॥
चतुष्ट्वानुपपत्तेश्च नैव हेतुरनित्यता ।
यौगपद्यमनित्यत्वे नास्तीत्यथ भविष्यति ॥३४७॥
युगपद्ग्रहणाभावान्नित्यत्वेऽपि न युज्यते ।
सत्तायां यौगपद्यं चेत् स्मरणेऽप्युपपद्यते ॥३४८॥
अनित्यत्वेऽपि शब्दानामिति पक्षद्वये समः ।
यथा[७] तिरोहितानर्थान् स्मरेदाहितसंस्कृतिः ॥३४९॥
नष्टानपि तथैवार्थान् स्मृत्वैव गणयिष्यति ।
एवं [८]संकलनज्ञानादसंज्ञातेषु वस्तुषु ॥३५०॥
इष्टं समुच्चितं सर्वैरिति सङ्ख्योपपद्यते ।
चतुष्ट्वाक्षेपभङ्ग्यातः शब्दैकत्वं निवार्यते ॥३५१॥

---

१. कोशे 'यद्वेन्द्रियकृतै०' इत्यपपाठः ।

२. आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च (न्याय० २।२।१३) इति सूत्रेणेत्यभिप्रायः ।

३. कोशे 'नाशितात्' इत्यपपाठः ।

४. कोशे 'तस्यैन्द्रियकृता' इत्यपपाठः ।

५. कोशे 'अनित्वाद् घटा०' इत्यपपाठः ।

६. तत्र चतुष्टृवं नोपपद्यते । निरु० १।२॥

७. कोशे 'यस्थो' इत्यपपाठः ।

८. कोशे 'सकलाज्ञानात्तमज्ञातेषु' इत्यपपाठः ।

किमर्थस्तन्निषेधश्चेन्निरुद्धाक्षेपसिद्धये ।
वैदिकानामनन्यत्वं लौकिकेभ्यः पुरोदितम्[1] ॥३५२॥
चत्वारीत्यादिवाक्येन तदेतन्नोपपद्यते ।
प्रत्युच्चारणमन्यत्वे शब्दानां कार्यहेतुतः ॥३५३॥
जन्मानन्तरनाशे च नैकत्वमुपपद्यते ।
प्रत्यभिज्ञानमन्यत्वे[2] सादृश्याद् भ्रान्तिकल्पितम्[3]॥३५४॥
दृष्टं हि कल्पितं तच्च केशकाशादिषु[4] स्फुटम् ।
जात्यभेदादभेदश्चेत् साऽपि[5] वन्ध्यासुतोपमा ॥३५५॥
भिन्नेष्वनुगतैका हि जातिर्नैवोपलभ्यते ।
जातीनामपि नित्यत्वं यावन्नैव प्रसाध्यते ॥३५६॥
एकत्वासिद्धितस्तावदाक्षेप[6] उपपद्यते ।
जातिसद्भावयत्ने च गोशब्दत्वादिजातयः ॥३५७॥
बहवः कल्पनीयास्स्युस्तथा तन्नित्यताद्यपि ।
नित्यत्वं चैव वेदस्य कल्प्यं प्रामाण्यमेव च ॥३५८॥
तत्क्लृप्तौ च तदर्थानाम् आदाने क्लेश एव नः ।
अतो [7]वरमनित्यत्वं दिगेषा[8] पूर्वपक्षकृत् ॥३५९॥
युगपद्वचनेनाह[9] सिद्धान्तं युक्तितोऽधुना ।

---

१. 'तद् यान्येतानि चत्वारि पदजातानि' (निरु० १।१) इत्यादिना । द्र०—पूर्वत्र ७२–८५ श्लोकाः ।

२. अन्यत्वे सति यत्प्रत्यभिज्ञानं भवति तद् भ्रान्तिमूलकं भवति । तदुक्तं शबरस्वामिना—'अन्यत्वे सति सादृश्येन व्यामूढाः स इति वक्ष्यन्ति ।' पू० मी० भाष्य १।१।२०॥

३. कोशे 'कल्पितः' इत्यपपाठः ।

४. तदेवेदं कार्षापणं यन्मया मथुरायां गृहीतमिति लोके व्यवह्रियते । अत्रान्यत्वे सत्यपि कार्षापणजातेरेकत्वात् तद् एवेति प्रयुज्यते । तद्वदेव केशकाशादिष्वन्यत्वेऽपि केशत्वकाशत्वजात्यभिप्रायेण स एवेति कल्पना भवति ।

५. सा जातिरपीति भावः । जातेश्चासिद्धत्वमनुपदं वक्ष्यते ।

६. कोशे '०स्तादाक्षेप' इत्यपपाठः ।      ७. कोशे 'परम०' इत्यपपाठः ।

८. कोशे 'दिगेषां' इत्यपपाठः ।

९. युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः । निरु० १।२॥

पूर्वपक्षनिवृत्त्यर्थे वा-शब्दो न विकल्पिते[1] ॥३६०॥
यौगपद्येन शब्दानामुत्पन्नानां सतामयम् ।
इतरेतरकार्यार्थं उपदेशोऽवकल्पते[2] ॥३६१॥
युगपद्यदि चोत्पन्ना निष्पन्नास्त्वेव सर्वदा ।
दिगम्बरादिवन्नित्यास्तदैवार्थस्य[3] वाचकाः ॥३६२॥
ननूत्पन्नाः[4] कथं नित्या दिगादीनामजन्मता ।
नित्यत्वेऽपि दिगादीनां बोधकत्वं निविश्यते ॥३६३॥
उत्पन्नानामिति त्वेतन्नैव[5] जन्मविवक्षया ।
यौगपद्यविशिष्टत्वान्नित्यत्वस्यावबोधकम् ॥३६४॥
जन्मनस्तु[6] विवक्षायां यौगपद्यमनर्थकम् ।
उच्चारणं[7] हि जन्मेष्टं कामवत्तच्च दृश्यते ॥३६५॥
जगदादावथेष्टञ्चेत् प्रमाणं नात्र विद्यते ।
जगदादेरसिद्धत्वात्तत्राप्युच्चारणं जनिः ॥३६६॥
नहि [युगपदुच्येरन्] तव ह्येकेन केनचित् ।
नानेकवक्तृकत्वञ्च भवेदानन्त्यतः स्फुटम् ॥३६७॥
जैमिनीयैश्च नित्यत्वमौत्पत्तिकगिरेरितम्[8] ।
मुख्यं वाऽप्यथवा गौणं नित्यत्वं सर्वथाऽऽश्रितम् ॥३६८॥
युगपत्तेन शब्दानामुत्पन्नत्वं सदा स्थितिः ।
भाष्यते[9] भाष्यकारेण[10] न तु जन्म कथञ्चन ॥३६९॥

---

१. कोशे 'विकल्पितः' इत्यपपाठः ।

२. कोशे '०शोपकल्पते' इत्यपपाठः ।

३. कोशे '०नित्या तदैवा०' इत्यपपाठः ।

४. कोशे 'तन्नूत्पन्नाः' इत्यपपाठः ।

५. कोशे 'त्वेततन्नैव' इत्यपपाठः ।

६. कोशे 'विवक्षयां' इत्यपपाठः ।

७. कोशे 'उद्धारणं' इत्यपपाठः ।

८. 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्याह जैमिनिः (पू० मी० १।१।५) । 'औत्पत्तिक इति नित्यं ब्रूमः' इति शबरस्वामी ।

९. कोशे 'भाव्यते' इत्यपपाठः ।

१०. निरुक्तभाष्यकारेण यास्केनेत्यर्थः । यद्वा मीमांसाभाष्यकारोऽत्राभिप्रेतः स्यात् । तद्वचनं पूर्वटिप्पण्यामुदङ्कितम् ।

अर्थादिहेतरः शब्दः [1]शब्दादर्थस्तथेतरः ।
अन्यस्यान्य इत्येतदभिधानाभिधेययोः ॥३७०॥
उक्तभेदप्रसिद्ध्यर्थं न [2]शब्दाध्यास इष्यते ।
एवं [3]सत्यर्थविज्ञानं सम्यङ्मिथ्याऽन्यथा भवेत् ॥३७१॥
न सर्परज्जुविज्ञानं मिथ्याभावं विमुञ्चति ।
अन्यस्यान्यात्मनाध्यासस्सोऽन्याभावेन[4] सिध्यति ॥३७२॥
अन्यश्चेद्विद्यतेऽर्थस्ते [5]केयमध्यासकल्पना ।
श्रोत्रेण गृह्यते शब्दस्तद्वाच्योऽन्यैः प्रतीयते ॥३७३॥
अध्यासे[6] तन्न युज्येत [न] तेनाध्याससम्भवः ।
शब्दार्थयोः[7] स्फुटो भावो लोके नित्यं प्रतीयते ॥३७४॥
प्रत्ययो बाधको नास्य न दोषः कारणे तथा ।
शब्दस्योच्चारणं चेह स्वरूपप्रतिपत्तये ॥३७५॥
स्वरूपमात्रविज्ञप्तौ व्यवहारो न सिध्यति ।
अर्थे ह्यवगते शब्दाद् व्यवहारः प्रवर्तते ॥३७६॥
अर्थावबोधसिद्ध्यर्थं[8] तेन शब्दः प्रयुज्यते ।
नित्यः प्रत्याययेदर्थम् अनित्यो नैव शक्नुयात् ॥३७७॥
सम्बन्धग्रहणाभावाद् विना तेन न बोधकः ।
वाग्व्यापारकृतश्शब्दस्तदैव यदि नश्यति ॥३७८॥

---

१. कोशे 'शब्दार्थंस्०' इत्यपपाठः ।
२. कोशे 'शब्दाद्ध्यास नेष्यते' इत्यपपाठः । ३. कोशे 'सत्यथ०' इति पाठः ।
४. रज्ज्वां सर्पप्रतीतिः सर्पाभावे, सर्पे वा रज्ज्वाः प्रतीतिः रज्ज्वभावे उत्पद्यते । वस्तुतस्तु यथा ग्रन्थकारः शब्दार्थयोरध्यासनिराकरणमनुपदं वक्ष्यति तथा रज्जुसर्पयोरप्यध्यासकल्पना न सम्भवति । रज्ज्वाः सर्पः सर्पाद् वा रज्जुर्भिन्नः पदार्थः । उभयोस्तात्त्विकत्वे स्वीकार एव प्रकाशाभावे पुरुष इतरस्मिन् इतरमध्यस्यति । अत्रापि अध्यस्तताऽन्ययो रज्जुसर्पयोः । एवमध्यासे प्रकाशाभावोऽपि कारणम् यतो हि नहि कश्चित् चक्षुष्मान् प्रकाशे रज्ज्वां सर्पमध्यस्यति । तेनाध्यासो हि मिथ्याज्ञानमुच्यते नैयायिकैः ।
५. कोशे 'केयमभ्यासकल्पना' इत्यपपाठः । ६. कोशे 'अभ्यासे' इत्यपपाठः ।
७. कोशे 'शब्दर्थयोः' इत्यपपाठः । ८. कोशे 'अर्थाबबोधी सिध्यर्थं' इत्यपपाठः ।

अर्थेन सह सम्बन्धस्तस्य नैवावधार्यते ।
सम्बन्धाभावतस्त्वेव नहि नष्टस्य संहतिः ॥३७९॥
शशशृङ्गसमो नष्टो नह्यसौ दृश्यते यतः ।
विनष्टस्यापि शब्दस्य वाच्योऽसाविति यद्यपि ॥३८०॥
केनचिच्छक्यते वक्तुं नार्थस्तेनापि कश्चन ।
यस्यासावर्थ इत्युक्तं नह्यसौ पुनरुच्यते ॥३८१॥
पुनश्चेदुच्यते सोऽपि न नाशस्तस्य विद्यते ।
तस्यासावर्थं इत्येवं येन शब्देन कथ्यते ॥३८२॥
तस्याप्यनेन मार्गेण नार्थः कश्चिन्निरूप्यते ।
एकस्यापि हि शब्दस्य [1]नार्थवत्तोपपद्यते ॥३८३॥
अभावाच्चार्थवत्त्वस्य[2] [3]सादृश्यान्नार्थबोधनम् ।
बोधयेद्यद्यसावर्थं सम्बन्धेन विना ध्वनिः ॥३८४॥
सर्वस्मादेव शब्दात्तु सर्वस्यार्थे मतिर्भवेत् ।
न चैवं दृश्यते लोके तस्मात्सम्बन्ध इष्यताम् ॥३८५॥
स चापि सत्तया नाङ्गं विज्ञातोऽर्थधियः सदा ।
देशकालाद्यभेदेन तस्यैव ग्रहणं यदि ॥३८६॥
अर्थेन सह सम्बन्धस्तदा तस्यावधार्यते ।
यस्मिन्नाकल्पिते शब्दे लोको यं[4] प्रतिपद्यते ॥३८७॥
वाच्यवाचकसम्बन्धस्तयोरस्तीति निश्चयः ।
प्रतीतिश्चापि लोकस्य व्यवहारेण निश्चिता ॥३८८॥
हानादिलक्षणश्चासौ प्रत्यक्षेणोपलभ्यते ।
व्यवहारादतोऽन्यस्य प्रतीतिरवधार्यते ॥३८९॥
वाच्यं वक्तुं यथा शक्तिर्वाचकस्याप्यसंशयम् ।
शक्तिरेव च सम्बन्धो वाच्यवाचकलक्षणा ॥३९०॥

---

१. कोशे 'नर्थवत्तोपपद्यते' इत्यपपाठः ।
२. कोशे 'आभावाच्चार्थं०' इत्यपपाठः ।
३. कोशे 'सादृश्या नार्थ०' इत्यपपाठः । ४. यम्=अर्थम् ।

सा च स्वाभाविकीत्येव वक्तुं यस्मान्न शक्यते ।
कथञ्चित्क्रियते शक्तिस्सङ्केतेनान्यथाऽपि वा ॥३६१॥
अस्यायमर्थ इत्येवमुक्तिस्सङ्केत उच्यते ।
नेदृक्[1] सङ्केत एतेषामसिद्धार्थत्वहेतुतः ॥३६२॥
शब्दान्तरेण [2]सङ्केतः कार्यस्तस्यापरेण वः ।
तस्यापि त्वपरेणेति व्यवस्था नैव लभ्यते ॥३६३॥
ततो न क्रियते शक्तिस्सङ्केतेनेति गम्यताम्[3] ।
प्रकारो[4] नापरः कश्चिच्छक्तिर्येन करिष्यते[5] ॥३६४।
तस्मात्स्वाभाविकी शक्ति[र्व्यनक्त्य]र्थं[6] ध्वनेः सदा ।
यस्यैव येन सम्बन्धो विज्ञातश्शक्तिलक्षणः ॥३६५॥
तस्मिन्नेव तदा त्वर्थे तस्मादुत्पद्यते मतिः ।
तस्मात्सम्बन्ध [7]एष्टव्यः स च नित्योऽभ्युपेयताम् ॥३६६॥
.......च विद्यते........... [8]भाष्यकृतेरितम् ।
तत्सिद्धिरन्यथा न स्यात्.......तयदि ते तथा ॥३६७॥
पारार्थ्यं नित्यतासिद्धौ[9] जैमिनिर्यदभाषत ।
वै[10] यास्केन तदेवोक्तमुपदेश इतीह तु ॥३६८॥
उभाभ्यामपि निर्दिष्टामर्थापत्तिं प्रचक्षते ।
प्रामाण्यमपि चैव [11]स्या[ल्लोक-]सिद्धिसमाश्रितम् ॥३६९॥

---

१. कोशे 'अस्यायमर्थ इत्येतेषां०' इत्यपपाठः ।

२. कोशे 'सङ्केः' इत्यपपाठः । ३. कोशे 'गम्यताव्' इत्यपपाठः ।

४. कोशे 'प्रकाशो' इत्यपपाठः । ५. कोशे 'करिष्यति' इत्यपपाठः ।

६. कोशे 'शक्ति·· मर्थं' इति भ्रष्टः पाठः । ७. कोशे 'एष्टव्या' इत्यपपाठः ।

८. मीमांसाभाष्यकृता शबरस्वामिनाऽयमभिप्रायः औत्पत्तिकस्त्वर्थेन सम्बन्धः (पू० मी० १।१।५) सूत्रस्य भाष्य उक्तः ।

९. 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्' (पू० मी० १।१।१८) सूत्रेणेति भावः ।

१०. कोशे 'वैयोस्तेनास्तदे०' इत्यपपाठः । तत ऊहितोऽयं पाठः । ऋक्प्रतिशाख्ये 'न दाशतय्येकपदा काचिदस्तीति वैयास्कः' (१७।४२) इति स्मर्यते । 'वै' पृथक्पदमित्येके प्रतिजानते, एकपदमित्यपरे ।

११. कोशे 'चैव स्या······सिद्धिसमश्रितम्' इति पाठः ।

यादृशानि प्रमाणानि यानि यावन्ति लोकतः ।
प्रसिद्धानि प्रतीयन्ते तथा तानीति निश्चयः ॥४००॥
व्यवहारान्यथासिद्धेः शक्तिः प्रत्यायनं प्रति ।
सा शक्तिरन्यथा न स्यान्नित्योऽसौ यदि नेष्यते ॥४०१॥
अतोऽसौ नेन्द्रिये नित्यस्सर्वदास्तीति गम्यताम् ।
इतरेतरमित्येतच्छब्दानामेव[१] चाच्यते ॥४०२॥
अन्योन्यार्थं हि शब्दानामुपदेशः प्रवर्तते ।
स्वरूपमात्रविज्ञप्तौ शब्दो नोच्चार्यते यथा ॥४०३।
स्वार्थमात्रप्रतीत्यर्थं तथासौ न प्रयुज्यते ।
तावन्मात्रप्रतीत्या हि व्यवहारो न दृश्यते ॥४०४॥
विशिष्टार्थप्रतीतौ च दृश्यते शब्दहेतुना ।
विशिष्टार्थावबोधश्च नानपेक्ष्य परस्परम् ॥४०५॥
इतरेतरकार्यार्थं तेनैषामुपदेशनम् ।
नाम्ना[२] ह्यपेक्षितं नित्यं आख्यातं स्वार्थसिद्धये ॥४०६॥
तथैवापेक्षितं नाम [३]तेनापि स्वार्थसिद्धये ।
अपेक्षा नैव[४] शब्दानामर्थानां वोपपद्यते ॥४०७॥
अचैतन्यादतोऽपेक्षा पुरुषस्योपजायते ।
तदीया त्वेव शब्दानामर्थानां चोपचारतः[५] ॥४०८॥
एकवाक्यप्रसिद्ध्यर्थं[६] न्यायज्ञैरभिधीयते ।
तद्यथा वृक्षमित्युक्ते कर्मसंख्याविशेषितम्[७] ॥४०९॥
अपेत्य वृक्षशब्दार्थं किमित्येवमपेक्षते ।
प्रत्याहरेति[८] वोक्ते तु सा च तस्य निवर्तते[९] ॥४१०॥

---

१ कोशे '०श्चब्दानामेवोच्यते' इत्यपपाठः । २. कोशे 'नाम्नां' इत्यपपाठः ।
३. कोशे 'नेनापि' इत्यपपाठः । तेन = आख्यतेन ।
४. कोशे 'अपेक्षान्नैव' इति पाठः । ५. कोशे '०र्थानाञ्चैवोपचारता' इत्यपपाठः ।
६. द्र०—पू० मी० १।२।२५ शाबरभाष्यम् ।
७. कोशे '०विशोषितम्' इत्यपपाठः । ८. कोशे 'प्रत्याहारेति' इत्यपपाठः ।
९. अयं भावः 'वृक्षम्' इत्युक्ते कर्मसंख्याविशेषितं वृक्षं किं कुर्याम् इत्यपेक्षा जायते । सा चापेक्षा 'प्रत्याहर' इत्याख्यते प्रयुक्ते निवर्तते ।

किमर्थमिति चापेक्षी फले ज्ञातेऽवगच्छति ।
नरस्योत्पद्यतेऽपेक्षा शब्देनार्थेन वा यतः ॥४११॥
निवर्तते च सा तेन ततस्तस्योपचर्यते ।
अथवैकैकशो[1] ऽशक्तेस्सद्वितीयस्य शक्तितः ॥४१२॥
अपेक्षाशक्ततैवैषामनपेक्षा[2] च शक्तता ।
वाचकत्वनिषेधात्तु[3] पदं नान्यदपेक्षते ॥४१३॥
सम्बन्धमात्रविज्ञाने [4]स्वार्थमात्रस्य वाचकम् ।
पदार्थस्सद्वितीयस्तु वाक्यार्थं प्रतिपादयेत् ॥४१४॥
अन्योन्यापेक्षितोक्तिश्च पदकार्यविवक्षया ।
वाक्यार्थप्रतिपत्तिश्च पदार्थज्ञानहेतुतः ॥४१५॥
पदार्थानाञ्च विज्ञानं पदशक्तिनिमित्तकम् ।
प्रतिपादनशक्तिश्च नित्यत्वे न विपर्यये ॥४१६॥
प्रतिपत्त्यन्यथासिद्धेः[5] शब्दनित्यत्वनिश्चयः ।
यथैव शब्दनित्यत्वे शक्यस्सम्बन्धनिर्णयः ॥४१७॥
कर्तुं तथैव वाच्यस्य ततस्तस्यापि [6]नित्यता ।
आकृते[र]भिधेयत्वं [7]जैमिनिर्न्यायतोऽब्रवीत् ॥४१८॥
सम्बन्धकरणाशक्तेस्तथा तस्यापि नित्यता[6] ।
अर्थप्रत्यायने शक्तिर्न्न चेदस्ति स्वभावतः ॥४१९॥
सम्बन्धः केन शब्दस्य क्रियते ध्वनिना यदि ।
तस्याप्यन्येन सम्बन्धस्तथा तस्यापरेण वः ॥४२०॥
तथा तस्यापरेणेति ह्यव्यवस्था पुरोदिता[8] ।
तस्मात् प्रसिद्धसम्बन्धाः[9] केचिच्छब्दे नियोगतः[10] ॥४२१॥

१. कोशे 'अथवैककैक०' इत्यपपाठः । २. कोशे '०शक्नुतैवैषा०' इत्यपपाठः ।
३. कोशे '०निषेया तु' इत्यपपाठः । ४. कोशे 'सार्थमात्रस्य' इति पाठः ।
५. कोशे '०सिद्धे' इत्यपपाठः । ६. कोशे 'नित्यताम्' इत्यपपाठः ।
७. आकृतिस्तु क्रियार्थत्वात् (पू० मी० १।३।३३) इति सूत्रेणेति शेषः ।
८. कोशे 'ह्यप्यवस्था०' इत्यपपाठः । द्र०—श्लोकः ३९३ ।
९. कोशे '०सम्बन्धः' इत्यपपाठः । १०. कोशे '०शब्दो तियोगतः' इत्यपपाठः ।

उररीकरणीयास्स्युरिति सम्बन्धनित्यता ।
शब्दानित्यत्वसिद्ध्यर्थं ग्रन्थोऽयं कैश्चिदीरितः ॥४२२॥
तामेव[2] शास्त्रमाचष्टे प्रसिद्ध्याऽऽचरती[3] यया ।
परशास्त्रकृतो योगः[4] शक्तिर्या प्रतिपादिता ॥४२३॥
नैवासावुपपद्येत न चेच्छब्दस्य नित्यता ।
आख्यायते कथं युक्तिरुक्तमात्रविनाशिना ॥४२४॥
आचष्टे यदि तद्युक्तिं पदानां नित्यता ध्रुवम् ।
उररीकरणीयैव तया[7] युक्तिर्विरुध्यते ॥४२५॥
शब्दस्यानित्यतां वक्तुं प्रतिज्ञातो न युज्यते ।
नियोगो वाऽर्थ योगः स्यान्नित्यः शास्त्रप्रकल्पितः[9] ॥४२६॥
सोऽन्यथा[10] नोपपद्येत न चेच्छब्दस्य नित्यता ।
परकीयस्य शास्त्रस्य विरोधस्त्वेवमीरितः ॥४२७॥
शास्त्रकृद्भाऽक्षपादादिः[11] प्रयोगो योग उच्यते ।
अनुमानप्रयोगो[12] यः शब्दानित्यत्वसिद्धये ॥४२८॥
अक्षपादादिनिर्दिष्टस्सोऽर्थापत्त्यैव बाध्यते ।
परार्थमनुमानं[13] हि शब्देन प्रतिपाद्यते ॥४२९॥

---

१ दुर्गाचार्येणेदं व्याख्यानम् 'अयुगपदुत्पन्नानाम्' इति विच्छेदं विधायोक्तम् ।

२. कोशे 'तमेव' इति पाठः । शास्त्रं तां (=प्रसिद्धिम्) आचष्टे यया लोक आचरतीत्यभिप्रायः स्यात् ?

३. शास्त्रकृतो योगश्च । निरु० १।२॥

४. वृत्तवशाद् दीर्घत्वम् !

५. व्याकरणशास्त्रकृत इत्यर्थः ।

६. कोशे 'युक्ति०' इति पाठः ।

७. पदानां नित्यतयेत्यर्थः ।

८. कोशे 'योगस्याल्पः' इत्यपपाठः ।

९. द्र०—स्कन्दव्याख्या प्रथमभाग पृ० १६ ।

१०. कोशे साऽन्यथा' इत्यपपाठः ।

११. अक्षपादो न्यायशास्त्रप्रवक्ता ।

१२. अयं नैयायिकानामनुमानप्रयोगः – शब्दोऽनित्यः, कृतकत्वात्, घटवत्, यद्यत् कृतकं दृष्टं तत्तदनित्यं, तथा चायं शब्दः, तस्मादनित्यः शब्दः ।

१३. अनुमानं द्विविधम्—स्वार्थं परार्थं च । यत्परस्मै बोधनाय प्रयुज्यते तत्परार्थमनुमानमुच्यते ।

तत्कथं[1] प्रतिपाद्येत न चेच्छब्दस्य नित्यता ।
नार्थापत्त्यैव नित्यत्वं शब्दानामवगम्यते ॥४३०॥
प्रत्यभिज्ञाबलाच्चेति [2]व्याप्तिमत्त्वाद्द्वोरितम् ।
प्रत्यक्षज्ञानवैशिष्ट्यं तच्छब्देनाब्रवीदृषिः[3] ॥४३१॥
अर्थापत्त्या हि नित्यत्वं चिरेण प्रतिपद्यते ।
प्रत्यभिज्ञायमानं[4] स्याद् द्रागेव क्लेशवर्जितम् ॥४३२॥
नहि प्रत्यक्षगम्येऽर्थे क्लेशः कश्चन विद्यते ।
व्याप्तित्वं[5] व्यापनं भावो देशकालेषु सर्वदा ॥४३३॥[6]
व्याप्तिमत्त्वं च तद्वत्त्वं तद्वत्त्वं प्रत्यभिज्ञया ।
शब्दः[7] कालान्तरञ्चैव तथा देशान्तराण्यपि ॥४३४॥
व्याप्नुवन् गृह्यते[8] नित्यं स एवायमिति स्फुटम् ।
शब्दो[9] देशान्तरे चैव तथा कालान्तरेष्वपि ॥४३५॥
स एवायमिति ह्येव प्रत्यभिज्ञायते सदा ।
बाधकप्रत्ययाभावात् करणादोषतस्तथा[10] ॥४३६॥
स एवेति मतेनैवं [11]मिथ्यात्वमुपपद्यते ।

---

१. तदुक्तं शबरस्वामिना—दर्शनमुच्चारणं तत्परार्थम् । परमर्थं प्रत्याययितुम् । उच्चरितमात्रे हि विनष्टे शब्दे न चान्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात् । मीमांसाभाष्य १।१।१८॥

२. व्याप्तिमत्त्वात्तु शब्दस्य । निरु० १।२॥ ३. ऋषिर्यास्कः ।

४. कोशे '०मानैः' इत्यपपाठः । ५. कोशे 'व्याप्तित्वे' इति पाठः ।

६. इतोऽनन्तरमग्रे ४४८ तमायां संख्यायां पठ्यमानः 'प्रयोगो वाचकस्तस्य' इत्यादिश्लोकः कोशे इहाप्यस्थाने पठ्यते ।

७. कोशे 'शब्द काला०' इत्यपपाठः । ८. कोशे 'व्याप्नुवद् गृहते' इत्यपपाठः ।

९. मीमांसाभाष्यकृदाह—एवमन्येऽपि प्रत्यभिजानन्ति, स एवायमिति । प्रत्यभिजानानाः प्रत्यभिजानन्ति चेद् वयमिवाऽन्येऽपि 'नान्यः' इति वक्तुमर्हन्ति । अथ मतम्—अन्यत्वे सति सादृश्येन व्यामूढाः 'सः' इति वक्ष्यन्ति । तन्न । नहि ते सदृश इति प्रतियन्ति । किं तर्हि ? स एवायमिति । विदिते च स्फुटे ऽन्यत्वे व्यामोह इति गम्यते । न च 'अयमन्यः' इति प्रत्यक्षमन्यद् वा प्रमाणमस्ति । पू० मी० १।१।२०॥

१०. कोशे 'कारणादोषतस्तद्रा' इत्यपपाठः । ११. कोशे 'मिथ्यात्वादुपपद्यते' इत्यपपाठः ।

मिथ्यात्वकल्पनायां च [1]शून्यवादः प्रसज्यते ॥४३७॥
शून्यवादोत्तरं[2] नैव लोक एव भविष्यति ।
अणीयस्त्वाच्च शब्दस्य[3] नित्यत्वमवम्यताम् ॥४३८॥
अणीयस्त्वेन चाप्यस्य निर्भागत्वं विवक्षितम् ।
ह्रासो वृद्धिस्तथा [4]श्लेषो विश्लेषो मृदुतीव्रता ॥४३९॥
शब्दस्य नैव सन्तीति निर्भागत्वेन वर्ण्यते ।
भागा यस्य न विद्यन्ते तस्य ह्रासादयो नहि ॥४४०॥
तद्धेतुकमनित्यत्वं तदभावे न विद्यते ।
निर्भागता कथं तस्य भागानामग्रहो यतः ॥४४१॥
घटादेरिव शब्दस्य भागान्नोपलभामहे ।
अगृह्यमाणसद्भावे कूर्मरोम[5] प्रसज्यते ॥४४२॥
नास्तीति व्यवहारस्य तथाभावोऽप्यसंशयः ।
कल्पितैर्न[6] च तैर्भागैरस्ति किञ्चित्प्रयोजनम् ॥४४३॥
कल्पयित्वा तथा भागाननित्यत्वं प्रकल्प्यते ।
गोशब्दत्वं तथा गोत्वं तथा तन्नित्यताद्यपि ॥४४४॥
तच्चेत् प्रकल्प्यते सर्वं व्यक्तिष्वेवास्तु तत्तथा ।
घटाद्युपाधिना व्योम्नि [7]ह्रासवृद्धिमतिर्यथा ॥४४५॥
ताल्वाद्युपाधिना[8] तद्वच्छब्दे ह्रासादिधीरपि ।
महतापि प्रयत्नेन यदाभिव्यज्यते ध्वनिः ॥४४६॥

---

१. कोशे 'शून्यः पाद' इत्यपपाठः ।

२. कोशे 'शून्यपादोत्तरञ्चैव' इत्यपपाठः । अस्यायं भावः—शून्यवादो न प्रमाणमित्यत्र लोक एव प्रमाणम् । नहि सर्वस्य शून्यत्वे लोकव्यवहार उपपद्यते ।

३. अणीयस्त्वाच्च । निरु० १।२॥

४. कोशे 'क्लेशो विश्लेषो मरुती व्रता' इत्यपपाठः । अत्र १।१।१७ मीमांसासूत्रभाष्यमवलोकनीयम् ।

५. कूर्मस्य त्वचि यथा रोमाणि न भवन्ति तथा । अयं शशशृङ्गवद् असम्भवतां द्योतयति ।

६. वैयाकरणादिभिः कल्पितैः प्रकृतिप्रत्ययादिरूपैर्भागैः ।

७. कोशे 'ग्रास०' इत्यपपाठः ।

८. कोशे 'तलाद्यु०' इत्यपपाठः ।

महानिव तदाभाति स्वल्पेन स्वल्पवत् तथा ।
ह्रस्वदीर्घप्लुतत्वञ्च का[ल]धर्मं प्रचक्षते ॥४४७॥
मृदुत्वं मन्दता चैव तीव्रता चाप्युणाधिनः ।
अतो न विद्यते तस्य नित्यत्वं हि प्रमाणितम् ॥४४८॥
प्रयोगो वाचकस्तस्य व्यञ्जको न तु कारणम् ।
प्रयत्नानन्तरं दृष्टिर्व्योमादावपि जायते[1] ॥४४९॥
तथा ह्यनित्यता तस्य केनचिन्नाभ्युपेयते ।
इन्द्रियग्राह्यता चैव जात्यादेरपि विद्यते ॥४५०॥
अतश्चैन्द्रियकत्वं[2] यत्तन्नानित्यत्वसाधनम् ।
जातीनां जातिमत्त्वे च जातिमत्त्वे सतीत्यपि ॥४५१॥
विशेषेणानुयुज्येत तासु चान्यधियः स्फुटम् ।
सामान्यानन्ततैवं चेत् [3]जातेर्हानिर्भविष्यति ॥४५२॥
सामान्यानन्ततायां नो नानवस्था प्रसज्यते ।
अर्थापत्त्याऽपि[4] नित्यत्वे तथैव प्रत्यभिज्ञया ॥४५३॥
शब्दानां निश्चिते सम्यक् किं करोति विशेषणम् ।
सारूप्यादिह[5] जातीनां कल्पनातो बलीयसी ॥४५४॥
प्रत्यभिज्ञायमानत्वान्नित्यैकव्यक्तिकल्पना ।
एवं नित्येन शब्देन व्यवहारप्रसिद्धये[6] ॥४५५॥
संज्ञायाः [7]करणं लोके युज्यते न विपर्यये ।
कुमारस्यास्य जातस्य यज्ञदत्त इतीदृशी ॥४५६॥
संज्ञेयं प्रतिपत्तव्या कुमारप्रतिपत्तये ।
ततः कालान्तरे संज्ञां तामेवाकर्ण्य लौकिकाः ॥४५७॥

---

१. चक्षुरादिप्रयत्नानन्तरं व्योमादिदर्शनं जायत इत्याशयः ।
२. कोशे 'अतश्चेन्द्रियत्वं' इत्यपपाठः । ३. कोशे 'ज्ञातो हानि०' इत्यपपाठः ।
४. कोशे 'अर्थापत्त्याभि' इत्यपपाठः । ५. कोशे 'सारूप्यापीहि' इत्यपपाठः ।
६. शब्देन संज्ञाकरणं व्यवहारार्थं लोके । निरु० १।२।
७. कोशे 'कारणं' इत्यपपाठः ।

तथैव प्रतिपद्यन्ते कुमारं यदि सा स्थिरा ।
विनष्टा यदि सा संज्ञा पुनरन्या प्रयुज्यते ॥४५८॥
कुमारो न प्रतीयेत तया सङ्गत्यभावतः ।
सादृश्यादर्थबोधश्च पूर्वमेव[1] निराकृतः ॥४५९॥
तस्मात् स्थिरैव सा संज्ञा प्रसिद्धार्थैः पदैः कृता ।
संज्ञायाः करणं[2] वापि यदृच्छापूर्वमिष्यते ॥४६०॥
पाक्षिकी प्राप्तिरस्तीति केवलं सा नियम्यते ।
सर्वेषामेव शब्दानां सर्वाकाराऽर्थबोधने[3] ॥४६१॥
शक्तिः स्वाभाविकी ह्यस्ति प्राप्तिस्तेनैव पाक्षिकी ।
यज्ञदत्तादिशब्दानां वेदे व[4] स्वभावतः ॥४६२॥
कथमाधीयते तेषु शक्तिरर्थावबोधनी ।
शक्तिर्यस्य नैवास्ति तस्मिन्नसाधीयते यदि ॥४६३॥
तैलनिष्पादनीं शक्तिमाधत्स्व[5] सिकतास्वपि ।
न ह्यसौ धीयते तासु बहुज्ञेनापि केनचित् ॥४६४॥
तस्मात् स्वाभाविकी शक्तिः पदार्थानां स्वकर्मणि ।
सर्वैरेवाभ्युपेतव्या लौकिकं मार्गमाश्रितैः ॥४६५॥
संज्ञायाः फलमेवाह व्यवहारार्थमित्यपि ।
तत्स्वभावोपपत्त्यर्थं लोके[6] इत्याभिभाषितम् ॥४६६॥
लोकेऽवगम्यमानस्य निषेधो नोपपद्यते ।
निषेधो हि प्रमाणेन प्रमाणञ्चापि लौकिकम्[7] ॥४६७॥

---

१. पूर्वत्र ३८४ तमे श्लोके ।
२. कोशे 'कारण' इत्यपपाठः । ३. कोशे '०कारोर्थ०' इत्यपपाठः ।
४. इवार्थेऽयं वकारः । यथा 'मणीवोष्ट्रस्य लम्बेते' इत्यत्र । द्र०—शब्दकौस्तुभे ईदूदेद्द्विवचनं प्रगृह्यम् (१।१।११) सूत्रव्याख्यानम् ।
५. कोशे 'शक्तिराधुत्स्व' इत्यपपाठः । ६. कोशे '०पत्त्यर्थमोक' इत्यपपाठः ।
७. कोशे 'प्रमाणत्वापि लौकिकम्' इत्यपपाठः । अग्रेऽपि सर्वत्र 'लौकिक' इत्येव कोशे पठ्यते ।

प्रमाणेन[1] निषेधो न [व्यवहार]विरोधतः ।
नालौकिकं[2] प्रमाणञ्च लौकिकैरभ्युपेयते ॥४६८॥
हानादिलक्षणो लोके व्यवहारः प्रतीयते ।
स एव च फलं[3] तस्य तस्मात् तच्चापि भिद्यते ॥४६९॥
साध्यसाधनयोरैक्यं क्वचिन्नह्युपलभ्यते ।
भ्रान्तैरेवोच्यते बौद्धैस्तयोरैक्यमसंशयम् ॥४७०॥
प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिस्[4]तथा ।
भिन्ना एवं प्रतीयन्ते लोकेष्वस्त्य[त्र] भेदधीः ॥४७१॥
संज्ञायाः करणं[5] लोके दृष्टे संज्ञिनि युज्यते ।
देवताऽभावदृष्टेषु[6] कथं संज्ञा नियम्यते ॥४७२॥
नासौ नियम्यते कस्मिन्नियतैव यतस्तदा ।
तेषामित्यादिनाचष्टे[7] तदेतद् भाष्यकृत्[8] स्वयम् ॥४७३॥
तेषां नित्यत्वयुक्तानां शब्दानां हि स्वभावतः ।
दैवताद्यभिधानं तन्मनुष्यादिवदिष्यताम् ॥४७४॥
मनुष्यादीन्यथा लोके शब्दा प्राहुः स्वभावतः ।
तथा स्वभावतो वेदे देवताद्यविशेषतः ॥४७५॥
लोके वेदे च शब्दानामर्थानाञ्च तथैकता ।
तद्[9] यानीत्यादिवाक्येन पूर्वमेवोपपादितम्[10] ॥४७६॥

---

१. कोशे '(न) प्रमाणेन' इत्यपपाठः ।
२. कोशे 'नो लौकिकं' इत्यपपाठः ।
३. कोशे 'फलस्तस्या' इत्यपपाठः ।
४. कोशे 'प्रमितस्तथा' इत्यपपाठः ।
५. कोशे 'कारणं' इत्यपपाठः ।
६. देवतानामभावेन दृष्टेषु संज्ञिष्वित्यभिप्रायः ।
७. तेषां मनुष्यवद् देवताभिधानम् । निरु० १।२॥
८. भाष्यकारो यास्कः ।
९. कोशे 'तदद्यादीत्य०' इत्यपपाठः ।
१०. द्र०—पूर्वत्र ८५ तमः श्लोकः, तट्टिप्पणी च

अग्निर्वायुस्तथा[1] सूर्यः प्रत्युत्पन्नोऽत्र लभ्यते ।
अग्न्यादयस्तथा शब्दाः[2] रूढास्तेष्वेव लोकतः ॥४७७॥
देवतात्वं पुनस्तेषां शब्देनैवावधार्यते ।
तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन[3] वा पुनः ॥४७८॥
अन्यासां देवतानाञ्च तेष्वेवान्तर्गतिं[4] मुनिः ।
माहाभाग्यात्[5] तथा तत्त्वं सप्तमे[6] वर्णयिष्यति ॥४७९॥
पूर्वापरपदज्ञानाद्[7] यथा यूपादितत्त्वधीः ।
तथैवाग्न्यादिदेवानां तत्त्वं निर्णीयते बुधैः ॥४८०॥

---

१. कोशे 'सूर्य प्रत्युत्पन्नोपलभ्यते' इत्यपपाठः ।

२. वस्तुतो लोकवेदाधिकरणे लोकवेदयोः समानार्थत्वप्रतिपादनं जातिगुणकर्मशब्दानामेव विहितं न रूढशब्दानाम् । मीमांसकमते तात्त्विकदृष्टया यदृच्छा शब्दा एव रूढाः । न च ते वेदे प्रयुज्यन्ते । तस्मान्न तदधिकरणबलेन रूढानां लोकवेदयोः समानार्थत्वम् । द्रव्यगुणक्रियाशब्दाश्च येनैव हेतुना लोके प्रयुज्यन्ते तेनैव वेदेऽपीत्येव तस्य तात्पर्यम् । वैदिकाश्च सर्वे शब्दा आख्यातजाः । तेन सर्वेष्वेव विभिन्नार्थेषु शब्देष्वप्येक एव आख्यातार्थो निमित्तभावेनोपादीयते । यथा येन निमित्तेनेयं पृथिवी गौरुच्यते तेनैव सूर्यः पशुश्चन्द्रमा रश्मयश्चापि गाव उच्यन्ते । रूढत्वेऽनेका अभिधानशक्तयः कल्पनीयाः स्युः । अत एव मीमांसकानाम् 'अन्याय्यश्चानेकार्थत्वम्'(पू० मी० शा० १।३।३०)इत्यपरो न्यायो जागर्ति । रूढत्वे गवादीनां विभिन्नार्थः कल्पनीयो भवति । तथा सति न्यायोऽयं बाध्येत । एवं च कृत्वा मीमांसकानां नैरुक्तानां च मते वेदे नैकोऽपि शब्दः कश्चिद् रूढ इति शक्यते वक्तुम् । रूढास्तु केवलं लोक एव प्रयुज्यन्ते । ते च यदृच्छारूपाः । यदृच्छाशब्दान् केचन शास्त्रकाराः साधुशब्देषु परिगणयन्ति केचन तान् बहिर्भूतानेव मन्यन्ते । अत एव चतुर्विधाः शब्दाः क्रियाशब्दा गुणशब्दा जातिशब्दा यदृच्छाशब्दाश्च, त्रिविधा एव शब्दा न सन्ति यदृच्छाशब्दाः इति वैयाकरणेषु प्रवादः । द्र०—महाभाष्यम् (अ० १, पा० १, ऋलृक् सूत्रम्) ।

३. अस्यायं भावः देवतानिश्चयस्त्रिधा भवति । तद्धितेन—यथा 'आग्नेयमष्टाकपालं निर्वपेत्' । चतुर्थ्या—यथा 'अग्नये अनुब्रूहि' । मन्त्रलिङ्गेन—यथा—'विश्वानि देव सवितर्दुरितानि परासुव' । अयं सामान्यनियमः । अत एव यास्केन प्रथमाध्याये १७ खण्डे 'याज्ञिकानां लिङ्गज्ञा अत्र स्म' इति मतमुपस्थाप्य तत्र दोषः प्रदर्शितः । यास्कमते तु दैवतज्ञाने मन्त्रार्थपरिज्ञानमेवैकं निर्दिष्टं साधनम् ।

४. कोशे '०गतिमुनिः' इत्यपपाठः । ५. कोशे 'महाभाग्यस्तथा' इत्यपपाठः ।

६. तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति । निरु० ७।५।

७. कोशे 'पूर्वापरापद०' इत्यपपाठः ।

पदार्थाश्च यथा लोके वाक्यार्थं गमयन्ति नः।
तथा वेदेऽपि वाक्यार्थं[1] त एवेत्यविशिष्टता ॥४८१॥
श्रुतार्थापत्तिसिद्धाश्च[2] स्वर्गादिफलभूमयः।
स्वर्गादिशब्दवाच्यास्स्युरिति तन्न प्रसिध्यति ॥४८२॥
अस्त्वेतदीदृशं सर्वं न तु वेदप्रमाणता।
कृतकत्वादसम्बन्धाद्[3] बालोन्मत्तादिवाक्यवत् ॥४८३॥
सम्पत्तिः[4] कर्मणामेवं वैदिकानां न युज्यते।
सम्पादनञ्च सम्पत्तिरनुष्ठानमनर्थकम् ॥४८४॥
अनुष्ठानस्य वैयर्थ्ये वेद एव निरर्थकः[5]।
तदानर्थक्यसिद्धौ च मन्त्रोऽपि स्यान्निरर्थकः ॥४८५॥
मन्त्रस्यानर्थकत्वे च शास्त्रमेतदनर्थकम्।
हेतोरसिद्धतामिह[6] "नित्यत्वादिति भाष्यकृत् ॥४८६॥

१. कोशे 'वाक्यार्थस्त' इत्यपपाठः।

२. यथा लोके—'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र पीनत्वश्रवणेन 'रात्रौ भुङ्क्ते' इत्यर्थ आपद्यते, तथा वेदेऽपि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र स्वर्गादिश्रुत्या लोके स्वर्गादिमदृष्ट्वा भूमितोऽन्यत्र स्वर्गादिपदवाच्या भूमिरिति कल्प्यते। परन्तु सा कल्पना न प्रसिध्यति। तत्र हेतूनुत्तरे श्लोके निर्दिशति—कृतकत्वादित्यादिना।

३. कोशे 'कृतकत्वदसम्बादा बालो०' इत्यपपाठः।

४. कोशे 'सम्पत्तिक्रमणामेवं' इत्यपपाठः।

५. 'वेदा यज्ञार्थं प्रादुर्भूताः' इति याज्ञिकानां मतं, तस्मिन् मते नैरर्थक्यमिदम्। वस्तुतस्तु वेदानाम् आधिदैवतविज्ञानमध्यात्मविज्ञानं च वास्तविकं फलम्। यास्कोऽपि पुष्पफले दैवताध्यात्मे वा (नि० १।२०) इति ब्रुवन्निममेवार्थं द्योतयति। अपि च यास्कीया याऽधिदैवविषयिका व्याख्यानसरणिः सापि तदैव प्रामाणिकी भवितुमर्हति यदा याज्ञिकानां मतमेकान्ततो नाद्रियेत। वस्तुतो श्रौतयज्ञानां प्रवृत्तिरेवाधिदैवतज्ञानार्थमभूत्। अत एव यास्को 'याज्ञदैवते पुष्पफले' इति ब्रुवन् याज्ञिकार्थं पुष्पस्थानीयम्, अधिदैवतविज्ञानं च फलस्थानीयमित्युक्तवान् (१।२०)।

६. कोशे 'नेतो०' इत्यपपाठः।

७. पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे। निरु० १।२॥

पुरुषस्य तु विद्याऽत्र त्रयी भाष्यकृतो मता ।
पुरुषार्थेति निर्दिष्टा पुरुषोपपदा त्रयी[1] ॥४८७॥
तस्याश्च[2] नित्यता युक्ता कर्ता न स्मर्यते यतः ।
बभूव यदि कर्ता स्यात् स्मर्येतैव[3] नियोगतः ॥४८८॥
वेदराशेर्विचित्रस्य विचित्रपदपर्वणः ।
महतो दुर्विगाहस्य कर्ता स्यात् कीर्तिमत्तमः ॥४८९॥
अल्पीयसोऽपि ग्रन्थस्य [4]गौणस्यैवेतरस्य वा ।
कर्ता साधुरसाधुर्वा स्मर्यते ग्रन्थधारिभिः ॥४९०॥
विच्छिद्यते न चाप्येषा मध्ये नृणाम्परम्परा ।
तस्यां च वर्तमानायां कथं विच्छिद्यते स्मृतिः ॥४९१॥
साधुश्चेत् साधुरित्येवं भक्त्या स्मर्येत नित्यशः ।
असाधुरथ चेत्कर्ता दुष्टोऽसाविति कोपतः ॥४९२॥
अध्यापयदधीयानौ ध्रियेते[5] परमादरात् ।
न कश्चिद् दृश्यते[6] कुर्वन्नित्येवं नित्यता लघुः ॥४९३॥
सम्प्रत्यधीयते शिष्या यथा वेदं गुरोः कुले ।
अतीतेष्वपि कालेषु तथैव [7]ह्यध्यगीषत ॥४९४॥
अधीत्यैव[8] यथा वेदं संप्रत्यध्यापयन्ति नः ।
तथैवाध्यापयामासुः[9] पूर्वे पूर्वानपि स्फुटम् ॥४९५॥
अनित्यत्वे पुनस्तस्य कर्ता कल्प्यः प्रसज्यते ।
बालोन्मत्तादितुल्यत्वं तथा तस्याप्रमाणता[10] ॥४९६॥

---

१. अस्यायं भावः—पुरुषशब्देनात्र पुरुषार्थ उच्यते । पुरुषार्थाय विद्या पुरुषविद्या तस्या नित्यत्वाद् इति 'पुरुषविद्यानित्यत्वात्' इति यास्कीयवचनस्यार्थः ।

२. अग्रे ग्रन्थकृत् मीमांसामतानुसारं वेदानां नित्यत्वमकर्तृकत्वं च विस्तरेणोपपादयति

३. कोशे 'स्मर्यतैव' इत्यपपाठः । ४. कोशे 'गोनस्येतद···स्यवा' इति भ्रष्टः पाठः ।

५. कोमे 'दृश्यते पदमा०' इति पाठः । ६. कोशे 'कुर्वते दृश्यदित्येवं' इति पाठः ।

७. कोशे 'ह्यधिगीषितः' इत्यपपाठः ।

८. कोशे 'अध्येव' इत्यपपाठः ।

९. कोशे '०मास' इत्यपपाठः । १०. कोशे 'तस्य प्रमा०' इत्यपपाठः ।

सर्वज्ञं कल्पयित्वाऽन्ये[1] तथा तत्सत्यवादिनः ।
ग्रन्थस्य तत्प्रणीतस्य प्रामाण्यं प्रतिजानते ॥४९७॥
प्रमाणेन विना कल्प्यं[2] बह्वदृष्टं प्रसज्यते ।
न स [प्र]कल्पते किञ्चिद्[यथादृष्टं]यथाश्रुतम्[3] ॥४९८॥
यथा ह्यकृततापन्नाः[4] प्राणा आकाशमेव च ।
तथैवाकृतको वेदो यदा स्यात् किं विरुध्यते ॥४९९॥
ग्रन्थस्य क्रियमाणत्वं दृष्टमित्यभिधानतः ।
कल्प्यते[5] कर्तृमत्वं चेत् तच्च नैवोपपद्यते ॥५००॥
प्रत्यक्षेण[6] प्रमाणेन[7] वक्तुमेतन्न युज्यते ।
बाह्यार्थशून्यवादित्वात्तथाऽसौ भ्रान्तिकस्तथा ॥५०१॥
सामान्यं वा विशेषो वा हेतुस्तत्सिद्धये मतम् ।
सामान्यस्य न हेतुत्वमभावात् कूर्मरोमवत् ॥५०२॥
सामान्यं हि न तस्यास्ति कल्पितं न च साधनम् ।
सामान्ये कल्पना नास्ति तस्यां वस्तु प्रसज्यते ॥५०३॥
विशेषोऽपि न हेतुस्स्यात् साध्येनानन्वितत्वतः[8] ।
पक्षभूतो विशिष्टो[9] हि सपक्षे नैव विद्यते ॥५०४॥
सपक्षस्य विशेषस्य पक्षधर्मत्ववर्जनात् ।
हेतुत्वं नैव युज्येत प्रकारो नास्ति तेऽपरः ॥५०५॥
वैशेषिकादिहेतुश्च प्रामाण्यस्य विघातकः ।
सत्यवाक्त्वाद्यसिद्धत्वाद् दुष्टतायाश्च सम्भवः ॥५०६॥
कर्तृमत्त्वानुमानञ्च विरुद्धं मन्त्रलिङ्गतः ।
'तस्मै नूनम्'[10] इति त्वस्मिन्नित्ययेति हि दृश्यते ॥५०७॥

---

१. नैयायिका इति भावः । २. कोशे 'कल्प्यः' इति पाठः ।
३. कोशे 'यथा हृतम्' इति पाठः । ४. कोशे '०पन्नः पदान्याकाश०' इति पाठः ।
५. कोशे 'कर्तृमत्वञ्चै…'नोवोपपद्यते' इति पाठः ।
६. नैयायिकमतम् 'ईश्वरप्रणीता वेदाः' इति खण्डयति ।
७. कोशे 'प्रमाणस्य' इत्यपपाठः । ८. कोशे 'साध्येनान्वित०' इत्यपपाठः ।
९. कोशे 'हि शिष्टो' इत्यपपाठः । १०. ऋग्वेद ८।७५।६॥

धर्मार्थानामयं[1] मार्गो निर्दोषः क्लेशवर्जितः ।
इति मत्वाब्रवीदेवं नित्यत्वादिति[2] भाष्यकृत् ॥५०८॥
तथौत्पत्तिकसूत्रेण[3] जैमिनिश्चैवमब्रवीत् ।
न्यायशास्त्रप्रसिद्धञ्च[4] तदेवेदमनूद्यते ॥५०९॥
व्याख्येयत्वप्रसिद्ध्यर्थं तस्यैवास्य तु विस्तरः ।
एवं प्रमाणभूतेन वेदेनोक्तेस्य[5] कर्मणः ॥५१०॥
सम्पत्तिरिह सिद्धैव कार्यं कर्मेति निश्चितम् ।
विधिनाऽवगतं कर्म कर्ता कर्तुं व्यवस्थितः ॥५११॥
अपेक्षते स्मृतिं तावत्तस्या मन्त्रस्समर्पकः[6] ।
अनेकोपायसम्प्राप्तौ वेदमन्त्रो यदा स्थितः ॥५१२॥
तस्यैव नियमो युक्तो वैदिकत्वात् समर्थतः ।
विदितार्थः हि समर्था हि कर्तुं[7] कर्माणि नान्यथा ॥५१३॥
एवं मत्यर्थवान् मन्त्रो युक्त्याऽथापीति[8] वक्ष्यति ।
तदर्थज्ञानहेतुत्वादर्थवच्छास्त्रमिष्यते[9] ॥५१४॥[10]
नित्यो यद्यपि शब्दः स्याद् वेदो नित्यश्च यद्यपि ।
तथा सत्यपि वेदस्य प्रामाण्यं[11] नोपपद्यते ॥५१५॥

---

१. कोशे 'धमार्था०' इत्यपपाठः ।
२. भाष्यकृद् यास्कः—पुरुषविद्यानित्यत्वात् ।
३. औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः । पू० मी० १।१।५॥
४. 'पुरुषविद्यानित्यत्वात्' इत्यत्र पुरुषविद्याया अनित्यत्वात् इत्यपि विग्रहः संभवति । दुर्ग इममेव विग्रहमाश्रित्य वाक्यमिदं व्याख्यातवान् । स्कन्दस्तूभयथापि पदविच्छेदस्य संभवादुभयथा व्याख्यातवान् । यदा 'पुरुषविद्याया अनित्यत्वात्' हेतुरुपन्यस्यते तदा पुरुष प्रतिपक्षे वेदस्य कर्त्ता कश्चिद् नित्यविद्यः सर्वज्ञ ईश्वर इति भावोऽस्य वर्णयितुं शक्यते । तेन नैयायिकमतमपि न निरुक्ताद्विरुध्यते ।
५. कोशे 'समर्पतः' इत्यपपाठः । ६. कोशे विसर्गरहितः पाठः ।
७. कोशे 'कर्मणि' इत्यपपाठः ।
८. अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते (नि० १।१५) इत्यादिना प्रकरणेन ।
९. निरुक्तशास्त्रमित्यर्थः । १०. कोश इतोऽग्रे नवीना एकादिकाः संख्याः प्रारभ्यन्ते ।
११. कोशे 'प्रामाण्ये' इत्यपपाठः ।

प्रमेयाभावतस्त्वेव कथं तन्नैव विद्यते ।
प्रमेयमिदमित्येवं येन वक्तुं न शक्यते ॥५१६॥
आख्यातगोचरो भावः प्रत्यक्षेण न गृह्यते ।
सम्बन्धग्रहणाभावान्नानुमानस्य गोचरः ॥५१७॥
तथैव धातुवाच्योऽपि [भावो] नैवावगम्यते ।
चलत्यङ्गुलिरित्येवं चलनं दृश्यते ननु ॥५१८॥
देशाद् देशान्तरं प्राप्तं द्रव्यमेवोपलभ्यते ।
चलतीत्यादिविज्ञानं द्रव्यालम्बनमेव नः ॥५१९॥
द्रव्यस्वरूपतो नान्यच्चलनं तत्र दृश्यते ।
द्रव्यमात्रे कथं त्वेतदिति चेद् भ्रान्तिरेव सा ॥५२०॥
देशाद् देशान्तरे शीघ्रं नैरन्तर्येण गृह्यते ।
यत्तु तच्चलतीत्युक्तं द्रव्यमेव न हि क्रिया[1] ॥५२१॥
धात्वर्थाभावतश्चापि प्रत्ययार्थो न विद्यते ।
भावप्रधानताऽनेन नाख्यातस्योपपद्यते ॥५२२॥
सत्त्वप्रधानता नाम्नां सत्त्वाभावान्न युज्यते ।
जातिर्व्यक्तिर्गुणो[2] वाऽपि सत्ता वा सत्त्वमुच्यते ॥५२३॥
न तावद् दृश्यते [3]जातिर्व्यक्तिभ्यो व्यतिरेकतः ।
सम्बन्धग्रहणाभावाद् व्यक्तेरपि न वाच्यता ॥५२४॥
उत्पन्नक्षणनाशित्वमिति[4] व्यक्तेर्न सङ्गतिः ।
न ह्येका दृश्यते व्यक्तिर्न्नित्या कालान्तरादिषु ॥५२५॥
क्षीणा[5] क्षणान्तरे व्यक्तिरन्यान्यैव[6] हि जायते ।
भेदश्च दृश्यते स्पष्टमेकत्वे तन्न युज्यते ॥५२६॥

१. कोशे 'नहीति या' इत्यपपाठः ।
२. कोशे 'जाति व्यक्ति गुणो' इत्यपपाठः ।
३. कोशे 'जाति व्यक्तिभ्यो' इत्यपपाठः ।
४. कोशे 'उत्पन्नन्नात्रणनाशित्वम्' इत्यपपाठः ।
५. क्षणिकवादिमतमाश्रित्य पूर्वपक्षयति । ६. कोशे 'व्यक्तिरन्योन्यैव' इत्यपपाठः ।

सादृश्यात् प्रत्यभिज्ञानम्[1] अन्यथात्वेऽप्युपपद्यते[2] ।
गुणोऽपि व्यक्तितो [3]नान्यो न च स्थायी विभात्यसौ ॥५२७॥
सत्तापि जातिवन्नैव[4] [5]प्रमाणेनोपलभ्यते ।
न चाप्यवयवी कश्चित् तेभ्योऽन्यः सम्प्रतीयते ॥५२८॥
मिश्रा ह्यवयवास्तत्र[6] तेऽपि स्युः परमाणवः ।
विभिन्ना न च गृह्यन्ते बुद्धेर्नालम्बनं ततः ॥५२९॥
समुदायो न चाप्येषां वस्तुभूतः[7] प्रतीयते ।
निराकर्तुमिमं[8] पक्षं [9]षडित्याद्यब्रवीन्मुनिः[10] ॥५३०॥[11]
भावना भावशब्देन [12]पुरस्तात् प्रतिपादिता ।
भावनाधारभूतं तु द्रव्यमत्र [13]विवक्षितम् ॥५३१॥
प्रस्तुतं भावमुत्सृज्य किमर्थं[14] तद्विवक्ष्यते ।
उच्यते प्रस्तुतस्यैव[15] भावस्य प्रतिपत्तये ॥५३२॥
तस्मिन्विवक्षितो भावः प्रस्तुते लभ्यते यथा ।
वक्तव्यं चेत्तथा सर्वमुत्तरत्राभिधास्यते ॥५३३॥
द्रव्याभिधानसामर्थ्यं भावशब्दस्य विद्यते ।
सत्तायाञ्च क्रियायाञ्च द्रव्ये चायं प्रयुज्यते ॥५३४॥

---

१. कोशे 'प्रभिज्ञान०' इत्यपपाठः ।
२. कोशे '०त्वेत्युपपद्यते' इत्यपपाठः । ३. कोशे 'नान्य नच' इत्यपपाठः ।
४. कोशे 'जातिवन्नेव' इत्यपपाठः । ५. कोशे 'प्रमाणे नोपलभ्यमे' इत्यपपाठः ।
६. कोशे 'उश्रावायवयवास्तत्र' इत्यपपाठः ।
७. कोशे 'वस्तुभूता' इत्यपपाठः ।
८. कोशे 'निराकर्तुमिदं' इत्यपपाठः ।
९. षड् भावविकारा भवन्तीति वार्ष्यायणिः । निरु० १।२।।
१०. मुनिर्यास्कः । ११. कोशे इतोऽग्रे पुनर्नवीना एकादिकाः संख्याः आरभ्यन्ते ।
१२. कोशे 'परस्तात्' इत्यपपाठः । द्र० पूर्वत्र पृष्ठ १७, श्लोक १२४ ॥
१३. कोशे 'प्रवक्षितम्' इत्यपपाठः ।
१४. कोशे 'किमर्थस्तद्' इत्यपपाठः ।
१५. कोशे 'प्रस्तुतस्यै' इत्यपपाठः ।

न द्रव्यं न गुणो भाव[1] इति सत्ताऽभिधीयते ।
स्तम्भकुम्भादयो[3] भावा इत्यादौ द्रव्यमुच्यते ॥५३५॥
द्रव्यमेव तथा भावम् [4]अथापीत्यत्र वक्ष्यति ।
कृदन्ताभिहितो भाव[5] इत्यादावुच्यते क्रिया ॥५३६॥
तथा [6]यावद्भिरित्यादौ क्रियामेव वदिष्यति ।
इह तु द्रव्यमेवोक्तं विकारैस्तस्य सङ्गतेः ॥५३७॥
सत्तायाश्च क्रियायाश्च न विद्यन्ते हि[7] विक्रियाः ।
विकृतं दृश्यते द्रव्यं न सत्ता नाप्यसौ क्रिया ॥५३८॥
भाष्यकारष्षडित्याह[8] विकारान् द्रव्यगोचरान्[9] ।
पाठेनैव तु सिद्धत्वात्सङ्ख्या चेत्स्यादनर्थिका ॥५३९॥
नानर्थिकेति मन्यन्ते षडेवेत्यवधारणात् ।
एतावन्तो विकारास्तु सम्भवन्तीति गम्यते ॥५४०॥
विकाराणां परेषां च तेष्वेवान्तर्गतिस्तथा ।
षडेव वा विकाराः स्युर्न्यूना वाप्यथवाधिकाः[10] ॥५४१॥
बहुत्वं सर्वथैतेषामिष्टमिष्टार्थसिद्धये ।
एकत्वे चैव [11]वैविध्ये विकारस्य समाश्रिते[12] ॥५४२॥
एतेनैव प्रकारेण विक्रियां द्रव्यमाप्नुयात् ।
तथा सत्येकरूपं ते द्रव्यं सर्वं प्रसज्यते ॥५४३॥

---

१. कोशे 'न द्रव्यान्नगुणो' इत्यपपाठः ।

२. 'न द्रव्यं न कर्म न गुणो वा भावः' इति स्कन्दः (स्कन्दस्वामि-निरुक्त टीका प्रथम भाग पृ० २७)।

३. कोशे 'स्तम्भस्तुम्भादयो' इत्यपपाठः । तु० स्कन्दस्वामि-निरुक्तटीका प्रथम भाग पृ० २६ । ४. द्र०—निरु० १।१३।

५. कृदभिहितो भावो द्रव्यवद् अपि क्रियावद् अपि भवति । महाभा० ५।४।१९ ॥

६. द्र० निरु० १।१२—यावद्भिर्भावैः सम्प्रयुज्यते''' ।

७. कोशे 'विधिक्रियाः' इत्यपपाठः ।

८. कोशे 'भाष्यं यष्ष०' इत्यपपाठः । ९. कोशे 'द्रव्यगोचराः' इत्यपपाठः ।

१०. कोशे '०धिका' इत्यपपाठः ।

११. कोशे 'एकत्वे चैव विध्ये च' इत्यपपाठः । १२. कोशे 'समश्रिते' इत्यपपाठः ।

विकृतं बहुधा तच्च प्रत्यक्षेणोपलभ्यते ।
विकारास्तेन लभ्यन्ते नानारूपास्तथैव ते ॥५४४॥
षण्णामुद्देशमाचष्टे [1]जायतेऽस्तीत्यथापरम् ।
एते ते त्विति निर्दिष्टमित्तोति[2] पुनरब्रवीत् ॥५४५॥
एकैकमधुनैतेषां [3]क्रमेणैवाह भाष्यकृत् ।
पूर्वभावादिमाचष्टे [4]जायते त्वित्ययं ध्वनिः ॥५४६॥
भावना भावशब्देन पुरस्तात्प्रतिपादिता ।
षड् भावेतिपुनर्द्रव्यं विकारग्रहणान्मतम् ॥५४७॥
सत्तैवेह बहुव्रीहिर्द्रव्यस्यान्यपदार्थता ।
पूर्वं भावोऽपि यस्य स्यात्पूर्वभावं तदुच्यते ॥५४८॥
भावनाधारभावेन धर्माधारतया तथा ।
धर्मेभ्यः पूर्वभावत्वं भावनायाश्च धर्मिणः ।५४९॥
जाते[5] धर्मिणि धर्माणां भावनायाश्च सम्भवः ।
पूर्वभावं ततो द्रव्यमादिरादानमुच्यते ॥५५०॥
आदानं जायमानत्वं विकारस्त्वाद्य इष्यते ।
द्रव्यस्य जायमानत्वं जायते शब्दबोधितम् ॥५५१॥
न पुनः कथितं साक्षात् तेन साक्षात्क्रियोच्यते ।
अत्रापि प्रत्ययेनोक्ता भावना धातुना जनिः ॥५५२॥
कर्त्तापि [6]प्रत्ययेनैव कर्मभूतस्समर्पितः[7] ।
तस्यैव च प्रयोज्यत्वं कर्मत्वञ्चाप्रसिद्धितः ॥५५३॥

---

१. जायतेऽस्ति विपरिणमते वर्धते ऽपक्षीयते विनश्यतीति । निरु० १।२।
२. भाष्यकारः षड् विकारान् उद्दिश्य वाक्यान्त इतिशब्दं व्याजहारेत्याशयः ।
३. कोशे 'क्रमेणैत्रमाह' इत्यपपाठः ।
४. जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति । निरु० १।२॥
५. कोशे 'जातेर्धर्मिणि' इत्यपपाठः ।
६. कोशे 'कर्त्ता विपत्तये येन व' इत्यपपाठः ।
७. घटो जायत इत्यस्य घडं जन्मना भावयतीत्यर्थोऽभिप्रेयते ।

व्यापारोऽपि प्रयोज्यस्य जननं त्विह गम्यते ।
सिद्धप्रयोजकांशः स्याद् व्यापारो जननस्य तु ॥५५४॥
जनको जायमानश्च सिद्धासिद्धाविहेप्सितौ ।
समूहोऽवयवानाञ्च जनकस्सिद्ध इष्यते ॥५५५॥
अवयव्यप्यसिद्धत्वाज्जायमानोऽभिधीयते ।
अतश्च जायते शब्दाज्जायमानोऽपि गम्यते ॥५५६॥
गम्यमानं ततः प्राह पूर्वभावादिमित्यृषिः[1] ।
न पुनर्जायते शब्दस्साक्षाद्[2] द्रव्यस्य वाचकः ॥५५७॥
आख्यातत्वात् क्रियावाचो निर्णीतं तच्च युक्तितः ।
तथाप्येवंविधं द्रव्यमाख्यातादपि गम्यते ॥५५८॥
विवक्षितं तदेवात्र प्रस्तुतार्थप्रसिद्धये ।
आख्यातगोचरोभावः प्रस्तुतस्साध्यतास्य च ॥५५९॥
द्रव्यस्य विकृतत्वेन स चास्तीत्यवगम्यते ।
स च विक्रियते षोढा तदेतत्प्रतिपद्यते ॥५६०॥
पूर्वभावादिशब्देन जायमानत्वमीरितम् ।
द्रव्यस्य जायमानत्वं विकारो नोपपद्यते ॥५६१॥
न चेद्विकारकः कश्चिदिति कश्चित् प्रकल्प्यते ।
विकारको[3] न चेत्कश्चिद् द्रव्यस्याभ्युपगम्यते ॥५६२॥
विकारा[4] वै गता न स्युर्दृश्यन्ते च स्फुटं हि षट् ।
जननं धारणं चैव विनामो वृद्धिरेव च ॥५६३॥
अपक्षयो[5] विनाशश्च विकारा द्रव्यवर्तिनः ।
स्वात्मक्रियाविरोधाच्च नात्मनस्तद्विकारकम् ।५६४॥
अतो विकारकेणास्य भाव्यमन्येन केनचित् ।
असद्विकारको नापि खपुष्पं न विकारकम् ॥६५५॥

१. कोशे '०मित्युषि' इत्यपपाठः । २. कोशे '०सक्षा द्र०' इत्यपपाठः ।
३. कोशे 'विकारतो' इत्यपपाठः । ४. कोशे 'विकारा व गतो' इत्यपपाठः ।
५. कोशे 'आपक्षयो' इत्यपपाठः ।

अनो [1]विकारकोऽस्त्येव द्रव्यादन्यस्तथैव सः ।
क्रिया सा भावना चैव भावश्चेत्यभिधीयते ॥५६६॥
घटादेर्जायमानस्य मृत्पिण्डान्ननु सम्भवः ।
अतोऽस्य [2]कल्प्यतां हेतुर्द्रव्यमेव न तु क्रिया ॥५६७॥
द्रव्याद् द्रव्यान्तरोत्पत्तिर्निष्क्रियान्नैव युज्यते ।
जायमानं तथा[3] द्रव्यं निष्क्रियं नैव जायते ॥५६८॥
गुणाद् गुणान्तरं चैव [4]सत्क्रियात् सत्क्रियं तथा ।
उत्पद्यते न चेदेवं सदा जायेत नैव वा ॥५६९॥
नोत्पद्यते सदा द्रव्यं कदाचिदुपजायते ।
निमित्तापेक्षिता नैव शश-[शृङ्गस्य युज्यते] ॥५७०॥
मृत्पिण्डादेरतोऽन्योऽस्ति यद्भावे द्रव्यसम्भवः ।
प्रयोजकस्य तं प्राहुर्व्यापारं भावनाविदः ॥५७१॥
वस्तुत्वञ्चेष्यतां तस्य न हि स्यादन्यथा फलम् ।
अवस्तुतः[5] फलोत्पत्तौ सर्वदा किं न जायते ॥५७२॥
निमित्तापेक्षिता नैव शशशृङ्गस्य युज्यते ।
देशकालाद्यपेक्षित्वं[6] वस्तुतस्तूपपद्यते ॥५७३॥
क्रियातोऽपि[7] फलं तेन सर्वदा नोपजायते ।
फलबुद्धेर्न मिथ्यात्वं यतस्सा नैव बाध्यते ॥६७४॥
मिथ्यात्वकल्पनायाञ्च [8]शून्यवादः प्रसज्यते ।
वस्तुभूतस्ततो भावो द्रव्यादन्योऽवगम्यताम्[9] ॥५७५॥

---

१. कोशे 'पि कारको' इत्यपपाठः ।
२. कोशे 'कल्प्यता' इत्यपपाठः ।
३. कोशे 'जायमानस्तथा' इत्यपपाठः ।
४. कोशे 'स क्रिया' इत्यपपाठः ।
५. कोशे 'आवस्तुतः' इत्यपपाठः ।
६. कोशे 'देशकलाद्य०' इत्यपपाठः ।
७. कोशे 'क्रियातोविफलं' इत्यपपाठः ।
८. कोशे 'शून्यपादः' इत्यपपाठः ।
९. कोशे '०पगम्यताम्' इत्यपपाठः ।

अर्थापत्त्यावगम्ये[1] च सम्बन्धग्रहणेन किम् ।
सम्बन्धग्रहणे नित्यमनुमानं प्रवर्तते ॥५७६॥
प्रत्यक्षामपरे[2] प्राहुः परिस्पन्दात्मिकां क्रियाम् ।
व्रजत्येष चलत्येष स्पन्दतेऽसावितीदृशम् ॥५७७॥
चक्षुषा जन्यते ज्ञानं चलने द्रव्यवर्तिनि ।
द्रव्यवर्ति[3] यथा ज्ञानं तद्गुणालम्बिता यथा ॥५७८॥
तथैव [4]चलनसम्बन्धश्चक्षुषा जन्यते स्फुटम् ।
तथा देशान्तरप्राप्तिमवेत्य गतिपूर्विकाम् ॥५७९॥
दृष्ट्वा च केवलामेनां तत्पूर्वामनुमिन्वते[5] ।
एवं प्रत्यक्षताऽप्यस्ति तथैवाप्यनुमेयता ॥५८०॥
प्रत्यक्षा वाऽनुमेया वा यद्वार्थापत्तिगोचरा ।
सर्वथा भावना सिद्धा तावता नः प्रयोजनम् ॥५८१॥
सुखादीव[6] सुखं वेद्या यदि स्यात्किं विरुध्यते ।
सुखिनं दुःखिनं यद्वत् सव्यापारमयं [7]जनः ॥५८२॥
व्याप्रियेऽहमिति ह्येवं प्रायो जानाति सत्क्रियाम् ।
पूर्वभावादिविज्ञानाद्भावनैव समर्थिता ॥५८३॥
नापरं भावामाचष्टे न च तं प्रतिषेधति ।
परेभ्यो दूषणं वक्तुमिदमत्रोच्यते द्वयम् ॥५८४॥
नाचष्टे किञ्च [8]शब्दोऽर्थं विधिरूपेण कश्चन ।
विधिरूपप्रवृत्तश्चेत्[9] सर्वार्थमविशेषतः ॥५८५॥
ब्रूयान्न चैतदस्त्येवम्[10] अतोऽन्यापोहवाचिता ।

---

१. कोशे 'अर्थापत्यवगमे' इत्यपपाठः ।
२. कोशे 'प्रत्यक्षामपरे' इत्यपपाठः ।
३. कोशे 'द्रव्यवर्ती' इत्यपपाठः ।
४. कोशे 'चलनाम्ब०' इत्यपपाठः ।
५. कोशे '०नुमन्वते' इत्यपपाठः ।
६. कोशे 'सुखादिव' इति पाठः ।
७. कोशे 'जनम्' इत्यपपाठः ।
८. कोशे 'शब्दार्थं' इत्यपपाठः ।
९. कोशे '०प्रवृत्तं चेत्' इत्यपपाठः ।
१०. कोशे '०दस्त्येवदतो०' इत्यपपाठः ।

विधिरूपप्रवृत्तोऽपि[1] नान्यमर्थं वदत्ययम् ॥५८६॥
सम्बन्धाभावतस्तेन ब्रूते तं येन सङ्गतः ।
शब्दशक्तेः स्वभावोऽयमुपालम्भो न कस्यचित् ॥५८७॥
प्रवृत्तं हि यथाचक्षुर्द्रव्यञ्च [तत्प्र]बोधयेत् ।
नान्यद् रसादिकं[2] तद्वच्छब्दो नान्यमशक्तितः[3] ॥५८८॥
अन्यापोहनिवृत्त्यर्थं[4] प्रतिषेधेति वर्ण्यते ।
अन्यापोहेऽव्यपेते[5] हि वाच्याभावः प्रसज्यते ॥५८९॥
ततश्च[6] शास्त्रवैयर्थ्यमिति सोऽत्र निवार्यते ।
न[7] तावज्जायतेशब्दादन्यापोहः प्रतीयते ॥५९०॥
इयद् वस्तुत पूर्वं तत्........................ ।
अन्यापोहाभिधायित्वमाख्यातस्य विशेषतः ॥५९१॥
न [8]शक्यं वक्तुमित्येवमिहासौ विनिवार्यते ।
न जायते प्रयोगस्तु दुष्टत्वान्नोपपद्यते ॥५९२॥
ननेत्याख्यायमानेऽपि पूर्वमेवावतिष्ठते ।
जायते त्विति पर्यायो[9] ननेत्येतदनर्थकम् ॥५९३॥
अनेनैव[प्रका]रेण नाम्नां नापोहसम्भवः ।
अपोह्येऽपोहिते[10] चैव भिन्नेऽपोहः प्रवर्तते ॥५९४॥
न भिन्नमस्ति वस्त्वेवम् अस्ति चेत्किमपोहते ।
स्वार्थो वाप्यथवाऽन्यार्थः स्वार्थश्चेन्नैव युज्यते ॥५९५॥
स्वार्थो हि नाम स्वस्यार्थस्स्वेनोक्तोऽपोह्यते[11] कथम् ।
अथ चेत्स्वेन नैवोक्तस्स्वार्थताऽस्य न विद्यते ॥५९६॥

---

१. कोशे 'प्रवित्तोपि' इत्यपपाठः ।
२. कोशे 'रसादिकस्त०' इत्यपपाठः ।
३. कोशे '०छब्देना०' इत्यपपाठः ।
४. कोशे '०पोहतिवृ०' इत्यपपाठः ।
५. कोशे '०पोहव्यपेते' इत्यपपाठः ।
६. कोशे 'तत्वश्च' इत्यपपाठः ।
७. कोशे 'ततावज्जायते' इत्यपपाठः ।
८. कोशे 'शक्तं' इत्यपपाठः ।
९. कोशे 'पर्याय•••तने०' इत्यपपाठः ।
१०. कोशे 'आपोह्यपोहते' इत्यपपाठः ।
११. कोशे '०स्वेहो०' इत्यपपाठः ।

प्रतीयते हि यो यस्मात् स तस्यार्थं इति स्थितिः ।
गोशब्देनोच्यते गोत्वं तच्छ्रुतौ तत्प्रतीयते ॥५९७॥
गौरित्याकर्णिते[1] शब्दे नागौर्नेति मतिस्ततः[2] ।
गौरित्युक्तमतो गोत्वं न तु गौरित्यपोह्यते ॥५९८॥
शब्दान्तराश्रुतेश्चैव नान्योऽर्थो बुद्धिमागतः ।
अप्राप्तस्य निषेधोऽपि नियुक्तिरफलस्तथा ॥५९९॥
अर्थान्तरस्य सम्प्राप्तिः सामर्थ्यान्नापि विद्यते ।
अर्थान्तरस्य सम्प्राप्त्या[3] विना किं नात्र सिद्ध्यति ॥६००॥
अगोव्यावृत्तता[4] गोत्वस्वभावेनैव निश्चिता ।
स्मार्यते गोपदेनाथ सैव नैतदसङ्गतेः ॥६०१॥
स्मार्यते सङ्गतेर्गोत्वं तावता स्यात्[5] कृतार्थता ।
अगोव्यावृत्तता चापि [6]कस्यार्थस्येह कथ्यताम् ॥६०२॥
अगोशब्दाभिधेयश्च कोऽर्थो योऽत्र निवर्त्यते ।
दुर्निरूप्यमिदं तावत् त्वया वाच्यमनिच्छता ॥६०३॥
अन्यव्यावृत्तिरेवार्थोऽप्यवृत्तो नावगम्यते ।
न ह्यशब्दाभिधेयस्स[7] दुर्निरूपत्वसाम्यतः ॥६०४॥
व्यावृत्तेरप्यभावत्वे वस्तुत्वे च समाश्रिते[8] ।
शाबलेयाद्यसम्बन्धः [9]कर्त्रादिव्यक्तिभिर्यथा ।६०५॥
ततश्च शाबलेयादौ[10] कर्त्रादाविव नोभये ।
गौरित्येकविधं ज्ञानं जायते तच्च निश्चितम् ॥६०६॥

---

१. कोशे 'गौरित्याकर्णते' इति पाठः । २. कोशे 'मतिस्तुतः' इत्यपपाठः ।
३. कोशे 'सम्प्राप्या' इत्यपपाठः । ४. कोशे 'अगोय्यावृत्तता' इति पाठः ।
५. कोशे 'तावतास्या कृतार्थता' इत्यपपाठः । ६. कोशे 'तस्या०' इति पाठः ।
७. कोशे '०भिधेयस्य दु०' इत्यपपाठः । ८. कोशे 'समश्रिते' इत्यपपाठः ।
९. कोशे '०सम्बन्धकर्तीभिव्यक्तिभि०' इत्यपपाठः ।
१०. कोशे 'कर्तादा०' इत्यपपाठः ।

अश्वादिव्यक्तितस्तस्माद् व्यावृत्तं वस्तु किञ्चन ।
खण्डाद्यनुगतं वाच्यं गौरित्यस्याभ्युपेयताम् ॥६०७॥
शून्यवादप्रकारोऽयमपरोऽपोहरूपकः ।
यथेष्टं शक्यते वोढुं नात्र तात्पर्यमस्तु नः ॥६०८॥
अतो दिङ्मात्रमेवोक्तं[1] प्रस्तुतार्थप्रसिद्धये ।
अपोहापोहतात्पर्यं प्रस्तुतं [2]विप्रकर्ष्यते ॥६०९॥
उत्पन्नस्य[3] तु सत्त्वस्य निष्पन्नस्यावधारणम्[4] ।
अस्तिशब्दस्तथाचष्टे[5] नान्यन्न प्रतिषेधति ॥६१०॥
अस्तिशब्दप्रयोगेऽपि धारणं धारणा तथा ।
लक्ष्यते धारणेनैव धारणाऽपीति नेरितम् ॥६११॥
धातुस्तु धारणं प्राह धारणां प्रत्ययस्तथा ।
बिभर्त्यात्मानमित्यर्थस्त्वस्तिशब्दात्[6] प्रतीयते ॥६१२॥
बिभर्त्येव तथात्मानं न चेन्नश्येत् क्षणेन सः ।
आत्मैव[7] कर्म कर्तापि भवेदंशेन केनचित् ॥६१३॥
धारणं कर्मभूतस्य कर्तृभूतस्य धारणात् ।
द्वैरूप्यमपि सत्त्वस्य सामर्थ्येनावगम्यते ॥६१४॥
स्वात्मन्यपि[8] क्रिया सेयमीदृशी न विरुध्यते ।
प्रमाणेनोपलब्धत्वात् सद्भावस्य च हेतुतः ॥६१५॥
हेतुर्यो[9] यस्य सद्भावे नासौ तस्मिन् विरुध्यते ।
जनिरेव न सद्भावे कारणं धारणं तथा ॥६१६॥
स्थिरत्वं वस्तुनो दृष्ट्वा कारणं तस्य कल्प्यते ।
तदेव धारणं तस्य क्रिया सैवानुमीयते ॥६१७॥

---

१. कोशे '०मेवेक्त' इत्यपपाठः । २. कोशे 'विप्रकर्थ्यते' इत्यपपाठः ।
३. अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् । निरु० १।२॥
४. कोशे '०वधारम्' इत्यपपाठः । ५. कोशे '०शब्दं तथा०' इत्यपपाठः ।
६. कोशे 'त्यर्थः स्वस्ति०' इत्यपपाठः । ७. कोशे 'आत्मेव' इत्यपपाठः ।
८. कोशे 'स्वात्मन्यविक्रिया' इत्यपपाठः । ९. कोशे 'हेतुर्ये' इत्यपपाठः ।

अस्त्यात्माकाशमित्यादौ[1] ननु नैव क्रियेष्यते ।
इष्यते त्वथ तत्रापि नित्यताऽस्य विरुध्यते ॥६१८॥
आख्यातपदवाच्या हि परिस्पन्दात्मिका क्रिया ।
विकृतञ्च तया वस्तु नित्यं नैवास्ति किञ्चन ।६१९॥
अस्तिशब्दाभिधेयाथ निश्चलैव भविष्यति ।
पौर्वापर्यविनिर्मुक्ता सा वात्मस्थितिकारणम् ॥६२०॥
पौर्वापर्यविनिर्मुक्तिर्नाख्यातार्थस्य युज्यते ।
उपक्रमापवर्गोक्तेर्विना[2] ताभ्यां न च क्रिया ॥६२१॥
द्वैविध्यादस्तिशब्दस्य दोषोऽयमव [न]श्यति[3] ।
आख्यातञ्च निपातश्च स्मर्यतेऽस्तीति लोकतः ॥६२२॥
तत्राख्यातं[4] क्रियामाह सत्तामाहापरस्तथा[5] ।
अस्त्या[त्मा]काश इत्यादौ सत्तैवोक्ता न तु क्रिया ॥६२३॥
सर्वथा नास्ति मे [6]पुत्रो नास्तित्वं [7]चास्तितेत्यपि ।
निपातस्य प्रयोगो हि दृश्यते शिष्टसम्मतः ॥६२४॥
अनाख्यातमिदं तावद् भावप्रत्ययदर्शनात्[8] ।
कस्यचिन्न च नामेदं नोपसर्गेषु पठ्यते ॥६२५॥
पारिशेष्यान्निपातोऽयं [9]नाख्यातस्यैवमात्मता ।
अव्ययस्य[10] निपातत्वं [11]सव्ययस्य तिङन्तता ॥६२६॥

---

१. कोशे 'अस्त्यात्मकाश०' इत्यपपाठः ।

२. पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् । निरु० १।१॥

३. कोशे 'ष्यति' पाठः ।

४. कोशे 'तत्राख्यात क्रिया०' इत्यपपाठः ।

५. अपरो निपात इत्यर्थः ।

६. कोशे 'पुत्रान्ना०' इत्यपपाठः ।

७. कोशे 'चास्तीने०' इत्यपपाठः ।

८. कोशे '०प्रत्यदर्शनात्' इत्यपपाठः । अस्तित्वमस्तितेत्यत्र भावप्रत्ययदर्शनादित्यर्थः ।

९. कोशे 'व्याख्यात०' इत्यपपाठः ।

१०. रूपान्तरत्वमप्राप्तस्येत्यर्थः । व्ययः=रूपान्तरप्राप्तिः, स यस्मिन्नास्ति ।

११. रूपान्तरत्वं प्राप्तस्येत्यर्थः । अयं भावः—योऽयम् 'अस्ति' शब्दः सर्वेषु कालेषु

अत्राख्यातमभिप्रेतं तस्यैव प्रत्ययत्वतः ।
क्रियैव तस्य व्याख्येष्टा पौर्वापर्यसमन्विता ॥६२७॥
पौर्वापर्यविनिर्मुक्ता क्रियेष्टा नित्यवस्तुनि ।
यादृशी हि क्रिया यस्य सम्भवेत्तस्य तादृशी ॥६२८॥
परिस्पन्दात्मिकां यद्वदर्थापत्त्याऽवगम्यते ।
विपरीता तथैवेति विरोधः कोऽत्र कथ्यताम् ॥६२९॥
परिस्पन्दात्मिकैवेष्टा [1]विरुद्धा त्वात्मनि क्रिया ।
वस्तुसद्भावहेतुत्वादविरुद्धे तदा स्फुटम् ॥६३०।
अवधारणशब्देन सैवेह त्वत्रभासिता[2] ।
अस्त्यात्मा विद्यते चेति निश्चलैवाभिधीयते ॥६३१॥
जानात्यात्मेति[3] सर्वोक्ता क्रिया ज्ञानात्मिका तथा ।
साऽपि नानित्यहेतुस्स्यात् परिस्पन्दात्मिकैव हि ॥६३२॥
पदार्थानामनित्यत्वे कारणत्वेन सम्मता ।
एवमेवाभ्युपेतव्यमन्यथा शून्यवादिता ॥६३३॥
अपरिस्पन्दरूपापि क्रिया ज्ञानात्मिका मतिः ।
ज्ञेयभेदाव्यवच्छेदात्[4] [पौर्वापर्यात्मि]कैव वा ॥६३४॥
ज्ञेयतो [हि] व्यवस्थानं पौर्वापर्यात्मकं मतम् ।
ज्ञातृत्वं ज्ञेयता[5] चैव नानित्यत्वस्य कारणम् ॥६३५॥
अपरिस्पन्द एवायं वेत्ति वेद्यं यथास्थितम् ।
तस्मान्न नाशहेतुस्स्याद् वेत्तुर्वेद्येषु[6] वेदनम् ॥६३६॥

---

सर्वेषु वचनेषु पुरुषेषु च इत्थमेव (रूपान्तरप्राप्ति विना) श्रूयते तस्य निपातता ज्ञेया । यस्य तु अस्ति स्तः सन्ति इत्येवं रूपान्तरप्राप्तिर्दृश्यते तस्य तिङन्तता ज्ञेया ।

१. कोशे 'विरुद्धास्वात्मनिष्क्रिया' इति पाठः ।

२. कोशे 'सैवेहत्व भवत्सिता' इत्येवं पाठः ।

३. कोशे '०मेति ता सर्वो०' इत्यपपाठः ।

४. कोशे '०छेद……कैव' इत्यपपाठः ।

५. कोशे 'ज्ञायता' इत्यपपाठः ।

६. कोशे '०वेदेषु' इत्यपपाठः ।

एवमेवाभ्युपेतव्यमन्यथा शून्यवादिता ।
उत्पन्नो[1] विभुरात्मा न वस्त्वस्तीत्यवगम्यते ॥६३७॥
देशकालान्तरस्थत्वे[2] तदेवेत्यवधार्यते ।
तदेवेदमिति[3] ज्ञानं स्थिरे वस्तुनि युज्यते ॥६३८॥
अदृष्टकारणोत्पत्तेरबाध्यत्वादसंशयात् ।
न विज्ञानमिदं मिथ्या मिथ्या त्वेतद्विलक्षणम् ।६३९॥
तदेतदिति विज्ञानं पुरोवर्तिनि वस्तुनि ।
गृहीते गृह्यमाणे स्यादिति वस्तु स्थिरं भवेत् ॥६४०॥
अन्यथा तत्तदित्येव स्मृतिरेवोपजायते ।
अपूर्वञ्चेदमित्येव नैतत्[4] स्यादनुसन्धितः ॥६४१॥
तदेवेदमिति ज्ञानमनुसन्धानलक्षणम् ।
सर्वस्यैव स्वयं वेद्यं नेति वाङ्मात्रमुच्यते ॥६४२॥
नन्वेतच्चैतदेव स्याद् भवेत्तच्च तथैव तत् ।
नैकत्वेनोपलब्धत्वात् किञ्चिद्भिन्नमपीष्यते ॥६४३॥
नानुसन्धानविज्ञानं यत्र तत्रेति गम्यताम् ।
पूर्वदृष्टस्य यस्यैव ग्रहणं जायते पुनः ॥६४४॥
अनुसन्धानविज्ञानं[5] तत्रैवेति विनिश्चितम् ।
वस्तुनः पूर्वदृष्टस्य देशकालान्तरादिभिः ॥६४५॥
विशिष्टत्वेन विज्ञानमपूर्वत्वात् स्मृतिर्न नः ।
प्रत्यभिज्ञेति तत्प्राहुः प्रमाणं सा दृढत्वतः[1] ॥६४६॥
व्यक्तयश्च स्थिराः काश्चित् प्रत्यक्षज्ञानगोचराः ।
स्थिरत्वं प्रत्यभिज्ञानादिति युक्त्याऽवधारितम् ॥६४७॥

---

१. कोशे 'उत्पन्नं विभुमात्मानं वस्तु स्त्रीत्यगम्यते' इत्यपपाठः ।
२. कोशे '०स्थत्वं तदेवेत्यधार्यते' इत्यपपाठः ।
३. कोशे 'ज्ञान स्थिरे वस्तु नियुज्यते' इत्येवमपपाठः ।
४ कोशे 'नैतस्या०' इत्यपपाठः ।　५. कोशे '०विज्ञानः' इत्येवं पाठः ।
१. कोशे 'दृढस्त्वतः' इत्यपपाठः ।

तास्वप्यनुगता जातिः प्रत्यक्षेणानुभूयते ।
प्रतिव्यक्त्यभिविज्ञानं[1] गौगौरित्युपजायते ॥६४८॥
एकाकारं दृढञ्चैव सा तस्यालम्बनं भवेत् ।
एकाकारं हि विज्ञानं एकमेवावलम्बते ॥६४९॥
नानाकारं तथानेकमिति सिद्धं स्वभावतः ।
न विनालम्बनेनापि विज्ञानमुपजायते ॥६५०॥
वेदालम्बनञ्च.................सर्वत्र जायताम् ।
व्यापारे चक्षुरादीनामर्थेषु मनसस्तथा ॥६५१॥
विज्ञानं जायते नित्यं न निरालम्बनं तथा ।
स्वप्नादावपि विज्ञानं नासत्यालम्बने भवेत् ॥६५२॥
कालान्तरानुभूतं हि तत्रेष्टं ज्ञानकारणम् ।
कारणस्य तदिष्टत्वान्मिथ्यात्वं तस्य चेष्यते ॥६५३॥
ग्राह्यांशाद् ग्राहकांशस्य भेदः स्पष्टं प्रतीयते ।
तत्र यो गृह्यते सोऽर्थो ग्राहकं ज्ञानमुच्यते ॥६५४॥
विज्ञानस्य स्वभावो यद् ग्राह्यमेवावलम्बते ।
विज्ञानस्य स्वभावोऽयं न चेदभ्युपगम्यते ॥६५५॥
असत्यन्यादृशोपाये वस्तुतत्त्वं तु[2] दुर्लभम् ।
यद्यथा दृश्यते वस्तु तत्तथेति विनिश्चयः ॥६५६॥
बह्वीष्वतोऽपि भिन्नासु व्यक्तिष्वेकं व्यवस्थितम् ।
दृढैकज्ञानगम्यत्वाद् वस्त्वस्तीत्यवगम्यताम् ॥६५७॥
दृढं चैकविधं ज्ञानं सर्वस्यैवोपजायते ।
यस्यालम्बनभूतञ्च वस्तुसामान्यमुच्यते ॥६५८॥
आकृतिर्वाऽपि जातिर्वा यद्वान्यदिति कथ्यताम् ।
सर्वस्य तत्स्वसंवेद्यं व्यवहारस्तदाश्रयः ॥६५९॥

---

१. कोशे 'प्रतिव्यक्त्यभिविज्ञाने गोगोरित्युपजायते' इति पाठः ।

२. कोशे 'न' इत्यपपाठः ।

नित्यञ्च सर्वगञ्चैव व्यज्यते व्यक्तिभिस्तथा ।
व्यञ्जिकाः[1] काश्चिदेव स्युस्सर्वगस्यापि वस्तुनः ॥६६०॥
शक्तिर्व्यवस्थिता तासां कार्यभेदेन गम्यते ।
ताभ्यश्चात्यन्तभिन्नं[2] तद्भिन्नाभिन्नमथापि वा॥६६१॥
यथेष्टमुच्यतां व्यक्तं सत्ताया नः[3] प्रयोजनम् ।
सत्सदित्येव सत्तापि सद्बुद्ध्यैवावगम्यते ॥६६२॥
द्रव्यादिव्यतिरिक्ता च तेष्वेवावस्थिता तथा ।
शुक्लादिर्मार्दवादिश्च[4] व्यक्तिस्थो दृश्यते गुणः ॥६६३॥
एषां प्रत्यक्षदृश्यानां निषेधो नोपपद्यते ।
दृष्टो वाप्यथवाऽदृष्टो [5]निषेध्यः कोऽत्र कथ्यताम् ॥६६४॥
दृष्टया तावद्विरुद्धत्वाद् दृष्टस्यासौ [6]न युज्यते ।
दृष्टो न दृष्ट इत्येवं तत्स्ववाचा विरुध्यते ॥६६५॥
इदानीमथवाऽस्तीति न सत्ता जातिभावतः ।
देशकालान्तरस्थत्वाद् व्यक्तिर्याप्यवगम्यते ॥६६६॥
निषेद्धुं साप्यशक्यैव तथा दृष्टत्वहेतुतः ।
नात्यन्तं[7] कस्यचिन्नाशो रूपान्यत्वसमाश्रयात् ॥६६७॥
उपलब्धमतो वस्तु निषेद्धुं नोपपद्यते ।
अदृष्टं[8] चाप्यशक्यत्वादतोऽस्तीत्युपपद्यते ॥६६८॥
उत्पन्नस्यैव तत्त्वस्य तथात्मानञ्च बिभ्रतः ।
धर्मिणः परिणामोऽपि स्थितस्यैवेति कथ्यते ॥६६९॥
पूर्वावस्थापरित्यागे योऽवस्थान्तरसङ्ग्रहः ।
तमप्रच्यवमानस्य तत्त्वादात्मस्वभावतः ॥६७०॥

---

१. कोशे 'व्यञ्जिका काश्चिव' इत्यपपाठः ।
२. कोशे '०भिन्न' इत्यपपाठः ।
३. कोशे 'सत्तायातः' इत्यपपाठः ।
४. कोशे 'शुका०' इत्यपपाठः ।
५. कोशे 'निषेध्या कोत्र' इति पाठः ।
६. कोशे 'नियुज्यते' इत्यपपाठः ।
७. कोशे 'नास्त्यन्तं' इत्यपपाठः ।
८. कोशे 'अदृष्टत्वाप्यशक्यत्वाद्' इत्यपपाठः ।

विपरिभ्यामुपेतोऽयं[1] नमिराख्याततां गतः ।
आचष्टे धर्मिणस्तस्य विकारमपि नश्यतः ॥६७१॥
तत्त्वादच्यवमानत्वं धर्मिणः प्रत्यभिज्ञया ।
प्रत्यभिज्ञायते धर्मी सोऽवस्थामपरां गतः ॥६७२॥
दृष्ट्वा बाल्यं नरं पश्चात् प्राप्तयौवनमागतम् ।
दृष्ट्वा प्रत्यभिजानीते स एवायमिति स्फुटम् ॥६७३॥
वृद्धत्वञ्चापि सम्प्राप्तं स एवेत्यध्यवस्यति ।
कालान्तरे[2] तथा दृष्ट्वा पुत्रो [3]मेऽस्तीति हृष्यति ॥६७४॥
सादृश्येऽप्रत्यभिज्ञाते[4] त्यजेदन्योऽयमित्यपि ।
परकीयं तथात्मीयं प्रत्यभिज्ञायते सदा ॥६७५॥
पूर्वदृष्टं पुनर्दृष्टम् आत्मीयं वा तदेतरत् ।
बौद्धा[5] एव न जानन्ति जानन्ति पशवोऽपि तत् ॥६७६॥
पशवः पुत्रमात्मीयं प्रत्यभिज्ञाय तत्त्वतः ।
पाययन्ति स्तनं नान्यं लिहन्ति स्नेहतस्तथा ॥६७७॥
अपघ्नन्ति तथा वाऽन्यं भ्रान्त्या वत्सं समागतम् ।
स्ववासं परवासञ्च ज्ञात्वा यान्ति स्वकं गृहम् ॥६७८॥
मनुष्याश्च तथा सर्वे विज्ञायैव हि तत्त्वतः ।
प्रवर्तन्ते सुखेष्वेव निवर्तन्ते च दुःखतः ॥६७९।
वाङ्मात्रेणैव ते[5] प्राहुरर्थानां क्षणभङ्गिता ।
कर्मणा मनसा चैव स्थिरत्वं बोधयन्ति नः ॥६८०॥
तेषामाचरणादेव लक्ष्यते मनसो [6]गतिः ।
आचरन्ति हि तेऽप्येवं यथाऽन्ये स्थैर्यवादिनः ॥६८१॥

---

१ विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद् विकारम् । निरु० १।२॥
२. कोशे 'कावान्तरे' इत्यपपाठः
३. कोशे 'मेतीति' इत्यपपाठः ।
४. कोशे 'सादृश्य प्रत्यभिज्ञात' इत्यपपाठः ।
५. बौद्धाः क्षणिकत्ववादिनः ।
६. कोशे 'गति' इत्येवमपपाठः ।

आविर्भावतिरोभा धर्मेष्वप्यनुयायिनः[1] ।
प्रत्यभिज्ञायमानस्य धर्मित्वमनुगम्यताम्[2] ॥६८२॥
पयो दधि तथा तक्रमवस्था गोरसस्य[3] हि ।
अतो न धर्मिनाशः स्याद् गोरसस्तत्र[4] सङ्गतः ॥६८३॥
आविर्भावतिरोभावौ धर्माणामेव धर्मिणि ।
तेषामपि न नाशित्वं गृह्यन्ते ते यतः पुनः ॥६८४॥
केचित्तत्रैव गम्यन्ते केचिद्धर्म्यन्तरे तथा ।
तत्रान्यत्र च गृह्यन्ते केचिद्धर्मास्तु धर्मिणि[5] ॥६८५॥
पुनश्च गृह्यमाणत्वाद्धर्माणां स्थिरता तथा ।
किं पुनर्धर्मिणस्तस्य सर्वदा यः[6] प्रतीयते ॥६८६॥
सर्वेष्वेव पदार्थेषु क्षणिकेषु स्वभावतः ।
व्यवहारो न युज्येत लौकिको वैदिकस्तथा ॥६८७॥
विज्ञानमात्रपक्षेऽपि बाह्यार्थाभाववादिनः ।
बुद्धाद्यभावतस्त्वेवं[7] तन्मतस्य परिग्रहः ॥६८८॥
स्वपक्षं परपक्षञ्च विज्ञायात्मीयसङ्ग्रहः ।
परपक्षनिरासश्च[8] तथा तस्योपपद्यते ॥६८९॥
यस्य [बाह्या]र्थशून्यं हि ज्ञानं स्वांशं प्रपद्यते ।
स बाह्यमर्थमज्ञात्वा कथं तं प्रतिषेधति ॥६९०॥
स्वांशमात्रप्रसिद्धत्वाद् व्यतिरिक्तमजानतः[9] ।
उपादित्सा जिहासा वा न घटामभ्युपैति ते ॥६९१॥

---

१. कोशे '०धर्मेष्वनुयायिनः' इत्यपपाठः । २. कोशे '०मनुगम्यता' इत्येव पाठः ।
३. कोशे 'गोचरस्य' इति पाठः । अत्र उत्तरार्धे 'गोरस' शब्दः पठ्यते ।
४. कोशे '०रसस्तान्न' इत्यपपाठः । ५. कोशे 'धर्मिणी' इत्यपपाठः ।
६. कोशे 'या' इत्यपपाठः ।
७. तथागतस्य बुद्धस्याभावात् तत्प्रोक्तमतस्य परिग्रहो न युज्यत इत्यभिप्रायः ।
८. कोशे '०निरासञ्च' इत्यपपाठः । ९. कोशे 'व्यक्तिरिक्त०' इत्यपपाठः ।

दृश्यते तेऽपि [धर्मोऽयं ते] न ज्ञानं न केवलम् ।
अर्थश्चैव[1] तथा ज्ञानं भेदेनैवोपलभ्यते ॥६९२॥
विज्ञाने[2] नीलपीतादिप्रकारैरनुरञ्जितः ।
स्तम्भकुम्भादिको ह्यर्थो ज्ञानादन्यः[3] प्रतीयते ॥६९३॥
न[4] हि नेत्रादिकं किञ्चिद् दृष्टं ग्राहकमात्मनः ।
दीपस्य स्वप्रकाशत्वात्[5] प्रकाशापेक्षिता न हि ॥६९४॥
प्रकाशापेक्षिता तस्य यस्य तच्छून्यता[6] स्फुटा ।
स्तम्भकुम्भादिभावादेः[7] प्रकाशरहितत्वतः ॥६९५॥
प्रकाशापेक्षिता दृष्टा न तु[8] दीपस्य तत्त्वतः ।
तस्मात्प्रकाशयेन्नैव दीपः स्वात्मानमात्मना ॥६९६॥
अन्येन ग्राहयेत्सोऽपि स्वात्मानं चक्षुषा स्फुटम् ।
प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिस्तथा[9] ॥६९७॥
भिन्ना एव प्रतीयन्ते नैक्यमेषां प्रदृश्यते ।
छेत्ता[10] छेद्यं छिदा चैवच्छेदनं च यथा पृथक् ॥६९८॥
गृह्यन्ते लौकिकैस्तद्वत् प्रमामात्राद्यसंशयम् ।
केचिदत्यन्तभिन्नत्वं धर्माणां धर्मिणो विदुः ॥६९९॥
भिन्नाभिन्नत्वमप्यन्ये यथेष्टं परिकल्प्यताम् ।
नाभिन्नं[11] भिन्नमेवेति राजाज्ञा श्रुतिरेव वा ॥७००॥
अभिन्नं च तथा भिन्नमिति न्यायोऽपि वा तथा ।
भेदबुद्धौ च भिन्नत्वमभिन्नत्वं विपर्यये ॥७०१॥

---

१. कोशे 'अ······ञ्चव' इति क्षतः पाठः ।
२. कोशे 'तज्ज्ञानं अनीलपीतादि राकारैरनुरञ्जिताः' इति पाठः ।
३. कोशे 'ज्ञानादन्यत्' इति पाठः ।
४. कोशे 'तस्या' इति पाठः ।
५. कोशे 'दीपस्य तु प्रकाश्यत्वात्' इति पाठः ।
६. कोशे 'तच्छूता' इत्यपपाठः ।
७. कोशे '०भावादि' इत्यपपाठः ।
८. कोशे 'तद्दीपस्य' इति पाठः ।
९. कोशे 'प्रमितस्तथा' इत्यपपाठः ।
१०. कोशे 'हेत्ता हेद्यञ्जिद···चेव' इत्यपपाठः ।
११. कोशे 'न भिन्नं' इति पाठः ।

भेदाभेदेन[1] लब्धौ च भिन्नाभिन्नं भविष्यति ।
केनचित्तत्प्रकारेण सर्वस्यैवेह वस्तुनः ॥७०२॥
भिन्नाभिन्नत्वमस्त्येव ज्ञेयत्वव्यक्तिभावतः ।
नापि नाजन्मनाशाभ्यां परिणामोऽस्य विद्यते ॥७०३॥
उत्तरा[2] जायतेऽवस्था तथा पूर्वा विनश्यति ।
अयमेव विकारोऽस्य परिणामोऽभिधीयते ॥७०४॥
यदैको जायते धर्मस्तदान्योऽस्य विनश्यति ।
आद्यन्ताभ्यामभिन्नो नः परिणामः प्रतीयते ॥७०५॥
वृद्धिश्चैव क्षयश्चैव भेदो नास्योपलभ्यते ।
तयोरन्यतरस्त्यागस्तथैवान्यतरो ग्रहः ॥७०६॥
परिणामात् कथं भिन्नः परिणामोऽथवा ततः ।
जन्मप्रभृति[3] चात्मानं प्राग्विनाशं बिभर्त्यसौ ॥७०७॥
पञ्चभ्यो नातिरेकोऽतः परिणामस्य दृश्यते ।
वृद्धिक्षयौ न भिद्येते[4] ......ता जन्मविनाशतः ॥७०८॥
तयोरन्यतरोत्पत्तिर्विनाशोऽन्यतरस्य हि ।
जन्मन्यपि तथा नाशो धारणञ्चापि धर्मिणः ॥७०९॥
पिण्डनाशे [5]घटोत्पत्तिः स आत्मानं बिभर्ति च ।
एवं सङ्कीर्णरूपत्वान्नैषां बोधोऽवधार्यते ॥७१०॥
अत्रोच्यते यथा भेदः स्पष्ट एषां भविष्यति ।
धर्मिणो जन्मनाशौ[6] हि [7]जन्मनाशाविहेप्सितौ ॥७११॥
न नाशो नैव जन्मास्ति परिणामे तु धर्मिणः ।
जातस्तु धारयेद्धर्मी स्वात्मानमवतिष्ठते ॥७१२॥

---

१. कोशे 'भेदाभेदे...लब्धौ' इति त्रुटितः पाठः ।
२. कोशे 'उकरा' इत्यपपाठः ।
३. कोशे 'जन्म प्रकृति' इति पाठः ।
४. अत्र कदाचित् 'तथा जन्मविनाशतः' पाठः स्यात् ।
५. कोशेऽत्र 'घटोत्पत्ति.....त्मानं विभर्ति च' इत्येवं भ्रष्टः पाठः ।
६. कोशे 'जन्मनाशो' इति पाठः ।
७. कोशे 'जन्मनशा०' इत्यपपाठः ।

आविर्भवति तत्रैके तिरोभावो[1] विरोधिनाम् ।
युगपन्नह्युपस्थानमेकत्रास्ति[2] विरोधिनाम् ॥७१३॥
युगपच्चाभ्यवस्थानं शक्तिरूपेण धर्मिणि[3] ।
एकत्रापि विरुद्धानां धर्माणां न विरुध्यते ॥७१४॥
आविर्भावतिरोभावौ शक्तिरूपेण तिष्ठताम् ।
अन्यथा जन्मनाशौ[4] हि ततो दृष्टेः पुनः पुनः ॥७१५॥
जन्मनाशौ न धर्माणां दृश्यन्ते ते यतः पुनः ।
आविर्भावस्ततस्तेषां तिरोभावस्तथा सताम् ॥७१६॥
अतश्च धर्मिणो जन्म नाशः कालान्तरे तथा ।
न जातं जायते किञ्चिन्नष्टं नैव विनश्यति ॥७१७॥
जातस्य धर्मिणस्तस्मात् चिरस्य[5] परिणामिता ।
स्थिरत्वादस्तिशब्दार्थो[6] विद्यते न तु भाषितः ॥७१८॥
तत्त्वात्प्रच्यवमानत्वम् अत एवोपपद्यते ।
तदित्यभिहितो धर्मो[7] तद्भावस्तत्त्वमुच्यते ॥७१९॥
तद्भावमात्मनो भावमात्मसत्तामुञ्चतः ।
पूर्वधर्मपरित्यागादन्यधर्मपरिग्रहः ॥७२०॥
धर्मिणः परिणामोऽयं न नाशो नापि जन्म तत् ।
निरन्वयविनाशित्वे निरन्वयविनाशिता ॥७२१॥
ज्ञायते कथमर्थानां निरन्वयविनाशिता ।
उत्पन्नं यद्यदा किञ्चिद् गृहीतं येन तत्तथा ॥७२२॥
तदैव तद्द्वये नष्टे कस्य[8] सा नष्टधीर्वद ।
अथ त्वमेव जानीषे नष्टमन्यच्च साम्प्रतम् ॥७२३॥

१. कोशे 'तिरोभावे' इत्यपपाठः । २. कोशे 'युगपन्नहुपस्थामेक०' इत्यपपाठः ।
३. कोशे 'धर्मिणी' इत्यपपाठः । ४. कोशे 'जन्मनाशो' इत्यपपाठः ।
५. कोशे 'सुचिरस्य' इत्यपपाठः । ६. कोशे '०शब्दोर्थो' इत्यपपाठः ।
७. कोशे 'धर्मं' इत्यपपाठः । ८. कोशे 'तस्य' इत्यपपाठः ।

असंशयमनष्टोऽसि द्वयमेवं परामृशेः[1] ।
तदेवेदमिति[2] ज्ञानात् त्वमिवानष्टमेव तत् ॥७२४॥
स एव मम शिष्योऽसि स एवाहं गुरुस्तव ।
एवं प्रत्यभिजानीषे [3]शिष्यमात्मानमेव च ॥७२५॥
एवं [4]प्रत्यभिज्ञातस्त्वं जगतो विप्रलम्भ[क] ।
क्षणिक[5] त्वं दुष्टश्चोरवद् दण्डमर्हसि ...... ॥७२६॥
क्षणभङ्गि जगत्सर्वमित्येवं निश्चयो यदि ।
हिताहितफलप्राप्तिपरिहारौ[6] न सिध्यतः ॥७२७॥
प्रवृत्तिश्च[7] तदर्थैव सर्वस्यैवोपलभ्यते ।
तस्मान्न क्षणिकं सर्वं क्षणिकं किञ्चिदेव तु ॥७२८॥
वृद्धिक्षयविनिर्मुक्तविकारप्रतिपत्तये ।
कृकलासो[8] हि दृष्टान्तो वाच्यः संशयवर्जितः ॥७२९॥
कृकलासो यदा रूपं पूर्वं त्यक्त्वा परं व्रजेत् ।
न वर्धते तदा तावत् क्षीयते नाप्यसौ तदा ॥७३०॥
वृद्धावपक्षये चैव परिणामोऽस्तु यद्यपि ।
अभावेऽपि तथा दृष्ट इति ताभ्यां विलक्षणः ॥७३१॥
गतौ चैव स्थितौ चैव त्वासने शयने तथा ।
न वर्धते शरीरं हि क्षीयते नापि तत्तदा ॥७३२॥
कुण्डलाद्यास्ववस्थासु तावानेव तथा फणी ।
अतो वृद्धिक्षयादन्यः[9] परिणामोऽवगम्यते ॥७३३॥

---

१. कोशे 'परामृशे' इत्यपपाठः । २. कोशे '......देवेदमिति' इति भ्रष्टः पाठः ।
३. कोशे 'शिष्यामात्मान०' इत्यपपाठः ।
४. कोशे 'प्रत्यभिजातत्वं' इति पाठः ।
५. कोशे 'क्षणिकत्वं' इति पाठः । अत्र 'क्षणिक त्वं' इति छेदो यद्वा 'क्षणिकस्त्वं' इति पाठो युक्तः स्यात् । ६. कोशे '०प्राप्तिः परिहारो' इत्यपपाठः ।
७. कोशे 'प्रवृत्तञ्च' इति पाठः । ८. कोशे 'कृकलासा' इत्यपपाठः ।
९. कोशे '०क्षयादस्य' इत्यपपाठः ।

परिणामान्यथासिद्धेः[1] क्रियाऽस्तीत्यवगम्यते ।
अभ्युच्चयमिहाचष्टे[2] स्वदेहमसमवायिनाम् ॥७३४॥
अङ्गानां [3]वर्धतेशब्दस्तथा संयोगभाविनाम् ।
अपृथक्सिद्धभावानामङ्गानां समवायिता ॥७३५॥
शरीराण्येव पूर्वाणि स्वाङ्गानीत्यब्रवीदृषिः[4] ।
सांयोगिकत्वमर्थानां[5] [6]हस्त्यादीनां तथाब्रवीत् ॥७३६॥
आभिमुख्यमिहाभ्यर्थः प्रवृत्त्या[7] अनुकूलता ।
उदित्युपरिभावार्थश्शब्दस्सोऽत्र[8] विवक्षितः ॥७३७॥
चयस्तु [9]देहचयो वृद्धिस्तथैवोपचयः स्मृतः ।
उपर्युपरि सोऽङ्गानाम् अन्योऽन्यमनुकूलतः[10] ॥७३८॥
वर्धतेशब्दवाच्यः स्यात् स्थानत्वेनैव[11] धर्मिणः ।
वर्धतेऽयं शरीरेण विजयेनेत्यु[दा]हृतिः ॥७३९॥
द्रव्यस्य वर्धमानत्वम् अन्यथा नोपपद्यते ।
क्रिया चेत्तद्गता न स्यादिति सैवञ्च कथ्यते ॥७४०॥
एतेन[12] प्रकृतेनैव [13]वृधिना प्रतिलोमतः ।
आख्यातो वैपरीत्येन[14] क्षीयतेशब्दगोचरः ॥७४१॥
अपक्षयः क्षयो ह्रास इति पूर्वविलक्षणः ।

---

१. कोशे '०सिद्धे' इति पाठः ।

२. वर्धत इति स्वाङ्गाभ्युच्चयं सांयोगिकानां वार्थानां वर्धते विजयेनेति वा वर्धते शरीरेणेति वा । निरु० १।२॥

३. कोशे 'वर्धिते०' इत्यपपाठः ।

४. ऋषिर्यास्क इति शेषः ।

५. कोशे 'संयोगिक०' इत्यपपाठः ।

६. कोशे 'हसत्यादीनां' इत्यपपाठः ।

७. कोशे '०भ्यर्थं प्रहत्वा' इत्यपपाठः ।

८. कोशे '०वार्थस्सह्यस्सो०' इत्यपपाठः ।

९. कोशे 'ग्रहचयो' इत्यपपाठः ।

१०. कोशे '०कूलता' इत्यपपाठः ।

११. कोशे 'स्थानत्वेव' इत्यपपाठः ।

१२. अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम् । निरु० १।२॥

१३. कोशे 'बृद्धिना' इत्यपपाठः ।

१४ कोशे 'वैपरीत्येव' इत्येवमपपाठः ।

स्वाङ्गैः[1] 'सांयोगिकैश्चैव वृद्धिरिवावगम्यते[2] ॥७४२॥
क्षीयतेऽपचयं[3] गच्छत् कृशत्वं प्रतिपद्यते ।
षष्ठस्य[4] विषयो नायमनौच्छेदात्तु[5] धर्मिणः ॥७४३॥
उत्सादो[6] धर्मिणो नाशो न धर्मस्य तिरोगतिः ।
वृद्धिधर्मतिरोधानैः स्थिरस्यैव[7] हि धर्मिणः ॥७४४॥
प्रत्यभिज्ञायमानस्य[8] न नाशोऽपक्षयो भवेत् ।
अपक्षयान्यथासिद्धेः[9] क्रियाऽनेनापि कल्प्यते ॥७४५॥
धर्मिणः पूर्वभावत्वं द्रव्यस्य च [10]पुरोदितम् ।
अन्तस्तस्य समाप्तिः स्यादवसानं विमोक्षणम् ॥७४६॥
नश्यतीत्ययमाचष्टे[11] त्वपरम्भाव[मादितः] ।
[न पूर्वभावमाचष्टे] न च [12]तं प्रतिषेधति ॥७४७॥
धर्मिणः प्रकृतादन्यो धर्मिभावोऽपरत्र तु ।
तद्भावं तदभावं वा नाऽचष्टेऽसङ्गतत्वतः[13] ॥७४८॥
नन्वेतत्पूर्वमेवोक्तं[14] किमर्थं पुनरुच्यते ।
अनुषङ्गावबोधार्थमस्तीत्यादौ समानतः ॥७४९॥

---

१. कोशे 'स्वांयोगिकै०' इत्यपपाठः ।

२. कोशे 'वृद्धेरवगम्यतैः' इत्यपपाठः । अयं भावः—यथा वृद्धिर्द्विविधा स्वाङ्गोपचय-रूपा बाह्यार्थप्रचयरूपा च एवम् अपचयोऽपि द्विविध एव स वृद्धिरिव द्रष्टव्यः ।

३. कोशे 'अयं क्षीयते०' इति पाठः । तस्मिन्नुरीकृतेऽत्र चरणे दशाक्षराणि सन्ति । यदि नाम लौकिकछन्दःस्वपि वैदिकवदेव 'न वा एकाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' (ऐ. ब्रा. १।६) इति व्यवस्थोररीक्रियते तर्हि स्वराडनुष्टुबिति शक्यते वक्तुम् । लौकिक-छन्दःस्वपि नियमोऽयं प्रवर्तते इत्येतदर्थम् 'वैदिक-छन्दोमीमांसा' (पृष्ठ २१४-२१६) द्रष्टव्या । उत्तरत्र ८५ पृष्ठस्थः ७६० श्लोकोऽपि द्रष्टव्यः ।

४. विनश्यतीतिरूपस्य षष्ठस्य भावस्य ।

५. कोशे 'नायमौच्छेदात्तु' इत्यपपाठः ।

६. कोशे 'उत्सदो' अपपाठः ।

७. कोशे 'स्थिरस्येव' इत्यपपाठः ।

८. कोशे 'प्रकृत्यभि०' इत्यपपाठः ।

९. कोशे '०सिद्धे' इत्यपपाठः ।

१०. पूर्वत्र पृष्ठ ६४, श्लोकौ ५४९-५० ।

११. विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति । निरु० १।२॥

१२. कोशे 'तत्' इत्यपपाठः ।

१३. कोशे 'सङ्गतं त्वतः' इत्यपपाठः ।

१४. कोशे 'नत्वेतत्०' इत्यपपाठः ।

मध्यमेषु निवृत्त्यर्थमिति चेन्न विरोधतः ।
आद्यन्तयोर्यथा[1] न्यायो द्वयमेतन्निषेधति[2] ॥७५०॥
मध्यमेषु तथैवेति निवृत्तिर्नोपपद्यते ।
न ब्रूते नश्यतीत्येतन्नष्टावस्थामशक्तितः[3] ॥७५१॥
अशक्तिश्चाप्यसम्बन्धात् प्रतीयेतैव[4] सङ्गता ।
प्रतीयते[5] तथाऽवस्था गतेनोपस्थितत्वतः ॥७५२॥
नश्यतीत्यस्य योऽपोह्यः स नाशी यदि नेतरः[6] ।
नाशिन्यपोह्यमाने तु स्थायी धर्म्यवतिष्ठते ॥७५३॥
अनाशी यद्यपोह्येत बोद्धव्योऽसौ स्वरूपतः ।
बुद्धो हि शक्यतेऽपोढुम्[7] अबुद्धोऽपोह्यते कथम् ॥७५४॥
अबुद्धो यद्यपोह्येत बुद्धोऽबुद्धस्त्वपोह्यताम् ।
असतश्चाप्यपोह्यत्वमसत्त्वान्नैव युज्यते ॥७५५॥
सत्त्वादेव सतश्चापि प्रकारोऽन्यो न विद्यते ।
आत्मना विद्यते तस्य प्राप्तस्यैवाथ कस्यचित् ॥७५६॥
निवृत्तिश्चेदपोहस्ते 'सोऽस्माभिश्चेष्यते[8] तथा ।
वस्तुसत्तानिषेधस्तु कथञ्चिन्नोपपद्यते ॥७५७॥
देशकालादिसम्बन्धो वस्तुतस्स्यान्निषेधभाक्[9] ।
प्रतीयते निषेधोऽपि नेत्यादौ तस्य वाचके ॥७५८॥
न शब्दमात्रसद्भावे नहि सर्वो निषेधकः ।
प्रतिषेधमुखेनैव नेत्यादिर्वर्तयेद्[10] यथा ॥७५९॥

१. कोशे 'आद्य तयो०' इत्यपपाठः ।
२. कोशे '०निषेधतः' इत्यपपाठः ।
३. कोशे '०नष्टापन्थाम०' इत्यपपाठः ।
४. कोशे 'प्रतियेतेव' इति पाठः ।
५. कोशे 'प्रतीयेते' इति पाठः ।
६. कोशे 'चेतरः' इत्यपपाठः ।
७. कोशे 'शक्यते वोढुम्' इत्यपपाठः ।
८. कोशे 'सोऽस्मादिश्चे०' इत्यपपाठः ।
९. कोशे 'वस्तुतस्स्यानिषेधभाक्' इत्येवमपपाठः ।
१०. कोशे 'सर्वत्तंथेत्तथा' इत्यपपाठः ।

तथा[1] विधिमुखेनैव पदमन्यत्प्रवर्तते ।
विकारेण विनाशेन धर्मिणः पश्चिमेन च ॥७६०॥
प्रस्तुनभावता[2] सिद्धा धातुवाच्या[3] क्रिया तथा ।
अभावोऽप्यथवा[4] भावः[5] क्रियैव प्रस्तुतत्वतः ॥
भावप्रधानमाख्यातमित्येवं[6] प्रस्तुता हि सा ॥७६१॥
क्रियाया विक्रियाभावाद् विकारो भेद उच्यते ।
एतावन्तः[7] क्रियाभेदा विशेषास्तद्गताः स्फुटम् ॥७६२॥
एतावत्सु विशेषेषु विज्ञातेषु स्वरूपतः ।
सर्व एव क्रियाभेदो विज्ञातः स्यादितीर्यते ॥७६३॥
मूर्त्तं भावमपेक्ष्यास्यापूर्वभावत्वमब्रवीत्[8] ।
आख्यातगोचरो भावो[9] मूर्तभावात् पुरोदितः ॥७६४॥
तस्यादिग्रहणञ्चापि[10] [11]नापवर्गनिवृत्तये ।
अपवर्गनिवृत्तौ हि पूर्वोक्तेन विरुद्धचते ॥७६५॥
उपक्रमापवर्गात्मा[12] [13]भाव इत्येवमीरितम् ।
प्रदर्शनार्थमेवातो भावस्यादिमकीर्तयत् ॥७६६॥
क्रियाभेदविवक्षा च [14]सत्तावस्तुत्वसिद्धये ।
नाऽसतोऽवस्तुनो वापि भेदः कश्चित्प्रतीयते ॥७६७॥
भवतीत्यादिनैवाथ सद्भावो वस्तुतास्य च ।
वैरूप्येणैव सिद्धेति जातिताऽस्य प्रसज्यते ॥७६८॥

---

१. कोशे 'यथा तथा' इत्यपपाठः । अत्र ८३ पृस्ठस्था तृतीया टिप्पणी द्रष्टव्या ।
२. किमत्र 'भावना' पाठो युक्तः स्यात् ?
३. कोशे '०वाच्यात्क्रिया' इत्यपपाठः ।
४. कोशे 'अभावे०' इत्यपपाठः ।
५. कोशे 'भाव' इत्येव ।
६. कोशे 'भावप्रभावमा०' इत्यपपाठः ।
७. कोशे 'अतावन्तः' इत्यपपाठः ।
८. कोशे '०स्य पूर्वभाव०' इयपपाठः ।
९. कोशे 'भावः' इत्यपपाठः ।
१०. कोशे 'तस्यापि ग्रह०' इत्यपपाठः ।
११. कोशे 'तापवर्ग०' इत्यपपाठः ।
१२. कोशे 'उपक्रमोपवर्गा०' इत्यपपाठः ।
१३. कोशे 'भावमित्येव०' इत्यपपाठः ।
१४. कोशे 'सत्ता वस्तत्व सिद्धये' इत्यपपाठः ।

द्वैरूप्यमेव तत्रोक्तं नामाख्यातार्थगोचरम् ।
स एव [1]वस्तुतो भेदः सामर्थ्यादत्र शब्दतः ॥७६९॥
तात्पर्येण च शब्दस्य सामर्थ्यादर्थकल्पनम् ।
सामर्थ्येनाथवा सिद्धं शब्देन स्पष्टमिष्यते ॥७७०॥
भेद एवोच्यतेऽत्रापि न सत्ता वस्तुताऽपि वा ।
यदा तु द्रव्यमेवात्र भावशब्देन कथ्यते ॥७७१॥
विकारा[2] विक्रियाश्चापि [3]तदा युक्तिः प्रकीर्तिता ।
द्रव्यारूढविकाराणाम्[4] अन्यथानुपपत्तितः ॥७७२॥
सिद्धो विकारको भाव इति युक्त्या पुरोदितम्[5] ।
अतश्च प्रथमा व्याख्या साध्वी युक्त्यभिधानतः ॥७७३॥[6]
कल्प्या [7]युक्तिर्द्वितीयेति द्वितीया नोपपद्यते ।
न दोषः प्रथमा यद्वत्तथैषाऽप्युपपद्यते ॥७७४॥
जायत[8]-आदिशब्देभ्यो यथा भावः प्रतीयते ।
तथा प्रतीयते द्रव्यं जायमानादिलक्षणम् ॥७७५॥
पूर्वावस्थाविनिर्मुक्तं जातत्वाच्चावरोपितम् ।
संमूर्छितमिव[9] द्रव्यं जायमानं प्रतीयते ॥७७६॥
अस्तीति धारयद्वस्तु स्वात्मानमवगम्यते ।
अविनष्टं तथा ध[र्मि] त्यक्त्वावस्थां पुरातनीम् ॥७७७॥
अवस्थामपरां गच्छत्तृतीयाख्यातकीर्तितम् ।
वर्धमानं[10] तथा स्वाङ्गैः क्षीयमाणं तथा स्थितम् ॥७७८॥

---

१. कोशे 'वस्तुने तरू समर्थ्यादत्र' इत्यपपाठः ।

२. कोशे 'विकारविक्रियाः' इत्यपपाठः । ३. कोशे 'रूदा' इत्यपपाठः ।

४. कोशे 'द्रव्याद्रूढा विका०' इत्यपपाठः । ५. पूर्वस्यां व्याख्यायाम् ।

६. अतोऽनन्तरं कोशे '(ते यथावचनम्)' इति पाठ उपलभ्यते । सोऽत्रास्थाने पतितः । (द्र० पृ० ८८ श्लो० ७९३) । ७. कोशे 'युक्तिद्वितीयेति' इत्यपपाठः ।

८. कोशे 'जायतेत्यादि०' इत्यपपाठः । ९. कोशे 'समूच्छित०' इत्यपपाठः ।

१०. कोशे 'वर्तमानं' इत्यपपाठः ।

आख्यातेन चतुर्थेन पञ्चमेन च बोधितम् ।
विनश्यच्च तथा जातं षष्ठेनापि प्रतीयते ॥७७९॥
एवं प्रतीयमानस्य द्रव्यस्यान्यो विकारकः ।
पूर्वोक्तेन प्रकारेण [1]द्वितीयोऽप्युपपद्यते ॥७८०॥
नासत्ता भावशब्देन क्रिया सिद्ध्यर्थमुच्यते ।
सत्ता [2]सद्बुद्धिगम्यैव सत्सदित्येव गम्यते ॥७८१॥
अविभक्तमिदं[3] सर्वं तदा सत्प्रत्ययो भवान् ।
महासामान्यमित्याहुस्सत्तां ब्रुवन्ति चापरे ॥७८२॥
विकारा विक्रियास्त्वेव षोढा विक्रियते ह्यसौ ।
विशेषापेक्षया चास्याः पूर्वत्वमुपपद्यते ॥७८३॥
प्रागुत्पत्तेर्विशेषाणां सत्तैकैव स्वभावतः ।
आदिरादानमेवास्या विशेषेण व्यवस्थितिः ॥७८४॥
घटादिभिर्विशिष्टत्वं जन्म तस्याः प्रचक्षते ।
प्रतिपन्नविशेषायास्तद्रूपेणावधारणम् ॥७८५॥
तथैव परिणामादिर्विकारोऽन्योऽपि[4] युज्यते ।
सत्ताया विक्रिया न स्युर्न चेदन्यो विकारकः[5] ॥७८६॥
इत्येवं कल्प्यते भावः शरीरमिदमुच्यते ।
जननादिर्विकारो हि शरीरस्यैव नात्मनः ॥७८७॥
विकारैरीदृशैरात्मा कथञ्चिदुपयुज्यते ।
नित्यत्वादन्यथा तस्य विनाशित्वं प्रसज्यते ॥७८८॥
आत्मनश्च विनाशित्वे शास्त्रमेतदनर्थकम् ।
नित्यत्वमात्मनस्त्वेवमुच्यते शास्त्रसिद्धये ॥७८९॥

---

१. कदाचिदत्र 'द्वितीया०' इति पाठः स्यात् । तथा च द्वितीया व्याख्यापि पूर्वोक्त-प्रकारेणोपपद्यत इत्याशयः स्यात् (तु० श्लोक ७७४) । २. कोशे 'सम्बुद्धि०' इत्यपपाठः ।
३. कोशे 'अविभक्तिमिदं' इत्यपपाठः । ४. कोशे '०न्यो वि युज्यते' इत्यपपाठः ।
५. कोशे 'विकारतः' इत्यपपाठः । ६. कोशे 'विकारेरीदृशेरात्मा' इत्यपपाठः ।

सद्भाविनित्यते[1] चास्य वेदान्तेषु व्यवस्थिते ।
तस्यैव स्तूयमानत्वमेक आत्मेति[2] वक्ष्यति ।।७९०।।
अन्ये[3] तु ये त्वतः केचिद् विकारा द्रव्यगोचराः ।
क्रियायाश्च त्रिभेदास्स्युः सत्ताया वापि विक्रियाः ।।७९१।।
शरीरस्याथवा [4]काश्चिदेष्वेवान्तर्गताः [5]स्फुटम् ।
वार्ष्यायणेर्मतन्त्वेतदाह स्मेत्यभिधानतः ।।७९२।।
ते[6] यथावचनं सर्वे यथा वाक्यार्थसम्भवः ।
अभिगम्य तथा युक्तिमूहितव्या[7] विपश्चिता ।।७९३।।
यो यत्रान्तर्गतिं गच्छेत्तं तत्रैव प्रवेशयेत् ।
जनने धारणे चैव परिणामे चये[8] तथा ।।७९४।।
अपक्षये विनाशे च तस्य [9]सान्तर्गतिर्भवेत् ।
प्रादुर्भावं तथोत्पत्तिं निष्पत्तिं प्रसवं तथा ।।७९५।।
जन्मन्यन्तर्गतान्[10] प्राहुर्विकारान् केचिदीदृशान् ।
भावश्च भवनं भूतिर्विद्यते भवतीत्यपि ।।७९६।।
अस्त्यर्थेन्तर्गतास्त्वेते सत्सत्तेत्यादयस्तथा ।
विनामो विकृतिश्चैव[11] पयो विक्रियते त्विति ।।७९७।।
तृतीयेऽन्तर्गतं सर्वमन्यच्चैवंविधं [12]तथा ।
प्रचयश्चातिरेकश्च तथैवाप्युपचीयते[13] ।।७९८।।
वृद्धावन्तर्गतं [14]चैतदीदृशं यच्च किञ्चन ।
ह्रासश्चापचयश्चैव ह्रासतो वोपमोयते[15] ।।७९९।।

---

१. कोशे 'सद्भाविनित्यके' इत्यपपाठः । २. निरुक्त ७।४।।
३. अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह। निरु० १।३।।
४. कोशे 'कश्चिदे०' इत्यपपाठः । ५. कोशे '०र्गता स्फुटम्' पाठः ।
६. ते यथावचनमभ्यूहितव्याः । निरु० १।३।। ७. कोशे '०मुहितव्यं' इत्यपपाठः।
८. कोशे 'प्यधो यथा' इत्यपपाठः । ९. कोशे 'नान्त०' इत्यपपाठः ।
१०. कोशे '०र्गतान्याहु विकारात् केचिदीदृशात्' इति पाठः ।
११. कोशे 'विनामोपिकतिश्चैव' इत्यपपाठः १२. कोशे '०विधस्तदा' इत्यपपाठः ।
१३. कोशे '०पमीयते' इत्यपपाठः । १४. कोशे 'चेतदी०' इत्यपपाठः ।
१५ कदाचिदत्र 'ह्रसति चापचीयते' इति पाठः स्यात् !

एवंविधं तथा सर्वमन्तर्गतमपक्षये[1] ।
मरणं म्रियते मृत्युर्विनाशो लोप[2] इत्यपि ॥८००॥
अन्तर्गतस्तथा[3] षष्ठे इति केचित्प्रचक्षते ।
अन्तर्गतवचोयुक्तिरयुक्तैवमभदेतः[4] ॥८०१॥
पाण्यादिषु करादीनामन्तर्गतिवचो यथा ।
विशेषा[5] यस्य ये सिद्धास्तेषां तत्र[6] भवेदसौ ॥८०२॥
नहि पाण्यादिभावानां विशेषाः स्युः करादयः ।
अन्तर्गतः करः पाणाविति कोऽर्थोऽभिधीयते ॥८०३॥
पाणावन्तर्गतः पाणिरित्येवार्थोऽवगम्यते ।
अत्यन्ताभेदतो नैवं भवेदन्तर्गतिस्त्वियम् ॥८०४॥
भिन्नस्यैव न युक्तैव घटस्येव पटात्मनि ।
रूपेण केनचिद्भेदे कुतश्चित् कस्य चित्त्वतः ॥८०५॥
अभेदः कुत्रचित्[7] प्रोक्तो रूपेणैव तु सङ्गतिः ।
अन्तर्गतिर्यथा गोत्वे व्यक्तीनामवगम्यते ॥८०६॥
व्यजनादिविशेषाणां जननादौ तथैव सा ।
भुङ्क्ते[8] इत्यादिशब्दोक्तास्तेष्वेवान्तर्गता यथा ॥८०७॥
तथा निरूप्य वक्तव्यमन्तर्गतिमिहेच्छता ।
जायतेशब्दवाच्योऽपि [9]भुङ्क्तेशब्दात् प्रतीयते ॥८०८॥
भोजनेनात्मनस्तृप्तिं कुर्वन्तृप्तोऽभिजायते ।
तथाऽऽस्ते शेत इत्यादेरस्त्यर्थोऽप्यवगम्यते ॥८०९॥

---

१. कोशे '०मपेक्षते' इत्यपपाठः । २. कोशे 'लोक' इत्यपपाठः ।
३. कोशे 'अन्तर्गत तथा' इति पाठः । ४. कोशे '०मभेदता' इत्यपपाठः ।
५. कोशे 'विशेष यस्य' इति पाठः । ६. कोशे 'भवेद्यसौ' इत्यपपाठः ।
७. कोशे 'कुत्र वि प्रोक्तो' इत्यपपाठः । ८. कोशे 'भुक्त' इत्यपपाठः ।
९ कोशे 'भुक्ते०' इत्यपपाठः ।

ना[1] बिभ्रदात्मनात्मानमास्त इत्यवगम्यते ।
पूर्वावस्थां[2] स्थितिं त्यक्त्वा गत्यवस्थां यदा गतः ॥८१०॥
ज्ञायते गच्छतीत्यस्मात् तृतीयाख्यातगोचरः ।
शत्रुं निहन्ति राजेति [3]वृध्यर्थोऽप्यवगम्यते ॥८११॥
तथा पलायते राजा क्षीयते त्विति गम्यते ।
तथा[4] विनश्यतीत्यस्मात् कपालं [5]जायते त्विति ॥८१२॥
एवं सर्वस्य सर्वस्मिन् भवेदन्तर्गतिस्त्वियम् ।
षण्णामिति तथाऽन्योन्यमित्येषामपि[6] पुष्कला ॥८१३॥
जायतेऽस्त्यादयो यद्वत्क्रियाक्रियाविबोधकाः[7] ।
अतोऽन्येऽपि[8] तथैवेति विवक्षा यदि युज्यते ॥८१४॥
एतेषामिति[9] चानेन क्रियादीनां परिग्रहः ।
विकाराश्च[10] विशेषाः स्युः सर्वाख्यातेष्वयं विधिः ॥८१५॥
अन्तर्गतिर्भवेदेवं मा वा भूत्सर्वदा क्रिया ।
गुणश्चैव[11] तथा द्रव्यं मत्ता जातिश्च साधिता ॥८१६॥
अर्थवत्तोपसर्गाणां न[12] नामाख्यातयोरिव ।
आचिक्षेप ततस्तेषां पदत्वं शाकटायनः ॥८१७॥
आनर्थक्ये न[13] निर्बद्धा इति युक्तिमुवाच नः ।
पृथगर्थे निरित्येष[14] द्वितीयोऽप्यवधारणे[15] ॥८१८॥

---

१. ना = पुरुषः । कोशे 'ता' इत्यपपाठः । २. कोशे 'पूर्व‥‥स्थां' इति भ्रष्टः पाठः ।
३. कोशे 'वृध्यर्थेप्य०' इत्यपपाठः । ४. कोशे 'तथापि नश्य०' इत्यपपाठः ।
५. कोशे 'ज्ञायते' इत्यपपाठः । अस्यायं भावः—घटोनश्यतीत्यनेन घटस्य कपालो जायते, कपालभाव उत्पद्यते इत्यर्थः प्रतीयते । ६. कोशे '०मित्येषापि' इत्यपपाठः ।
७. कोशे 'क्रियाक्रियबोधितः' इति पाठः । ८. कोशे 'अतोन्येति' इत्यपपाठः ।
९. 'एतेषामेव विकारा भवन्तीति' निरुक्तवाक्ये ।
१०. कोशे 'विकारौ च' इत्यपपाठः । ११. कोशे 'गुणञ्चैव' इत्यपपाठः ।
१२. कोशे '०र्गाणां नाम्नामाख्या०' इत्यपपाठः ।
१३. न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः । निरु० १।३॥
१४. निर्बद्धा इत्यत्र । १५. निराहुरित्यत्र ।

रज्ज्वादिबन्धनाभावात् प्रयोगे बन्धिरिष्यते ।
प्रयुक्ताः[1] पृथगित्यर्थो नेत्याख्यातेन युज्यते ॥८१९॥
आख्या[ता]च्च तथा नाम्नः [2]पृथक्त्वे निरपेक्षया ।
प्रयुक्ता नाहुरेवार्थानुपसर्गाः कथञ्चन ॥८२०॥
गौरित्युक्ते यथा गोत्वं केवलादेव गम्यते ।
पश्यतीति तथा भावस्तथा तेभ्यो न कश्च[न]॥८२१॥
नामाख्याते पदे तावद्वाचकत्वेन सम्मते ।
पदत्वं नोपसर्गाणां वाचकत्वस्य वर्जनात् ॥८२२॥
यद्येवं न प्रयुज्येरन्नुपसर्गा निरर्थकाः ।
नामाद्यर्थविशेषस्य द्योतकत्वाद्भवन्ति ते ॥८२३॥
आख्यातस्य[3] तथा नाम्नः कर्मेहार्थो विवक्षितः ।
विशेषेणोपसंयोगस्तस्यैवार्थस्य सम्मतः ॥८२४॥
तस्यैते द्योतकास्त्वेव वाचका नैव यद्यपि ।
द्योतकत्वात्[4] प्रयुज्यन्ते तावतैषां कृतार्थता ॥८२५॥
नामाद्यभिहितत्वेन[5] विशेषः स्वार्थगोचरः ।
उपसर्गैरभिव्यक्तो विशिनष्टि स्वमाश्रयम् ॥८२६॥
नामाख्यातार्थयोरेवं द्योतकत्वेन हेतुना ।
पदत्वाभावतश्चैषां चत्वारीति न युज्यते ॥८२७॥
उच्चावचाः पदार्था हि भवन्तीत्याह गर्गजः[6] ।
वाच्यत्वेनोपसर्गाणामन्वयव्यतिरेकतः ॥८२८॥
तद्य[7] एवोपसर्गेषु पदार्थः सत्सु गम्यते ।
तदर्थमाहुरेवेमे नामादिषु यथैव ते ॥८२९॥

---

१. कोशे 'प्रयुक्ता' इति विसर्गरहितः पाठः । २. कोशे 'पृथक्त्वं' इत्यपपाठः ।
३. नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति । निरु० १।३॥
४. कोशे 'विद्योतकत्वात्' इति पाठः । द्र०—टि० ३ पृ० ३।८३ ।
५. कोशे '०तत्वेव' इत्यपपाठः ।
६. गर्गजो गार्ग्य इत्यर्थः । उच्चावचाः पदार्था भवन्तीति गार्ग्यः । निरु० १।३॥
७. तद् य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम् । निरु० १।३॥

यो येषु गम्यते सत्सु तथासत्सु न गम्यते ।
वाचकास्त्वेव[1] ते तस्य नामाख्यातपदे यथा ॥८३०॥
वाचकत्वादृते नैव द्योतकत्वं प्रतीयते ।
शब्देन द्योत्यते ह्यर्थो न दीपेनेव कश्चन ॥८३१॥
सम्बन्धेन विना दीपः स्वभासा विषयं गतः ।
द्योतयन्[2] दृश्यते तावत् तथा शब्दो न दृश्यते ॥८३२॥
शब्दस्तु [3]ज्ञातसम्बन्धः कुर्वन्नर्थे मतिं सदा ।
सर्वैर्नहि[4] द्योतयतीत्यपि आथोच्यते तथा ॥८३३॥
नामापि द्योतयेदेवमाख्यातं द्योतयेदपि ।
बोधकत्वाविशेषेण न[5] [5]वक्तीति प्रसज्यते ॥८३४॥
स्वार्थमेव[6] यथाख्यातं [7]बोधयेन्नाम वा यथा ।
उपसर्गास्तथा स्वार्थमिति किं नावगच्छति ॥८३५॥
द्योत्यते यो हि येनार्थः सोऽन्यस्येत्युच्यते कथम् ।
नामाख्याते यथा लोके पदे स्यातां प्रसिद्धितः ॥८३६॥
उपसर्गास्तथैवेति पदत्वं तेषु निश्चितम् ।
सुप्तिङन्तमिति[8] [9]त्वेतल्लघुत्वात्कार्यसिद्धये ॥८३७॥
अब्रवीन्नोपसर्गाणां पदत्वस्यापनुत्तये ।
नामाख्याते पदे यद्वत् पाणिनीयमते मते ॥८३८॥
उपसर्गास्तथैवेति विशेषो नैव कश्चन ।
निर्बद्धा[10] नाहुरित्युक्तं युक्तं नैव विरुध्यते ॥८३९॥

---

१. कोशे 'वाचकास्त्वेव नामाख्या……तत्पदे यथा' इति भ्रष्टः पाठः ।
२. कोशे 'द्योतयद्' इत्यपपाठः । ३. कोशे 'ज्ञात सम्बन्धः' इत्यपपाठः ।
४. अस्य श्लोकार्द्धस्य शुद्धः पाठोऽन्वेषणीयः । ५. यथाकोशं पाठः !
६. कोशे 'सार्थमेव' इत्यपपाठः । ७. कोशे 'बोधयन्' इत्यपपाठः ।
८. द्र०—पाणिनीय सूत्रम्—'सुप्तिङन्तं पदम्' (अष्टा० १।४।१४) इति ।
९. कोशे 'त्वेल्लघु०' इत्यपपाठः । १०. कोशे 'निबन्धानाहु०' इत्यपपाठः ।

स्वभावो ह्युपसर्गाणां स्वार्थे नामाद्यपेक्षणम् ।
प्रवृत्तं यद्यथा लोके स्वार्थं शक्नोति [1]भाषितुम् ॥८४०॥
तत्तथैव प्रयोक्तव्यमन्यथा नहि शक्ष्यति ।
उपसर्गास्सदा लोके नामाख्यातसमन्विताः ॥८४१॥
आचक्षाणा हि दृश्यन्ते स्वार्थानेव परान् न तु ।
प्रकृत्या सहितश्चापि प्रत्ययः स्वार्थमेव हि ॥८४२॥
प्रवक्त्यर्थं[2] प्रकृतेर्नैव प्रकृतिश्च तथा स्वकम् ।
तद्वदेकपदत्वञ्चेन्न[3] भेदेनोपलब्धितः[4] ॥८४३॥
तथाप्यनर्थका दृष्टा यत्रार्थो न विवक्षितः ।
न[5] चार्थस्याविवक्षायां[6] पदत्वं तस्य नश्यति ॥८४४॥
अपदत्वेऽविवक्षायां नामादेश्च प्रसज्यते ।
क्वचित्प्रकृतिरेवास्ति प्रत्ययो नैव दृश्यते[7] ॥८४५॥
क्वचिच्च प्रत्ययो दृष्टः प्रकृतिर्नोपलभ्यते[8] ।
वैचित्र्याच्छब्दशक्तीनां विचित्राः पदवृत्तयः ॥८४६॥
न [9]निर्बद्धा वदन्त्यर्थं यत्तत्तेन न दुष्यति ।
अर्थो[10] विक्रियते येन तदेवास्य विशेषणम्[11] ॥८४७॥

---

१. कोशे 'भषितुम्' इत्यपपाठः । २. कोशे 'प्रपक्यर्थं प्रततेर्नैव' इत्यपपाठः ।

३ कोशे 'तद्वदेकपदत्वञ्चे न भेदो नोपब्धतः' इत्यपपाठः ।

४. तथा च शाब्दिका अनुशासति—उपसर्गाच्छन्दसि धात्वर्थे (अ० ५।१।११८), निरादयः क्रान्ताद्यर्थे (महा० २।२।१८) । ५. कोशे 'त' इत्यपपाठः ।

६. कोशे '०विवक्षायाः' इत्यपपाठः ।

७. यथा दिगादिषु क्विनो लोपे प्रकृतिमात्रमवशिष्यते ।

८. यथा इयान् (द्र० अष्टा० ५।२।४०) इत्यत्र प्रकृतेरिदम ईशभावे वतो वकारस्य घत्वे इयत्वे च प्रकृतेरीकारकस्य लोपे प्रत्ययमात्रमवशिष्यते ।

९. कोशे 'निर्बाधं' इत्यपपाठः । १०. कोशे 'अर्थे' इत्यपपाठः ।

११. तथा चाह पतञ्जलिः—'उपसर्गाश्च पुनरेवमात्मका यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुर्यत्र हि न प्रयुज्यते ससाधनां तत्र क्रियामाहुः' (महाभा० ५।२।२८)। उपसर्गो विशेषकृत् (ऋ० प्रा० १२।२५) इति शौनकः ।

न तन्नामादिवाच्यं स्यादुपसर्गां[1] वदन्ति तम् ।
अथोदाहरणैरेषामर्थवत्तैवमुच्यते ॥८४८॥
आ[2] [3]इत्याहोपसर्गोऽयमर्वागर्थमसंशयम् ।
तस्योदाहरणं तावदागच्छेत्यादि लौकिकम् ॥८४९॥
एभिरग्ने[4] न आयाहि [5]वायवायाहि वैदिकम् ।
सन्निकृष्टत्वमेवाह गयनस्योभयत्र सः ॥८५०॥
अर्वागित्यस्य तद्वाच्यं तथैवार्थान्तरं क्वचित् ।
प्रातिलोम्यमिहैतस्य[6] वैपरीत्यमुदाहृतम् ॥८५१॥
आहतुः [7]प्रपरेत्येतौ प्रागर्थौ इति लक्षणम् ।
प्रयात्ययं परैतीति गम्यते विप्रकृष्टता ॥८५२॥
अरण्यानि[8] प्रयाहीति पूर्वस्याप्याह वैदिकम् ।
आभिमुख्यमभीत्याह[9] प्रह्वतामेव तद्विदुः ॥८५३॥
प्रह्वता[10] चानुकूलत्वं गुरुं शिष्योऽभिगच्छति ।
अभि[11] त्वेत्यादिवाक्येषु प्रह्वतैव प्रतीयते ॥७५४॥

---

१. कोशे 'स्यादुपसर्गं' इत्यपपाठः ।

२. आ इत्यर्वागर्थे प्रपरेत्येतस्य प्रातिलोम्यम्, अभीत्याभिमुख्यं प्रतीत्येतस्य प्रातिलोम्यम्, अति सु इत्यभिपूजितार्थे निर्दुरित्येतयोः प्रातिलोम्यम्, न्यवेति विनिग्रहार्थीया उदित्येतयोः प्रातिलोम्यम्, समित्येकीभावं व्यपेत्येतस्य प्रातिलोम्यम्, अन्विति सादृश्यापरभावम्, अपीति संसर्गम्, उपेत्युपजनम्, परीति सर्वतोभावम्, अधीत्युपरिभावमैश्वर्यं वा । एवमुच्चावचानर्थान् प्राहुस्त उपेक्षितव्याः । निरु० १।३॥

३. कोशे 'इत्यादेर्नोपसर्गो' इत्यपपाठः ।

४. द्र०—ऐभिरग्ने……देवेभिर्याहि……। ऋ० १।१४।१॥ अत्र 'आ+एभिः' इति-पदच्छेदे 'आ' 'याहि' पदेनान्वेति, 'नः' इत्यध्याहृतं पदम् ।

५. ऋ० १।२।१॥

६. कोशे '०हैकस्य' इत्यपपाठः ।

७. कोशे 'प्रवरेत्येका वाङ्था' इत्यपपाठः ।

८. द्र०—ऋ० १०।१४६।१॥ मन्त्रे 'प्र' उपसर्ग एव श्रूयते याहि इति अध्याहृतं पदम् । अत्र स्कन्दस्वामिव्याख्यानम् (भाग १, पृ० ३७) अपि द्रष्टव्यम् ।

९. कोशे '०महीत्याह' इत्यपपाठः ।

१०. कोशे 'प्रह्वत्वा' इत्यपपाठः ।

११. 'अभि त्वा देव सवितः' । ऋ० १।२४।३॥

प्रतीत्यष्युपसर्गोऽयमेतस्य प्रतिलोमताम् ।
विपरीतमभेराह[1] प्रतीतः [2]प्रतिपक्ष्ययम् ॥८५५॥
लौकिकं [3]प्रतित्रादीत्वं [4]प्रतिभङ्ग्धीति वैदिकम् ।
अभिपूजितमेवार्थम्[5] अतिसू[6] पुनराहतुः ।८५६॥
अतिवीरः [7]सुवीरोऽयमिति लोकेऽपि दर्शनम् ।
अति त्री सोम[8] पूर्वस्य [9]सुदेवः स्यात्परत्र तु ॥८५७॥
अतिस्वोः[10] प्रातिलोम्येन निदुरित्याहतुस्तथा ।
निराकृतिर्दुराचार इत्युक्ते कुत्सिते मतिः ॥८५८॥
यस्ते[11] गर्भममीवेति वैदिकं स्याद् द्वयोरपि ।
न्यवेति निग्रहार्थीयौ निग्रहस्तु निबन्धनम् ॥८५९॥
निरोधश्चावरोधश्च[12] निग्रहश्चेति कथ्यते ।
निगृहीतोऽवरुद्धश्च लौकिकी स्यादुदाहृतिः ॥८६०॥
उदग्ने[13] तिष्ठ पूर्वस्य परस्याव[14] स्थिरेति च ।
प्रातिलोम्यमिहोत्सर्गस्तस्यैवानुपरोधनम्[15] ॥८६१॥
उदित्याहैतयोरेवम्[16] उद्गतस्तूच्छ्रितस्त्ववति ।
उदयञ्च[17] [18]तथोदुत्यमुदयद्[19] उच्छ्रयस्व[20] च ।८६२॥

---

१. कोशे 'विपरीतमहेराह' इत्यपपाठः । २. कोशे 'प्रतिपक्ष्ययम्' इत्यपपाठः ।
३. कोशे 'प्रतिपादि......ति भजग्धीति' इत्यपपाठः ।
४. प्रतीचो बाहून् प्रतिभङ्ध्येषाम् । ऋ० १०।८७।४॥
५. कोशे 'आभिपूजित०' इत्यपपाठः । ६. कोशे 'अतिवस्तु' इत्यपपाठः ।
७. कोशे 'सुवीरोऽयमतिलोकेति' अपपाठः ।
८. कोशे 'अति श्री' इत्यपपाठः । द्र०—ऋ० ९।१७।५॥
९. ऋ० ९।६९।१२। १०. कोशे 'अतिस्वो' इत्यपपाठः ।
११. ऋ० १०।१६२।२॥ १२. कोशे '०चापरोधश्च' इत्यपपाठः ।
१३. ऋ० ४।४।४॥ अत्र मन्त्रे 'न्यमित्राँ ओषतात्' इत्यत्र 'न्योषतात्' इति सम्बन्धेऽयमर्थो ज्ञेयः । १४. कोशे 'परस्यापि' इत्यपपाठः । ऋ० २।३३।१४; ४।४।५॥
१५. अनवरोध इति स्कन्दस्वामी । नि० टी० भाग १, पृष्ठ ४१ ।
१६. कोशे 'उदित्याहीं तयोरेव मुद्गस्तस्तू०' इत्यपपाठः । द्र०—स्कन्द नि० टी० भा० १, पृष्ठ ४१ । १७. ऋ० १।५९।१॥ १८. ऋ० १।५०।१॥
१९. ऋ० ८।८१।२॥ २०. उच्छ्रयस्व वनस्पते । ऋ० ३।८।३॥

उदग्ने[1] तिष्ठ प्रेत्याद्या वैदिकी स्यादुदाहृतिः ।
एकीभावं समित्याह [2]सङ्गमं तु परस्परम् ॥८६३॥
सङ्गतौ पुरुषौ लोके सङ्गच्छध्वं[3] तु वैदिकम् ।
प्रातिलोम्यं[4] व्यपेत्येतौ समश्चैवाहतुस्तथा ॥८६४॥
वियातश्चापयातश्च प्रयोगो लौकिकस्त्वयम् ।
वि शत्रून्[5] ताढि पूर्वस्य विमृधश्चेति वैदिकम् ॥८६५॥
संसृष्टं धनमित्येतद् [6]आराच्छत्रुं परस्य च ।
अन्वित्यप्याह सादृश्यम्[7] अपराभावमेव च ॥८६६॥
पश्चाद्भावोऽपराभावः सादृश्यञ्च सरूपता ।
मातुलस्यानुरूपोऽयं ज्येष्ठमेषाऽनुगच्छति ॥८६७॥
तस्यानुरूपमित्येतदन्वसृज्यन्त[8] वैदिकम् ।
अपीत्याह संसर्गं संसर्गः स्यात् [9]समुच्चयः ॥८६८॥
अपि भुङ्क्ष्वापि खादेति दृश्यते हि समुच्चयः ।
वैदिकं[10] चापिशब्दस्य [11]ग्रीवायां बद्ध आसनि ॥८६९॥
उप इत्युपसर्गोऽयमाहैवोपजनं[12] [13]तथा ।
अत्रोपजनशब्दार्थमाधिक्यं ब्रुवते बुधाः ॥८७०॥

---

१. कोशे 'उदतेतिष्ठ चाद्य चेत्याद्या वैदिकस्युदुदाहृतिः' इत्यपपाठः । उदग्ने तिष्ठ प्रत्या— ऋ० ४।४।४॥
२. कोशे 'सङ्गमस्तु' इत्यपपाठः ।
३. ऋ० १०।१९१।२॥
४. कोशे 'प्रतिलोम्पं' इत्यपपाठः ।
५. विशत्रून् ताढि मृधो नुदस्व । ऋ०१०।१८०।२॥ कोशे 'विशत्रुं तातु' इत्यपपाठः ।
६. आराच्छत्रुमपबाधस्व । ऋ० १०।४२।७॥
७. निरुक्ते 'सादृश्यापरभावम्' इति पाठो वर्तते ।
८. देवता अन्वसृज्यन्त । तै० सं० ७।१।१।५॥
९. कोशे 'समुच्चयम्' इति पाठः ।
१०. कोशे 'वैदिकश्चापि०' इत्यपपाठः ।
११. ग्रीवायां बद्धो अपि कक्ष आसनि । ऋ० ४।४०।४॥ कोशे 'ग्रीवाया बन्ध आसती' इत्यपपाठः ।
१२. कोशे 'उपेत्युप०' इत्यपपाठः ।
१३. कोशे '०ऽयमाहे वेजनं' इत्यपपाठः ।

कर्तनेत्यादिशब्देषु[1] तथैवं ह्यभिधास्यते ।
तत्राधिक्यं नकारस्य गम्यते कुरुतेत्यतः[2] ॥८७१॥
पूर्वेणैवार्थविज्ञातान्नकारस्स्यादनर्थकः[3] ।
·········भेति तथा तस्याधिक्यवाचिता ॥८७२॥
तस्यैवोपचयो लोके तथैवोपकृतं त्विति ।
उप[4] बर्बृहि वेदे स्याद् "उपास्मै गायतेति च ॥८७३॥
उपधेह्यधिकं[6] बाहुमुपध्मानादलीप्सितम्[7] ।
अधिकं गायतेत्यर्थ·········मर्थता क्वचित् ॥८७४॥
परोति सर्वतोभावमाह[8] सत्ता तु कस्यचित् ।
अद्भिः परिवृतो देशः "परीतो षिञ्चतेति च[10] ॥८७५॥
उपर्यर्थमधीत्याह तथैश्वर्यं क्वचित्स्फुटम् ।
महेन्द्रस्याधि सानूनि तेषाञ्चाधि सुरेश्वराः ॥८७६॥
आम्रस्याधि[11] फलं पुष्पमित्येवञ्चापि दृश्यते ।
अधिपञ्चालवाक्यादावश्वर्येऽधि[12] प्रदृश्यते ॥८७७॥
ततोऽधिकामनित्येव[13] "[14]पृथिव्या अधि सानवि ।
उपर्यर्थोऽयमैश्वर्ये "[15]वेदे स्यादधि देवृषु[16]" ॥८७८॥

---

१ कोशे 'कर्ततेत्यादि' इत्यपपाठः । 'कुरुतनेत्यनर्थका उपजना भवन्ति कर्तन हन्तन यात्तन 'इति निरुक्त ४।७॥ २. कुरुत = कुरुतन ।

३. कुरुतन इत्यत्र पूर्वेण 'कुरुत' इत्यनेनैवेत्यर्थः ।

४. उप बर्बृहि वृषभाय बाहुम् । ऋ० १०।१०।१०॥

५. उपास्मै गायता नरः । ऋ० ९।११।१॥

६. कोशे 'उपधेत्यधिकं' इत्यपपाठः । द्र० निरु० ४।२०

७. कोशे 'बाहुमुपदानादनादीप्सितम्' इत्यपपाठः ।

८. कोशे 'भावमह' इत्यपपाठः । ९. ऋ० ९।१०७।१॥

१०. कोशे 'परितो षिञ्चतेऽति च' इत्यपपाठः । ११. कोशे 'आम्रस्यापि' इत्यपपाठः ।

१२. कोशे 'अधिपाञ्चाल०' इत्यपपाठः । १३. मृग्यमुदाहरणम् ।

१४. ऋ० ९।६३।२७॥ १५. कोशे 'भेद' इत्यपपाठः ।

१६. सम्राज्ञी अधिदेवृषु । ऋ० १०।८५।४६॥

अर्वागित्यादिकानर्थान् यथैवाहुरिमे स्फुटम् ।
एवमुच्चावचानर्थान् प्राहुरन्यानपि क्वचित् ॥८७९॥
वाक्यार्थसम्भवे युक्तिमुपेत्योपक्रमादि हि ।
वेदितव्याः[1] प्रयत्नेन मन्त्रार्थं बोद्धुमिच्छता ॥८८०॥
मर्यादां[2] हि क्वचिद्वक्ति तथैवाभिविधिं क्वचित् ।
इषदर्थं तथाऽन्यत्र सादृश्यादीन् [3]तथाऽव्ययम् ॥८८१॥
प्रादयोऽपि तथैवाहुः[4] प्रकर्षादि क्वचित्स्फुटम् ।
अर्थवत्त्वमेतेषां पदत्वं तेन निश्चितम् ॥८८२॥

॥ निरुक्त-श्लोकवार्त्तिके षष्ठाध्यायस्य[5] प्रथमः पादः ॥

---

१. कोशे 'वेदितव्या' इत्यपपाठः ।

२. ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥ इति वैयाकरणानां मतम् । द्र० काशिकावृत्ति १।१।१४॥

३. कोशे 'सदृश्यादीन् तथा जयम्' इत्यपपाठः ।

४. कोशे 'तथैवाह प्रहर्षादिः' इत्यपपाठः ।

५. निघण्टोः पञ्चाध्यायानेकीकृत्य संख्येयमुक्ता । सर्व एव निरुक्तव्याख्यातारो निघण्टु-निरुक्तयोरध्यायसंख्यामेकीकृत्य ग्रन्थस्यैकत्वं द्योतयन्ति ।

# द्वितीयः पादः

अथोपसर्गचिन्ताया[1] [2]निपाता: क्रममागता: ।
सोदाहरणमुच्यन्ते[3] यथा तेऽर्थस्य वाचका: ॥१॥
अर्थेषूच्चावचेष्वेते[4] वाक्येषु विविधेषु हि ।
निपतन्ति प्रवर्तन्ते वाचकत्वेन कीर्तिता: ॥२॥
अर्थो निपात्यते ह्येभिर्विविध: प्रतिपाद्यते ।
तस्मान्निपाततैतेषां[5] निपात्यन्तेऽथवा यत: ॥३॥
उपमा[6] वक्ष्यमाणेह तस्यामर्थेऽपि केचन ।
कर्मोपसङ्ग्रहार्थेऽन्ये तथाऽन्ये पदपूरणा: ॥४॥
पदपूरणतैतेषामर्थस्यासम्भवे सदा ।
अर्थे[7] प्रवृत्त[8] इत्युक्तेनार्थवन्तो ह्यनर्थका:[9] ॥५॥
तेषामर्थवतां[10] मध्ये चत्वारो वक्ष्यमाणका: ।
उपमा[र्थे] भवन्त्येते [11]तद्यथेवनचिन्नव: ॥६॥
इव[12] शब्दस्तु भाषायामन्वध्यायञ्च दृश्यते ।
तद्यथाऽग्निरिवेत्यादौ भाषा लोकोऽभिधीयते ॥७॥

---

१. अनन्तरमिति शेष:। अथ निपाता: । निरु० १।४॥ २. कोशे 'निपातात्' इत्यपपाठ: ।
३. कोशे 'तत्रोदाहरण०' इत्यपपाठ: । ४. उच्चावचेष्वर्थेषु निपतन्ति । निरु० १।४॥
५. कोशे '०पातनैतेषां' इत्यपपाठ: ।
६. अप्युपमार्थेऽपि कर्मोपसङ्ग्रहार्थेऽपि पदपूरणा: निरु० १।४॥
७. निरु० १।३॥ ८. कोशे 'प्रवृत्ता' इत्यपपाठ: ।
९. कोशे '०नार्थवन्तो ह्यनर्थकम्' इत्यपपाठ: ।
१०. तेषामेते चत्वार उपमार्थे भवन्तीति । निरु० १।४॥
११. कोशे 'तद्यथेपनचिन्नव:' इत्यपपाठ: ।
१२. इवेति भाषायां चान्वध्यायं चाग्निरिवेन्द्र इवेति । निरु० १।४॥

अध्याय इत्ययं [1]शब्दः करणेऽत्र निपातितः ।
अध्यायन्यायसूत्रेण[2] स च वेदस्य वाचकः ॥८॥
तस्याव्ययं[3] विभक्तीति सप्तम्यर्थेऽनुना सह ।
इष्यते त्वव्ययीभावस्तथाऽस्वपदविग्रहः ॥९॥
अध्याये छन्दसीत्यैकमन्वध्यायं विगृह्यते ।
यथा योऽग्निरिवाक्रुद्धो[4] [5]दातेन्द्र इव सत्पतिः ॥१०॥
प्रतीके वैदिके वापि स्यातामेते यथोच्यते ।
आहूतोऽस्माभिरागत्य मन्यो[6] सेनापतिर्भव ॥११॥
भूत्वा च त्विषितो दीप्तस्सहुरेऽग्निरिव[7] ज्वलन् ।
शत्रूनस्मद्द्विषः सर्वान्त्सहस्वाभिभवे [8]सहिः ॥१२॥
अभिभूय तथा सर्वाञ्जहि हत्वा च तद्धनम् ।
विभजस्वास्मदीयेभ्यः सैनिकेभ्यो यथाबलम् ॥१३॥
लक्ष्यते दानमेवात्र विभागेन तदर्थतः ।
दत्वा शत्रुधनं सर्वं [9]कुर्वंस्तोजो महाबलम् ॥१४॥
अवशिष्टान् [10]मृधस्सर्वान् नुद सङ्ग्रामकारिणः ।
मन्युश्च मध्यमो देवो मन्यतेर्दीप्तिकर्मणः[11] ॥१५॥
सहुरिः[12] सहनादेव तच्छीलस्तत्प्रियः स्मृतः ।
इहैवेत्यभिषिक्तस्य[13] राज्ञ आशीः प्रयुज्यते ॥१६॥

---

१. कोशे 'शब्दं करणान्न' इत्यपपाठः । २. अष्टा० ३।१।१२२॥
३. अष्टा० २।१।६॥ ४. कोशे 'योनिरिवाशुद्धो' इति पाठः ।
५. कोशे 'यदातेन्द्र व' इत्यपपाठः ।
६. कोशे 'आहूते०' इत्यपपाठः । अग्निरिवेत्युदाहरणमभिलक्ष्य ऋचं (ऋ० १०।८४।२) व्याचष्टे—आहूत इति । ७. कोशे '०सहुते०' इत्यपपाठः ।
८. कोशे 'सहि' इत्यपपाठः । ९. कोशे 'कुवन्तो जो' इत्यपपाठः ।
१०. कोशे 'मृधस्सर्व सद्व संग्राहकारिणः' इत्यपपाठः ।
११. कोशे '०दूप्तिकर्मणः' इत्यपपाठः । मन्युर्मन्यतेर्दीप्तिकर्मणः । निरु० १०।२९॥
१२. कोशे 'सहुरी, सहतादेव तच्छीले तप्प्रिय स्मृत' इत्यपपाठः ।
१३. इन्द्र इवेत्युदाहरणमभिलक्ष्य ऋचं (ऋ० १०।१७३।२) विवृणुते—इहैवेति ।

इहैव भव राष्ट्रे त्वं मा गाश्चास्मादपच्युतिम्[1] ।
तथास्त्व[2] सर्वदा राजन् धराधर इवाचलः ॥१७॥
भुञ्जानश्चन्द्रवद्भोगानिहैवास्त्व[3] यथा सुखम् ।
राष्ट्रञ्च[4] धारयेथास्त्वं धर्मेण परिपालय ॥१८॥
उपमार्थत्वमस्यैवं लोके वेदे च दृश्यते ।
प्रतिषेधार्थतामेव[5] भाषायामब्रवीत् नञः[6] ॥१९॥
उपमार्थनिवृत्त्यर्थं[7] प्राप्तोत्ययमुपक्रमात्[8] ।
छन्दस्यप्युपमार्थत्वमुच्यते केवलं यदि ॥२०॥
प्रतिषेधार्थता न स्यादिष्टा[9] तेनोच्यते द्वयम् ।
उभयं वाच्यमेवेष्टमस्य वेदेऽवगम्यताम् ॥२१॥
निषेधश्चोपमार्थश्च[10] तामप्यस्य व्यवस्थया ।
क्वचिन्निषेधमेवाह तामेवाहोपमां क्वचित् ॥२२॥
क्वचित्समुच्चयं प्राह क्वचिच्च स्यादनर्थकः ।
उषसो[11] नेत्स्वनर्थः स्यात् "[12]षष्टिर्नेति समुच्चये"[13] ॥२३॥
सोदाहरणमेवाह [14]लक्षणं सुखबुद्धये ।
प्रयुक्तस्तस्य पूर्वस्तु यद्वस्तु प्रतिषेधति ॥२४॥

---

१. कोशे 'गाच्चास्मादवच्युतिः' इत्यपपाठः । २. कोशे 'ऋथाश्च' इत्यपपाठः ।

३. कोशे 'भजातं चन्द्रवद्भागानिहैवासु' इत्यपपाठः ।

४. कोशे 'धारयेत' इत्यपपाठः ।

५. नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायं, नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति, दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते । निरु० १।४॥

६. कोशे '०मब्रवीवीन्वणः' इत्यपपाठः ।

७. कोशे 'उपमार्थं नि०' इत्यपपाठः ।

८. कोशे 'प्राप्तोत्य०' इत्यपपाठः ।

९. कोशे 'नस्य निष्टा' इत्यपपाठः ।

१०. कोशे 'तामप्यंस्य' इत्यपपाठः ।

११. अत्र कदाचित् ऋ० १०।७८।७ मन्त्रप्रतीकमभिप्रेतं स्यात् ।

१२. ऋ० १।१६४।४८॥

१३. अयं श्लोकार्धं उत्तरत्र (२६ तमे श्लोके) पुनः पठ्यते । अत्रास्य पाठोऽक्रमः । उत्तरत्रैवेष्यते पाठः ।

१४. कोशे 'लक्षणस्सुख०' इत्यपपाठः ।

मन्त्रब्राह्मणयोर्नेति[1] [2]तं विद्यात् प्रतिषेधकम् ।
येनार्थेनोपमानं स्यात् पश्चात्तस्य स्वयं श्रुतः ॥२५॥
तं विद्यादुपमार्थोऽयं नेति वेदे व्यवस्थितम् ।
उषसो[3] नेत्यनर्थः स्यात् षष्टिर्नेति समुच्चये ॥२६॥
उपरिष्टादुपाचारप्रायस्त्वं[4] व्यभिचारतः ।
त्रिशता नेति[5] शङ्कुभ्यः पुरस्तादुपचारतः[6] ॥२७॥
नेन्द्रं देवमिति[7] त्वत्र निषेध्यात्पुरतः श्रुतः ।
देवोऽयमिन्द्र इत्येतज्ज्ञानं तत्र निषिध्यते ॥२८॥
व्याख्यास्यते[8] च मन्त्रोऽयमिति नात्रोपवर्ण्यते ।
दुर्मदासः[9] पदस्यार्थादुपमानादनन्तरम् ॥२९॥
श्रुतो [10]नेत्युपमार्थोऽयं मन्त्रो व्याख्यायतेऽधुना ।
हृत्स्वृत्विग्यजमानानां[11] [12]पीतास्सोमा व्यवस्थिताः ॥३०॥
दुर्मदा इव युध्यन्ते संस्कारातिशयत्वतः ।
अहमेव विशिष्टोऽस्मि सम्यक् संस्कारसंस्कृतः ॥३१॥
पर्याप्तो[13] देवतातृप्तौ यजमानहिते तथा ।
स्थावरत्वाद्विमुक्तोऽस्मि[14] न त्वं न त्वमितीर्यते ॥३२॥

---

१. कोशे 'अत्रब्राह्मण०' इत्यपपाठः । २. कोशे 'तद्विद्यात्' इत्यपपाठः ।

३ पूर्वत्र (पृष्ठ १०१, श्लोक २३) टिप्पणं द्रष्टव्यम् ।

४. कोशे 'उपरिष्टोदुपाचार प्रायस्यत्वभिचारतः' इत्येवं पाठः ।

५. 'त्रिशता न शङ्कवोऽर्पिताः' (ऋ० १।१६४।४८) इत्यत्र ।

६. अयं भावः – 'न शङ्कवः' इत्यत्र 'शङ्कवः' पदात् पूर्वं प्रयुज्यमानोऽपि 'न' पदमुपमार्थीयो दृष्टः । तेनास्य नियमस्य सव्यभिचारत्वं द्रष्टव्यम् ।

७. ऋ० १०।८६।१॥ ८. निरुक्त १८ (=१३) ।४॥

९ दुर्मदासो न सुरायाम् (ऋ० ८।२।१२) इति । कोशे 'दुर्नदासं वदस्यथादुप०' इत्यपपाठः । १०. कोशे 'तेत्युपता०' इत्यपपाठः ।

११. ऋ० ८।२।१२॥ १२. कोशे 'पितास्सोमा' इत्यपपाठः ।

१३. कोशे 'पर्याप्ती' इत्यपपाठः । १४. कोशे '०स्मिन्नत्वन्नत्वमितीयते' इत्यपपाठः ।

स्पर्धन्ते[1] श्रद्धया ह्येवं सुरायामिव दुर्मदाः ।
सुरायामिति सप्तम्याः पानभावोऽत्र लक्ष्यते[2] ॥३३॥
यजमानं[3] तथा कालं यज्ञमृत्विज एव च ।
सोमाः[4] स्तुवन्ति संहृष्टा [5]रात्रिन नग्ना जना यथा ॥३४॥
नेदृशो [6]यजमानोऽन्यः कालो यज्ञोऽथवर्त्विजः ।
प्रापिता यैर्वयं सम्यगुच्छ्रितं हि सुदुर्लभम् ॥३५॥
रमन्ते[7] कामुका नक्तं नग्ना भूत्वा यथासुखम् ।
नाहस्सु[8] तथा स्त्रीभिरिति नक्तं स्तुवन्ति [ते] ॥३६॥
यद्वा [9]दरिद्रतैवात्र नग्नशब्देन लक्ष्यते ।
वस्त्रादिभूषणाभावस्तया स्त्रीणाञ्च लक्ष्यते ॥३७॥
तदभावान्न[10] निर्यान्ति मानिन्यो हि स्वयंवृताः ।
ततस्ता रात्रिमिच्छन्त्यः स्तुवन्तीत्युपपद्यते ॥३८॥
कर्मशब्दो [ऽर्थपर्यायः] प्रायेणेहावगम्यते ।
चिदित्येष[11] निपातस्तु "वक्ष्यते हि समुच्चये[12]" ॥३९॥
सद्यश्चिदिति[13] [14]............................ ।
यथा बुभुक्षितः कश्चिन्मृष्टमन्नं प्रभक्षितुम् ॥४०॥

---

१. कोशे 'स्वधंते शुद्धया ह्येवं' इत्यपपाठः ।
२. यस्य च भावेन (अष्टा० २।३।३७) इति सप्तमी । तच्छ्रुतेश्च योग्यक्रियाध्याहारः ।
३. कोशे 'यजमानस्तथा कालं दक्षमृत्विज' इत्यपपाठः ।
४. कोशे 'सोमा स्तुवन्ति' इति पाठः ।
५. कोशे 'रात्रिन्न......ना यथा' इति भ्रष्टः पाठः ।
६. कोशे 'जायमानोऽन्यः कालो यज्ञेऽथवेर्त्विजः' इत्यपपाठः ।
७. कोशे 'रमते' इत्यपपाठः । ८. कोशे 'अहस्सु' इत्यपपाठः ।
९. कोशे 'दरिदश्चैव' इत्यपपाठः । १०. कोशे 'तदभावोन्नतिर्यान्ति' इत्यपपाठः ।
११. चिदित्येषोऽनेककर्मा । आचार्यश्चिदिदं ब्रूयादिति पूजायाम् ।......दधिचिदित्युपमार्थे कुल्माषांश्चिदाहरेत्यवकुत्सिते । निरु० १।४॥ १२. कोशे 'अवक्ष्यते' इत्यपपाठः ।
१३. कोशे 'समुच्चयः' इत्यपपाठः । १४. ऋ० १०।१७८।३॥ निरु० १०।२९॥
१५. अस्मिन्नध्यर्द्धश्लोके पाठस्य भ्रंशो व्यत्यासश्च प्रतीयते । स्कन्दटीकातुलनया ग्रन्थकारसरण्या चात्रैवं पाठः कल्प्यते—

अशक्नुवन् ब्रवीत्येवं कुल्माषांश्चिदितीदृशम् ।
पायसादेस्तथा[2] दृष्टा कुल्माषाद्यक्कुत्सना ॥४१॥
गम्यते तत्रचिच्छब्दात्कुत्सनैवावकुत्सना[3] ।
नु[4] इत्येष निपातो हि बहुकर्माववम्यते ॥४२॥
कस्मादेवाद्य[5] भुङ्क्तेऽयं[6] प्रातरेवेति चोदिते ।
हेतुं वक्तुमिदं प्राहुर्ग्रामं[7] न्वयं गमिष्यति ॥४३॥
अपदेशोऽभिधानं स्यात् कारणं हेतुरुच्यते ।
ग्रामादेर्गमनं हेतुर्नुशब्देनेरितो भुजेः ॥४४॥
कथं न्वित्यनुपृष्टे[8] स्यात् प्रश्नस्यैवानुपृष्टता[9] ।
संशये चैवमुत्पन्ने यास्यत्यथ न यास्यति ॥४५॥
कथं नु यास्यतीत्युक्ते प्रश्न एवावगम्यते ।
कथं शब्दादृते चायं प्रश्नार्थो जायते यथा ॥४६॥
तथोदाहरणं प्राह न न्वेतदिति भाष्यकृत् ।
नुशब्द एवं पृष्टार्थे प्रतिषेधे[10] [च नः स्मृतः] ॥४७॥

---

चिदित्येष निपातस्तु बहुकर्मा प्रतीयते । कसंशब्दोऽर्थपर्यायः प्रायेणोहावगम्यते ॥
अचा चिन्नु चिदित्यत्र वक्ष्यते हि समुच्चये । सर्वश्चिदिति चाप्यर्थे भाष्यकारेण हि स्वयम् ॥
आचार्यश्चिदिदं ब्रूयाल्लोके पूजार्थ उच्यते । तथा दधिचिदित्यत्र ह्युपमार्थः प्रयुज्यते ॥
निरुक्ते चिद इत्येषा वैदेकीस्यादुदाहृतिः । कुत्सितार्थे अवन्वित् प्राह त्वं कुल्माषांश्चि शाहर ॥

१. कोशे 'कुल्मसांश्चि०' इत्यपपाठः ।

२. कोशे 'वायसादेस्तथा दृष्टाः कुत्साद्यत्र०' इत्यपपाठः ।

३. कोशे '०वापकुत्सना' इत्यपपाठः । ४. कोशे 'न' इत्यपपाठः ।

५. नु इत्येषोऽनेककर्मा । इदं नु करिष्यतीति हेत्वपदेशे, कथं नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीदिति च । निरु० १।४॥ ६. कोशे 'भुक्ते' इत्यपपाठः ।

७. कोशे '०ग्राममन्वागमिष्यति' इत्यपपाठः । ८. कोशे '०नुपृष्टे' इत्यपपाठः ।

९. कोशे 'प्रशस्यैवा०' इत्यपपाठः ।

१०. "नन्वेतदकार्षीदिति च" इति द्वितीयमुदाहरणम् । अत्र 'न' प्रतिषेधे 'नु' प्रश्ने । स्कन्दस्वामी नि० टी० भा० १ पृ० ५० ।

[अगमद् देवदत्तो][1] ग्राममित्याकर्णते यदा ।
अगतौ लिङ्गमालक्ष्य न न्वगच्छदसाविति ॥४८॥
स किन्नागच्छदित्येवं केवलं प्रश्नगोचरम् ।
ऋचैवास्योपमार्थत्वम्[2] अक्षो[3] नेत्युच्यतेऽधुना ॥४९॥
यथैव [4]चक्रयोर्बृहन्महानक्षोऽतिरिच्यते ।
तथैव ते महत्तापि रोदस्योरतिरिच्यते ॥५०॥
रथचक्रे[5] महानक्षो यथातीत्य व्यवस्थितः ।
महत्त्वं[6] तव रोदस्याव् [अतीत्य वर्त्तते तथा] ॥५१॥
वृक्षस्येव[व]या [7]रूढा मार्गा यैर्नः पुरागतः ।
तवानागमनात्तच्च मम भाग्यविपर्ययात् ॥५२॥
यदाऽहं[8] भाग्यवानासं तदागास्त्वं क्रतून्मम ।
रथाच्च[9] मृदिता मार्गा[स्तृणैस्ते]रूढास्साम्प्रतम् ॥५३॥
[धनदं]त्वा [10]समाश्रित्य कथं[त]ह्येव[मातिम]काम् ।
अवस्थां [11]तामहम्प्राप्त इत्यृषेः परिदेवना[12] ॥५४॥

---

१. अत्र पाठो नष्टः । स्कन्दस्वामी त्वित्थं व्याचख्यौ—यदा हि ग्राममगमद्देवदत्त इति कुतश्चिद् प्रत्यायिताच्छ्रुते आगते देवदते यदाचरितव्यं तदाचरन्तं किञ्चिद् दृष्ट्वा कश्चिद् ब्रवीति—ननु देवदत्तो ग्राममगमद् इति, तदा—किं देवदत्तो ग्रामं नागमदिति प्रश्नो गम्यते, तस्मिन्नु शब्दः ।

२. अथाप्युपमार्थे भवति । वृक्षस्य नु ते पुरुहूत वयाः (ऋ० ६।२४।३) । वृक्षस्येव ते पुरुहूत शाखाः । निरु० १।४॥

३. ऋ० ६।२४।३॥ ४. कोशे 'चक्रयो बृंहन्' इत्यपपाठः ।

५. कोशे 'रथश्चक्रे' इत्यपपाठः ।

६. कोशे 'महत्वन्त्ववरोदसि…' इति भ्रष्टः पाठः ।

७. कोशे 'रूढः मार्गायैर्न पुरा' इत्यपपाठः ।

८. कोशे 'यथाहं भाग्यवानसं तथा गास्त्वं' इत्यपपाठः ।

९. कोशे 'रथाश्च'…'सम्प्रतम्' इत्यपपाठौ ।

१०. कोशे 'समश्रितः कथं…ह्येव…कथ' इति भ्रष्टः पाठः ।

११. कोशे 'तामसम्प्राप्त' इत्यपपाठः ।

१२. कोशे 'परिदेवता' इत्यपपाठः ।

गत्यर्थस्य[1] [2]वयाः शाखा [3]वेतेर्धातोरुदाहृताः ।
अतस्ता वर्धमाना हि गच्छन्त्येव समन्ततः ॥५५॥
वाशब्दे ह्रसिते यद्वा तानयोर्लोपतस्तथा ।
वया[4] वातोऽयनो[यासां वातेन याः प्र]चालिताः ॥५६॥
शकाराकारयोर्दीर्घे[5] तथा वर्णविपर्यये ।
खशया एव शाखास्स्युर्यकारे लोपिते तथा ॥५७॥
शक्नोतेरेव[6] वा शाखाः[7] शक्ता धारयितुं यतः ।
पत्रं पुष्पं फलञ्चैव तथा पक्षिगणानपि ॥५८॥
अथ[8] यस्य निपातस्य श्रवणात् स्वार्थसिद्धये ।
आक्षिप्तो गम्यतेऽन्योऽर्थः स कर्मोपग्रहः स्मृतः ॥५९॥
उद्दिष्टो[9] न श्रुतेनासौ विग्रहेण पृथक्कृतः ।
विग्रहेण शरीरेण रूपेणासौ विलक्षणः ॥६०॥
गम्यमानस्य रूपं हि [10]श्रूयमाणाद्विलक्षणम् ।
शीघ्रं प्रतीयते [11]शाब्दमशाब्दं हि विलम्बितम्[12] ॥६१॥
शीघ्रप्रतीयमानत्वं श्रुतस्यार्थस्य विग्रहः ।
चिरेण ग्रहणं रूपमाक्षिप्तस्यापि गम्यते ॥६२॥
धर्मरूपान्निपातार्थाद् यद्वा [13]धर्मी विलक्षणः ।
पृथक्त्वमिदमेवेह विग्रहेणेत्यभाषत ॥६३॥

---

१. वयाः शाखा वेतेर्वातायना भवन्ति । शाखाः शक्नोतेर्वा । निरु० १।४॥
२. कोशे 'पयाः शाखाः वेतेद्धातोरुदाहृताम्' इत्यप।ठः ।
३. धा० २।३९॥ ४. कोशे 'वयावतायना......पालिनः' इति भ्रष्टः पाठः ।
५. शकारखकारोत्तरयोरकारयोरित्यर्थः । ६. धा० ५।१५॥
७. कोशे 'शक्तयोरेव वा शाखा शक्ता' इत्यपपाठः ।
८. अथ यस्यागमनादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात् स कर्मोपसंग्रहः । निरु० १।४॥
९. कोशे 'उदिष्टोनुक्तेना०' इत्यपपाठः ।
१०. कोशे 'स्तूयमाणा०' इत्यपपाठः । ११. कोशे 'शब्दम०' इत्यपपाठः ।
१२ कोशे 'विलम्बितुम्' इत्यपपाठः । १३. कोशे 'धर्मि' इत्यपपाठः ।

सर्वस्यैव [निपातस्य धर्मत्वप्रतिपादनात्] ।
आक्षेपको निपातार्थो धर्मी [1]चाक्षेप्य इष्यते ॥६४॥
अतोऽसौ नैव तस्यार्थो गम्यते त्वेव केवलम् ।
यस्येत्यत्र निपातस्य ग्रहणं[2] यद्यदिष्यते ॥६५॥
इवादीनां निवृत्त्यर्थं तद्व[क्तव्यं]विशेषणम् ।
धर्मोऽनेकाश्रयो यस्मान्निपातादवगम्यते ॥६६॥
स [3]कर्मोपकग्रहश्चादिरुकारान्त[4] इहोच्यते ।
न[5] चान्य एवमर्थाः स्युर्हेत्वादावेव दर्शनात् ॥६७॥
समुच्चयो विचारश्च तथैव व्यवधारणम् ।
नैकाश्रयास्त्विमे धर्मा इत्यन्यानाक्षिपन्ति हि ॥६८॥
इवादेरभिधेयस्तु नाक्षिपत्याश्रयान्तरम् ।
श्रुताश्रयैकनिष्ठत्वादिति नातिप्रसज्यते ॥६९॥
येनाङ्गेनोपमानत्वं यस्यासौ नोपमेयगः ।
यदि स्यादुपमेयेऽपि[6] कथं तस्योपमानता ॥७०॥
अन्यस्यैवोपमानत्वादन्यस्यैवोपमेयता ।
ननूपमोपमेयेन विना नैवोपपद्यते ॥७१॥
सत्यं तथापि [7]नेवादि कर्मोपग्रहतां व्रजेत् ।
एकनिष्ठस्य धर्मस्य वाचकत्वेन हेतुना ॥७२॥
निषेध्येषु निषेधोऽपि पूज्येष्वेव पूजनम् ।
कुत्सना[8] कुत्सितेष्वेव तथा हेतुर्भविष्यति ॥७३॥

---

१. कोशे 'चाकेत्य' इत्यपपाठः ।
२. अत्र 'ग्रहणाय यदिष्यते' इति पाठः संगतः स्यात् ।
३. कोशे 'कर्मोपकरणश्चा०' इत्यपपाठः ।
४. 'चेति समुच्चयार्थः' इत्यारभ्य 'अथाप्युकार एतस्मिन्नेवार्थे...' इत्यन्त इत्यभिप्रायः ।
५. कोशे 'न षलेवेवमथा स्युस्त्वादारेरेव' इत्यपपाठः ।
६. कोशे 'स्यादुपमेयोपि' इत्यपपाठः ।
७. कोशे 'नोपादि' इत्यपपाठः ।
८. कोशे 'कुत्सनात्' इत्यपपाठः ।

प्रश्नः प्रष्टव्य एवास्ति कस्मादेकाश्रयास्त्विमे[1] ।
कर्मैवोपग्रहो[2] यस्य स कर्मोपग्रहो मतः ॥७४॥
उपेत्य गृह्यते कर्म[3] श्रुतेनाक्षिप्यते यतः ।
चः[4] समुच्चीयमानाभ्यामुभाभ्यां सम्प्रयुज्यते[5] ॥७५॥
तथा श्रुते नराभ्याञ्च द्वाभ्यामेवेति निश्चयः ।
अहं[6] चैव [7]तपस्तोकः स्तुत्यर्थं चैव वृत्रहन् ॥७६॥
संयुज्याव सुसंयुक्तौ भवाव धनलब्धये ।
आवां विज्ञाय[?] संयुक्तावद्रिवन्ननुमंस्यते[8] ॥७७॥
अदातापि नरो दानं किं पुनर्दानमानसः ।
सम्बन्धगौरवान्मह्यं दास्यति [9]त्वत्प्रसादतः ॥७८॥
त्वत्प्रसादाज्जितं द्रव्यं भद्रं कल्याणमक्षयात् ।
समुच्चयाश्रयावत्र श्रुतावेव तु यद्यपि ॥७९॥
तथाप्याक्षेपतश्चेति विष्णवे चेति दर्शनात् ।
विष्णवे[10] चार्चतेत्यस्यामिन्द्रायाप्यर्च्चते त्रिभिः ॥८०॥
इन्द्रश्च शब्दसामर्थ्यादाक्षिप्तो गम्यते स्फुटम् ।
या सानुनीति[11] तावुक्तौ [12]इन्द्राविष्णू इति श्रुतेः[13] ॥८१॥

---

१. कोशे '०श्रयात्विमे' इत्यपपाठः ।
२. कोशे 'कर्मेवोपग्रहे' इत्यपपाठः ।
३. कोशे 'कर्म' इत्यपपाठः । ४. कोशे 'स' इत्यपपाठः ।
५. चेति समुच्चयार्थ उभाभ्यां सम्प्रयुज्यते, अहं च त्वं च वृत्रहन्निति । निरु० १।४॥
६. अहं च त्वं च (ऋ० ८।६२।११) इत्यृग् व्याख्यायते ।
७. कोशे 'तपस्तोका' इत्यपपाठः । तपस्तोकः=घौरः प्रगाथः, प्रकृताया ऋचो द्रष्टा (ऋषिः) ।
८. कोशे '०नुमन्यते' इत्यपपाठः ।
९. कोशे 'त्वप्रसादनः' इत्यपपाठः । १०. ऋ० १।१५५।१॥
११. या (ऋ० १।१५५।१) इति पदेनेत्यभिप्रायः ।
१२. कोशे 'इन्द्राविष्क' इत्यपपाठः ।
१३. द्र०—ऋ० १।१५५।२॥

इन्द्रश्चेति[1] तथैवात्र विष्णो त्वञ्चेति गम्यते ।
आक्षिप्तस्य विशेषोऽर्थस्त्वञ्चेति प्रतिपाद्यते ॥८२॥
एतस्मिन्[2] प्रस्तुते त्वेव चशब्दार्थे प्रयुज्यते ।
आ इत्येष निपातोऽपि [3]पितृभ्यस्त्वित्युदाहृतिः ॥८३॥
पितॄन् यज्ञविधौ [4]योऽग्निर्यजते क्रव्यवाहनः ।
स मे ब्रवीतु हव्यानि देवेभ्यश्च पितृभ्य आ ॥८४॥
पितृभ्यश्चेति तस्यार्थो तत्रार्थान्तरसम्भवः ।
सम्भवत्यर्थवत्त्वे च पदपूरणता नहि ॥८५॥
एकेनैव चशब्देन पितृभ्यश्चेति[5] यद्यपि ।
लभ्यते ऽभिमतस्त्वर्थस्तथा[6] साऽप्यगतिः स्फुटम् ॥८६॥
यत्र यः श्रूयते शब्दः सोऽगत्यान्यत्र नीयते ।
आकारस्य तदर्थत्वे[7] त्वगतिर्नैव विद्यते ॥८७॥
संशयेऽनेकधोत्पन्ने[8] किमसौ किममाविति ।
विचारणा विचारः स्यान्न [9]त्वसाविह सम्मतः ॥८८॥
उपन्यस्य बहून्पथान् यथेष्टस्य परिग्रहः ।
विचारस्त्विह विज्ञेयो हन्ताऽहं[10] त्वित्युदाहृतः ॥८९॥
योगैश्वर्यबलेनेन्द्रो [11]लबरूपधरः प्रभुः ।
ऋषीणां यज्ञमासाद्य बहुसोमं पपौ किल ॥९०॥

---

१. ऋ० ६।६९।८॥
२. एतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारः । निरु० १।४।
३. देवेभ्यश्च पितृभ्य आ । ऋ० १०।१६।११॥
४. यो अग्निः कव्यवाहनः । ऋ० १०।१६।११।। कोशे 'योगीर्यजते' इत्यपपाठः ।
५. कोशे 'पितृभ्यश्चेभि' इत्यपपाठः ।
६. कोशे '०मतस्त्वर्थं तथा' इत्यपपाठः ।
७. कोशे 'त्वगुत्रीन्नैव' इत्यपपाठः ।
८. वेति विचारणार्थे, हन्ताहं पृथिवीमिमां निदधानीह वेह वेति । निरु० १।४।।
९. कोशे 'स्यान्नत्वं सापीह' इत्यपपाठः । १०. ऋ० १०।११९।९॥
११. कोशे 'लब्ध०' इत्यपपाठः ।

तमूचुर्ऋषयस्तत्र विस्मयाविष्टचेतसः।
अल्परूपः कथं सोमं बहु त्वं पीतवानिति ॥९१॥[1]
इत्युक्त इति वेत्यादिसूक्तेनोत्तरमब्रवीत्।
हन्तेत्यस्याभ्यनुज्ञार्थो यद्वा सम्भावनार्थता ॥९२॥
इदानीमर्थता चापि सर्वेऽप्यत्राविरोधिनः।
अनुजानीत मे वीर्यं सम्भावयत हे द्विजाः ॥९३॥
इदानीमेव वा सर्वामिमां भूमिं ससागराम्।
उद्धृत्य दक्षिणे सव्ये वा [हस्ते][2] निदधाम्यहम् ॥९४॥
स्कन्धे वा दक्षिणे यद्वा सव्ये दिव्यम्बरेऽपि[3] वा।
एषामन्यतमस्मिंस्तु कामयेऽन्यत्र वा पुनः ॥९५॥
कामयध्वेऽथवा यूयं तत्रोर्वीं निदधाम्यहम्।
इत्यसौ वीर्यसम्पत्तेर्मायया [4]लबरूपधृक् ॥९६॥
कुविद्वह्वपि[5] सोमस्य स्वांशमेवापिबं त्वहम्।
समुच्चयेऽपि[6] वाशब्दो [7]वायुर्वा त्वेति दृश्यते ॥९७॥
वायुश्च त्वा मनुश्चेति विकल्पादेरसम्भवात्।
विकल्पः[8] संशयश्चैव पक्षव्यावृत्तिरेव च ॥९८॥
वाशब्देनाभिधीयन्ते नैषामत्रापि सम्भवः।
वाजपेये रथे वाजी युज्यमानोऽभिधीयते ॥९९॥
वायुर्मनुश्च गन्धर्वा ये त्वेवं सप्तविंशतिः।
त्वामग्रेऽयोजयन्नश्वं[9] त्वयि चैवादधुर्जवम्[10] ॥१००॥

---

१. ऋ० १०।११९॥
२. दुर्गोऽत्र 'स्कन्ध' पदमध्याजहार, स्कन्दस्वामी तु 'हस्त-स्कन्ध' पदे विकल्पयाञ्चक्रे।
३. अम्बरेऽन्तरिक्षे। ४. कोशे 'लब्ध०' इत्यपपाठः।
५. कोशे 'क्वचिद्वह्वपि' इत्यपपाठः।
६. अथापि समुच्चयार्थे भवति। निरु० १।४॥
७. तै० सं० १।७।७॥ ८. कोशे 'विकल्पं' इत्यपपाठः।
९. कोशे 'योजयन्नश्वस्त्वयि' इति पाठः।
१०. कोशे '०र्जलम्' इत्यपपाठः।

एते त्वेव [1]योजयन्त्वद्य स्थापयन्तु तथा जवम् ।
तथा [2]विनिग्रहार्थत्वमहशब्दहशब्दयोः[3] ॥१०१॥
विभज्य नियमेनैव ग्रहणं त्ववधारणम् ।
आहुर्विनिग्रहं प्राज्ञा एवशब्दार्थ एव सः ॥१०२॥
पूर्वेण सम्प्रयुज्येते स्वभावस्त्वनयोरयम् ।
प्रयोगाल्लौकिकादेव स्वभावोऽप्यवधारितः ॥१०३॥
अवधार्यस्य[4] पूर्वत्वं तस्यैवानन्तराविमौ ।
पूर्वस्यायम्[5] अहेत्येतदिदं हेत्युत्तरस्य च ॥१०४॥
निर्दिष्टं भाष्यकारेण तच्चोदाहरणद्वयम् ।
कीरोऽह भोजनं कुर्यात् कीर एव करोत्विति ॥१०५॥
कीरोऽवधारितस्त्वेवमहशब्देन गम्यते ।
अयं कुमारकः कुर्यात् पानं नैव तु भोजनम् ॥१०६॥
इदं हेतीदमेवायं पानमेव करिष्यति ।
पानं[6] ह पानमेवेति हशब्देनावधार्यते ॥१०७॥
इदमित्यपि निर्दिष्टमनिष्टं यत्तु किञ्चन ।
न करिष्यति तच्चेति हकारस्योच्यते फलम् ॥१०८॥
आद्[7] अहेत्यहशब्दस्य[8] [9]तत्रादित्यवधार्यते ।
नाकस्य पृष्टे[10] इत्यस्यां हशब्दस्य स हेत्ययम्[11] ॥१०९॥

---

१. कोशे 'योजस्त्वद्य' इत्यपपाठः ।

२. कोशे 'तथापि निग्रहार्थत्वं महः०' इत्यपपाठः ।

३. अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्येते । अयमहेदं करोत्वयमिदम् । इदं ह करिष्यतीदं न करिष्यतीति । निरु० १।५'।

४. कोशे 'अवधार्यास्य' इत्यपपाठः ।

५. कोशे '०यमतेत्वेत०' इत्यपपाठः । ६. कोशे 'पानं भवान्न०' इत्यपपाठः ।

७. ऋ० १।६।४॥ ८. फलमिति शेषः ।

९. कोशे 'तन्त्रादि०' इत्यपपाठः । अयं भावः—'आदह' इत्यस्मिन् मन्त्रे 'अह' शब्देन 'आद्' इत्यवधार्यते—आदह = अनन्तरमेवेत्यर्थः ।

१०. ऋ० १।१२५।५॥ ११. कोशे 'सहेत्यहम्' इत्यपपाठः ।

एतस्मिन्नेव[1] निर्दिष्टे हशब्दार्थेऽवधारणे ।
उत्तरेणावधार्येण सहोकारः प्रयुज्यते ॥११०॥
मृषेम इति वाक्येऽस्मिन्नुकारेणावधारणम् ।
सत्यस्य दृश्यते स्पष्टं लोके त्वेतन्निदर्शनम् ॥१११॥
तमेव[2] ऋषिमित्यस्यां [3]तमु इत्यप्युदाहृतिः ।
अथाप्ययमुकारः[4] स्यात् क्वचित्तु पदपूरणः[5] ॥११२॥
पदपूरणतेहास्य किमर्थमभिधीयते ।
अर्थवत्तापवादार्थं[6] त्वयि सोऽपि न युज्यते ॥११३॥
इदमु[7] त्यत् [8]तदु वेति पदपूरणना त्विह ।
इदमेव हि[9] तज्ज्योतिः तमसोऽतिशयाद् बहु ॥११४॥
उदितं कान्तिमत्प्राच्याम् इत्यर्थो नोपपद्यते ।
सूर्यस्यातिशयाद् दृष्टं बहुत्वं नोषसस्त्विवति ॥११५॥
इदन्तदिति तेनार्थं उकारे पदपूरणे ।
नूनं मन्येऽहमेतेन ज्योतिषैवोदितेन हि ॥११६॥
जनायास्य जनस्यार्थे दिव[:]सूर्य[स्य]पुत्रिकाः ।
गतिं[10] विभान्त्यः कुर्वन्ति कास्ताः स्युरुषसः स्फुटम् ॥११७॥
एतस्या एव पूजार्थे बह्वर्थवचनन्त्विदम् ।
गतिर्वा नाश [11]एवात्र तमांसि नाशयन्ति ताः ॥११८॥

---

१. अथाप्युकार एतस्मिन्नेवार्थ उत्तरेण, मृषेमे वदन्ति सत्यमु ते वदन्ति इति । निरु० १।५॥ २. ऋ० १०।१०७।६॥
३. कोशे 'तमित्यप्यु०' इत्यपपाठः ।
४. कोशे 'अथाव्ययमुकरस्यात्' इत्यपपाठः ।
५. अथापि पदपूरण इदमु तदु । निरु० १।५॥
६. कोशे 'अर्थवत्तापपादार्थ त्वपि' इत्यपपाठः ।
७. ऋ० ४।५१।१॥ ८. ऋ० १।६२।६॥
९. कोशे 'त ज्योतिः तमसोऽतिशया बहुः' इत्यपपाठः ।
१०. कोशे 'प्रतिं' इत्यपपाठः ।
११. कोशे 'एव त्रितमसो नाशयन्ति तत्' इत्यपपाठः ।

नूनमित्थविचारार्थो [1]निश्चयनेऽत्र गम्यते ।
यद्यप्यस्यापरं[2] भासः कर्म विद्येत शोभनम् ॥११९॥
दस्मस्य[3] दर्शनीयस्य शत्रुक्षयकृतोऽपि वा ।
तथाप्यतिशयेनैव कर्म तत्पूज्यमिष्यते ॥१२०॥
अपिन्वदुपरा[4] यद्धि [5]मेघजातीरसेचयत् ।
तदायत्तानि सर्वस्य स्थितिर्यक्षतमं ततः[6] ॥१२१॥
एवञ्चेदवधार्येत तदेवेत्युपपत्तितः ।
पदपूरणतायुक्ता सम्भवेऽर्थस्य सर्वदा ॥१२२॥
कर्मस्तुतिविवक्षायां युज्यते [7]नावधारणा ।
यद्धि [8]चारुतमं कर्म तत्पूज्यतममिष्यते ॥१२३॥
तदावधारणा न[9] स्यात् पदपूरणता ततः ।
ततश्च यद्यपीत्यादि नाध्याहर्तव्यमापतेत् ॥१२४॥
अन्यच्चारुतमं[10] कर्म तथा यक्षतमं त्विदम् ।
एवं विवक्षिते त्वत्र नैव स्यादवधारणा[11] ॥१२५॥
मधु [12]स्वादूदका नद्यो नदनाः शब्दकारिणीः ।
चतस्रश्चैव ता जातोर्दिशः प्रत्यथवाऽनयत् ॥१२६॥
उपह्वराभिधेयत्वमन्तरिक्षस्य[13] मन्वते ।
भक्षमेवापरे[14] प्राहुर्ह्वरतेरत्तिकर्मणः[15] ॥१२७॥

---

१. कोशे 'निश्चयेनेऽत्र' इत्यपपाठः ।
२. तदु (ऋ० १।६२।६) इत्यृग् विव्रियते—यद्यपीति । अस्य = इन्द्रस्य ।
३. कोशे 'दस्पस्य' इत्यपपाठः ।
४. कोशे 'अपित्वदुपरा' इत्यपपाठः ।
५. कोशे 'मेघजातिरसेचयत्' इत्यपपाठः ।
६. कोशे '०यक्षतमन्तरः' इत्यपपाठः ।
७. कोशे 'वावधारणात्' इत्यपपाठः ।
८. कोशे 'चारुतरं' इत्यपपाठः ।
९. कोशे 'नु' इत्यपपाठः ।
१०. कोशे 'अन्यच्चात्र तमं' इत्यपपाठः ।
११. कोशे '०दवधारणात्' इत्यपपाठः ।
१२. कोशे 'स्वादुदुका नद्या नदना शब्द कारिणी' इत्यपपाठः ।
१३. कोशे 'उपह्वरादिधेयत्वं' इत्यपपाठः ।
१४. कोशे 'दक्षमे०' इत्यपपाठः ।
१५. कोशे '०ह्वरते हृत्तिकर्मिणः' इत्यपपाठः । द्र०—निरु० २।८॥

उपेत्य भक्ष्यते[1] यस्मात्तस्मादाहुरुपह्वरम् ।
सोमाद्युपह्वरे प्राप्ते मेघजातीरसेचयत्[2] ॥१२८॥
इदमु[3] त्यदिति[4] त्वत्र स्यात्पदपूरण एव सः ।
परस्याम्[5] अर्थभाने[6] च तेनोदाहरणे तयोः[7] ॥१२९॥
कर्मोपसंग्रहार्थीयाः[8] षडेवेष्टा मनीषिभिः ।
अनेकाश्रयधर्मस्य वाचकत्वेन हेतुना ॥१३०॥
हीत्यादयस्तु सीमन्ताः न कर्मोपग्रहाः[9] कुतः ।
एकाश्रयस्य धर्मस्य हेतुत्वं श्रावणत्वतः ॥१३१॥
सत्यं न तादृशो हेतुरिहेष्टः [10]कारणं त्विदम् ।
न चास्य पक्षधर्मत्वं सपक्षे[11] नैव वृत्तता ॥१३२॥
अग्निमत्त्वेन [12] व्याप्तस्य धूमवत्त्वस्य हेतुना[13] ।
सपक्षे वृत्तता चास्य तथैवाप्यनुमेयता ॥१३३॥
न चानुमानतेहास्ति हेतुर्युक्तिरिहोच्यते ।
तच्चोदाहरणेनैव स्पष्टं वक्ष्यति भाष्यकृत् ॥१३४॥
हीत्येषोऽनेककर्मेव[14] [15]बह्वर्थं इति गम्यताम् ।
हेत्वर्थश्चानुपृष्टार्थस्तथाऽसूयार्थ[16] एव च ॥१३५॥

---

१. कोशे 'दक्षते' इत्यपपाठः । २. कोशे '०रसेचयेत्' इत्यपपाठः ।
३. ऋ० ४।५१।१। ४. कोशे 'त्यादित त्वस्यात्पादपूरण' इत्यपपाठः ।
५. तदु (ऋ० १।६२।६) इत्यत्र ।
६. कोशे '०मर्थमानेव तेनो०' इत्यपपाठः ।
७. कर्मोपसंग्रहपदपूरणयोरित्यर्थः ।
८. कोशे 'कर्मोपसंग्रहार्थीयां षलेतेष्टा' इत्यपपाठः ।
९. कोशे 'कर्मोपग्रहात्कुतः' इत्यपपाठः ।
१०. कोशे 'कारणास्त्विदम्' इत्यपपाठः । ११. कोशे 'सापेक्षे' इत्यपपाठः ।
१२. कोशे 'अग्निमत्वे न चाप्तस्य' इत्यपपाठः । १३. कोशे 'हेतुना' इत्यपपाठः ।
१४. कोशे 'हीत्येषो नैककर्मेव' इत्यपपाठः ।
१५. हीत्येषोऽनेककर्मा । इदं हि करिष्यतीति हेत्वपदेशे; कथं हि करिष्यतीत्यनुपृष्टे, कथं हि व्याकरिष्यतीत्यसूयायाम् । निरु० १।५॥
१६. कोशे '०नुवृष्टार्थं तथा सूर्यार्थं' इत्यपपाठः ।

हेतुप्रश्नार्थवाचित्वं[1] नुशब्दोदाहृतौ गतम् ।
इन्द्रवायू[2] इति त्वस्यां हेत्वर्थो होति दृश्यते ; ॥१३६॥
इन्दूनां कामिता [3]हेतुर्हिशब्देनाभिधीयते ।
न च सोमाश्रयो धर्मो [4]नेन्द्रवाय्वागतौ स्थितः ॥१३७॥
एवमेकाश्रयत्वान्न [5]कर्मोपसंग्रहस्त्वयम् ।
धर्माणां वक्ष्यमाणानां [6]तथैकाश्रयतैव हि ॥१३८॥
सभायामीदृशानर्थान् व्याकरिष्यति मे सुतः ।
इत्युक्तेऽसूयया ब्रूते कथं हि व्याकरिष्यति ॥१३९॥
स्वयमश्रुतविद्यत्वाद्व्याकर्तुं नैव शक्ष्यति ।
इत्यर्थो गम्यतेऽसूया साक्षमामर्ष[7] उच्यते ॥१४०॥
विद्याया विप्रकृष्टत्वे [8]किलेत्येष प्रयुज्यते ।
प्रकर्षो नास्य[9] वाच्यस्स्यादुदाहृत्या विरोधतः ॥१४१॥
प्रकर्षस्तेन विज्ञेयो [10]विपूर्वो भाष्यगोचरः ।
जघान किल देवेशः शत्रून् [11]स्वादुष्किलेत्यपि ॥१४२॥
ननन्नुभ्यामनुपृष्टे[12] किलेत्येष प्रयुज्यते ।
समाहृतोऽनुपृष्टार्थः सम्प्रयोगे प्रतीरितः[13] ॥१४३॥

---

१. कोशे 'हेतुः प्रश्नार्थ०' इत्यपपाठः । २. ऋ० १।२।४॥
३. कोशे 'हेतु हि' इत्यपपाठः ।
४. कोशे 'नेन्द्रवय्वागतौ' इत्यपपाठः ।
५. कोशे 'कर्मोपग्रह०' इत्यपपाठः ।
६. कोशे 'तथैवाश्रय०' इत्यपपाठः ।
७. कोशे 'साक्षमामष' इत्यपपाठः ।
८. किलेति विद्याप्रकर्षे, एवं किलेति । अथापि न ननु इत्येताभ्यां सम्प्रयुज्यतेऽनुपृष्टे, न किलैवं, ननु किलैवम् । निरु० १।५॥
९. कोशे 'नास्व वाच्य०' इत्यपपाठः ।
१०. भाष्यगोचरः प्रकर्षो विप्रकर्षो ज्ञेय इत्यभिप्रायः । तथा चाह स्कन्दस्वामी–अन्यस्थत्वमन्यैरेतदुपलब्धं मया तेभ्यः श्रुतं न स्वयमुपलब्धमित्ययमर्थो विद्याप्रकर्षः (स्कन्दटीका प्रथम भाग पृ० ६२) । ११. ऋ० ६।४७।१॥
१२. कोशे '०मनुप्रश्ने' इत्यपपाठः । १३. कोशे 'प्रतीरितम्' इत्यपपाठः ।

किलेत्ययं किमित्यर्थे नेत्येतेन समन्वितः ।
ननुना च तथा युक्तः तादर्थ्यं प्रतिपद्यते ॥१४४॥
मेत्युदात्तो[1] निपातस्स्यात् प्रतिषेधस्य वाचकः ।
मा कार्षीत्तु लोके स्याद् वेदे [2]मा नो वधीरिति ॥१४५॥
खल्वित्ययं[3] [4]निपातोऽपि प्रतिषेधे प्रयुज्यते ।
खलु कृत्वेति शब्दे ऽस्मिन् खल्वित्येतन्निषेधकम् ॥१४६॥
तथा खलु कृतञ्चेति [5]कृतिमत्त्वं निषिध्यते ।
अलंखल्वोरिति[6] ह्येवं पाणिनिश्चाब्रवीदिदम् ॥१४७॥
तत्खल्वेवं बभूवेति दृश्यते पदपूरणः ।
मित्रं[7] कृणुध्वमित्यादौ श्रूयते खल्वनर्थकः ॥१४८॥
शश्वदित्यस्य[8] भाषायां विचिकित्सार्थता मता ।
विचिकित्सा विचारश्च संशयो निश्चयस्तथा ॥१४९॥
विचिकित्स्यं गुरोर्वाक्यं नैव श्रेयोऽर्थिना सदा ।
अविचार्यत्वमेवोक्तं विचारो हि निषिध्यते ॥१५०॥
विचिकित्सा न कर्तव्या [9]धर्मे वेदे स्मृताविति ।
संशयो नैव कर्तव्य इत्यर्थोऽत्रावधार्यते ॥१५१॥
निश्चयार्थत्वमत्रेष्टं तथोदाहरणेक्षणात् ।
शश्वदस्तं गतः सूर्य उदेतीत्यत्र निश्चयः ॥१५२॥

---

१. मेति प्रतिषेधे, मा कार्षीर्मा हार्षीरिति च । निरु० १।५॥

२. ऋ० १।१०४।८॥ कोशे 'मानोपधीरिति' इत्यपपाठः ।

३. कोशे 'खलूत्ययं' इत्यपपाठः ।

४. खल्विति च, खलु कृत्वा खलु कृतम् । अथापि पदपूरण एवं खलु तद्बभूवेति । निरु० १।५॥

५. कोशे 'कृति···वन्निषिध्यते' पाठः । ६. अष्टा० ३।४।१८॥

७. ऋ० १०।३४।१४॥

८. शश्वदिति विचिकित्सार्थीयो भाषायाम् । शश्वदेवमित्यनुपृष्टे, एवं शश्वदित्यस्वयं पृष्टे । निरु० १।५॥

९. कोशे 'धर्मवेदे' इत्यपपाठः ।

शश्वदिन्द्र[1] इतीत्यादौ श्रूयते निश्चयार्थता ।
शश्वदेवमिति प्रश्ने[2] शश्वदेवं गतो गुरुः ॥१५३॥
[किं गतो गुरुर्] इत्यर्थश्शश्वदेवमितीरितः ।
अस्वयंदृष्टवाचित्वम्[3] एवं शश्वदितीह तु ॥१५४॥
एवं शश्वद् गतो देवो न मयाऽसौ समीक्षितः ।
नूनमित्यपि[4] चैतस्य विचिकित्सार्थतोच्यते ॥१५५॥
आदित्योऽस्तमितो नूनम् उदेतीति प्रयुज्यते ।
निश्चयेनेति तत्रार्थो नहि तत्रास्ति संशयः ॥१५६॥
अन्वध्यायं पुनस्तस्य स्वभावद्वयमिष्यताम् ।
विचिकित्सार्थता चैव पदपूरणता तथा ॥१५७॥
विचिकित्सार्थता [5]यस्यामृच्यस्येहोपलभ्यते ।
तदर्थव्यक्तये पूर्वम् इतिहासोऽभिधीयते ॥१५८॥
अगस्त्यः[6] किल धर्मात्मा [7]निरुप्यैन्द्रं हविः पुरा ।
यागकाले तु सम्प्राप्ते मरुद्भ्यः प्रददौ पुनः ॥१५९॥
हविषो[8] दानमेवेह लक्ष्यते [9]सम्प्रदित्सया ।
पर्यदेवयदिन्द्रोऽपि न[10] नूनमित्यृषेस्तदा ॥१६०॥

---

१. ऋ० १।३०।१६॥ २. कोशे 'प्रत्ने शश्वदेवं गतौ' इत्यपपाठः ।

३. कोशे 'अन्वयं०' इत्यपपाठः । 'अस्वयंपृष्टे' इत्येव निरुक्तपाठः सार्वत्रिकः । स्कन्दस्वामी तु 'अस्वयंदृष्टे' इति पाठमाश्रित्य व्याचख्यौ (द्र० स्कन्दटीका प्रथम भाग पृ० ६५) । तस्यैवानुकुर्वन्नत्र लक्ष्यतेऽयं ग्रन्थकारः ।

४. नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्च । निरु० १।५॥

५. कोशे 'यस्य मृद्वस्ये' इत्यपपाठः ।

६. अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्साञ्चकार । स इन्द्र एत्य परिदेवयाञ्चक्रे । निरु० १।५॥

७. कोशे 'निरूप्यैंद्रं हरिः' इत्यपपाठः ।

८. कोशे 'विविषो' इत्यपपाठः ।

९. कोशे 'सम्प्रतित्सया' इत्यपपाठः ।

१०. ऋ० १।१७०।१॥ कोशे 'न नूनञ्चित्यूषेस्तदा' इत्यपपाठः ।

न नूनं निश्चयेनैव विद्यते ऽद्यतनं हविः ।
अस्तिशब्दोपपत्त्यर्थं[1] भाष्येऽद्यतनमाहृतम् ॥१६१॥
अद्योत्पन्नं हविस्तावन्ममेदं नैव विद्यते ।
हविः[2] श्वो ददितेत्येतत्कथञ्चिन्नोपपद्यते ॥१६२॥
बोद्धुमागामिनोऽशक्तेः कस्तद्वेद यदद्भुतम् ।
अभूतमद्भुतं[3] प्राहुरागामि श्वस्तनं हि तत् ॥१६३॥
अन्यस्य ह्यभिसञ्चारि चित्तमेवास्थिरं चलम् ।
उताप्याधीतमाध्यातं[4] ममेदमिति चिन्तितम् ॥१६४॥
हविरद्यतनं नष्टं[5] किं पुनश्श्वस्तनं तु यत् ।
भूतस्य वर्तमानत्वं तत्सामीप्यादुदाहृतम्[6] ॥१६५॥
अतश्च नष्टमित्यर्थो नश्यतीत्युपपद्यते ।
श्वो[7] दातेत्यथ वाऽऽध्यातं विनशिष्यत्यसंशयम् ॥१६६॥
अनवस्थितचित्तत्वान्निरुप्तमहविर्यथा ।
अद्येत्यध्याहृतस्यार्थं[8] [9]द्यवीत्येवमकीर्तयत्[10] ॥१६७॥
द्युरहर्द्योततेरुक्तं[11] [12]द्योतते तद्धि रश्मिभिः ।
इतीत्यप्येवमित्यर्थे सत इत्यवधारणे ॥१६८॥

---

१. कोशे 'अस्तिशब्दो०' इत्यपपाठः ।
२. कोशे 'हविश्ची' इत्यपपाठः ।
३. कोशे 'अद्भुतं अद्भुतं प्राहरागामित्वस्तनं' इत्यपपाठः ।
४. कोशे 'उताव्याधित०' इत्यपपाठः ।
५. कोशे 'कि पुनस्त्वनन्तु' इत्यपपाठः ।
६. वर्तमानसामीप्ये वर्तमानवद्वा (अष्टा० ३।३।१३१) ।
७. कोशे 'भूतेत्यथ' इत्यपपाठः ।
८. कोशे 'आद्येत्यध्या०' इत्यपपाठः ।
९. कोशे 'दवीत्येव०' इत्यपपाठः ।
१०. अद्यास्मिन् द्यवि । निरु० १।६॥
११. द्युरित्यह्नो नामधेयं द्योतत इति सतः । निरु० १।६॥
१२. कोशे 'द्योतते द्धि रश्मिभिः' इत्यपपाठः ।

उक्तस्य कारकस्यैव कर्तृभूतस्य तद्युते ।
कारकान्तरयुक्तस्य न नामेति मतं मुनेः ॥१६९॥
सतस्सत्यामिति[1] त्वेव यथा यत्राभिधास्यते ।
नामोपात्तेन युक्तस्य कारकेणैव तन्मतम् ॥१७०॥
श्वस्तूपाशंसनीयत्वादहः[2] कालो ह्यनन्तरम् ।
आगामि प्रार्थनीयं[3] स्याज्जीवनार्थं जनैर्यदा ॥१७१॥
अनन्तरत्वसामान्याद्[4] अतीतञ्चाहरागतम् ।
ह्यो[5] हीनः काल इत्याह [6]निर्विवक्षुः प्रसङ्गतः ॥१७२॥
वर्तमानाद्दिनाद्धीनो गतः कालो ह्य उच्यते ।
कस्तन्न[7] कोऽपि वेदेति[8] दुर्ज्ञेयत्वादुदाहृतम् ॥१७३॥
यदद्भुतमिहाभूतम्[9] अवृत्तं दुर्गमं हि तत्[10] ।
अनुत्पन्नमविज्ञेयं[11] किं पुनर्यद्भविष्यति ॥१७४॥
आश्चर्यमद्भुतं लोके यन्नित्यं [12]नोपवर्तते ।
इदमित्यपि तत्प्रोक्तमितरल्लोकसम्मतम्[13] ॥१७५॥
अनिष्पन्नमनित्यं वा यद्वा [14]सम्यगुदाहृतम्

---

१. कोशे 'सतस्सत्वामिति' इत्यपपाठः ।
२. कोशे 'द्वस्तु वा शंस०' इत्यपपाठः । श्व उपाशंसनीयः कालः । निरु० १।६॥
३. कोशे 'प्रार्थनीये स्यां जीवं०' इत्यपपाठः ।
४. कोशे 'अनन्तरं त्व नामान्यदतीतञ्चाहुरागतम्' इत्यपपाठः ।
५. ह्यो हीनः कालः । निरु० १।६॥
६. कोशे 'हिर्विवक्षुः' इत्यपपाठः ।
७. कोशे 'कस्तन्नतो पि' इत्यपपाठः ।
८. कस्तद् वेद यदद्भुतम् । कस्तद् वेद यदभूतम् । इदमपीतरदद्भुतमभूतमिव । निरु० १।६॥ ९. कोशे 'यदुद्भूतमिहाभूतं' इत्यपपाठः ।
१०. कोशे 'हितम्' इति पाठः ।
११. कोशे 'अव्युत्पन्न०' इत्यपपाठः ।
१२. कोशे 'नोपवर्धते' इत्यपपाठः । आश्चर्यमनित्ये (अष्टा० ६।१।१४२) ।
१३. कोशे '०मितरं लोक०' इत्यपपाठः ।
१४. कोशे 'सम्यमुदाहृतम्' इत्यपपाठः ।

एवं विकल्पसिद्ध्यर्थमिति वेत्यब्रवीत्पुनः[1] ॥१७६॥
अपपाठोऽथवा वेति यतो नान्यार्थं ईरितः ।
अन्यस्तु[2] [3]नयतेर्धातोर्नञ्पूर्वस्य प्रकल्पितः[4] ॥१७७॥
अन्यो[5] नानेय इत्याह आनेतव्यः परो हि यः ।
पुत्रत्वेनेति शेषोऽस्य [6]तथगभ्यां वक्ष्यति स्वयम्[7] ॥१७८॥
चित्तं[8] विज्ञानमेवाह[9] चेततेर्ज्ञानकर्मणः ।

**निरुक्तश्लोकवार्त्तिके[10] षष्ठाध्यायस्य द्वितीयः पादः ॥**

---

१. 'अभूतमिव' इत्यस्य स्थाने 'अभूतमिति वा' इत्याकरपाठोऽस्य ग्रन्थकृतः कोशं आसीत् । तत्र 'वा' इत्यस्यापपाठत्वं स्वयमेवोपपादयत्यनुपदम् ।

२. कोशे 'अन्यस्तनयतेर्धातोः नतंपूर्वस्य' इत्यपपाठः ।

३. धा० १।९५०॥

४. अन्यो नानेयः । निरु १।६॥

५. कोशे 'अन्यो न्यानेयं' इत्यपपाठः ।

६. कोशे 'तथवां' इत्यपपाठः ।

७. निरु० ३।२,३॥

८. चित्तं चेततेः । निरु० १।६॥

९. कोशे 'चेतते ज्ञो न कर्मणः' इत्यपपाठः । धा० १।३९॥

१०. कोशे 'निरुक्तवार्त्तिके षष्ठस्य' इति पाठः ।

# तृतीयः पादः

पदपूरणता[1] [2]यस्यामस्य [3]तामाह भाष्यकृत् ।
सन्त्यज्य[4] नूनमित्येतन्निर्वक्त्यभिमतं[5] तथा ॥१॥
या[6] दत्ता दक्षिणा यज्ञे धनैर्बहुभिरन्विता ।
जरित्रे सा तव स्तोत्रे प्रतिदुग्धां [7]वरं वृतम् ॥२॥
देहि त्वमेव वा कामान् स्तोतृभ्यस्सम्मतान्बहून् ।
अतीत्यास्मान्[8] परेभ्यश्च मा दाः कामानुपाश्रितान् ॥३॥
अस्म्यभ्यं प्रथमं देहि त्वामेव ह्याश्रिता वयम् ।
परेभ्यो देहि पश्चात्तु [9]मा वा दास्त्वं यथेच्छसि ॥४॥
विवक्षैतावती त्वत्र न दानं प्रतिषिध्यते ।
प्रतिषेधविवक्षायां शत्रुभ्य इति कल्प्यताम् ॥५॥
सर्वथैव [10]भगोऽस्मभ्यमैश्वर्यं धनमेव वा ।
बह्वस्तु[11] नन्दनीयं तद् बृहद्यज्ञे वदेम च ॥६॥
दीयतां भुज्यतां चेति तथा भूयास्म पुत्रिणः ।
विदथे वेदने ज्ञाने दुर्ज्ञेये विषयेऽपि वा ॥७॥
जल्पमार्गेऽथवा यज्ञे प्रायश्चित्तेऽथवा क्वचित् ।

---

१. अथापि पदपूरणः । निरु० १।६॥ २. कोशे 'यस्यां यस्य' इत्यपपाठः ।
३. नूनं सा ते० । ऋ० २।१६।८ ।
४. ऋचि श्रुतं नूनमिति पदं विहाय यास्को निर्वक्तीत्यर्थः ।
५. कोशे '०भिमतस्तथा' इत्यपपाठः ।
६. सा ते प्रति दुग्धां वरं जरित्रे । निरु० १।७॥
७. कोशे 'परं' इत्यपपाठः । ८. कोशे 'अतीत्यस्मात् परेभ्यश्चं' इत्यपपाठः ।
९. कोशे 'मापादास्त्वद्यथेच्छति' इत्यपपाठः ।
१०. कोशे 'भगोस्यद्यमै०' इत्यपपाठः । ११. कोशे 'बहुस्तु' इत्यपपाठः ।

भूयास्म [1]निर्णयस्येह कर्तारो मघुरोक्तयः ॥८॥
वरणीयो[2] वरः प्रोक्तः प्रार्थनीयो महत्तया ।
जरिता[3] गरिता स्तोता गृणातेः[4] स्तुतिकर्मणः ॥९॥
धनमेव[5] मघं प्राह [6]मंहतेर्दानकर्मणः ।
मंह्यते[7] दीयते तद्धि तेन तन्मघमुच्यते ॥१०॥
दक्षिणा[8] [9]दक्षतेर्धातोः समृध्यर्थाभिधायिनः ।
व्यृद्धं[10] यद्द्विगुणं कर्म दक्षिणा तत्समृद्धये ॥११॥
दक्षिणायामसत्यां हि लभ्यन्ते नैव याजकाः ।
लब्धा वा नैव कुर्वन्ति श्रद्धया [11]विगुणं ततः ॥१२॥
आनतास्तु[12] तया सम्यग् [य]जन्ति श्रद्धयैव ते ।
आनतौ हि यथा ह्येषा दक्षिणैवं समृद्धये ॥१३॥
दक्षिणश्रोणितो[13] वेदेर्दानकालेऽथवा यतः ।
शालामुखीयमग्रेण[14] जघनेन सदस्तथा ॥१४॥
नीत्वा सा दीयमानैवं दिशा दक्षिणया युता ।
तस्माद् दिशमभिप्रेत्य [15]दक्षिणां दक्षिणोच्यते ।१५॥
दिग्घस्तप्रकृतिर्यस्मात्[16] तस्मात्सा दक्षिणेरिता[17] ।

---

१. कोशे 'निर्णस्वेह' इत्यपपाठः । २. वरो वरयितव्यो भवति । निरु० १।७॥
३. जरिता गरिता । निरु० १।७॥ ४. धा० ९।२८॥
५. दक्षिणा मघोनी मघवती । मघमिति धननामधेयं मंहतेर्दानकर्मणः । निरु० १।७॥
६. धा० १।६६५॥ ७. कोशे 'कथ्यते' इत्यपपाठः ।
८. दक्षिणा दक्षतेः समर्धयतिकर्मणो, व्यृद्धं समर्धयतीति । अपि वा प्रदक्षिणागमनाद् दिशमभिप्रेत्य । निरु० १।७॥ ९. धा० १।६२९॥
१०. कोशे 'वृद्धं' इत्यपपाठः । ११. कोशे 'द्विगुणं' इत्यपपाठः ।
१२. कोशे 'अनता' इत्यपपाठः । १३. कोशे 'दक्षिणश्रोणिते' इत्यपपाठः ।
१४. कोशे 'शलामुखीयमग्रेण' इत्यपपाठः । मै० सं० ४।८।२।३॥ मान० श्रौ० २।४।५।१-२०॥ अत्र स्कन्दस्वामिनष्टीका द्रष्टव्या—अपि वा दानकाले दक्षिणस्यां वेदिश्रोण्यामग्रेण गार्हपत्यं जघनेन सदो दक्षिणा आनीयन्ते । भाग १, पृष्ठ ६९ ।
१५. कोशे 'दक्षिणाः' इत्यपपाठः । १६. कोशे 'दीर्घस्तु प्रकृति०' इत्यपपाठः ।
४. दिग् घस्तप्रकृतिः । निरु० १।७॥

हस्तः प्रजापतेः पूर्वं सृजतो दक्षिणः प्रजाः ॥१६॥
यस्यां दिशि बभूवासौ तत्सम्बन्धेन दक्षिणा[1] ।
दक्षतेर्दक्षिणो[2] हस्तो भवेदुत्साहकर्मणः[3] ॥१७॥
उत्साहिततरस्सव्यात्[4] सर्वस्य प्रायशो हि सः ।
अथवा दक्षिणो हस्तो [5]दाशतेर्दानकर्मणः ॥१८॥
दीयते तेन यद् देयं न सव्येन निषेधतः ।
हस्तः[6] पुनरयं [7]हन्तेर्हनने प्राशुरन्यतः ॥१९॥
देहि[8] स्तोतृ[भ्य] इत्याह कामञ्शिक्षेत्यपेक्षितान् ।
अतीत्यस्यैव सामर्थ्याद् अतिहायेत्युदाहृतम् ॥२०॥
धगित्येतत्तथा. [9]दंहेर्दानार्थस्यैव कल्पितम् ।
भगस्तु[10] [11]भजतेरेव सेव्यते स सुखार्थिभिः ॥२१॥
परितस्सर्वतो वृद्धं बृहदुक्तं महत्त्विति ।
वीरवन्त इति त्वाह मतुपो वृत्तिमाश्रितः ॥२२॥
कल्याणवीरतामाह बहुव्रीहौ [12]समाश्रिते ।
पुत्रेष्वविद्यमानेषु तद्वत्तैव विवक्षिता ॥२३॥

---

१. कोशे 'दक्षिणाः' इत्यपपाठः । २. कोशे 'दक्षितेर्दक्षितो' इत्यपपाठः ।
३. दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वास्याद् दानकर्मणः । निरु० १।७॥
४. कोशे '०तरस्सव्यः सर्वस्य' इत्यपपाठः ।
५. कोशे 'दाशतेद्दानकर्मणः' इत्यपपाठः । धा० १।९३१॥
६. हस्तो हन्तेः प्राशुर्हनने । निरु० १।७॥
७. कोशे 'हस्ते हनने प्रांशुरन्यतः' इत्यपपाठः । धा० २।२॥
८. देहि स्तोतृभ्यः कामान् । मास्मानतिदंहीः, मास्मानतिहाय दाः । भगो नो अस्तु । बृहद् वदेम स्वे वेदने । भगो भजतेर्बृहदिति महतो नामधेयं परिवृढं भवति । वीरवन्तः कल्याणवीरा वा । वीरो वीरयत्यमित्रान्, वेतेर्वा स्याद् गतिकर्मणो वीरयतेर्वा । निरु० १।७॥
९. कोशे 'दाहेर्दानार्थस्यैव' इत्यपपाठः । अत्र स्कन्दस्वामी—'धगिति पदं दहेर्दानार्थस्य रूपम्' इति । भाग १, पृष्ठ ६८ । तत्र 'दंहेः' इति पाठेन भाव्यम्, भाष्ये 'दंहीः' इति प्रयोगोपलब्धेः ।
१०. कोशे 'भजस्तु भजतेरेवं सव्यते' इत्यपपाठः ।
११. धा० १।१०४७॥ १२. कोशे 'समश्रिते' इत्यपपाठः ।

प्रत्ययश्चैव मत्वर्थे [१]सुरित्यादौ प्रयुज्यते ।
शोभनत्वविशिष्टानां वीराणां प्रार्थना यदा ॥२४॥
बहुव्रीहिस्तदात्रेष्टः[२] [३]प्रत्ययस्सुर्न कल्प्यते ।
वीरयन्[४] विविधं शत्रून् प्रेरयन् वीर उच्यते ॥२५॥
गत्यर्थस्याथवा [५]वेतेरमित्रान् प्रति गच्छति ।
यद्वा वीरयतेरेव[६] वीरो विक्रान्त एव हि ॥२६॥
सीमित्यस्य[७] निपातस्य वाच्यमाह[८] परिग्रहम् ।
पदपूरणताञ्चैव विकल्पन्तु विवक्षया ॥२७॥
विशेषस्यानुपादाने सर्वस्यैव परिग्रहः ।
परिणा गृह्यमाणोऽर्थस्सर्वतो भाव एव सः ॥२८॥
पर्यर्थ इति वक्तव्ये क्लिष्टशब्देन[९] दर्शितः ।
प्रस्तुतात् सर्वतो भावादन्यसद्भावसिद्धये ॥२९॥
अन्यसद्भावसिद्धौ[१०] च क्वचित्तस्य परिग्रहः ।
कर्तव्य इति तेनैवं पर्यर्थोऽत्र सुदर्शितः ॥३०॥
आदित्यस्त्वदितेः[११] पुत्रो वरुणोऽत्र विवक्षितः ।
विविधं [१२]धारणाच्चैव विधर्त्ता जगतोऽप्यसौ ॥३१॥
प्रासृजद् विसृजत्यव [१३]रश्मीन् सीमित्यनर्थकः ।
रश्मीनित्यपि सामर्थ्यात्किमन्यद्विसृजेदसौ ॥३२॥

---

१. नैरुक्तोऽयं मत्वर्थीयः सुप्रत्ययः । स च बह्वज्वद् (अष्टा० ५।३।६८) आदावुपसंख्येयः । २. कोशे '०तदात्रेष्टं' इत्यपपाठः । ३. मत्वर्थीयः पूर्वोक्तः सुप्रत्ययः ।
४. कोशे 'वीरवद्विधं शत्रुः' इत्यपपाठः । धा० १०।२६८॥
५. धा० २।३६॥ ६. धा० १०।३५५॥ ७. कोशे 'सिमी०' इत्यपपाठः ।
८. सीमिति परिग्रहार्थीयो पदपूरणो वा । निरु० १।७॥
९. 'परिग्रहार्थीय' शब्देनेति भावः ।
१०. कोशे 'अन्यत्सद्भावसिद्धौ' इति पाठः । द्रष्टव्योऽत्र पूर्वा पङ्क्तिः ।
११. प्र सीमादित्योऽसृजत् (ऋ० २।२८।४) इत्यृचं विवृणुते—आदित्य इति ।
१२. कोशे 'सारणा चैवा विधत्ता' इत्यपपाठः ।
१३. कोशे 'रश्मि सीमत्य०' इत्यपपाठः ।

प्रासृजत्[1] सर्वतो यद्वा सर्वत्रेति [2]विवक्षिते ।
सम्भवत्यर्थवत्त्वे च न युक्तः पदपूरणः ॥३३॥
विसृष्टास्सिन्धवस्तेन[3] रश्मयः स्यन्दनात्मकाः ।
भौमं रसं समादाय वरुणस्य समीपतः ॥३४॥
गच्छन्ति न श्रमं यान्ति कुर्वन्तः कर्म तत्सदा ।
अत एव न मुञ्चन्ति कुर्वन्त्येव पुनः पुनः ॥३५॥
पतन्तो लघुतां यान्ति सर्वतः प्रक्षिणो यथा ।
ऋतमेवाथवा कर्म सृजेश्शेषो[4] न भिद्यते ॥३६॥
उत्तमेनाथवा सृष्टमृतमादाय रश्मयः ।
गच्छन्तो न श्रमं यान्ति मध्यमस्य समीपतः ॥३७॥
पार्थिवस्येति वा योज्यं सिन्धवस्सरितस्तथा ।
सीमतस्त्व[5] इति त्वेतौ निपातावुत नामनी ॥३८॥
विमतेः संशये जाते पूर्वस्याह निपातताम्[6] ।
ब्रह्म[7] जज्ञानमित्यस्यां सीमतस्त्वित्युदाहृतिः ॥३९॥
परिग्रहार्थताऽस्यापि[8] पदपूरणतापि वा ।
ब्रह्म प्रवृद्धमत्रेष्टं प्रथमं सूर्यलक्षणम् ॥४०॥
प्रथमं [9]प्रतमं तद्धि प्रकृष्टं त्वेव सर्वतः ।
पुरस्ताद् दिशि पूर्वस्यां जज्ञानं तूद्यदन्वहम् ॥४१॥
व्यवृणोत्सुरुचो[10] रश्मीन् वेनः[11] कान्तस्तु सर्वतः ।
वेनः[12] स इति पुंल्लिङ्गः सूर्यरूपविवक्षया ॥४२॥

---

१. प्रासृजदिति वा प्रासृजत् सर्वत इति वा । निरु० १।७॥
२. कोशे 'च वक्षिते' इत्यपपाठः । ३. कोशे 'विसृष्टान् सिन्धव०' इत्यपपाठः ।
४ शेषोऽर्थस्तु पूर्वोक्तादर्थाद् न भिद्यते इत्यर्थः ।
५. कोशे 'सीमतत्व' इत्यपपाठः । ६. कोशे 'पूर्वस्याह निपातताम्' इत्यपपाठः ।
७. यजु० (मा० सं०) १३।३॥ ८. कोशे 'परिग्रहार्थतोस्यापि' इत्यपपाठः ।
९. कोशे 'व्रतमन्तद्धि प्रकृष्टत्वेन' इत्ययपाठः । तु०—प्रथम इति मुख्यनाम प्रतमो भवति । निरु० २।२२॥
१० व्यवृणोत् सर्वत आदित्यः । सुरुच आदित्यरश्मयः सुरोचनात् । निरु० १।७॥
११. कोशे 'रश्मीन्स्वेन कान्तस्तु' इत्यपपाठः । १२. कोशे 'वैनस्स' इत्यपपाठः ।

आङध्याह्रियते नाम[1] मर्यादावचनं यदा ।
मर्यादा या हि रश्मीनां लोकालोकाख्यपर्वतौ[2] ॥४३॥
व्यवृणोदा ततो रश्मीनित्यर्थ उपपद्यते ।
अन्तरिक्षं तु बुध्नं स्याद् [3]भवास्तस्मिन् दिशस्त्विमाः ॥४४॥
उपमास्त्वन्तिकास्तस्य[4] सूर्यस्य जगतोऽपि वा ।
विष्ठा विष्टभ्य लोकं हि [5]स्थिता धारिण्य एव वा ॥४५॥
सदसद्योनिभूतास्ता [6]व्यावर्विवृतवानसौ ।
यद्वा सदसतो योनिं परमात्मानमव्ययम् ॥४६॥
श्रद्धया सेव्यमानोऽसौ विवृणोत्येव सर्वदा ।
कर्मणो भेद एव स्याद् व्यावरित्यस्य संश्रितः ॥४७॥
अपि[7] वा[8] न निपातोऽयं नाम सोमेति गम्यताम् ।
अनर्थकत्वमत्रापि प्रकृतेः प्रत्ययस्य वा ॥४८॥
न तावत्प्रकृतेर्युक्तं मर्यादावचनत्वतः ।
प्रत्ययस्याप्ययुक्तं[9] स्यात् पञ्चमीकर्मकीर्तनात् ॥४९॥
अन्येनानर्थकत्वञ्चेदव्याप्यं [10]तत्प्रसिद्धितः ।
प्रत्ययस्तूपबन्धोऽत्र प्रकृतावुपबध्यते ॥५०॥
पञ्चमीकर्म कर्मास्य [11]यथोष्ट्रमुखता तथा ।
पञ्चम्यन्तत्वमात्रोक्त्या नामत्वं ननु सिध्यति ॥५१॥

---

१. यदा 'सीमतः' इति नामपदं मर्यादावाचकं तदा 'आङ्' इत्यध्याह्रियत इत्यन्वयः।
२. कोशे '०पर्वते' इत्यपपाठः ।
३. कोशे 'भावास्त्वस्मिन् दिशन्त्विमम्' इत्यपपाठः ।
४. कोशे 'उपमा त्वन्तिकस्तस्य' इत्यपपाठः ।
५. कोशे 'स्थितायारिण्य' इत्यपपाठः । ६. कोशे 'व्यावर्विहृतवानसौ' इत्यपपाठः ।
७. अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम् सीम्नः सीमतः सीमातो मर्यादातः । निरु० १।७॥ ८. कोशे 'अपि नाम निपातो यन्नाम' इत्यपपाठः ।
९. कोशे 'प्रत्ययस्यास्य युक्तं' इत्यपपाठः ।
१०. कोशे 'तत्प्रसिद्धतः' इत्यपपाठः ।
११. कोशे 'यथेष्ट मुखतो तथा' इत्यपपाठः ।

सत्यं [1]तथापि वक्तव्यं प्रस्तुतार्थनिवृत्तये ।
अर्थेन प्रकृतेनैव सीमेत्येतदनर्थकम्[2] ॥५२॥
मर्यादालक्षणेनैनदर्थवत् प्रतिपाद्यते ।
अथवा प्रत्ययस्यैव भवेदेतद्विशेषणम् ॥५३॥
अपादानादिकं नात्र पञ्चमीकर्म विद्यते ।
आ सीमतस्त्विति[3] त्वर्थ आसीमं [4]व्यवृणोदसौ ॥५४॥
पञ्चमीकर्मतोक्तिस्तु[5] प्रत्ययस्योपलक्षणम् ।
आद्यादेश्चोपबन्धोऽयम्[6] उपसंख्यानगोचरः[7] ॥५५॥
सीम्नः सीमत इत्यादि पर्यायत्वविवक्षया ।
नकारान्तस्य[8] सीम्नः [9]स्यात् सीमतश्चेत्यपि स्फुटम् ॥५६॥
आकारान्तस्य[10] सीमातो मर्यादातोऽर्थकीर्तनम् ।
सीमा[11] स्यादिह मर्यादा सन्तानार्थस्य सीव्यतेः[12] ॥५७॥
विशब्दोपपदस्यैतद् वीति लुप्तं प्रचक्षते ।
विशब्दं विगमे विद्याद् विच्छेदो विगमः स्मृतः ॥५८॥
विषीव्यत्येव[13] मर्यादा विषयौ[14] विच्छिनत्ति हि ।
सन्तानवर्जितौ देशौ [15]छिन्नौ कुर्याद्विलक्षणौ ॥५९॥
विनिग्रहार्थमिष्टं तु सर्वनाम त्व इत्यपि ।
निपातत्वनिवृत्त्यर्थं[16] सर्वनामेत्युदाहृतम् ॥६०॥

---

१. कोशे 'तथा विवक्तव्यं' इत्यपपाठः । २. कोशे 'सीमेत्येतदर्थकम्' इत्यपपाठः ।
३. कोशे 'असीमत०' इत्यपपाठः । ४. कोशे 'विवृणोदसौ' इत्यपपाठः ।
५. कोशे 'पञ्चमी कर्मणो०' इत्यपपाठः । ६. कोशे 'आव्यादे०' इत्यपपाठः ।
७. तसिप्रकरणे आद्यादिभ्य उपसंख्यानम् (महाभा० वा० ५।४।४४) ।
८. कोशे 'नकारास्तस्य' इत्यपपाठः । ९. कोशे 'स्यासीमन्त०' इत्यपपाठः ।
१०. कोशे 'आकारात्तस्य' इत्यपपाठः ।
११ सीमा मर्यादा विषीव्यति देशाविति । निरु० १।७॥
१२. कोशे 'सीव्यते' इत्यपपाठः । धा० ४।२॥ १३. कोशे 'विषीप्ययेव' इत्यपपाठः ।
१४ कोशे 'विषयो विछिनत्ति' इत्यपपाठः ।
१५. कोशे 'छिन्नो' इत्यपपाठः ।
१६. त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तमर्धनामेत्येके । निरु० १।७॥

सर्वस्यार्थस्य नामेदं संज्ञा शब्दविदामियम्[1] ।
एक[2] इत्यस्य पर्यायाद् ऋचामेक इतीरणम्[3] ॥६१॥
कथमेकस्य पर्यायो नन्वस्यार्थो विनिग्रहः ।
विनिग्रहाभिधेयञ्च पुरोक्तमवधारणम् ॥६२॥
यथा रक्तगुणं ब्रूयात् शोणशब्दो ह्ययं सदा[4] ।
त्व इत्येष तथा ब्रूयादेकस्यैव विनिग्रहः ॥६३॥
अनुदात्तस्वरादेशश्चोद्योऽर्थो नास्य कारणम् ।
तेनाशक्ये निपातत्वे[5] नामतास्य प्रसाध्यते ॥६४॥
एकेऽर्धनामतामाहुस्त्वो[6] नेमस्त्वित्युदाहृतिः[7] ।
विनिग्रहार्थको[8] यस्यामृक्सा व्याख्यायतेऽधुना ॥६५॥
इत्यृत्विक्कर्मणामाह[9] विनियोगं[10] पृथक्त्वशः ।
इत्युक्तं भाष्यकारेण समस्तार्थविवक्षया ॥६६॥
समुदायार्थविज्ञाने तद्वशेन पदार्थधीः ।
जायते तेन वक्तव्यो न चेदर्थान्तरो विधिः ॥६७॥
पदार्थान्तरविज्ञाने वाक्यार्थोऽन्यः प्रसज्यते ।
वक्ष्यते यन्निवृत्त्यर्थं[11] पूर्वं पूर्वमितीह च ॥६८॥

---

१. कोशे 'शब्दविदामिदम्' इति पाठः । तु०—'अन्वर्थसंज्ञा यथा विज्ञायेत—सर्वादीनि सर्वनामसंज्ञानि भवन्ति, सर्वेषां नामानीति चातः सर्वनामानि । महाभा० १।१।२६॥

२. कोशे 'एत' इत्यपपाठः ।

३. ऋचां त्वः (ऋ० १०।७१।११) इत्यृचं विवृण्वानो यास्क ऋचामेक इति व्याहरन् त्वशब्दमेकपर्यायं घोषयतीत्यर्थः ।

४. नियतविषयत्वादिति शेषः । तु०—समाने रक्ते वर्णे गौर्लोहित इति भवत्यश्वः शोण इति । महाभा० १.२।७२॥

५. कोशे 'निपातत्वं' इत्यपपाठः ।

६. कोशे 'त्वों नामस्त्व०' इत्यपपाठ ।

७. निरु० ३।२०॥ ८. कोशे 'विनिग्रहार्थका यस्य मृक्सा' इत्यपपाठः ।

९. कोशे 'इत्यृत्विकर्म०' इत्यपपाठः । इत्यृत्विक्कर्मणां विनियोगमाचष्टे । निरु० १।८॥

१०. कोशे 'विनियोग. पृथक्ततः' इत्यपपाठः ।

११. द्रष्टव्यम्—पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् । निरु० २।२॥

विभक्तस्तु नियोगो यो विनियोगस्स उच्यते ।
ऋत्विजां[1] विनियोगोऽयं विभागस्तस्य चाप्ययम् ॥६९॥
एको[2] होतर्त्विजां[3] मध्ये [4]पुपुष्वान् पोषमेव तु ।
यथा शास्त्रमृचामास्ते[5] पोषः पुष्टिरुदीर्यते ॥७०॥
सम्यगुच्चारणं [6]पुष्टिस्स्वरादिज्ञानपूर्वकम् ।
पुपुष्वानिति धात्वर्थः प्रत्ययार्थमनूद्यते ॥७१॥
प्रत्ययश्च करोत्यर्थः पोषं कुर्वन्नितीप्सितम् ।
गायत्रमेक[7] उद्गाता [8]शक्वरीष्वृक्षु गायति ॥७२॥
जातविद्यां वदत्येको ब्रह्मा दोषविनाशिनीम् ।
मात्रां प्रमाणमेवैको विमिमीते[9] हि साधनैः ॥७३॥
अध्वर्युरेक एवेह यज्ञस्येत्यवगम्यते ।
ऋगर्चनी[10] तया देवाः पूज्यन्ते स्तुतिभाजनाः ॥७४॥
गायत्रं[11] नाम सामाह [12]गायतेस्स्तुतिकर्मणः ।
गुणिनस्तु गुणान् वक्तुम् अशक्तं साम[13] यद्यपि ॥७५॥
तथाप्याधारसामर्थ्यात् तद् द्वारेणोपवर्ण्यते ।
इतिकर्तव्यता यद्वा साध्य [14]आधार इष्यताम् ॥७६॥

१. कोशे 'ऋत्विञ्जास्य नियोगो यं नियोगंन्तन्य' इत्यपपाठः ।
२. कोशे 'रात्तो त्रा तर्थिका' इति भ्रष्टः पाठः ।
३. ऋचामेकः पोषमास्ते पुपुष्वान् होता । निरु० १।८॥
४. कोशे 'पुपुष्वात्माषमेव तु' इत्यपपाठः ।
५. कोशे '०चामान्ते पोषः पुर्षिरु०' इत्यपपाठः ।
६. कोशे 'पुष्टिरस्तादि०' इत्यपपाठः ।
७. गायत्रमेको गायति शक्वरीषूद्गाता । निरु० १।८॥
८. 'शबरीष्वृक्ष' इत्यपपाठः ।
९. कोशे 'धिमिमीते' इत्यपपाठः ।
१०. ऋगर्चनी । निरु० १।८॥
११. गायत्रं गायतेः स्तुतिकर्मणः । निरु० १।८॥
१२. धा० १।९६५॥
१३. यद्यपि सामशब्दो गानवाची । न च गानमात्रेण गुणिनो गुणा शक्यन्ते वक्तुम् । तथापि यन्निष्ठं गानं=साम तेन मन्त्रपदसमूहेन स्तुतिः शक्यते वक्तुम् । एमाहुः—प्रगीत- मन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम् ।
१४. कोशे 'आचार क्रुष्यताम्' इत्यपपाठः ।

अर्थवन्त[1] इति त्वत्र वक्ष्यामस्तद् [2]यथेप्सितम् ।
ऋचश्शक्वर्य[3] इत्याह [4]शक्नोतेश्शक्तिकर्मणः ॥७७॥
शक्तिकर्मप्रसिद्ध्यर्थं ब्राह्मणं समुदाहृतम् ।
इन्द्रस्त्वभिष्टुतो[5] ह्याभिर्वृत्रं हन्तुं शशाक ह ॥७८॥
तच्छक्वरीत्वमेतासां [6]श्रुतेश्चेह निरुच्यते ।
जाते[7] जात इति त्वेव [8]ब्रह्मा सामर्थ्यकल्पितम् ॥७९॥
दोषे दोषे समुत्पन्ने प्रायश्चित्तं ब्रवीत्ययम् ।
सर्वविद्योऽयमित्येवं वक्तृत्वे हेतुरीप्सितः ॥८०॥
विद्यास्सर्वा हि [9]यस्य स्यु ऋग्यजुस्सामलक्षणाः ।
ब्रह्मत्वे सोऽधिकारी स्यात् तस्मात्ता[10] ज्ञातुमर्हति ॥८१॥
ऐतरेयं[11] यथा चाह विद्यां मे शुक्र इत्यपि ।
अत एवोच्यते ब्रह्मा [12]परिवृद्धः श्रुतेन सः ॥८२॥
न तथा श्रुतवृद्धास्स्युः ऋत्विजोऽन्ये यथा त्वयम् ।
प्रसङ्गेनैव [13]निर्वक्ति ब्रह्म यत् कारणं परम् ॥८३॥
तद्धि सर्वगतं ब्रह्म प्रवृद्धं कार्यरूपतः ।
देहाद्यात्मप्रवृद्धत्वाद्[14] ब्रह्मान्नमपि कथ्यते ॥८४॥

---

१. निरु० १।१६॥ २. कोशे 'यथेस्थितम्' इत्यपपाठः ।

३. शक्वर्य ऋचः शक्नोतेः । तद् यदाभिर्वृत्रमशद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते । निरु० १।८॥ ४. धा० ५।१५॥

५. कोशे 'इन्द्रन्त्वभिष्टुतो ह्यपि वृत्रं' इत्यपपाठः ।

६. कोशे 'श्रुत्येश्चेह' इत्यपपाठः ।

७. ब्रह्मैको जाते-जाते विद्यां वदति । ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति । ब्रह्मा परिवृढः श्रुततः । ब्रह्म परिवृढं सर्वतः । निरु० १।८॥

८. कोशे 'ब्र…' इति भ्रष्टः पाठः ।

९. कोशे 'यस्यास्य मृग्यजुस्सामलक्षणम्' इत्यपपाठः ।

१०. कोशे 'तस्मात्तां' इति पाठः ।

११. अथ केन ब्रह्मत्वं क्रियत इति । त्रय्या विद्ययेति ब्रूयात् । ऐ० ब्रा० २५।८ ॥

१२. कोशे 'परिवृद्धश्रुतेन' इत्यपपाठः । १३. कोशे 'निर्वृत्तिः' इत्यपपाठः ।

१४. कोशे 'देहाद्यात्मप्रवृद्धत्वाद् ब्रह्माणमपि' इत्यपपाठः ।

तथा कर्म प्रवृद्धत्वाद् ऋग्यजुस्सामलक्षणम् ।
अधुनाऽध्वर्युशब्दस्य प्रकृतेः [1]प्रत्ययं पृथक् ॥८५॥
निर्वक्ति[2] प्रथमं तावच्चतुर्धा प्रकृतिं ततः ।
अध्वर्युरध्वरं[3] यस्मात्प्रयुनक्ति स्वसाधनैः ॥८६॥
तस्माद्युजेर्युकारोऽयं[4] प्रत्ययः स्यात् प्रकल्पितः ।
अतोऽध्वरयुरित्येवं तस्य प्रत्यक्षवृत्तिता ॥८७॥
प्रकृतिप्रत्ययौ यद्वा विभज्यैवं निर्दशितौ ।
प्रकृतेरन्तलोपेन भवेदध्वर्युरित्ययम् ॥८८॥
अध्वरस्याथवा नेता यज्ञमन्तं नयत्यसौ ।
अन्तर्हितणिजर्थस्य[5] नयत्यर्थाभिधायिनः ॥८९॥
यकारोऽत्र भवेद्यातेरुकारः[6] प्रत्ययस्तथा ।
तद्धितो वा युरित्येष नेतेत्यर्थे समाश्रितः ॥९०॥
युजेर्युकारतश्चैव [7]यातेश्चैव यकारतः ।
तद्धितोऽयमिति न्याय्यो लघुत्वादिति गम्यते ॥९१॥
अध्वर्युरित्ययं शब्दो भाषिकोऽप्येवमिष्यते ।
यद्वा कामयते यस्मादध्वरं[8] कर्तुमिच्छति ॥९२॥
क्यचीच्छायां[9] कृते चैव छन्दस्युप्रत्यये[10] तथा ।
कव्यध्वरेत्यकारस्य[11] [12]लोपेऽध्वर्युर्भविष्यति ॥९३॥

---

१. कोशे 'प्रत्ययः' इत्यपपाठः ।

२. कोशे 'निर्वक्तिः प्रथमा तावच्चातुर्धा प्रकृतिस्ततः' इत्यपपाठः ।

३. यज्ञस्य मात्रामेको विमिमीतेऽध्वर्युः । अध्वर्युरध्वरं युनक्ति, अध्वरस्य नेता, अध्वरं कामयत इति वा, अपि वाधीयाने युरुपबन्धः । अध्वर इति यज्ञनाम, ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः । निरु० १।८॥

४. कोशे 'तस्माद्युजेरुकारो यत्रयोः स्याः' इत्यपपाठः । धा० ७।७॥

५. कोशे 'अन्तर्हितण्णिजर्थस्य' इत्यपपाठः । ६. धा० २।४०॥

७. कोशे 'यतेश्चैव' इत्यपपाठः ।

८. कोशे 'यस्मादध्वरः' इत्यपपाठः । ९. कोशे 'त्यपिच्छायां' इत्यपपाठः ।

१०. सुप आत्मनः क्यच् (अष्टा० ३।१।८) इति क्यचि कृते, क्याच्छन्दसि (अष्टा० ३।२।१७०) इत्युप्रत्ययः । ११. अष्टा० ७।४।३९ ॥ १२. कोशे 'लोके' इत्यपपाठः ।

यद्वाध्वरमधीयाने प्रत्ययो युरितीष्यते ।
अधीयान इति त्वत्र कालो नैव विवक्षितः ॥९४॥
सर्वथाध्येतरीत्येवं तद्विदप्युपलक्ष्यते ।
हिंसार्थस्याध्वरा[1] यज्ञो [2]ध्वरतेस्सा निषिध्यते ॥९५॥
न विद्यतेऽध्वरे प्रायो हिंसा सोऽध्वर उच्यते ।
ध्वरतीति ध्वरो वा स्यात्तस्मादन्योऽयमुच्यते ॥९६॥
न हिंसा कस्यचिद्यज्ञे न च [3]कंचिद् ध्वरत्यसौ ।
वक्ष्यामो युक्तितश्चैतदाम्नायवचनादिति[4] ॥९७॥
एके[5] निपात [6]इत्याहुरनुदात्तस्वभावतः ।
अनुदात्तस्वभावत्वं निपातानां किलेष्यते[7] ॥९८॥
उदात्तता[8] तथा नाम्नामुत्सर्गोऽयमुदाहृतः[9] ।
अतस्तत्कथमित्याह नामत्वं नास्य युज्यते ॥९९॥
व्यावर्तयन्निपातत्वं[10] 'तु' शब्देनास्य नामताम् ।
व्यये[11] दृष्टे तथाऽऽचष्टे निपातो नैवमात्मकः ॥१००॥
व्ययोऽस्य [12]विविधं दृष्टं गमनं बोधकान्तरे[13] ।
द्वितीयायाञ्चतुर्थ्यां च प्रथमायां तथैव च ॥१०१॥

---

१. निघ० २।१९॥, ३।१७॥ २. धा० १।९८६॥

३. कोशे 'कश्चिद्ध्वरत्यसौ' इत्यपपाठः ।

४. आम्नायवचनादहिंसा प्रतीयेत । निरु० १।१६ ॥

५. कोशे 'एते' इत्यपपाठः ।

६. निपात इत्येके । तत् कथमनुदात्तप्रकृति नाम स्यात् । निरु० १।८॥

७. द्र०—चादयो ऽनुदात्ताः । फिट् सूत्रम् । ८. कोशे 'उदात्तां' इत्यपपाठः ।

९. उत्सर्गः=प्रायिकत्वम् । निपाताः प्रायेणानुदात्ताः, नामानि चोदात्तवन्ति । प्रायिकमेवेदं लक्षणमाश्रित्य ऐके पूर्वाचार्याः 'त्व' इत्यस्य निपातत्वमास्थितवन्तः । 'त्वनेमसमसिमेत्यनुच्चानि' इति फिट्सूत्रकारस्तु नाम्नामेवैषां सतामनुदात्तत्वं व्याचष्टे ।

१०. दृष्टव्ययं तु भवति—'उत त्वं सख्ये स्थिरपीतमाहुः' इति द्वितीयायाम्, 'उतो त्वस्मै तन्वं विसस्रे' इति चतुर्थ्याम्, अथापि प्रथमा बहुवचने । निरु० १।७॥

११. कोशे 'व्ययदृष्टे' इत्यपपाठः । विभक्तिषु रूपान्तरप्राप्तिरत्र व्ययः ।

१२. कोशे 'विविधो दृष्टो' इत्यपपाठः । १३. विभक्त्यन्तर इत्यर्थः ।

बह्वर्थे वचनेऽनेन नामतास्य प्रतीयते ।
तद् [1]उत त्वम् [2]उतो त्वस्मै तथाऽक्षण्वन्त[3] इत्यपि ॥१०२॥
निपातानां न धर्मोऽयं धर्मोयं नामगोचरः ।
त्वनेमादेरनुच्चत्वं[4] [5]स्मरन्तीत्यनुदात्तता ॥१०३॥
नामत्वेऽप्यविरुद्धेति नामैवेदमसंशयम् ।
तत्रोत त्वमुतो त्वस्मा इत्येते[6] विवरिष्यति[7] ।१०४॥
ज्ञानप्राशस्त्यसिद्ध्यर्थम् [8]अज्ञानं चापि निन्दितुम् ।
अक्षण्वन्तोऽक्षिमन्तः[9] स्युः कर्णवन्तस्तथैव च ॥१०५॥
सखायश्च समाः[10] ख्याता आभिजात्येन यद्यपि ।
तथापि न समास्सर्वे मनोगम्येषु[11] वस्तुषु ॥१०६॥
ग्रीवाक्षकण्ठनासोरुपादोदरकरादिभिः ।
तुल्या अपि न तुल्याः स्युः शास्त्रगम्येषु[11] वस्तुषु ॥१०७॥
आदघ्नास्त्वास्यदघ्नाः[12] स्युरास्यदघ्नोदका ह्रदाः ।
ये त्वेके तद्वदेव [13]स्युर्मध्यमप्रज्ञयान्विताः ॥१०८॥
स्नात्वाश्च स्नानयोग्यास्स्युरर्हास्ते ज्ञानकर्मणि ।
स्नानार्हा इति निर्दिष्टो वाच्यस्त्वप्रत्ययेरितः ॥१०९॥
उपकक्षास्तथा त्वेके कक्षमात्रोदका यथा ।
क्षोभ्यन्ते तद्वदेवैके कनिष्ठप्रज्ञयान्विताः ॥११०॥

---

१. ऋ० १०।७१।५॥ २. ऋ० १०।७१।४॥
३. ऋ० १०।७१।७॥ ४. कोशे 'त्वनेनादे०' इत्यपपाठः ।
५. स्मरन्ति फिट्सूत्रकारा इति शेषः । तथा च सूत्रम्—त्वनेमसमसिमेत्यनुच्चानि ।
६. कोशे 'इत्येते पिवि शिष्यत्ति' इत्यपपाठः ।
७. निरुक्त १।२०॥ ८. कोशे 'अज्ञानश्च' इत्यपपाठः ।
९. कोशे 'अक्षञ्चन्तो क्षिमन्तः स्युः कणवन्त०' इत्यपपाठः । अक्षिमन्तः कर्णवन्तः सखायः । निरु० १।९॥ १०. कोशे 'समाख्याता' इत्यपपाठः ।
११. कोशे '०गमेषु' इत्यपपाठः ।
१२. कोशे 'आदघ्ना त्वास्यदघ्नास्' इत्यपपाठः ।
१३. कोशे 'स्युमध्यम०' इत्यपपाठः ।

अक्षोभ्यत्वात्प्रसन्नास्तु दृश्यन्ते हि यथा ह्रदाः।
दृश्यन्ते तद्वदेवैके प्रज्ञयोत्तमयान्विताः ॥१११॥
चक्षुरक्षीति[1] निर्दिष्टं[2] चष्टेर्दर्शनकर्मणः।
अनक्तेरथवाक्षि[3] स्याल्लघुत्वं भविष्यति ॥११२॥
चष्टेऽनेनेति[4] वाक्षि[3] स्यादनक्तीत्यथवा भवेत्।
अनक्त्यभिव्यनक्त्येतद्[5] रूपं व्यक्तीकरोति हि ॥११३॥
स्वयं वा व्यक्तमन्येभ्यो भृशं तेजस्वि[6] प्रोज्ज्वलम्।
अक्षिणी[7] हि प्रकृत्याह "श्रुतिर्व्यक्ततरे[8]" इति ॥११४॥
कर्णस्तु[10] [11]कृन्ततेर्धातोर्गुणेऽन्तस्य लोपतः।
आग्रायणमतं तावद् [12]ऋच्छतेर्गतिकर्मणः ॥११५॥
ककारोपजने [13]कर्णो गुणे[14] नप्रत्यये[15] तथा।
विज्ञायते तथा [16]कर्णौ प्रकृत्य ब्राह्मणेरितम् ॥११६॥
ऋच्छन्ती[17] इव गच्छन्ती आकाशे कर्णयोर्बिले[18]।
प्रतीयेते गतिर्नैव वस्तुतस्तदिवेरितम् ॥११७॥

---

१. अक्षि चष्टेरनक्तेरित्याग्रायणः। तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते। निरु० १।९॥ २. कोशे 'चषेर्द०' इत्यपपाठः। धा० २।७॥

३. कोशे '०नाक्षिस्स्या०' इत्यपपाठः। धा० ७।२॥ ४. कोशे 'चक्षे' इत्यपपाठः।

५. कोशे 'अननक्त्यभिप्यनम्येतद०' इत्यपपाठः।

६. कोशे 'तेजस्थितोज्वलम्' इत्यपपाठः।

७. कोशे 'अक्षिणीति' इत्यपपाठः। सन्धिर्न युक्तो, द्विवचनान्तस्य 'अक्षिणी' इत्यस्य प्रगृह्यसंज्ञकत्वात्। ८. कोशे 'श्रुतिर्व्यक्त्यन्तरे' इत्यपपाठः।

९. तस्मादेते व्यक्ततरे इव। अनुपलब्धमूला श्रुतिः।

१०. कोशे 'कृन्तस्तु' इत्यपपाठः।

११. कर्णः कृन्ततेर्निकृत्तद्वारो भवति ऋच्छतेरित्याग्रायणः। निरु० १।९॥ कृती छेदने। धा० ६।१४१॥ १२. कोशे 'उच्यते०' इत्यपपाठः। धा० १।९८३॥

१३. कोशे 'कण्ठो' इत्यपपाठः। १४. कोशे 'गुदो' इत्यपपाठः।

१५. अयं भावः—ऋधातोर्नप्रत्यये गुणे ककारागमे च कर्ण इति रूपं निष्पद्यते।

१६. कोशे 'कण्ठौ प्रकृत्या' इत्यपपाठः।

१७. ऋच्छन्तीव खे उदगन्ताम्। अनुपलब्धमूला श्रुतिः।

१८. कोशे 'कण्ठयो०' इत्यपपाठः। कर्णबिललक्षणे आकाशे इत्यर्थः। प्रथमाद्विवचनान्ते एते पदे।

गतिर्वा व्याप्तिरेवेष्टा तयोश्शब्दावबोधनम् ।
उदगन्तां[1] तथैवैते शरीरस्योपरि स्थिते ॥११८॥
गत्यर्थस्यर्च्छतेरेतच्छत्रन्तस्य[2] नपुंसके ।
ऋच्छन्ती इति विज्ञेयं प्रथमामध्यमे[3] वचः ॥११९॥
खे इत्यपि [च] पाठोऽयमेवमेवोपपाद्यते[4] ।
मनसा[5] येऽभियुज्यन्ते गम्यन्ते शास्त्रयुक्तिभिः ॥१२०॥
मनोजवांश्च तानाहुर्विविक्तज्ञानगोचरान्[6] ।
अस्यते[7] क्षिप्यते [8]ह्यन्नमस्मिन्नित्यास्यमस्यतेः ॥१२१॥
आस्यन्दतेऽथवाप्येनद्[9] आस्यमन्नमुपेत्य हि ।
स्रवत्येव [10]द्रवीभावं प्रयातीत्यास्यमुच्यते ॥१२२॥
एनदित्यस्य[11] निर्देशादन्नस्यैवेह कर्तृता[12] ।
शुष्कस्यापि[13] द्रवीभाव आस्येऽन्नस्योपलभ्यते ॥१२३॥

---

१. कोशे 'उदग्गन्ता तथैवेते' इत्यपपाठः ।

२. कोशे 'गत्यर्थ······छतेरेतत् छत्रं तस्य' इत्यपपाठः ।

३. कोशे 'प्रथमा मध्यमा' इत्यपपाठः । मध्यमे=द्विवचने इत्यर्थः ।

४. अयमभिप्रायः—केचिद् 'ऋच्छन्ति' इति पदं तिङन्तं 'खे' इति पदं च सप्तम्यन्तं मन्यमानाः श्रुतिं व्याचक्षते—ऋच्छन्तीवैतौ कर्णौ प्रति खे व्यक्ताः सन्तः शब्दाः, एतावपि चोदगन्तां प्रत्युद्गच्छत इव ग्रहणाय तान् शब्दान्—इति । तन्न युज्यते, ऋच्छतेः कर्तृत्वेन कर्णयोरसम्बन्धात्, 'खे उदगन्ताम्' इति प्रकृतिभावानुपपत्तेश्च । (द्र० स्कन्दटीका पृ० ७६)

५. मनसां जवेष्वसमा बभूवुः । निरु० १।९॥

६. कोशे 'ज्ञान गोचरात्' इत्यपपाठः ।

७. आस्यदघ्ना अपर उपकक्षघ्ना अपरे । आस्यमस्यतेरास्यन्दत एनदन्नमिति वा । निरु० १।९॥

८. कोशे 'व्यन्नस्मिन्नित्यास्यमस्यते' इत्यपपाठः ।

९. कोशे '०थवाप्येनं दास्यम०' इत्यपपाठः ।

१०. कोशे 'द्रवीभाव द्रवतीत्यासमुच्यते' इत्यपपाठः ।

११. कोशे 'अनदित्यास्य' इत्यपपाठः । 'आस्यन्दत एनदन्नमिति वा' इति मूलपाठः ।

१२. एनदित्यन्वादेशे द्वितीयान्तमित्यन्नस्य कर्तृत्वमित्याशयः ।

१३. कोशे 'उष्णस्यापि' इत्यपपाठः ।

उपेत्येति पदं तस्मादध्याहार्यमसंशयम् ।
तद्[1] वास्यन्दयत्येनदिति नान्यदपेक्षते ॥
अन्नेनास्यद्यते[2] ह्यास्यं तेनैनदिति युज्यते ॥१२४॥
दघ्नं[3] प्रमाणमित्याहुः स्रवत्यर्थस्य [4]दघ्यतेः ।
स्रुतं[5] न्यूनं प्रमाणं हि प्रमाणादुत्तरादिदम् ॥१२५॥
दस्यतेरथवा[6] दघ्नं [7]विदस्तसदृशं यतः ।
प्रमाणान्महतः क्षीणम् अल्पमित्यत्र सम्मतम् ॥१२६॥
प्रमाणप्रत्ययं प्राहुर्दघ्नचं [8]शब्दकोविदाः ।
धातोर्वात्र[9] तदर्थत्वं [10]भाष्यकारेण वर्णितम् ॥१२७॥
स्नात्वा इति पदस्यार्थं [11]प्रस्नेया इत्यभाषत[12] ।
ह्रदस्तु[13] [14]ह्रादतेर्धातोः शब्दार्थस्य निरुच्यते ॥१२८॥
भिन्नोऽसौ भूरिवारित्वात् कर्ता शब्दस्य जायते ।
ह्लादतेरथवा[15] धातोः शीतीभावाभिधायिनः ॥१२९॥
बहुत्वेनाप्रवेश्यत्वाद्रश्मीनां शीतलो हि सः ।
अथाव्ययनिपातोऽन्यो[16] विज्ञेयस्स्यात्समुच्चये ॥१३०॥

---

१. कोशे 'पांस्त्वास्यन्दयस्तेनदिति' इत्यपपाठः ।
२. कोशे 'अनेनास्यन्दते' इत्यपपाठः ।
३. दघ्नं दघ्यतेः स्रवतिकर्मणो दस्यतेर्वा स्याद् विदस्ततरो भवति । निरु० १।६॥
४. कोशे 'दर्घ्यते' इत्यपपाठः । धा० ५।२७॥
५. कोशे 'स्रुतत्यूनं' इत्यपपाठः । ६. धा० ४।१०४॥
७. कोशे 'विदस्तन्त दृशं यतः' इत्यपपाठः ।
८. प्रमाणे द्वयसज्दघ्नञ्मात्रचः । अष्टा० ५।२।३७॥
९. कोशे 'वातोर्वा वतदर्थत्वं' इत्यपपाठः ।
१०. यास्केनेत्यर्थः । ११. कोशे 'प्रस्सेया' इत्यपपाठः ।
१२. प्रस्नेया ह्रदा इवैके ददृशिरे । प्रस्नेयाः स्नानार्हाः । निरु० १।६॥
१३ ह्रदो ह्रादतेः शब्दकर्मणो ह्लादतेर्वा स्याच्छीतीभावकर्मणः । निरु० १।६॥
१४. धा० १।२६॥ १५. धा० १।२७॥
१६. अथापि समुच्चयार्थे भवति—पर्याया इव त्वदाश्विनम्, आश्विनं च पर्यायाश्चेति । निरु० १।६॥

पर्याया[1] इति वाक्येऽस्मिन्निवेत्येषोऽप्यनर्थकः ।
पर्यायाश्चाश्विनं चेति त्वदित्येतेन कथ्यते ॥१३१॥
अतिरात्रे हि पर्यायाः प्रथमोत्तममध्यमाः ।
ते च स्युराश्विनं चैव शस्त्रं त्वित्यवधार्यताम्[2] ॥१३२॥
निपातास्त्वर्थवर्णा[3] ये व्याख्यातास्ते यथाक्रमम् ।
येषां न सम्भवत्यर्थस्तेषां गतिरथोच्यते ॥१३३॥
अपवृत्ते[4] समाप्तेऽर्थे वाच्ये कृत्स्नैस्समीरिते ।
अमिताक्षरवाक्येषु[5] निपाता वाक्यपूरणाः ॥१३४॥
आयान्ति ये[6] त्वनर्थास्ते पद्येषु पदपूरणाः ।
भवन्ति नान्यथा तेषां पद्यत्वमुपपद्यते ॥१३५॥
वाक्यपूरणता नाम केयं गम्येषु कथ्यताम् ।
पदेषु सत्सु यावत्सु विशिष्टोऽर्थः प्रतीयते ॥१३६॥
तावतामेकवाक्यत्वे किमेवात्र न पूर्यते ।
सत्यं तथापि वाक्यस्य किञ्चिदाकाङ्क्षितं[7] बुधैः ॥१३७॥
अलंकारस्ततस्तस्य निपातास्स्युस्समर्पकाः ।
निपातैर्भूषितं वाक्यं रमणीयतया[8] नराः ॥१३८॥
आकर्णयन्ति गृह्णन्ति धारयन्ति च यत्नतः ।
निपातैर्वर्जितं वाक्यं सारार्थमिति यद्यपि ॥१३९॥

---

१. कोशे 'पर्याय इति' इत्यपपाठः ।

२. सोमसंस्थासु तृचे क्रमशः प्रत्यृचम् आवृत्तिविशेषेण स्तोत्रपाठः (सामगानं) पर्याय इत्यभिधीयते । ऋचां त्रित्वात् पर्याया अपि त्रय एव । अतिरात्रे नाम सोमसंस्थाविशेषे पर्यायत्रयानन्तरम् आश्विनशस्त्रं (अश्विदेवताकानामृचां पाठः) प्रारभ्यते ।

३. अर्थं वर्णयन्ति ये तेऽर्थवर्णा अर्थवन्त इत्यर्थः ।

४. 'प्रवृत्ते' इत्यस्य स्थाने 'अपवृत्ते' इति पाठमूरीचकारायं ग्रन्थकारः । स्कन्दटीकायाः 'सी' मातृकायामप्ययमेव पाठः (द्र० स्कन्दटीका प्रथमभाग पृ० ७७ टि० ६)।

५. अथ ये प्रवृत्तेऽर्थे मिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति । निरु० १।९॥

६. कोशे 'ते' इत्यपपाठः । ७. विशेषस्याविवक्षितत्वादत्र नपुंसकत्वं ज्ञेयम् ।

८. कोशे 'रमणीयज्ञया' इत्यपपाठः ।

गृह्णन्ति प्रज्ञया युक्तास्तथाप्यन्ये[1] सुभूषितम् ।
सर्वानु[2] स्मारयन्वक्ता शब्दानर्थवतस्तदा ॥१४०॥
सत्यैत्येवेदमापन्नः प्रयुङ्क्ते[3] विश्रमाय तान् ।
अप्रवृत्तेऽर्थं इत्येतद्व अर्थवत्त्वाद्यगोचरात्[4] ॥१४१॥
वाक्यपूरणता चैषां वाक्यार्थस्यैव पूरणात् ।
कमीमिद्विति चत्वारः प्रायेण पदपूरणाः ॥१४२॥
प्रदर्शनार्थमुच्यन्ते[5] सन्त्येवान्येऽपि तादृशाः ।
निष्ट्वक्त्रासश्चिदिन्नरो[6] भूरितोका वृकादिव ॥१४३॥
बिभ्यस्यन्तो[7] ववाशिरे शिशिरं जीवनाय कम् ।
त्वचस्त्राणकरं त्वक्त्रं वस्त्रं वा कम्बलोऽपि वा ॥१४४॥
निस्त्वक्त्रा निर्धनत्वेन निर्गताम्बरकम्बलाः ।
बह्वपत्या नराः श्रान्ताः वृकाद् यद्वद्भयङ्करात् ॥१४५॥
हेमन्तादतिशीतत्वाद् बिभ्यतः[8] शिशिरं हि ते ।
वाश्यन्ते जीवनायालं मन्वाना[9] मन्दशैत्यतः ॥१४६॥
अथवा शिशिरादेव बिभ्यत्यन्ते वृकादिव ।
वाश्यन्ते[10] दुःखमापन्नाः सन्निधाने दयावताम् ॥१४७॥
कालोऽयं[11] शिशिरः[12] प्राप्तो हन्तुमस्मान् वृको यथा ।
त्रायध्वं साधवस्सर्वे गतिर्नो न परास्ति हि ॥१४८॥

---

१. कोशे 'तथाप्यन्येषु भूषितम्' इत्यपपाठः ।

२. श्लोकपाठोऽत्र भ्रष्टः । अयमत्र पाठ ऊह्यते—सर्वान्नु स्मारयन् वक्ता शब्दानर्थवतस्तदा । वाक्यार्थे खेदमापन्नः प्रयुङ्क्ते निश्चयाय तान् ॥

३. विपूर्वस्य श्रमेर्घञि वृद्धिं नेच्छन्ति पाणिनीयाः । द्र० काशिका ७।३।३४॥ अन्ये तु विकल्पेन वृद्धिमाहुः ।

४. कोशे 'अर्थवत्वचगोचरम्' इत्यपपाठः ।

५. कोशे 'सत्येवा०' इत्यपपाठः ।

६. निरु० १।१०॥

७. कोशे 'बिभ्युष्यन्तोप वाशिरे' इत्यपपाठः ।

८. कोशे 'भिभ्यन्तो०' इत्यपपाठः ।

९. कोशे 'मन्त शैतातः' इत्यपपाठः ।

१०. कोशे 'स्याश्यन्ते' इत्यपपाठः ।

११. कोशे 'कालो यः' इत्यपपाठः ।

१२. लिङ्गमशिष्यं लोकाश्रयत्वाल् लिङ्गस्य (महाभाष्य २।१।३६) इति पुंस्त्वम् ।

कमित्यनर्थकं[1] चैव चिच्चेच्च पदपूरणौ ।
श्रृणातेः[2] शिशिरं विद्याच्छम्नातेर्वा[3] हिनस्त्यसौ ॥१४६॥
धातुमात्रविकल्पोऽयं[4] द्वयोरेकार्थता यतः ।
एमेनं[5] सृजतेत्यस्यामीमित्येतदनर्थकम्[6] ॥१५०॥
'आ' इत्यप्युपसर्गोऽयं [7]वीत्यस्यार्थे प्रयुज्यते ।
सप्तमी च द्वितीयायामेनं सोमं[8] सुते सुतम् ॥१५१॥
मन्दि मन्दयिता सोमः तेन [9]सर्वो हि तर्प्यते ।
मन्दीन्द्रस्तर्पणीयत्वात् स्तुतिमान् स्तुत्य[10] एव वा ॥१५२॥
चक्रिस्तु [11]चरणात् सोमः सर्वत्रैव चरत्यसौ ।
चकतेरथवा[12] चक्रिः [13]क्रामतेरथवा मतः ॥१५३॥
चक्रिस्तु कृतवानिन्द्रो विश्वानि भुवनानि हि ।
तादृश[14] तादृशायैव विधिना सम्प्रयच्छत[15] ॥१५४॥
अत्र वा सप्तमी स्वार्था प्रक्षेपार्थस्सृजिस्तथा[16] ।
सुतेऽभ्युन्नयतैवैनं[17] चमसस्थे यथाविधि ॥१५५॥

---

१. कोशे 'किमित्य०' इत्यपपाठः ।
२. शिशिरं जीवनाय । शिशिरं श्रृणातेः शम्नातेर्वा । निरु० १।१०॥ धा० ६।१८॥
३. निघ० २।१६॥ ४. कोशे 'विकल्पो यद्द्वयो०' इत्यपपाठः ।
५. कोशे 'ग्रमेनं' इत्यपपाठः । ऋ० १।६।२॥
६. कोशे '०स्यामिमीत्येतद०' इत्यपपाठः ।
७. कोशे 'पीत्यस्वार्थे' इत्यपपाठः ।
८. कोशे 'सोमः' इत्यपपाठः ।
९. कोशे 'सर्वा हि कल्प्यते' इत्यपपाठः ।
१०. कोशे '०तर्पणीयस्त्वात् स्तुतिमास्त्यस्त्य' इत्यपपाठः । द्र० निरु० ४।२४॥
११. कोशे 'चरणात्स्तोमः' इत्यपपाठः ।
१२. कोशे 'चक्रते०' इत्यपपाठः । धा० १।६३॥ १३. धा० १।५०२॥
१४. कोशे 'तादृशा' इत्यपपाठः ।
१५. कोशे 'सम्प्रच्छतु' इत्यपपाठः ।
१६. कोशे 'प्रक्षेपार्थस्सृजिन्तथा' इत्यपपाठः ।
१७. कोशे 'सूते म्युन्नतैवैनं चमसस्ते' इत्यपपाठः ।

समानशिशुका[1] [2]गावः संशिश्वर्यः प्रकीर्तिताः ।
संगतो [3]मृनवत्साभिः [4]शिशुस्संशिशुरुच्यते ॥१५६॥
संशिशूपपदस्यार्त्तेः[5] कर्मण्यण्प्रत्यये[6] कृते ।
छान्दसे वृद्ध्यभावे च संशिश्वर्यो गुणे कृते ॥१५७॥
शिशुं या ह्यवगच्छन्ति पुत्रभावेन संगमे ।
संशिश्वर्यस्ततः[7] प्रोक्ताः संशिश्वर्यो मृतप्रजाः ॥१५८॥
वर्धयन्ति स्तनैर्वत्सं यथा ताः स्निग्धचेतसः ।
तं सोमं वर्धयन्त्वेवं गिरो नोऽस्माभिरीरिताः ॥१५९॥
हृदंसानिस्तु[8] सोमः स्याद्धृदयं हि सनोत्यसौ ।
इन्द्रस्य हृद्य इत्यर्थस्तं[9] गिरो वर्धयन्तु नः ॥१६०॥
स्तुतयो[10] गिर उच्यन्ते [11]गृणातेः स्तुतिकर्मणः ।
यूपे [12]बद्धश्शुनश्शेप इन्द्रमाह्राऽयम्[13] इत्यृचा ॥१६१॥
अयं [14]सोमः स्वभूतस्ते पर्याप्तस्तव तृप्तये ।
सम्प्रत्यतसि[15] कामार्तः कपोतो [16]गर्भधिं यथा ॥१६२॥
स एव तव पर्याप्तो मया त्वं किं करिष्यसि[17] ।
मुञ्च मां मृत्युपाशेभ्यस्त्वं हि शक्नोषि मोक्षणे ॥१६३॥

---

१. तमिद् वर्धन्तु (ऋ० ९।६१।१४) इत्यृग् व्याख्यायते—समानेति ।
२. कोशे 'शावः सा शिशुर्यः' इत्यपपाठ. । ३. कोशे 'मृगवत्साभिः' इत्यपपाठः ।
४. कोशे 'शिशुस्स शिशुरुच्यते' इत्यपपाठः ।
५. कोशे 'सा शिशू०' इत्यपपाठः । ६. अष्टा० ३।२।१॥
७. कोशे 'सा शिशुर्यस्ततः प्रोक्ता सा शिशुर्यो' इत्यपपाठः ।
८. कोशे 'हृदा सनिस्तु०' इत्यपपाठः ।
९. तं वर्धयन्तु नो गिरः स्तुतयः । गिरो गृणातेः । निरु० १।१०॥
१०. कोशे 'स्तुतयोगिर इत्यन्ते' इत्यपपाठः ।
११. निघ० ३।१४॥ धा० ९।२८॥ १२. कोशे 'बद्धश्शुनश्शेफ' इत्यपपाठः ।
१३. अयमु ते समतसि । ऋ० १।३०।४॥
१४. कोशे 'सोम' इति विसर्गरहितः पाठः ।
१५ कोशे 'संप्रत्यतत्सिकामार्तः' इत्यपपाठः ।
१६. कोशे 'गर्भधीं' इत्यपपाठः । १७. कोशे 'करिष्यति' इत्यपपाठः ।

ओहसे[1] वह नो वाक्यम् आत्मानं प्रति सादरम् ।
शृणु [2]तद्वच इत्यर्थं ऊहतेर्वा[3] वितर्कय ॥१६४॥
गर्भो निधीयते यस्यां गर्भधिस्सा कपोतिका[4] ।
नन्वयं[5] कथितः [6]पूर्वमुकारः पदपूरणः ॥१६५॥
प्रसङ्गेन[7] तथा मा भूदित्यत्राप्यभिधीयते ।
पदपूरणता तत्र किमर्थं तह्यु दीरिता[8] ॥१६६॥
एतत्सादृश्यसिद्ध्यर्थं [9]चादीनामिति गम्यताम् ।
यथायमर्थवान्भूत्वा क्वचित्स्यात्पदपूरणः ।१६७॥
तथैव [10]चादयोऽपि स्युरित्यर्थस्तत्र[11] पठ्यते ।
कमादीनाञ्च सादृश्यमित्युक्तेन प्रसिद्ध्यति ॥१६८॥
यथाऽयमुभयत्रेष्टस्तथैव[12] स्युः कमादयः ।
इत्यर्थं पठ्यतेऽत्रायं पुनरेव यथाविधः ॥१६९॥
अतोऽर्थासम्भवे त्वेवं पदपूरणतां विदुः ।
पदपूरणता नाम नहि जात्यास्ति कस्यचित् ॥१७०॥
इदमेव [13]द्रढीकर्तु मिवोऽपीत्याह[14] भाष्यकृत् ।
अर्थवानिवशब्दो हि लोके वेदे च दृश्यते ॥१७१॥
तथाप्यनर्थको दृष्टस्तद्वत्स्युश्चादयः क्वचित् ।
न वै सु विदुरित्यादि कठानां ब्राह्मणं त्विदम्[15] ॥१७२॥

१. कोशे 'दहसे' इत्यपपाठः ।
२. कोशे 'तद्वाच इत्यर्थः ऊहतेर्वापि तत्क्रिये' इत्यपपाठः ।
३. धा० १।६७९॥
४. कोशे कपोतिकाः' इत्यपपाठः ।
५. कोशे 'तत्त्वयं कथितं' इत्यपपाठः ।
६. निरु० १।५॥
७. कोशे 'प्रसज्येत' इत्यपपाठः ।
८. कोशे '०दीरितम्' इत्यपपाठः ।
९. कोशे 'क्त्वादीना०' इत्यपपाठः ।
१०. कोशे 'पादयो०' इत्यपपाठः ।
११ कोशे '०त्यर्थस्स' इति पाठः ।
१२. कोशे '०यमुभयामेष्ट०' इत्यपपाठः ।
१३. कोशे 'द्रढीकर्तुन्निवो०' इत्यपपाठः ।
१४. इवोऽपि दृश्यते—सुविदुरिव, सुविज्ञायेते इव । निरु० १।१०॥
१५. काठक सं० ८।१३॥

तत्रोक्त्वा यज्ञवैगुण्यं दुर्ज्ञेयत्वेन हेतुना ।
दातव्या दक्षिणेत्युक्तं यज्ञस्यैव समृद्धये ॥१७३॥
दुर्ज्ञेयत्वविवक्षायाम् इवेत्यर्थो न विद्यते ।
वाक्यपूरणता[1] तेन तत्र तस्याऽवधार्यते ॥१७४॥
दुर्ज्ञेयत्वं तथा तेन [न]क्षत्रस्याभिधाय हि ।
अग्निमाधत्त[2] इत्युक्तं सवितर्युदिते कठैः[3] ॥१७५॥
नक्षत्रज्ञानवैगुण्यादिवस्तत्राप्यनर्थकः[4] ।
अथानन्तरम्[5] अप्यन्यप्रकारोऽत्राऽभिधीयते ॥१७६॥
समाहारे निपातानाम् अर्थवत्ता यथा तथा ।
इदित्येतेन[6] शब्देन नेत्ययं संप्रयुज्यते ॥१७७॥
अर्थे परिभये त्वेव संप्रयोगस्समाहृतिः ।
हविर्भिरेके[7] स्वरितस्सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्म्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम ॥१७८॥
स्त्रीणां पतिव्रतानां हि [8]प्रभावात् त्रिपुरेश्वराः ।
बभूवुर्दुर्जयास्सर्वे[9] [10]त्रासमाना दिवौकसः ॥१७९॥
तासामसुरनारीणां भर्तृभक्त्यपनुत्तये ।
व्रतानि धर्मबाह्यानि धर्मरूपाण्यनेकशः ॥१८०॥

---

१. कोशे 'वाक्यं पूरणता' इत्यपपाठः ।
२. कोशे 'अधिर्माधत्त' इत्यपपाठः ।
३. काठक सं० ८।३॥
४. सु विज्ञायेते इव (काठक सं० ६।२) इत्युदाहरणमत्र न विव्रियते, दुर्गस्कन्दाभ्यां तु विवृतम् ।
५. अथापि नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये । निरु० १।१०॥
६. कोशे 'इतित्येतेन' इत्यपपाठः ।
७. मन्त्रपाठानुसारं शोधितः पाठः । ऋ० १०।१०६।१ (खिल) ॥
८. कोशे 'प्रभावत्' इत्यपपाठः ।
९. कोशे 'बभूवुर्दुर्ज्जया०' इत्यपपाठः ।
१०. कोशे 'वासमाना' इत्यपपाठः ।

आदिदेश[1] सुसंहृष्टो नारदो [2]भगवानृषिः ।
जगृहुर्नैव तास्तानि[3] श्रीमत्यो धर्मचेतसः ॥१८१॥
ऊचुस्तास्सामपूर्वं तु हर्विभिरिति नारदम् ।
हर्विभिः प्राक्तनैः [4]सोमादेके स्वर्गं व्रजन्त्यतः ॥१८२॥
सुन्वन्तः[5] सवनेष्वन्ये सोमयागैरितो ययुः ।
शचीं वाचं वदेत्तोऽन्ये पूजयन्तस्तथा सुरान् ॥१८३॥
दक्षिणाभिर्व्रजन्त्यन्ये दानैर्बहुविधैः कृतैः ।
पुरुषाणामिमे धर्माः [6]पराधीनाः स्त्रियो वयम्॥ १८४॥
पतिव्रतात्वमेवाहुर्नारीणां धर्ममुत्तमम् ।
तमुत्सृज्य कृतो धर्मः सर्वोऽन्योऽधर्म एव नः ॥१८५॥
नाऽऽचरामस्ततो जिह्मं पापं [7]भर्तृव्यतिक्रमम् ।
कुर्वन्त्यो हि वयं जिह्मं पतेम नरकं ध्रुवम् ॥१८६॥
नेन्नः [8]परिभयं तस्माद् भर्तृन् वयमनुव्रताः ।
नरकं[9] न्यरकं [10]नीचैरर्यते गम्यते ह्यधः ॥१८७॥
अधोगतिरधोगामी[11] कथ्यते [12]पापको नरः ।
नरकाख्यमतो लोकम् [13]अधःस्थानं प्रचक्षते ॥१८८॥
यद्वास्मिन् रमणं स्थानं न किञ्चिदपि विद्यते ।
तस्मात्तन्नरकं प्राहुर्दुःखं तत्रानुभूयते ॥१८९॥

---

१. कोशे 'आभिर्देशसुसंहृष्टो' इत्यपपाठः ।
२. कोशे 'भगवनृषिः' इत्यपपाठः ।　३. कोशे 'तास्तत्रि' इत्यपपाठः ।
४. सोमयागात् पूर्ववर्त्तिभिर्हविर्भिरित्यर्थः ।
५. कोशे 'सुवन्त' इत्यपपाठः ।　६. कोशे 'पराधीना' इति विसर्गरहितः पाठः ।
७. कोशे 'भर्तृव्यतिक्रमम्' इत्यपपाठः ।
८. कोशे 'परिभयस्तस्माद्' इत्यपपाठः ।
९. नरकं न्यरकं नीचैर्गमनं नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा । निरु० १।११॥
१०. कोशे 'नीचै रेयते' इत्यपपाठः ।
११. 'कोशे 'अधोगधि०' इत्यपपाठः ।
१२. कोशे 'पावकं' इत्यपपाठः ।　१३. 'कोशे 'अघस्थानं' इत्यपपाठः ।

अर्त्तेर्वा[1] स्याद् [2]रमेर्वास्याद्यथेष्टं तन्निरुच्यताम् ।
न[3] चेत्येष समाहार इदित्येतेन सग...: ॥१६०॥
प्रयुज्यतेऽनुपृष्टेऽर्थे त्रयस्त्वेवं समाहृताः ।
न चेत्सुरां पिबन्तीति किं [4]पिबन्ति सुरामिति ॥१६१॥
गम्यते प्रश्न एवार्थस्त्रयाणां संहृताविह ।
अनागतेषु दासेषु तेषामागमनेच्छया ॥१६२॥
पिबन्ति किं सुरामद्य वृषला येन नागताः ।
क्वचिद् देशान्तरे त्वेषां निपातानां समाहृतौ ॥१६३॥
दृष्टा[5] प्रश्नार्थतेत्युक्तं अनुपृष्ट इतीदृशम् ।
सुरा[6] पुनस्सुनोतेः[7] स्यात् सूयते सा हि जन्यते ॥१६४॥
अर्थेषूच्चावतेष्वेवम्[8] अन्येष्वपि हि केषुचित् ।
निपतन्ति प्रवर्तन्ते [9]सिद्धैषां पदता पुनः ॥१६५॥
अर्थेषूच्चावचेष्वेते यथैतेषु व्यवस्थिताः ।
एवमुच्चावचेष्वन्ये निपतन्त्येव [10]घादयः ॥१६६॥
...त्यर्थो बोध्यते तेन निपातान्तरसंहृतौ ।
कुत्रैषामुपमार्थत्वं कर्मोपग्रहता क्व च ॥१६७॥
अर्थान्तराणि चैतेषां कुत्रेत्येवमुपेत्य हि ।
ईक्षितव्या यथान्यायं वाक्यार्थप्रतिपत्तये ॥१६८॥

॥ निरुक्त-श्लोकवार्त्तिके [षष्ठाध्यायस्य] तृतीयः पादः ॥

---

१. कोशे 'अर्त्तेर्वा' इत्यपपाठः । धा० १।६८३॥ २. धा० १।६०६॥
३. अथापि न चेत्येष इदित्येतेन सम्प्रयुज्यतेऽनुपृष्टे—न चेत् सुरां पिबन्तीति । निरु० १।११॥ ४. कोशे 'पिबन्ती' इत्यपपाठः ।
५. कोशे 'दृष्टं' इत्यपपाठः । ६. सुरा सुनोतेः । निरु० १।११॥
७. धा० ५।१॥ ८. एवमुच्चावचेष्वर्थेषु निपतन्ति । त उपेक्षितव्याः । निरु० १।११॥
९. कोशे 'सिद्धैषा वदता' इत्यपपाठः ।
१०. कोशे 'वातयः' इत्यपपाठः । तु० स्कन्द टीका (भाग १ पृ० ८१)—'इव शब्दस्य चेह प्रदर्शनार्थमिदमुपादानम् । पादयो [? घादयो] ऽपि दृश्यन्ते—आ घा ता गच्छान् (ऋ० १०।१०।१०, निरु० ४।२०) इत्यादिषु' ।

# चतुर्थः पादः

इत्युक्तेन[1] प्रकारेण संख्यया लक्षणेन च ।
अर्थैश्च विविधैर्वाच्यैर्नामादीन्यानुपूर्व्यशः[2] ॥१॥
सोदाहरणमुक्तानि व्याख्यातानि यथागमम् ।
अत्रिस्मृत्यर्थमुक्तस्य[3] पुनरत्रानुकीर्तनम् ॥२॥
निर्धारणं हि तत्रेति[4] विस्मृतं नोपपद्यते ।
तेभ्यो निर्धार्य निष्कृष्य [5]नामानि शकटात्मजः ॥३॥
ब्रवीत्याख्यातजानीति शब्दशास्त्रविशारदः ।
नैरुक्तसमयश्चायं[6] सिद्धान्तः समयः स्मृतः ॥४॥
न सर्वाणीति गार्ग्यस्तु तथैके शब्दकोविदाः ।
अव्युत्पत्तिं[7] समाश्रित्य शब्दसाधुत्वमाश्रिताः ॥५॥
एवं विप्रतिपत्तौ च संशयस्संप्रवर्तते ।
अतो विचार्यतामेतत् किं युक्तमिति युक्तितः ॥६॥
विचार्यते किमर्थञ्चेत् संशयस्यापनुत्तये ।
संशयस्यापनुत्तौ हि भवतोष्टपरिग्रहः ॥७॥
सर्वाण्याख्यातजान्येव [8]यदि स्युः किं भविष्यति ।
गार्ग्यस्य वा मते [9]कश्च वस्तुतत्त्वविनिश्चयः ॥८॥

---

१. इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च । निरु० १।१२॥

२. कोशे 'सामादी न्यानुपूर्वशः' इत्यपपाठः ।

३. कोशे 'अपिस्मृत्यर्थ०' इत्यपपाठः ।

४. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैके । निरु० १।१२॥

५. कोशे 'मामानि' इत्यपपाठः ।

६. कोशे 'नैरुक्त०' इत्यपपाठः ।

७. कोशे 'अप्युत्पत्ति' इत्यपपाठः ।

८. कोशे 'यदिस्स्यात्कि' इत्यपपाठः ।

९. कोशे 'किञ्च' इति पाठः ।

वस्तुतत्त्वं विनिश्चत्य विद्वत्तां प्रतिपद्यते ।
विद्वत्ताञ्च समासाद्य सकलं भद्रमश्नुते ॥९॥
एक एवाथवाप्यात्मा बहुधा स्तूयते[1] यदा ।
क्रियाभेदेन नामानि तमेवाहुस्स श्रा स्फुटम् ॥१०॥
देवतास्तिस्र एवेति[2] पक्षो वा यदि सिध्यति ।
तदा सर्वाणि नामानि तास्वेव स्युर्यथात्मनि ॥११॥
तत्त्वान्तरे प्रसिद्धो वा यदान्यत्र प्रयुज्यते ।
क्रियासामान्यभेदेन तदा शब्दः प्रवर्तते ॥१२॥
यथा हि सहनात् सिंहो हिंसेर्वा[3] पुरुषस्तथा ।
तत्कार्यापत्त्यभावेन रूपाभावो न चेष्यते ॥१३॥
क्रौर्यशौर्यादिभावोऽपि क्रियायामेव सिध्यति ।
संवत्सरमिति त्वस्य[4] ब्राह्मणा[5] इत्ययं ध्वनिः ॥१४॥
ब्रवणत्वेन[6] योगेन मण्डूकेषु प्रयुज्यते ।
जातवेदास्तथा सूर्यो जातं वेत्तीति[7] योगतः ॥१५॥

---

१. तदुक्तं यास्केन–'माहाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते'(निरु०७।४)इति, 'इममेवाग्नि महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति' (निरु० ७।१८) इति च ।

२. तद् वक्ष्यति यास्कः—तिस्र एव देवता इति नैरुक्ताः (निरु० ७।५) इति ।

३. तथा च निरुक्तम् – सिंहः सहनाद् हिंसेर्वा स्याद् विपरीतस्य (निरु० ३।१८) । काशकृत्स्नस्तु स्वधातुपाठे 'षिहि हिंसागत्योः'(का० धातुव्याख्यानाम् १।३१६) इति पठन् सिहतेर्विना वर्णादेशं वर्णविपर्ययं च निर्ब्रवीति ।

४. ऋ० ७।१०३।१॥

५. तथा च वक्ष्यति यास्कः—संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः । अपि वोपमार्थे स्यात् ब्राह्मणा इव व्रतचारिणः । निरुक्त ८।६॥

६. सम्प्रति निरुक्ते (निरु० ९।६) दुर्गस्कन्दयोश्च व्याख्याने 'ब्राह्मणा व्रतचारिणो ब्रुवाणाः' इत्ययं पाठ उपलभ्यते । स चापपाठः । ब्रवणादित्येव पाठः साधीयान् । भट्टकुमारिलोऽपि तन्त्रवार्त्तिके (१।३।१८) 'निरुक्ते ब्राह्मणो·· ब्रवणादिति प्रयुक्तम्' इत्याह । प्रतीयते 'ब्रवण' शब्दस्यापाणिनीयत्वरूपमपशब्दत्वं विज्ञायोत्तरकालं केनचिदयं पाठः परिवर्तितः ।

७. 'उदुत्यं जातवेदसम्' (ऋ० १।५०।१) इति ऋचि जातवेदसं सूर्यं मन्यते यास्कः (द्र० निरु० ७।२) । सूर्यपक्षे जातवेदस्-शब्दस्य शब्दार्थं संगमयति निरुक्तवार्त्तिककारः ।

नाम्नामाख्यातजत्वेन सर्वमेतच्च सिध्यति ।
विपर्यये न युज्येत तेन युक्ता विचारणा ॥१६॥
अनयोः पक्षयोर्युक्तं यत्तदत्राभिधीयते ।
समर्थौ[1] स्वरसंस्कारौ दृष्टौ [2]येषु पदेषु हि ॥१७॥
प्रादेशिकगुणेनापि तथा स्यातां समन्वितौ ।
संविज्ञातानि तान्येव नेतराणि कदाचन ॥१८॥
उदात्तादिः[3] स्वरोऽत्रेष्टः संस्कारश्चापि लक्षणम् ।
प्रकृत्यादिविभागस्य सामर्थ्यं स्पष्टतोच्यते ॥१९॥
समर्थश्चोच्यते शक्तः शक्तः पुष्टो भविष्यति ।
पुष्टः स्पष्टस्तथा लोके स्पष्टता लक्ष्यते ततः ॥२०॥
प्रत्यक्षौ स्वरसंस्कारौ स्पष्टावित्यभिसम्मतौ ।
अनुमेयौ[4] परोक्षत्वादस्पष्टाविति गम्यताम् ॥२१॥
प्रदिश्यत इति त्वत्र [5]प्रदेशोऽर्थोऽभिधीयते ।
द्रव्याश्रितत्वसामान्यात्[6] क्रियैवेह गुणो भवेत् ॥२२॥
नहि शुक्लादिसद्भावो धातुजत्वस्य कारणम् ।
तयान्वितत्वमर्थस्य तां प्रत्याधारभावतः ॥२३॥
घटते घटते नैव स्वरसंस्कारयोः पुनः ।
सह प्रतीयमानत्वम् अन्वितत्वं [7]तयोरपि ॥२४॥
अस्त्विति[8] युज्यते वक्तुं सहभावविवक्षया ।
क्रियया [9]सहितौ येषु प्रतीयेते पदेषु तौ ॥२५॥

---

१. तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां, सं विज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीति । निरु० १।१२॥

२. कोशे 'एषु' इत्यपपाठः ।
३. कोशे विसर्गरहितः पाठः ।
४. कोशे 'अनुमेयो' इत्यपपाठः ।
५. कोशे 'प्रादेशो०' इत्यपपाठः ।
६. कोशे 'द्रव्याश्रितत्वसामान्या' इत्यपपाठः ।
७. कोशे 'नयोरपि' इत्यपपाठः ।
८. कोशे 'अस्त्वीति' इत्यपपाठः ।
९. कोशे 'सहितो' इत्यपपाठः ।

तान्येवाख्यातजानि स्युः लावकः पाचको यथा ।
कर्ता हर्ता तथा भोक्ता वक्ता त्राता गतिर्मतिः ॥२६॥
ईदृशं[1] धातुजत्वस्य प्रत्यक्षं लक्षणं स्थितम् ।
संविज्ञातानि तानीति धातुजत्वमुदाहृतम् ॥२७॥
ऐकमत्येन बुद्धानि धातुजानीत्यसंशयम् ।
यथोक्तेन प्रकारेण गवादीनामसंभवात् ॥२८॥
अध्याहारेण नेत्यस्य यथा [2]गौरिति योजयेत् ।
न ह्येषु दृश्यते स्पष्टं धातुजत्वस्य लक्षणम् ॥२९॥
एवं व्याचक्षते [3]केचिदध्याहृत्य यथेप्सितम् ।
तानीत्यर्थस्तदित्यस्य[4] गृह्यते तु यथाऽत्र हि ॥३०॥
नाध्याहारस्तथाकार्य[5] इत्येवमुपवर्ण्यते ।
तत्तान्याख्यानजानि स्युः स्वरादिर्येषु दृश्यते ॥३१॥
संविज्ञातानि[6] रूढानि यानि स्युस्तानि गौरिति ।
संविज्ञातपदेनेह रूढतोक्ता[7] गवादिषु ॥३२॥
पदानां श्रवणे येषां [8]स्वरः संस्कार एव च ।
धातुवाच्या क्रियाचैव येषामर्थेषु गम्यते ॥३३।

---

१. कोशे 'ईदृशाया तु जत्वस्य' इत्यपपाठः ।

२. कोशे 'गौरीति' इत्यपपाठः ।  ३. दुर्गस्कन्दावुभौ व्याख्याकारौ ।

४. कोशे 'तानित्यर्थं तदि०' इत्यपपाठः । 'तद् यत्र…स्याताम्' (निरु० १।१-) इत्यस्मिन् वाक्ये प्रयुक्तः तच्छब्दः तान्यर्थक इत्याशयः ।

५ कोशे 'नाध्याहरस्तथा' इत्यपपाठः ।

६. 'संविज्ञातानि तानि' इत्यंशमुत्तरेण 'यथा गौरश्वः…' अंशेन संयोज्यापि स्कन्दो 'न' पदस्याध्याहारं करोति—'न तु यत्र संविज्ञातानि रूढशब्दा इत्यर्थः' ।

७. संविज्ञातपदस्य रूढत्वे दुर्गाचार्यः 'यत्तु संविज्ञानभूतं स्यात्' इति निरुक्त (७ १३) पाठमुद्धरति । अस्मन्मते तु तत्र 'संविज्ञानभूतम्' इत्यस्य सम्यग् ज्ञायते देवतात्व तादृक् पदमभिप्रेतम्, न रूढत्वम् । यतो हि नैरुक्तानां मते न कश्चिदपि रूढशब्दो विद्यते । नहि वृत्रहा पुरन्दर वृत्रतुर इत्यादय इन्द्रार्थमेवाभिदधति, अपि तु वेदे अग्न्यादयोऽन्या अपि देवता वृत्रहादि-विशेषण विशिष्टाः श्रूयन्ते ।

८. कोशे 'स्वरसंस्कार' इत्यपपाठः ।

आख्यातजानि तानि स्युरन्येषां रूढतेष्यताम् ।
संस्कारग्रहणेनैव स्वरोऽपि प्रत्ययादिवत् ॥३४॥
लब्धो लक्षणवाचित्वादविशिष्टं[1] हि लक्षणम् ।
प्रकृतेः प्रत्ययस्यापि संस्कारो लक्षणं यथा ॥३५॥
उदात्तादेस्तथैवेति विशेषो नोपलक्ष्यते ।
प्रकृतिः प्रत्ययो वापि येन [2]संस्क्रियते त्विह ॥३६।
उदात्तादिस्तथा तेन स्वरस्तेनातिरिच्यते ।
इह संस्कारशब्देन शब्दशास्त्रस्य संग्रहः ॥३७॥
इष्यते चेत् स्वरोक्तेः[3] स्याद् भेदेन ग्रहणं वृथा ।
स्वरयुक्तस्य शब्दस्य [4]प्रयोगो नापि दृश्यते ॥३८॥
लक्षणेनाथ गम्येत संस्कारोक्त्यैव[5] तन्मतिः ।
एवञ्चेत्[6] स्वरशब्दोऽत्र शब्दवाचो भविष्यति ॥३९॥
वाङ्नामस्वपि[7] पाठोऽस्य स च धातुरिहाश्रितः ।
धातुश्च लक्षणञ्चैव दृष्टं येषु पदेषु तु ॥४०॥
विस्पष्टं[8] तानि नामानि धातुजानि भवन्तु च ।
आख्यानस्यैकदेशत्वाद्धातुराख्यानमिष्यते ४१॥
पचतीति स्थितान्नैव पाचकादिपदं[9] भवेत् ।
धातुजानीति वक्तव्ये किमर्थं त्वन्यथोच्यते ॥४२॥
आख्यातस्याभिधेयाऽपि[10] क्रियाऽस्तीति विवक्षया ।

---

१. कोशे '०दवशिष्टं' इत्यपपाठः । २. कोशे 'साश्रीयतेति ह' इत्यपपाठः ।
३. कोशे 'स्वरोक्ते स्या०' इत्यपपाठः । ४. कोशे 'प्रयाणो' इत्यपपाठः ।
५. कोशे 'संस्कारोक्यैव' इत्यपपाठः ।
६ एवं चेत् शङ्क्येत तर्हि समाधीयत इत्याशयः ।
७. स्वरशब्दो निघण्टौ वाङ्नमसु (१।११) पठ्यते । तस्यैवेह निर्देशः ।
८. कोशे 'विसृष्टस्तानि' इत्यपपाठः ।
९. कोशे '०पदो भवत्' इत्यपपाठः । अत्रायं भावः—नहि पचतीत्याख्यातरूपात् पदात् पाचकादिपदनिष्पत्तिर्भवति ।
१०. कोशे '०तस्यादिघेयापि' इत्यपपाठः ।

धातुवाच्या[1] क्रिया यद्वत् पाचकादौ प्रतीयते ॥४३॥
तथैवाख्यातवाच्यापि सामर्थ्यादवगम्यते ।
पचतीति ततः पक्ता पचनात् पक्व उच्यते ॥४४॥
पचनात् पाचनाद्वापि पक्ता वा पाचकोऽथवा ।
प्रत्ययार्थः[2] प्रयोक्तृस्थो धात्वर्थः कर्मणि स्थितः[3] ॥४५॥
पचनं प्रत्ययस्यार्थो धात्वर्थं पाचनं विदुः ।
अतश्च सम्भवापेक्षा [4]निर्वृत्तिः पदगोचरा ॥४६॥
निर्वृत्तः[5] पाकभावेन पक्व ओदन इष्यते ।
पाचक [ओदनस्येति] हेतुभावो विवक्ष्यते ॥४७॥
अथ चेदन्यथैवेष्टमनिष्टं ते प्रसज्यते ।
अनिष्टापत्तिकीर्त्यर्थमथ चेदित्युदाहृतम्[6] ॥४८॥
यदि सर्वाणि नामानि भवन्त्याख्यातजानि ते ।
अतिप्रसङ्गदोषाय यः कश्चेत्यभिधीयते ॥४९॥
य एव कुरुते कश्चित् [7]सत्त्वस्तत्कर्म कश्चन[8] ।
सर्वं तथैव तं [9]सत्त्वमाचक्षीरन् न चास्ति तत् ॥५०॥
यः कश्चिदश्नुतेऽध्वानं गौरुष्ट्रो गज एव वा ।
अश्वोऽसौ वचनीयस्स्याद् वक्तव्यं ते [प्रसज्यते] ॥५१॥
तृणं[10] तद् वचनीय स्यात् तृन्द्याद् यत् किञ्चिदेव तु ।

---

१. कोशे 'धातुवाच्यक्रिया यद्वद्वाचकादौ' इति पाठः ।

२. कोशे 'प्रत्ययार्थं' इत्यपपाठः । ३. कोशे 'स्थितिः' इत्यपपाठः ।

४. कोशे 'निर्वर्त्ति.' इत्यपपाठः । ५. कोशे 'निर्वृत्त' इति विसर्गरहितः पाठः ।

६. अथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्, यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद्, यत् किञ्चित् तृन्द्यात् तृणं तत् । निरु० १।१२ ।

७. भाष्येऽयं शब्दः क्लीबे ।

८. कश्चित् कश्चनेति पदयोः पर्यायत्वाद् अन्यतरद् व्यतिरिच्यते

९. कोशे 'सत्वं अचक्षीरन्' इत्यपपाठः ।

१०. कोशे 'तृणन्तद्वचनीयस्यात्युःन्याद्यत्' इत्यपपाठः ।

हिंसार्थस्य [1]तृदेर्धातोस्तृणं [2]यद्धिसकर्मकम् ॥५२॥
तृणशब्दाभिधेयं[3] तत्तव सर्वं प्रसज्यते ।
न तद्युक्तमतो नैव सर्वाण्याख्यातजानि नः ॥५३॥
अनेकार्थत्वदोषोऽयं शब्दस्यैकस्य दर्शितः ।
एकस्यार्थस्य दोषोऽपि तथैवानेकशब्दता ॥५४॥
अथापि[4] यदि नामानि सर्वाण्याख्यातजानि ते ।
भावैर्यावद्भिरर्थो हि क्रियाभिस्संप्रयुज्यते ॥५५॥
भावेभ्यस्तस्य तावद्भ्यो नामधेयं भवेत्तव ।
तत्रैवं सति ते [5]स्थूणा दरे शेतेऽवतिष्ठते ॥५६॥
सैव दरशयापीह [6]गोधैवासचनी[7] च सा ।
आसचन्यपि [8]काकोटिः शिक्याद्यासच्यते यतः ॥५७॥
ततस्सासचनी [9]प्रोक्ता स्थूणाप्येवं भविष्यति ।
ऐकशब्द्ये[10] तथैकार्थ्ये शक्यानेकत्वकल्पना ॥५८॥
प्रसज्यतेऽतिरूढित्वमन्येषामवगम्यते ।
अथाप्येषां[11] त्वयेष्टानां नाम्नामाख्यातजत्वतः ॥५९॥
संस्कारो न्यायवान् [12]यस्तु प्रसिद्धः [13]कार्मनामिकः ।

---

१. कोशे 'कृतेर्द्धातोस्तृणं' इत्यपपाठः । धा० ७।६॥

२. कोशे 'यद्धि सकर्मकम्' इत्यपपाठ ।

३. कोशे 'तृणशब्दोभिधेयन्तत्तव' इत्यपपाठः ।

४. अथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः सम्प्रयुज्येत, तावद्भ्यो नामधेयप्रतिलम्भः स्यात्, तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् । निरु० १।१२॥

५. कोशे 'स्थूण' इत्यपपाठः । ६. कोशे 'गोधैवाचसनी' इत्यपपाठः ।

७. दुर्गस्तु 'सञ्जनी' पाठं मन्यमानो व्याख्याति । स्कन्दस्तु आसचनीति पाठमङ्गीकृत्य 'आसंजनीति त्वयमपपाठः, सञ्जेर्ल्युटच्युपधाया नकारस्य लोपाभावात्, नकाररहितस्य सजेर्धातोरभावान्न त्वेतद् युक्तमुदाहरणम्' इत्याह ।

८. कोशे 'काकोदि' इत्यपपाठः । ९. कोशे 'प्रोक्तं' इत्यपपाठः ।

१०. कोशे 'एकशब्दचे' इत्यपपाठः ।

११. अथापि य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्, पुरुषं पुरिशय इत्याचक्षीरन्, अष्टेत्यश्वं तर्दनमिति तृणम् । निरु० १।१३॥

१२. कोशे 'यत्तु' इत्यपपाठः । १३. कोशे 'कर्मनामिकः' इत्यपपाठः ।

आचक्षीरंस्तथैतानि[1] दृष्टार्थत्वेन हेतुना ॥६०॥
प्रकृत्यादिविभागस्य [2]संस्कारं लक्षणं विदुः ।
प्रत्यक्षविहितत्वञ्च न्यायवत्त्वं प्रचक्षते ॥६१॥
क्रिये [ह] [3]कर्मशब्दोक्ता तत्रस्थाः कार्मनामिकाः ।
क्रियाहेतूनि नामानि यदि ते स्युरसंशयम् ॥६२॥
प्रत्यक्षलक्षणान्येव [4]विस्पष्टार्थानि कीर्तय ।
त्यक्त्वा पुरुषशब्दं तु ब्रूयात् पुरिशयं[5] हि तम् ॥६३॥
अश्वशब्दं परित्यज्य तथाष्टेत्यप्यु [दीरयेत्] ।
तृणशब्दं विहायापि प्रयुञ्जीतेह तर्दनम्[6] ॥६४॥
तथात्मा पुरुषो नाम पुरि शेतेऽवतिष्ठते ।
ततः पुरिशयो वाच्यः प्रत्यक्षं लक्षणं तथा ॥६५॥
न स्यात् पुरुषशब्दस्य संस्कारो न्यायवानिह ।
अष्टेति [7]तर्दनञ्चेति [8]न्याय्यो नाश्वस्तृणं तथा ॥६६॥
निष्पन्ने[9] चैव शब्दानाम् अभिव्याहरणे तथा ।
यत्तद्विचारयन्तीह [10]तत्प्रवृत्तौ निबन्धनम् ॥६७॥
तच्चायुक्तं विचारस्य प्रयोगार्थत्वहेतुतः ।
प्रयोगश्चैव निष्पन्नस्तेनायुक्ता विचारणा ॥६८॥
फलञ्चैव विचारस्य निमित्तज्ञानमेव च ।
शब्दप्रयोगनिष्पत्तिः फलं तस्येत्यनर्थतः ॥६९॥
आहुर्विचार्यं चैवैके प्रथनात् पृथिवीति हि ।

---

१. कोशे 'आनः क्षीरं' इत्यपपाठः । २. कोशे 'ास्कारलक्षणं' इत्यपपाठः ।
३. कोशे 'कर्तृशब्दोक्ता तत्रस्था कर्मनामिका' इत्यपपाठः ।
४. कोशे 'विस्पष्टार्थिनि' इत्यपपाठः । ५. कोशे 'पुरशयं' इत्यपपाठः ।
६. कोशे 'तर्दुनम्' इत्यपपाठः । ७. कोशे 'तर्जनञ्चेति' इत्यपपाठः ।
८. कोशे 'न्यायो नाश्वस्तृणस्तथा' इत्यपपाठः ।
९. अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात् पृथिवीत्याहुः, क एनामप्रथयिष्यत् किमाधारश्चेति । निरु० १।१३॥
१०. कोशे 'तत्प्रवृत्तेति बन्धनम्' इत्यपपाठः ।

तदप्ययुक्तमेवेह को ह्येनां प्रथयेन्महोम् ॥७०॥
नहि प्रथयिता कश्चित् पृथिव्या उपलभ्यते ।
यद्भावे चैव सिद्धेऽस्य [1]सौक्ष्म्याद्यग्रहकारणम् ॥७१॥
कल्प्यतामथ चेदानीं प्रमाणं नात्र विद्यते ।
प्रथयन्[2] वा किमाधारः [3]प्रथयेत् पृथिवीमसौ ॥७२॥
प्रथनोपायविज्ञानशक्तिसद्भावकल्पना ।
प्रमाणेन विनैव स्यात् प्रथनात् पृथिवी यदि ॥७३॥
पृथिवीव्यतिरिक्तस्य [4]नाधारस्याऽस्ति सम्भवः ।
कथं[5] तिष्ठेत् स सद्भावे प्रमाणं नापि विद्यते ॥७४॥
वचनं[6] [7]चार्थवादस्स्याद् विधिना त्वेकवाक्यतः ।
वैदिकं लौकिकस्याऽपि [8]प्रामाण्यं नाऽपि विद्यते ॥७५॥
सर्वविज्ञानसामर्थ्यं[9] नासर्वज्ञस्य विद्यते ।
लिङ्गादीनि प्रमाणानि प्रामाण्यं नान्यदस्ति नः ॥७६॥
अथाप्यनन्विते[10] त्वेव शब्देनार्थे व्यवस्थिते ।
तथाऽप्रादेशिके चैव विकारे त्रिक्रियात्मनि ॥७७॥
क्रियायामर्थवर्तिन्यामसत्यां शाकटायनः ।
पदानामितरार्थाद्यैः[11] प्रकृतिं प्रत्ययात् पृथक्[12]
सञ्चस्कार समादय पदान्यन्यान्ययुक्तकृत् ॥७८॥

---

१. कोशे 'सौक्ष्याद्य०' इत्यपपाठः । २. कोशे 'प्रथयया' इत्यपपाठः ।
३. कोशे 'प्रथय' इत्यपपाठः । ४. कोशे 'साधारस्य०' इत्यपपाठः ।
५. कोशे '..कथन्तिष्ठे ..सद्भावे' इति भ्रष्टः पाठः ।
६. स धारयत् पृथिवीं पप्रथच्च (ऋ० १।१०३।२; ८।८९।५) इत्यादिकमित्यर्थः ।
७. कोशे 'चार्थपादस्स्याद्' इत्यपपाठः । ८. कोशे 'प्रामाण्यान्नापि' इति पाठः ।
९. कोशे 'सर्वज्ञान सामर्थ्यात् सा सर्वज्ञस्य विद्यते' इति पाठः ।
१०. अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान् सञ्चस्कार शाकटायनः, एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च । निरु० १।१३॥
११. कोशे 'पदानामितरार्थाद्यैः'' प्रत्ययात्पृथक्' इति भ्रष्टः पाठः ।
१२. कोशेऽत्रैव ७७ संख्या लिखिताप्यत्र संशोधिता, अतः कोशापेक्षयेहैकसंख्या न्यूनेत्यवधेयम् ।

एतेरित्यादिनाऽऽचष्टे तदेतत् स्वयमेव तु ।
कारितं[1] तु णिचं प्राह पूर्वाचारप्रसिद्धितः ॥७६॥
तथाऽन्तःकरणः[2] प्रोक्तः प्रत्ययः स पदान्तकृत् ।
एतेः कारितमादाय[3] [4]दीव्यतीत्यादिके पदे[5] ॥८०॥
श्यन्प्रत्ययं[6] थकारादिं चकारैषु[7] प्रसिद्धये ।
च शब्दादादयकारादिमेतेरेव तु कारितम् ॥८१॥
अकरोत्[8] पाचयत्यादावकारादिमसौ पुनः ।
अस्तेश्शुद्धं समादाय [9]सकारं केवलं क्वचित् ॥८२॥
प्लक्षो[वृ]क्ष इति [10]स्वादावकरोत् प्रत्ययं तथा ।
अस्तेरेव समादाय [11]सकारादिं वदेत् क्वचित् ॥८३॥
सन्प्रत्ययं चकाराऽसौ तद्यथेह[13] पिपासति ।
देवनं प्रति [14]कर्तृत्वं दीव्यतीति श्यनोच्यते ॥८४॥
तिङा वा कथिते [15]तस्मिंस्तत्रासौ स्यादनर्थकः ।
प्रकृत्यर्थानुवादी वा द्योतकोऽन्यतरस्य वा ॥८५॥
पाचयतीति[16] चास्यार्थः प्रेषणाध्येषणादिकः ।
एतिना [17]नान्वितावेतावेत्यर्थौ न भविष्यतः ॥८६॥

---

१. कोशे 'तारितन्तणिचं' इत्यपपाठः । २. कोशे 'तथाऽन्तः करणः' इत्यपपाठः ।
३. णिजन्तादेतेर् 'आययति' पदात् । ४. कोशे 'दीप्यती०' इत्यपपाठः ।
५. यथा त्वत्र निरुक्तं व्याख्यायते तथैव स्कन्दस्वाम्यपि व्याचख्यौ । दुर्गाचार्यस्त्वन्यथा क्लिष्टकल्पनया व्याख्यानं चकार ।
६. कोशे 'श्य प्रत्ययं' इत्यपपाठः । ७. कोशे 'चकारेषु' इत्यपपाठः ।
८. कोशे 'अकारोत्त्राचयेत्यादावकारादिरसौ पुनः' इत्यपपाठः ।
९. कोशे 'सकाल' इत्यपपाठः ।
१०. कोशे 'त्वादा०' इत्यपपाठ. । सु+आदौ=स्वादौ ।
११. कोशे 'सकारादीं' इत्यपपाठः । १२. कोशे 'समुत्ययं' इत्यपपाठः ।
१३. कोशे 'तद्यथे या' इत्यपपाठः । १४. कोशे 'कर्तृत्वाद्दीप्यति' इत्यपपाठः ।
१५. कोशे 'तस्मि तत्रा०' इत्यपपाठः ।
१६. कोशे 'वाचयेदिति वास्यार्थः प्रेषणाध्येषणादितः' इत्यपपाठः ।
१७. कोशे 'नान्वितापेतावैत्यर्थौ' इत्यपपाठः ।

एतिवाच्या क्रिया नापि गतिरस्त्युभयोस्तथा ।
प्लक्ष[1] इत्यपि चैतेन प्लक्ष एकोऽभिधीयते ॥८७॥
पिपासतीति पानेच्छा सना साक्षादुदीरिता ।
अस्ति[2] नानुगतावेतौ नास्त्यर्थाविति गम्यताम् ॥८८॥
अस्त्यर्थं भवनं प्राहुर्न[3] च साऽस्त्यनयोः क्रिया ।
सञ्चस्कार ततश्चैवमयुक्तं शाकटायनः ॥८९॥
अथाप्याचक्षते[4] भावं सत्त्वपूर्वं मनीषिणः[5] ।
सत्त्वं[6] द्रव्यं क्रिया भावो द्रव्ये जाते क्रियोद्भवः ॥९०॥
नहि द्रव्यमनाश्रित्य भवेत् काचित् क्रिया क्वचित् ।
अतश्च सत्त्वपूर्वत्वं भावस्याभ्युपगम्यताम् ॥९१॥
तत्रैवं सति पूर्वस्य [7]सत्त्वस्याश्वादिकस्य वः ।
अपरस्मात् प्रदेशो हि [8]भावो नैवोपपद्यते ॥९२॥
तद्यथा जातमात्रेऽश्वे [9]क्रिया नाध्वाशनादिका ।
अस्तीति नोपपद्येत तन्निमित्ताश्वशब्दनम् ॥९३॥
यस्य येन निमित्तेन शब्दो वाचक इष्यते ।
विना तेन कथं तस्य स शब्दो वाचको भवेत् ॥९४॥
अथ तेन विनैव स्याद् [10]रूढित्वं ते प्रसज्यते ।

---

१. कोशे 'वृक्ष इत्यभिचैतेन' इत्यपपाठः ।

२. अविभक्तिको निर्देशः, अस्तिनेत्यर्थः ।

३. कोशे 'न चा सास्त्यनयोः क्रिया' इत्यपपाठः ।

४. कोशे 'अथाप्यचक्षते' इत्यपपाठः ।

५. अथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद् भावात् पूर्वस्य प्रदेशो नोपपद्यत इति । निरु० १।१३॥

६. कोशे 'सतन्द्रव्यं क्रियाभावो व्रव्ये ज्ञाते' इत्यपपाठः ।

७. कोशे 'सत्त्वस्य श्वादिकस्य' इति पाठः ।

८. कोशे 'भावा हैवोपलभ्यते' इत्यपपाठः ।

९. कोशे 'जीया नाश्वाशनादिका' इत्यपपाठः ।

१०. कोशे 'रूढिन्त्वन्ते' इत्यपपाठः ।

महाप्रपञ्चमुक्तं[1] यत्तदेतन्नोपपद्यते[2] ॥९५॥
यथो[3] होत्यादिनाऽचष्टे यथा तन्नोपपद्यते ।
प्रयुज्यते यदित्यर्थे समाहारो यथो इति ॥९६॥
द्वितीयस्तावदित्यर्थे [4]परौ वाक्यस्य पूरणौ ।
निपातबहुलं[5] वाक्यमृषीणां प्रायशो भवेत् ॥९७॥
अतोऽर्थवत्त्वमेतेषां यथासम्भवमिष्यताम् ।
यत्तावदेतदन्योक्तं[6] तद्यत्रेत्यादियुक्तितः ॥९८॥
अस्मदीयस्य पक्षस्य सैव युक्तिर्भविष्यति ।
नाम्नामाख्यातजत्वस्य केषाञ्चित् प्रतिपादिका[7] ॥९९॥
तद्यत्रेत्यादिना युक्तिर्या साऽन्येष्वपि दृश्यते ।
गन्तेत्यादीनि नामानि धातुजानि [8]यदीच्छसि ॥१००॥
गौरित्यादीनि चापीह[9] धातुजान्यविशेषतः ।
अर्थः प्रदिश्यमानत्वात् प्रदेशोऽत्राभिधीयते ॥१०१॥
द्रव्यं वा कर्म वा यच्च द्रव्यं पूर्वमुदाहृतम् ।
ततश्च द्रव्यमेवेह प्रदेशं केचिदाश्रिताः[10] ॥१०२॥
प्रादेशिकं[11] पुनः कर्म प्रदेशे भवमुच्यते ।
सर्वं प्रादेशिकं कर्म द्रव्ये कर्म व्यवस्थितम् ॥१०३॥

---

१. पूर्वोक्तः शङ्काविस्तर इत्यर्थः । सम्बन्धन्यायेन (महाभाष्य १।१।३) लिङ्गसमाधिः ।

२. तदेतन्नोपपद्यते । निरु० १।१३।

३. यथो हि नु वा एतत् तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्, सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति । निरु० १।१४। 'यथो हि नु आ' इति स्कन्दपाठः

४. कोशे 'चरौ वाक्यस्य पुरणौ' इत्यपपाठः ।

५. कोशे 'निपातैर्बहुलं' इति पाठः ।

६. कोशे '०दत्योक्तं' इत्यपपाठः ।

७. कोशे 'प्रतिपादिता' इत्यपपाठः ।

८. कोशे 'यदीजसी' इत्यपपाठः ।

९. कोशे 'चापीजा' इत्यपपाठः ।

१०. कोशे 'केचिदाश्रिता' इति विसर्गरहितः पाठः ।

११. कोशे 'प्रदेशिकं' इत्यपपाठः ।

नामवाच्यो हि सर्वोऽर्थो युक्तोऽनेकेन कर्मणा ।
तत्र यच्छक्यते वक्तुं कर्मशब्देन येन हि ॥१०४॥
तत्कर्म तस्य शब्दस्य प्रवृत्तौ हेतुरिष्यते ।
नाम्नो ह्यवयवो धातुः कर्मवाची प्रतीयते ॥१०५॥
यथाश्व इति नाम्नोऽस्य धातुः स्पष्टोऽशिरिष्यते ।
क्रियोक्ताऽस्याशनं[1] वक्तुं शक्तिस्सर्वैः प्रकल्पिता ॥१०६॥
तेनाशनक्रियामेव सर्वत्रासौ वदिष्यति ।
निरुणद्धि[2] क्रियां तावत् प्र[त्ययार्थः पदे क्वचित्] ।
[तेन क्रिया] [3]निरुद्धैवं प्रकृतिं नातिवर्तते ।
यथा रूढं पदं जातौ क्रियायां प्रकृतिस्तथा ॥१०८॥
तस्या नियामकत्वेन[4] प्रत्ययोऽपि तथैव नः ।
यत्रापि दृश्यते धातोरक्षरं केवलं [क्वचित्] ॥१०९॥
[लक्ष्मीशब्दे यथा यास्को] लाभाद्वेति[5] हि वक्ष्यति[6] ।
तत्रापि तस्य वाच्यार्थे शक्तिर्लाभादिगोचरा ॥११०॥
लाभाद्यन्यतरज्ञानात् सर्वेषामेव कल्पिता ।
परित्यक्तुमयुक्ता सा तथा शक्त्यन्तरेक्षणम् ॥१११॥
लकारस्य[ाक्षरस्यैव तस्माल्लाभार्थते]ष्यते ।
यत्रापि प्रत्ययो नित्यं निरुणद्धि क्रियां क्वचित् ॥११२॥
ततश्च रूढितैवेष्टा तत्रापीत्यविरुद्धता ।
वर्णमात्रं तथा धातोः क्वचिद्यत्रापि दृश्यते ॥११३॥
गौरित्यत्र [यथा दृष्टो गकार एव के]वलः ।
तत्रापि तस्य या शक्तिः क्लृप्ता स्याद् गतिगोचरा ॥११४॥
सापि त्यक्तुमयुक्तैव[7] तथा शक्त्यन्तरेक्षणम् ।

---

१. काशे 'क्रियोक्तस्याशनं' इत्यपपाठः । २. कोशे 'निरूढिक्रियां' इत्यपपाठः ।
३. कोशे 'विरुद्धैवं' इत्यपपाठः । ४. कोशे 'नियामतत्वेन' इत्यपपाठः ।
५. कोशे 'लाभाद्वेनि' इत्यपपाठः । ६. निरु० ४।१०॥
७. कोशे 'त्यक्तुमयुक्तेव' इत्यपपाठः ।

ततो गौर्गमनादिष्टा सैत्र प्रत्ययवोर्थेन: ॥११५॥
सैव ·················· परि ·················· कल्पिता ।
एकदेशस्य सा शक्तिः कथं तस्यैव कल्प्यते ॥११६॥
एकदेशेन सर्वस्य तस्यैवानुमितस्य हि ।
इष्टा सा शक्तिरित्येवं नैव दोषो [1]भविष्यति ॥११७॥
[अन्तगोऽत्यन्तगश्चै]वमध्वगो[2] गुरुतल्पगः ।
इत्यादौ केवलस्यापि सैव शक्तिः प्रतीयते ॥११८॥
एकदेशसमानं[3] चेदत्र तत्राह सिध्यति ।
एवं चेच्छक्यते वक्तुं कर्म सर्वत्र धातुना ॥११९॥
[उक्तं गवादिशब्देषु युक्तं]सर्वं प्रदृश्यते ।
तस्मात्सर्वाणि नामानि धातुजा यविशेषतः ॥१२०॥
इति शब्दस्तु हेत्वर्थो यस्मादेवं प्रसाधितम् ।
तस्मादेषाऽनुपालम्भो यः कश्चेत्यादिरुत्तरः ॥१२१॥
यद्वा [4]प्रदेशशब्दे[न कर्मैवात्राभिधीयते] ।
तस्मिंश्चैव भवं नाम भवेत् प्रादेशिकं त्विह[5] ॥१२२॥
व्यापृतं वाचकत्वेन तत्र नाम व्यवस्थितम् ।
सर्वं प्रादेशिकं नाम तद्यत्रेत्यादियुक्तितः ॥१२३॥
समर्थौ स्वरसंस्कारौ [स्यतातां नाम्ना समन्वितौ] ।
तच्चेदाख्यातजं नाम[6] सर्वं प्रादेशिकं भवेत् ॥१२४॥
एवं सर्वस्य नाम्नस्ते धातुजत्वं प्रसज्यते ।
स्वरसंस्कारयुक्तत्वात् क्रियायाश्चैव बोधनात् ॥१२५॥
स्व[रसंस्कारधर्मांश्च शास्त्राय]त्तांस्तु जानते ।
अष्टाध्यायीगतं यद्वल्लक्षणं संश्रितं बुधैः ॥१२६॥

१. कोशे 'भाविष्यति' इत्यपपाठः । २. कोशे 'वध्वभो' इत्यपपाठः ।
३. कोशे 'एकदेश्य०' इत्यपपाठः । ४. कोशे 'प्यदेश०' इत्यपपाठः ।
५. कोशे 'प्रादेशिकस्त्विह' इत्यपपाठः ।
६. कोशे 'तच्चेदाख्यातकन्नाम' इत्यपपाठः ।

तथैवोणादिर्निर्दिष्टं[1] प्रमाणं स्याद्विशेषतः ।
यद्वा प्रदेशशब्देन धातुरेवाभिधीयते ॥१२७॥
प्रदिश्यते[2] क्रिया तस्मात् प्रदिशेद्वा क्रियामिति ।
सर्वं प्रादेशिकं नाम धातुजं धातुयोगतः ॥१२८॥
ततो नायमुपालम्भो यः कश्चेत्यादिरीरितः ।
अनुपालम्भतामाह [यथो एतदिति ब्रुवन्] ॥१२९॥
[य]थो[3] एतद्यदेतत्तु यः कश्चेत्याद्युदाहृतम् ।
नोपालम्भस्स तावत्स्यात् पश्यामो हि विचित्रताम् ॥१३०॥
केचित्समानकर्माणो लभन्ते नाम ना[न्यके] ।
[शिल्पी यथोच्यते] [4]तक्षंस्तक्षा त्वन्यो न तत्क्रियः ॥१३१॥
तथाश्रमविशेषस्थः परिव्राजक उच्यते ।
परितो[5] व्रजतीत्येव न परिव्राजकोऽपरः ॥१३२॥
तथैव साग्निरङ्गारो [6]जीवनो [जलमेव वा] ।
[यद्वा शाकवि]शेषस्स्यान्नान्यो [7]जीवंस्तथोच्यते ॥१३३॥
भूमिजोऽङ्गारको ज्ञेयो ग्रह[8] एव न पादपः ।
किमर्थञ्चेत्तथा तत्स्याच्छब्दशक्तिस्वभावतः ॥१३४॥
धातुवाच्या[9] क्रिया सर्वा प्रत्ययेन वशीकृता ।
प्रसिद्धमर्थमुज्भित्वा ततो नान्यत्र गच्छति ॥१३५॥
एवं समानकर्मत्वे [10]संज्ञाः सन्ति न तत्कृताः ।

---

१. कोशे '०निर्दिष्टस्य प्रमाण्यं' इत्यपपाठः ।

२. कोशे '…पात् प्रदिशेद्वा' इति भ्रष्टः पाठः ।

३. यथो एतद् यः कश्च तत् कर्म कुर्यात् सर्वं तत् सत्त्वं तथाचक्षीरन्निति, पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इति । निरु० १।१४।।

४. कोशे ' तक्षं तक्षात्वन्येन' इत्यपपाठः । ५. कोशे 'परित्रो' इत्यपपाठः ।

६. कोशे 'जीवतो' इत्यपपाठः । ७. कोशे 'जीवस्तथो०' इत्यपपाठः ।

८. मङ्गलग्रह इत्यर्थः ।

९. कोशे 'धातुवाच्याः क्रियास्सर्वाः प्रत्ययेन वशीकृताः' इत्यपपाठः ।

१०. कोशे 'संज्ञा सत्यपि तत्कृताम्' इत्यपपाठः ।

एतेनैवोत्तरो[1] दोषः प्रत्युक्तस्स्यादनन्तरः ।।१३६।।
भावैर्थवद्भिरित्यादिर्न्यायस्तुल्योऽनयोर्यतः[2] ।
शयानाऽपि दरे स्थूणा [3]नैवान्येनाभिधीयते ।।१३७।।
न स्याद् दरशया सापि [4]गोधैवेष्टा प्रसिद्धितः ।
यद्यप्यासच्यते [5]भावः स्थूणायामपि कश्चन ।।१३८।।
तथाप्यासचनी[6] नासौ काकाटिस्तु प्रसिद्धितः ।
एवं सत्यशनादश्वो [7]गौरेव गमनादपि ।।१३९।।
नहि गौर्गमनादश्वो नाश्वो गौरशनादपि ।
न धातुजत्वमाश्रित्य रूढिरत्रोपपद्यते ।।१४०।।
रूढस्यैव तु शब्दस्य धातुजत्वमिहाश्रितम् ।
संस्कारो न्यायवानेव भवेदौणादिको यतः ।।१४१।।
अतो वक्तुमयुक्तं तदथापीत्य[द्य]संशयम् ।
अनादृत्य ततस्तस्य [8]यथा चापीत्यनूद्यते[9] ।।१४२।।
तस्यापि परिहारोऽयं [10]सन्तीत्यादिरुदाहृतः ।
कृतोऽपि तादृशास्सन्ति येषामल्पप्रयोगता ।।१४३।।
ततोऽस्पष्टार्थता तेषां तेनैकपदिकाश्च ते ।
अत्रैकपदिके [11]पाठात् कृता कृच्छब्दवाच्यता ।।१४४।।
अस्पष्टार्थाश्च पठ्यन्ते ततः स्पष्टार्थबुद्धये ।

---

१. एतेनैवोत्तरः प्रत्युक्तः । निरु० १।१४।।

२. कोशे '०रित्यादि न्यायस्तुल्यो नया यतः' इत्यपपाठः ।

३. कोशे 'स्थूणान्येनाभिधीयते' इत्यपपाठः । ४. दरशया गोधैवोच्यते प्रसिद्धितः, न स्थूणा ।

५. कोशे 'भावस्थूणायामपि किञ्चन' इत्यपपाठः ।

६. कोशे '०सचनीयासौ' इत्यपपाठः । ७. कोशे 'गौरव' इत्यपपाठः ।

८. यथो एतद् यथाचापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति, सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति । निरु० १।१४।।

९. कोशे 'चापीत्यनुद्यते' इत्यपपाठः ।

१०. कोशे 'सतीत्यादि०' इत्यपपाठः । ११. कोशे 'पाठा' इत्येव दृश्यते ।

नन्वैकपदिके[1] पाठो व्रततेः सदमूनसः[2] ॥१४५॥
प्रदर्शनार्थमन्येषां तयोः पाठो भविष्यति ।
न्यायस्य तुल्यताहेतोरन्येषां वा निघण्टुषु ॥१४६॥
पाठो [3]जाटचादिशब्दानां तेनैवमृषिरब्रवीत् ।
अविस्पष्टार्थनायाश्च हेतुरल्पप्रयोगता ॥१४७॥
केचिदाहुर्व्रतत्यादेः[4] अन्यथाऽन्ये[5] प्रचक्षते ।
प्रत्ययोपात्तरूढचर्थसम्बन्धस्वार्थवृत्तिता ॥१४८॥
अप्रयोगात्ततोऽन्यत्र भवत्यल्पप्रयोगता ।
धातेरेवाथवा कश्चिद् एकदेशः[6] प्रयुज्यते ॥१४९॥
एवमल्पप्रयोगत्वं कृतां व्याख्यायते बुधैः ।
धातुजाश्च [7]कृतस्सर्वे सन्त्येवैवंविधास्तथा ॥१५०॥
नाप्रयुक्तः [8]प्रयुज्येत किं कुर्मो वयमुच्यताम् ।
एवमल्पप्रयोगत्वाद् रूढत्वात्प्रत्ययस्य च ॥१५१॥
कर्माभिधानसामर्थ्ये सत्येव [9]प्रत्ययस्तव ।
स्पष्टार्थः कस्यचित्कैश्चिदस्पष्टार्थस्तथापरः ॥१५२॥
अभियोगे तु सर्वस्य सर्वः स्पष्टार्थतां व्रजेत् ।
व्याख्यास्यति[10] स्वयं [11]तावद् व्रतति सदमूनसम् ॥१५३॥
जाटचः[12] पुनरिहेष्टः स्याज्जटिलः परमेश्वरः[13] ।

---

१. कोशे 'न त्वैकपदिके पाठो प्रतत यदमुनसः' इत्यपपाठः ।

२. यास्कीयनिघण्टुग्रन्थे 'दमूनाः'(निघ० ४।१)एव सङ्गृह्यते । व्रततिश्चैकपदिकप्रकरणे (निरु० ६।२८) प्रसङ्गतो निरुच्यते । अवशिष्टानां जाढचादिशब्दानां तूभयत्राभावः ।

३. कोशे 'जाघ्यादि' इत्यपपाठः । ४. कोशे '०र्वतत्यादेः' इत्यपपाठः ।

५. स्कन्दस्वामी लक्ष्यतेऽत्र । तथा हि—'प्रत्ययोपात्तरूढचर्थसम्बन्धस्य स्वार्थेन विशिष्टरूपस्य सतस्तत्रैव धातोः प्रयोगात् तत्राल्पप्रयोगत्वम् ।' (स्कन्दटीका प्रथम भाग पृ० ८९) ।

६. कोशे 'एकदेशो' इत्यपपाठः । ७. कोशे 'कृतास्सर्वे' इत्यपपाठः ।

८. कोशे 'प्रयुज्यते' इत्यपपाठः । ९. प्रतीतिरित्यर्थः ।

१०. निरु० ६।२८; ४।४॥ ११. कोशे 'तावद्व्रततिस्समुनसम्' इत्यपपाठः ।

१२. कोशे 'जाप्यः पुनरिहेष्टस्या०' इत्यपपाठः । १३. शिव इत्यर्थः ।

आट्णार[1] आटयुक्तस्स्यादध्यक्षस्सोऽपि कर्मणाम् ॥१५४॥
स सर्वो [2]जागरूकः स्यान्नरस्तच्छीलमात्रतः ।
ग्रामस्य[3] स्वामिनो वाऽपि सैन्यस्य द्रविणस्य वा ॥१५५॥
पालनार्थे हि ताच्छील्ये जागरूको विनिश्चितः ।
अकुर्वन्[4] पौर्णमासादि [5]दर्व्या केवलया हि यः ॥१५६॥
अग्निहोत्रक्रियाशीलो [6]दर्विहोमीत्युदाहृतः ।
कृताञ्चापि यथैतेषां रूढिरिष्टा प्रसिद्धितः ॥१५७॥
तथा[7] पुरुषशब्दादेर्न च त्यागोऽस्ति जाटचवत् ।
अयुक्तत्वं[8] विचारस्य निष्पन्ने यच्च कीर्तितम् ॥१५८॥
अयुक्तमेव तच्चेह भवतीत्याह भाष्यकृत् ।
विचारः शक्यते कर्तुं प्रयुक्तस्यैव दृष्टतः ॥१५९॥
अदृष्टस्य तु शब्दस्य न प्रयुक्तिः कथञ्चन ।
परीक्षैव[9] परोष्टिस्स्यात् प्रयोगो योग उच्यते ॥१६०॥
प्रथनात् पृथिवीत्याहुः प्रथनातो विदुर्न तत् ।
नहि प्रथयिता कश्चित् पृथिव्या उपलभ्यते ॥१६१॥
व्यापारो हि तदीयस्स्यात् प्रथना सा न कारणम् ।
अतोऽसौ नेष्यतेऽस्माभिर्युष्माभिरिव कश्चन ॥१६२॥
ययाऽप्रथयदित्यादिः[10] सोऽर्थवादोऽन्यशेषतः[11]।

---

१. कोशे 'आःशनार आरदुकस्स्या०' इत्यपपाठः ।

२. कोशे 'जाकरूक स्यान्नरतच्छीलमारुतः' इत्यपपाठः ।

३. कोशे 'ग्राम्यस्य' इत्यपपाठः । ४. कोशे 'अकुर्वत्पौर्णमास्यादि' इत्यपपाठः ।

५. कोशे 'द्रव्या' इत्यपपाठः । ६. कोशे 'दर्वी होमी' इत्यपपाठः ।

७. कोशे 'कथं' इत्यपपाठः ।

८. यथो एतन्निष्पनेऽभिव्याहारेऽभिविचारयन्तीति, भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः । प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेति, अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः । अथाप्येवं सर्वे दृष्टप्रवादा उपालभ्यन्ते । निरु० १।१४॥

९. कोशे 'परीक्ष्यैव परिशिष्टस्स्यात्' इत्यपपाठः ।

१०. अनुपलब्धमूलम् । आदिपदेन 'ततपृथिवीमप्रथयः'(ऋ० ८।८९।५) इत्यादिर्गृह्यते ।

११. तथा चोक्तम्—विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः । पू० मी १।२।७॥

क [1]एनामिति तेनेह नैनां कश्चिददितीरितम्[2] ॥१६३॥
परोक्तस्यानुवादोऽपि परिहारोऽभ्युपेततः ।
यद्यप्यप्रथिता[3] कैश्चित्पृथुरेवोपलभ्यते ॥१६४॥
पृथिवीत्वमतश्चास्याः प्रथनादिति निश्चितम् ।
व्यापारोऽयं प्रयोज्यस्य प्रथना नेतरस्य हि ॥१६५॥
मा भूत्प्रथयिता तेन [4]प्रथितेयं स्वभावतः ।
अथ वै दर्शनेनेति भाष्यस्यार्थोऽयमीरितः ॥१६६॥
स्वतस्तु प्रथितापीयं यद्युपालभ्यते त्वया[5] ।
सर्वे भवन्त्युपालम्भ्याः[6] प्रवादा दृष्टिगोचराः ॥१६७॥
अर्थस्तु दृश्यमानोऽत्र दृष्टिरित्यभिधित्सितम् ।
कर्मसाधनता चेह प्रत्ययस्य समाश्रिता ॥१६८॥
सूर्याचन्द्रमसौ दृष्टावुष्णशीतकरावुभौ ।
उष्णोऽग्निर्निम्नगं वारि न शब्दो नेत्रगोचरः ॥१६९॥
पदार्थानां स्वभावोऽयं यो यथैवोपलभ्यते ।
उपालब्धुमतोऽयुक्तं तस्मादेवमिदन्त्विति ॥१७०॥
योऽनन्वितेऽर्थे[7] इत्येवं [8]दूषणं यच्च भाषितम् ।
तच्छाकटायनस्यैव धातुजत्वस्य नैव तत् ॥१७१॥
कथमन्यस्य दुष्टत्वे भवेदन्यस्य दुष्टता ।
अनन्वितेऽथवा योऽर्थे सञ्चस्कार पदानि सः ॥१७२॥
दूष्यतां तेन दोषेण न [9]दूष्यश्शाकटायनः ।

---

१. कोशे 'एनामिततेनेह' इत्यपपाठः ।
२. कोशे 'कश्चिददीरितम्' इत्यपपाठः ।
३. कोशे 'यद्यत्प्रथयित्ता' इत्यपपाठः । ४. कोशे 'प्रथितेया' इत्यपपाठः ।
५. कोशे 'यया' इत्यपपाठः । ६. कोशे '०पालम्भाः प्रवादो' इत्यपपाठः ।
७. यथो एतत् पदेभ्यः पदेतरार्धान् संचस्कारेति योऽनन्वितेऽर्थे संचस्कार स तेन गर्ह्यः । सैषा पुरुषगर्हा न शास्त्रगर्हेति । निरु० १।१४॥
८. कोशे 'दूषणा' इत्यपपाठः । ९. कोशे 'दुष्यश्शा०' इत्यपपाठः ।

एत्यर्थो [1]दीव्यतीत्यत्र [2]पाचयेत्यत्र वास्ति हि ॥१७३॥
दीव्यंस्तु[3] देवनं याति पाचयन्मनसा पचिम् ।
प्लक्षो वृक्ष इति[4] त्वत्र तथास्त्यर्थः प्रतीयते[5] ॥१७४॥
तथा[6] पिपासतीत्यादाविच्छास्तित्वं प्रतीयते ।
एवञ्च सम्यगेवासौ सञ्चस्कारेति गम्यताम् ॥१७५॥
एतेस्तु [7]दीव्यतीत्यादावर्थे न स्यादभावतः ।
अर्थः[8] प्रयोजकस्यैव व्यापारस्सोऽस्ति कुत्रचित् ॥१७६॥
तद्यथा [9]पाचयेत्यादौ दीव्यतीत्यत्र नास्त्यसौ ।
कारितं न च तस्यैव विहितस्स पचेरपि ॥१७७॥
एतेः कारितमित्येतत्तेनायुक्तमुदाहृतम् ।
अथैतेर्विहितं[10] पूर्वं ततोऽन्यत्रापि नीयते ॥१७८॥
अस्त्येवं सति तस्यार्थो धात्वर्थो नैव गच्छति ।
न च यन्मानसं यानं शब्दात् सामर्थ्यसिद्धितः ॥१७९॥
वृक्षशब्दस्तथा स्वार्थं बोधयेदस्तिना विना ।
सत्तास्तेरेव वाच्येति न्यायो नैवास्ति कश्चन ॥१८०॥
यद्यस्य वाचकं लोके पदमर्थस्य गम्यते ।
तत्तत्सत्तां ब्रवीत्येव देशकालानपेक्षया ॥१८१॥
अतश्च वृक्षशब्दादेस्तदर्थो बुद्धिमानतः ।
तत्र तस्येति वा वक्तुमस्तिशब्दः प्रयुज्यते ॥१८२॥

---

१. कोशे 'दीप्यतीत्यत्र' इत्यपपाठः । २ कोशे 'वाचयेत्यत्र' इत्यपपाठः ।

३. कोशे 'दीप्यंस्तु मे वनं याति वाचयन्' इत्यपपाठः ।

४. कोशे 'इति तथा···स्त्यर्थ' इत्यपपाठः ।

५. तथा चाकूतं वैयाकरणैः—अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति । महा० २।३।१॥

६. कोशे 'तथापि वा सतीत्या०' इत्यपपाठः ।

७ कोशे 'दीप्यती०' इत्यपपाठः । ८. कोशे 'अर्थप्रयोजकस्यैव' इत्यपपाठः ।

९. कोशे 'वाचयेत्यादा दीप्यतीत्यत्र' इत्यपपाठः ।

१०. कोशे 'अथैते विहितं' इत्यपपाठः ।

पूर्वेणैव तु सिद्धत्वात् प्रकृत्यर्थोऽप्यनूद्यते ।
देशकालादिसम्बन्धं[1] प्रत्ययादवगम्यते ॥१८३॥
अतोऽस्तेश्शुद्धमित्येतद्[2] व्यर्थमेवोपपाद्यते ।
अस्तावेव सकारोऽस्ति नान्यत्रेत्यपि [3]किन्न्विदम् ॥१८४॥
एतेरिकारमादाय तं कृत्वा कारितं यदि ।
प्रयुक्तवान् यकारादिमयकारादिमप्यसौ ॥१८५॥
नैतत्प्रयोजनं [4]भायान्मानसं यानमर्थतः ।
अनन्वाख्या[5] द्वितीयाऽतः प्रथमैवोपपद्यते ॥१८६॥
पुरुषस्य[6] ह्यर्थैवेयं गर्हा तेन प्रसज्यते ।
न शास्त्रस्य भवेत्तस्माद् गर्ह्यते शाकटायनः ॥१८७॥
यदप्येतत्परं[7] प्रोक्तं अपरस्मादितीदृशम् ।
प्रदेशस्य विचित्रत्वादनुपालम्भ एव सः ॥१८८॥
भूताद्[8] भावात् प्रदेशो हि शब्दानां दृश्यते क्वचित् ।
यथाऽग्निष्टोमयाजीति[9] ब्रह्महा भ्रूणहेति च ॥१८९॥
वर्तमानात्तथा भावात् पाचको लावको यथा ।
भविष्यतस्तथागामी बिल्वादो [10]लम्बचूडकः ॥१९०॥
अन्ये चैवंविधाः शब्दा अन्वाख्याता भविष्यति ।

---

१. घञन्तस्य पुंस्त्वे प्राप्तेऽपि 'सम्बन्धमनुवर्तिष्यते' इति पतञ्जलिवाक्यात् (महा० १।१।३) नपुंसकत्वं द्रष्टव्यम् ।

२. कोशे '०ऽस्तेश्शुद्धि०' इत्यपपाठः ।

३. कोशे 'किन्त्विदम्' इति पाठः । 'किं नु इदम्' इतिच्छेदः शुद्धे पाठे ज्ञेयः ।

४. कोशे 'भावान्मानसं' इति पाठः । ५. कोशे 'अवन्वाख्या' इति पाठः ।

६. कोशे 'पुरुषस्यर्थैवेयं' इत्यपपाठः ।

७. यथो एतदपरस्माद् भावात् पूर्वस्य प्रदेशो नोपपद्यत इति, पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद् भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति । निरु० १।१४॥

८. कोशे 'भूताभावत्' इत्यपपाठः ।

९. कोशे 'यथा शिष्टोमयाजीति' इत्यपपाठः

१०. कोशे 'लम्बचुलकः' इत्यपपाठः ।

भविष्यतीत्युदाहृत्य गम्यादोनां तथा विधिः[1] ॥१६१॥
तथाण्[2] कर्मणि चेत्युक्तं[3] गतो बिल्वाद इत्यतः ।
अत्तुं भक्षयितुं विल्वं गत इत्यवसीयते ॥१६२॥
अतो विल्वाद [4]इत्यादिर्भविष्यत्येव निश्चितः ।
लम्बया च भविष्यन्त्या चूडया लम्बचूडकः[5] ॥१६३॥
शाण्डिलानां[6] किलैतेषां कुमारो लम्बचूडकः ।
उच्यते जातमात्रस्तु [7]भविष्यन्त्यैव चूडया ॥१६४॥
तदालम्बनचूडत्वं तस्य तच्च भविष्यति ।
एवं सर्वत्र दृष्टत्वादुपालम्भो न युज्यते ॥१६५॥
व्यक्त्यन्तरगतो भावः पूर्ववृत्तोऽथवा भवेत् ।
निमित्तं त्वद्य जातायां गोशब्दस्य प्रवर्तते ॥१६६॥
व्यक्त्यां तस्यां तथान्यस्यां जातिरेका व्यवस्थिता ।
स[8] पूर्वास्वपि वृत्तोऽभूज्जगतो नादिरस्ति नः ॥१६७॥
वृत्तो वा वर्तमानो वा भविष्यन्नथवा भवेत् ।
भावो निमित्तमित्येवम् उपालम्भो न नो भवेत् ॥१६८॥
बिल्वं तु[9] भरणाद् वा स्याद् भेदनाद्वा[10] यथेप्सितम् ।
बिभृयाद्भक्ष्यमाणात्तद् भिद्यते भक्षणाय च ॥१६९॥

॥ इति निरुक्त-श्लोकवार्त्तिके [षष्ठाध्यायस्य] चतुर्थः पादः ॥

---

१. अत्र 'भविष्यति गम्यादयः' (अष्टा० ३।३।३) इति पाणिनीयं लक्षणं स्मर्तव्यम् ।
२. कोशे 'तथा कर्मणि' इत्यपपाठः । ३. अष्टा० ३।३।१२॥
४. कोशे 'इत्यादि भविष्यत्येव' इत्यपपाठः ।
५. अतोऽग्रे कोशे 'उच्यते जातमात्रस्तु भविष्यन्त्येव चूलया' इति श्लोकार्द्धं कोष्ठके पठ्यते । तदत्रानावश्यकम् ।
६. कोशे 'शाण्डिल्यानां किलैतेषां कुमारे लम्बचूलकः' इत्यपपाठः ।
७. कोशे 'भविष्यत्येव' इत्यपपाठः । ८. कोशे 'तत्पूर्वास्त्वपि' इत्यपपाठः ।
९. कोशे 'विल्वस्तुकरण वा' इत्यपपाठः ।
१०. बिल्वं भरणाद् वा भेदनाद् वा । निरु० १।१४॥

## पञ्चमः पादः

मन्त्रार्थज्ञानहेतुत्वं व्याख्येयत्वस्य कारणम् ।
निघण्टुत्वादिति[1] त्वेवं शास्त्रादावेव भाषितम् ॥१॥
मन्त्रार्थस्य परिज्ञानं यद्युपायान्तरादपि ।
न[2] त्वाख्येयमिदं शास्त्रं नियोगेन भविष्यति ॥२॥
अन्योपायनिषेधार्थम् [3]अथापीत्युच्यते ततः ।
अथापीत्यपरं प्राह शास्त्रस्यास्य प्रयोजनम् ॥३॥
किं[4] तन्मन्त्रार्थविज्ञानं [5]तच्चैतत् स्यान्निरुक्ततः ।
आनन्तर्यमथेत्याह [6]तस्योक्ताद् धातुजत्वतः ॥४॥
तयोस्समुच्चयेऽपीति द्वयमेतत्प्रयोजनम् ।
नाम्नामाख्यातजत्वं यत्पुरस्तात्प्रतिपादितम् ॥५॥
यच्च मन्त्रार्थविज्ञानं तन्नानेन विना भवेत् ।
उपायो [7]नापरः कश्चिन्निरुक्तादुपलभ्यते ॥६॥
शिक्षादीन्यपि चाङ्गानि भिन्नार्थानीति भाषितम् ।
स्वरसंस्कारविज्ञाने शब्दशास्त्रविनिश्रिते ॥७॥
मन्त्रार्थविषयं ज्ञानं भवतीत्युच्यते यदि ।
नात्यन्तम्[8] इत्यनेनास्य परिहारोऽभिधीयते ॥८॥
नार्थं[9] ह्यपद्यमानस्य स्वरसंस्कारयोर्विधिः ।
अत्यन्तमुपपद्येत स ह्यर्थज्ञानपूर्वकः ॥९॥

---

१. कोशे 'निघण्डु०' इत्यपपाठः ।     २. कोशे 'तत्वाख्येयमिदं' इत्यपपाठः ।

३. अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते । अर्थमप्रतियतो नात्यन्तं स्वर-संस्कारोद्देशः । तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च । निरु० १।१५ ।

४. कोशे 'किन्तन्मात्रार्थ०' इत्यपपाठः ।     ५. कोशे 'न चैतत्' इत्यपपाठः ।

६. कोशे 'तस्योक्तान्धातु०' इत्यपपाठः ।

७. कोशे 'नापरं' इत्यपपाठः ।     ८. कोशे 'नात्यन्त०' इत्यपपाठः ।

९. कोशे 'ह्युपमानस्य स्वरसंस्कारयोर्विधिम्' इत्यपपाठः ।

वाक्यार्थस्याऽऽनुगुण्येन पदार्थानवधार्य हि ।
विधत्ते [1]स्वरसंस्कारौ पाणिनिर्मन्त्रबुद्धये ॥१०॥
वैयाकरणसिद्धान्तः शब्दप्राधान्यलक्षणः ।
नार्थप्राधान्यता तेषाम् एवमेव वदन्ति ते ॥११॥
निरुक्तेन विना तस्मान्न स्यादर्थावबोधनम् ।
तत्सिद्धमर्थमादाय प्रकृत्यादिर्विधीयते ॥१२॥
विद्यास्थानमिदं तस्मात् कार्त्स्न्यं व्याकरणस्य ते ।
वाक्यशेषः करोतीति स्वार्थस्यापि च [3]साधकम् ॥१३॥
अथवा तत्करोतीति [4]णिजन्तादज् भविष्यति ।
कार्त्स्न्यं [5]कार्त्स्न्यकरं त्वेव नाध्याहारोऽत्र वर्तते ॥१४॥
नेदं व्याकरणेनापि विना स्वार्थस्य साधकम् ।
निरुक्तेन विना तच्च द्वयमन्योऽन्यसंश्रितम् ॥१५॥
परस्परोपकारित्वं सर्वेषामेव विद्यते ।
अङ्गानामित्यतो नास्य भवेद्व्याकरणाङ्गता[6] ॥१६॥
परस्परोपकारित्वं न चाङ्गत्वस्य लक्षणम् ।
प्राधान्ये चापि तद्दृष्टेरिति नान्योऽन्यमङ्गता[7] ॥१७॥
यदि[8] मन्त्रार्थविज्ञानं शास्त्रस्यास्य प्रयोजनम् ।
अनर्थकं भवत्येतदिति कौत्सो व्यवस्थितः ॥१८॥

---

१. कोशे 'स्वरसंस्कारो' इत्यपपाठः । २. कोशे 'पर्याकरण' इत्यपपाठः ।

३. कोशे 'साधकः' इत्यपपाठः । ४. कोशे 'णिदन्तादच्' इत्यपपाठः ।

५. अयमभिप्रायः—कार्त्स्न्यशब्दात् तत्करोति० (अष्टा० ३।१।२६ महाभाष्य) णिचि टिलोपे अजपि सर्वधातुभ्यः (अ० ३।१।१३४ महाभाष्य) इत्यचि, णेरनिटि (अष्टा० ६।४।५१) इति णिलोपे कार्त्स्न्यपदं कार्त्स्न्यकरमित्यर्थे निष्पद्यते, तस्मादत्र नाध्याहारः करोतिशब्दस्य ।

६. श्लोकोऽयं कोशे द्विः पठ्यते, पृथक् पृथक् संख्यया च निर्दिश्यते । अतोऽत्रोत्तरमेका संख्या कोशसंख्यातो हीयते ।

७. कोशे '०न्यमुद्गता' इत्यपपाठः ।

८. यदि मन्त्रार्थप्रत्ययाय, अनर्थकं भवतीति कौत्सः । अनर्थका हि मन्त्राः । तदेतेनोपेक्षितव्यम् । निरु० १।१५॥

आनर्थक्येऽथ मन्त्राणां निरुक्तं स्यादनर्थकम् ।
मन्त्रा ह्यनर्थकास्सर्वे नैषामर्थो विवक्षितः ॥१६॥
नाभावादभिधेयस्य मन्त्रानर्थक्यमुच्यते ।
अर्थस्य ज्ञायमानत्वात् किन्तु स्यादविवक्षया ॥२०॥
वाच्याभावविवक्षायां पूर्वपक्षस्य युक्तयः ।
न शक्या वक्तुमित्येवं यथोक्तमवगम्यताम् ॥२१॥
नैरुक्तेनोपगम्यैतदीक्षितव्यं[1] हि युक्तितः ।
किमत्र युक्तमित्येतद् युक्त्यानर्थक्यमुच्यते ॥२२॥
न्यायेन चोच्यमानेन तदानर्थक्यमिष्यताम् ।
तदेतदिति वा शास्त्रम् आनर्थक्येन हेतुना ॥२३॥
एतेनोपेक्षितव्यं स्याद् ग्राह्यं नेति विवक्षितम् ।
तदेतेनेति भाष्यस्य योजना [2]त्वियमीरिता ॥२४॥
उच्चारणाददृष्टं स्यान्मन्त्राणां नार्थबोधनम् ।
अर्थप्रतीतिसिद्ध्यर्थं यद्युच्चारणमिष्यते ॥२५॥
वाचोयुक्तिर्नियम्येत[3] [4]नानुपूर्व्यं तथैव च ।
नियता[5] दृश्यते सा च तच्च मन्त्रेषु सर्वदा ॥२६॥
अग्निर्मूर्धेति[6] मन्त्रेऽस्मिन्नग्निरित्येव पठ्यते ।
अर्थस्य तु विवक्षायां वह्निरित्यपि पठ्यताम् ॥२७॥
वह्निशब्दप्रयोगे तु भवेदुच्चारणान्तरम् ।
आनुपूर्व्ये [7]तथान्यस्मिन्नित्येवं स्युरनर्थकाः ॥२८॥
आनुपूर्व्या यया युक्तो [8]मन्त्रः शब्दैश्च यादृशैः ।

---

१. कोशे 'नैरुक्तेनोपगम्येन दीक्षितव्यं' इत्यपपाठः ।
२. कोशे 'त्वयमीरिता' इत्यपपाठ. ।
३. कोशे 'वाचोयुक्ति नियम्येत' इत्यपपाठः ।
४. नञ् उभयत्रान्वयी । वाचोयुक्तिरानुपूर्व्यं च न नियम्येयातामित्याशयः ।
५. नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति । निरु० १।१५॥
६. ऋ० ८।४४।१६॥ ७. कोशे 'तथा ह्यस्मिन्नि०' इत्यपपाठः ।
८. कोशे 'मन्त्रशब्दैश्च तादृशः' इत्यपपाठः ।

यत्तस्योच्चारणेऽदृष्टं न तदन्यादृशस्य हि ॥२९॥
आनुपूर्व्यान्यतायाञ्च पर्यायान्यत्व एव च ।
अर्थस्स[1] एव तस्येति नियमस्स्यादनर्थकः ॥३०॥
अर्थस्य हि विवक्षायाम् [2]अथाप्येतदनर्थकम् ।
विधानं रूपसम्पत्तौ मन्त्राणां ब्राह्मणेन ते ॥३१॥
अर्थाभिधानसामर्थ्यं रूपमत्र विवक्षितम् ।
तद्यथोरु प्रथस्वेति[3] सामर्थ्यं प्रथनान्वितम् ॥३२॥
प्रोहाणीति[4] तदैवास्य प्रोहणे स्पष्टमेव तत् ।
प्रथने प्रोहणे चैव [5]प्राप्तावेतौ हि रूपतः ॥३३॥
तयोस्तत्राभिधेयत्वमप्राप्ते विधिरर्थवान् ।
तद्यथा [6]पुरुषस्साक्षात्परेण यदि नीयते ॥३४॥
नासौ पश्यति चक्षुर्भ्यामित्येवमवधार्यते ।
तथा विधीयमानोऽयं[7] मन्त्रो नार्थस्य वाचकः ॥३५॥
यत्तु प्रतीयते किञ्चित्तन्न तस्य विवक्षितम् ।
अथाप्यनुपपन्नार्था[8] मन्त्राः केचिद्ब्रुवन्ति वै ॥३६॥
ओषधे[9] [10]स्वधिते मैनं इति तत्र निदर्शितौ[11] ।

---

१. कोशे 'अर्थस्य एव' इत्यपपाठः ।

२. अथापि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते । उरु प्रथस्वेति प्रथयति । प्रोहाणीति प्रोहति । निरु० १।१५॥

३. मा० सं० १।२२॥ ४. तुलना कार्या—मा० सं० २।१५॥

५. कोशे 'प्राप्ता वै तौ' इत्यपपाठः ।

६. अत्र 'पुरुषः साक्षोऽपरेण' इति पाठो युक्तः स्यात् ।

७. कोशे 'ऽय' इत्यपपाठः ।

८. अथाप्यनुपपन्नार्था भवन्ति—ओषधे त्रायस्वैनम्, स्वधिते मैनं हिंसीरित्याह हिंसन् । निरु० १।१५।

९. ओषधे त्रायस्वैनम् । तै० सं० १।३।५ ।

१०. स्वधिते मैनं हिंसीः । मा० सं० ४।१॥ तै० सं० १।३।५॥

११. कोशे 'निदर्शितः' इत्यपपाठः ।

ओषधेः[1] स्वधितेश्चैवं सम्बुद्धिर्नोपपद्यते ॥३७॥
अचैतन्यादतो नैते भवन्त्यथस्य वाचकाः ।
यूपो वनस्पतिर्धान्यं ग्रावाणो मुसलं मही ॥३८॥
अन्यच्चैवंविधं सर्वं तुल्यन्यायमुदाहरेत् ।
तुल्यन्यायत्वमेतेषाम् अचैतन्येन हेतुना ॥३९॥
आह हिंसन्निति त्वेतद् विपरीतावधारणम् ।
एवं विप्रतिषेधार्थवितावपि भविष्यतः ॥४०॥
हिंसन्नित्यनुवादोऽयं व्याख्यातार्थो विवक्षितः ।
न चेद्विप्रतिषेधार्थं [2]मन्त्रेष्वेतावुदाहरेत् ॥४१॥
न चाप्युदाहृतौ तत्र स्यातामंशेन[3] तेन तु ।
क्वचिद्विवक्षितं किञ्चित् किञ्चित्सिद्धमनूद्यते ॥४२॥
हिंसन्नित्यनुवादोऽतः संबुद्धेः[4] स्यादुदाहृतिः ।
अथापि[5] [6]प्रतिषिद्धार्थाः केचिन्मन्त्रा भवन्ति ते ॥४३॥
परस्परं[7] विरुद्धार्था यथैते [8]वक्ष्यमाणकाः ।
एक[9] एव हि रुद्रोऽस्ति न द्वितीयोऽस्ति कश्चन ॥४४॥

---

१ कोशे 'ओषधे स्वधि०' इत्यपपाठः । २. कोशे 'मन्त्रेस्वातानु०' इत्यपपाठः ।
३. कोशे 'स्यातामाशेन' इत्यपपाठः । ४. कोशे 'सम्बुद्धस्यादुदाहृतिः' इत्यपपाठः ।
५. कोशे 'तथापि' इत्यपपाठः । ६. अथापि विप्रतिषिद्धार्था भवन्ति । निरु० १।१५॥
७. कोशे 'परस्पराविरुद्धार्थाः' इत्यपपाठः । ८. कोशे 'वक्ष्यमाणता' इत्यपपाठः ।
९. कोशे 'एक एव निरुक्तोऽस्ति' इत्यपपाठः । व्याख्याकारौ दुर्गस्कन्दावित्थं मन्त्रपाठमुदाहरतः—

'एक एव रुद्रोऽवतस्थे रणाय निघ्नन् पृतनासु शत्रून् ।'

दुर्गस्कन्दयोष्टीकयोर्मन्त्रपाठे 'रणे निघ्नन्' पठ्यते । व्याख्याने चोभौ 'रणाय रणार्थं' 'रणाय संग्रामार्थं' इत्येवं व्याचक्षाते । देवराजोऽपि निघण्टुटीकायाम् (२।१७।१८) 'रणाय निघ्नन्' इत्येव पठति । अयं श्लोकवार्त्तिककारोऽपि 'रणाय तु' इति 'रणाय सः' इति च वक्ष्यति । अतोऽस्माभिर्मन्त्रपाठे 'रणाय' इत्येव पाठो निर्दिष्टः । मूलमस्य मन्त्रस्य मृग्यम् । मन्त्रस्यास्य उत्तरार्धं दुर्ग एवं पठति—'संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ् जनान् संचुकोचान्त काले' इति । स्कन्दस्य बी-सी-संज्ञकयोः कोशयोरुत्तरार्धं इत्थं पठ्यते—'स नः पातु नयत्वधरे सपत्नान् शंनोऽस्तु द्विपदे शं चतुष्पदे' इति । निरुक्तवार्त्तिककारोऽपीममेवोत्तरार्द्धं विवृणोति ।

अवस्थितो [1]रणार्थासु शत्रून् निघ्नन् स भूमिषु ।
पृतना नाम [2]संग्रामस्तदर्था भूमयोऽत्र तु ॥४५॥
न तस्याऽऽधारता ह्यस्ति निमित्तञ्चेद्रणाय तु ।
इत्येवं [3]कथितास्तद्धितेन संग्रामभूमयः ॥४६॥
अथवा [4]पृतनाः सेनास्तासां मध्ये रणाय सः ।
अस्मत्सपत्नकान्[5] सर्वानधरे स्थापयत्यसौ ॥४७॥
अस्माकं द्विपदे चैव तथाऽस्माकं चतुष्पदे ।
शं सुखं तत्प्रसादेन सर्वदैवाऽस्तु माशिवम्[6] ॥४८॥
भूमेरुपरि[7] ये रुद्राः सहस्राणि बहून्यपि ।
स्थितानां दूर एवैषां [8]हृतज्यानि धनूंषि वै ॥४९॥
कुर्मः[9] स्तुत्या च भक्त्या[10] च यागेनानुप्रसाद्य तान् ।
पूर्वस्यामेकता त्वेव रुद्रस्य प्रतिपादिता ॥५०॥
असंख्यता महस्रत्वं पुनस्तस्यैव कीर्तितम् ।
यद्येकतैव रुद्रस्य नासंख्यातसहस्रता ॥५१॥
असंख्यातसहस्रत्वे नैकत्वमुपपद्यते ।
एवं विप्रतिषिद्धार्थवितावर्थे विवक्षिते ॥५२॥
यद्युच्चारणमेवेष्टं विरोधो नैव विद्यते ।

---

१. कोशे 'रणार्थस्य शत्रूणि घ्नन्' इत्यपपाठः ।
२. निघ० २।१७।
३. कोशे 'कथितं तद्धितेन' इत्यपपाठः ।
४. कोशे 'पृतना सेना तासां' इत्यपपाठः ।
५. कोशे 'अस्मत्सम्पन्नकात् सवानपरे' इत्यपपाठः ।
६. कोशे 'माविव' इत्यपपाठः ।
७. मन्त्रपाठस्त्वित्थं ज्ञेयः—
असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ मा० सं० १६।५४॥
८. कोशे 'दृश्यकानि' इत्यपपाठः ।
९. कोशे 'कर्म स्तुत्या' इत्यपपाठः ।
१०. कोशे 'भक्ष्या' इत्यपपाठः ।

त्वं[1] सिन्धूनस्यन्दनान्मेघानवासृजो[2] विसृष्टवान् ॥५३॥
अधराचोवचस्सिद्धेर्व्यर्थो[3] वावेति गम्यताम् ।
अधराचोऽत्र मेघास्स्युर्व्यसृजस्त्वं[4] तथैव तान् ॥५४॥
तेषां प्रधानभूतं हि यथा त्वं हतवानहिम्[5] ।
महाहौ निहते तस्मिन् पतितास्ते महीतले ॥५५॥
अथवा सिन्धवो नद्यः गङ्गाद्या स्यन्दनात्मिकाः ।
अधोगा[6] व्यसृजस्तास्त्वं हत्वाहिं वृष्टिकर्मणा ॥५६॥
अशत्रुरमि लोकेश मर्वं पुष्णासि[7] वारिजम् ।
तं त्वामेवंविधं देवमाश्रयाम.[8] सुखार्थिनः ॥५७॥
नभतिर्वधकर्मेष्टो[9] [10]हन्यन्तां ज्यास्तु कुत्सिताः ।
अन्ये स्युः शत्रवोऽस्माकं कुत्सितास्तेऽप्रतिष्ठिनाः[11] ॥५८॥
धनुर्ज्याग्रहणञ्चात्र युद्धसाधनलक्षणम् ।
युद्धोपकरणं सर्वं नश्येच्छत्रुभिरुद्यतम् ॥५९॥
त्वत्प्रसादादशक्तास्स्युरस्मान् हन्तुं द्विषज्जनाः ।
शृङ्गे[12] [13]निघ्नन् यथा भीमो वृषभस्स्याद् भयानकः ॥६०।

१. मन्त्रपाठस्त्वित्थं ज्ञेयः—
त्वं सिन्धूंरवासृजोऽधराचोऽहन्नहिम् । अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम् ॥
तं त्वा परिष्वजामहे नभन्तामन्यकेषाम् । ज्याका अधि धन्वसु ॥ ऋ० १०।१३३।२॥
२. कोशे '०नवाधो' इत्यपपाठः । ३. कोशे 'आधारा चोपचस्सिद्धेः' इत्यपपाठः ।
४. कोशे 'अधरा चोपचातेस्स्युर्व्यसृजत्वं' इत्यपपाठः ।
५. कोशे 'हतवानहिं' इत्यपपाठः । ६. कोशे 'अधोगाख्यं सृजस्त्वास्त्वं' इत्यपपाठः ।
७. कोशे 'पुष्णाति' इत्यपपाठः ।
८. कोशे 'देवमाश्रयाम' इति विसर्गरहितोऽपाठः ।
९. कोशे 'नर्हुति बधकर्मेष्टो' इत्यपपाठः । द्र० स्कन्दनिरुक्तटीका—अथवा नभतिर्वधकर्मा (द्र० निघ २।१९) ।
१०. कोशे 'हन्यतां' इत्यपपाठः । ११. कोशे '०ते प्यतिष्ठतः' इत्यपपाठः ।
१२. तथा च मन्त्रः—
आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥ ऋ० १०।१०३।१॥
१३. कोशे 'नित्येऽन्यथा' इत्यपपाठः ।

तथा [1]भयानकः क्षिप्रो हन्ता क्षोभयिता द्विषाम् ।
संक्रन्दनस्समाह्वाता[2] तथैवानिमिषोऽप्यसौ ॥६१॥
सदैवोद्युक्त इत्यर्थो निमेषस्याऽपि वर्जनात् ।
एक एव तथा वीरः शतं सेनास्सहाऽजयत् ॥६२॥
एवं विप्रतिषिद्धार्थावेताविति निदर्शितौ ।
प्रैषश्चानर्थकस्सर्वो[3] यद्यर्थस्स्याद् विवक्षितः ॥६३॥
नान्यत् संबोधनार्थत्वं फलं स्यादस्य सिद्धितः ।
प्रमाणान्तरबुद्धेऽर्थे पुनर्बोधो ह्यनर्थकः ॥६४॥
इदं कर्म मया कार्यमित्येवमवगत्य हि ।
कर्तुं प्रवर्तते कर्म याजको नापरोऽबुधः ॥६५॥
पुनर्बोधाददृष्टं चेत् [4]तदस्तूच्चारणेन नः ।
अथाप्याह[5] परो मन्त्रो विरुद्धमपरं त्विदम् ॥६६॥
कथं[6] चादितिरेव स्याद् द्यौर्मातेत्यादिकं त्वियम् ।
द्यौरन्या पृथिवी चान्या माता पुत्रः पिता तथा ॥६७॥
अदितिर्देवमातेष्टा[7] भिन्नानां कथमेकता ।
विवक्षायां विरोधोऽयमित्यनेन विवक्षितम् ॥६८॥
रुद्रैकत्वादिमन्त्रेषु प्रक्षेपोऽस्य समानतः ।
न्याय्यस्स्यादिति पाठोऽत्र भेदेन स्यादनर्थकः ॥६९॥

---

१. कोशे 'भयानकं' इत्यपपाठः ।

२. कोशे 'संक्रन्दनास्समाह्वानास्त०' इत्यपपाठः ।

३. अथापि जानन्तं सं प्रेष्यति—अग्नये समिध्यमानायानुब्रूहि (तै० सं० ६।३।७।१) । निरु० १।१५ ॥

४. कोशे 'तदस्तूच्चारणो न' इत्यपपाठः ।

५. अथाप्याहादितिः सर्वमिति । निरु० १।१५॥

६. कोशे 'कथयञ्चदितिरेवं स्याद् यो मातेत्यादियत्विदम्' इत्यपपाठः । मन्त्रपाठः—
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥ ऋ० १।८९।१०॥

७. तथा चोक्तं यास्केन—अदितिरदीना देवमाता । निरु० ४।२२॥

यद्वाऽप्यनुपपन्नार्थमन्त्रेषु[1] न्याय्यताऽस्य तु ।
नापरो भिन्नजातीयः कश्चिदत्रोपलभ्यते ॥७०॥
अदितिस्सर्वमित्यस्य विषयो यो भविष्यति ।
नियतक्रमता चैव तथा शब्दविशिष्टता ॥७१॥
रूपसम्पन्नमन्त्राणां ब्राह्मणेन तथा विधिः ।
अचेतनार्थसंबोधः सम्भवाभावतस्तथा ॥७२॥
रुद्रसंख्याविरोधश्च मन्त्रान्तरसमीरितः ।
सेनाजयविरोधोऽपि तथा शत्रोरुदाहृतः ॥७३॥
जानतश्चैव संप्रैषः तथैवास्पष्टवाच्यता ।
अदितिः सर्वमित्यत्र [2]दोषो नैवाऽपरस्त्वतः ॥७४॥
एकस्यानेकतादोषाद् यदि वाऽनुपपन्नता ।
न चैवानुपपन्नत्वम् अविशिष्टमुदाहृतम् ॥७५॥
सर्वस्यानुपन्नत्वम् अविशिष्टपरिग्रहे ।
प्रसज्यते ततश्च [3]स्यादज्ञसंबोधनं तु तत् ॥७६॥
तस्मिन्[4] नान्तर्गतिस्तेन विरुद्धार्थेषु युज्यते ।
एवं विशेषतोऽत्रापि भेदेन स्यादुदाहृतिः ॥७७॥
द्युलोकाद्यात्मता न[5] स्यान्मन्त्रान्तरनिवारिता ।
मन्त्रान्तरार्थतो वस्तु यन्मन्त्रार्थस्य विद्यते ॥७८॥
तस्य विप्रतिषिद्धत्वात् पूर्वत्रोक्तं विशेषतः ।
अदितिर्देवमातेष्टा सर्वतातो[6] न युज्यते ॥७९॥
द्युलोकादेस्ततोऽन्यत्वात्[7] सा हि दाक्षायणी मता ।

---

१. कोशे '०पन्नोर्थं मन्त्रेषु' इत्यपपाठः ।
२. कोशे 'दोषः नैवापरत्वतः' इत्यपपाठः ।
३. कोशे 'स्यादजसंबोधनं' इत्यपपाठः ।
४. कोशे 'तस्मिन्नान्त गति०' इत्यपपाठः ।
५. कोशे 'ना' इत्यपपाठः ।
६. कोशे 'सर्वस्याता' इत्यपपाठः ।
७. कोशे 'द्युलोकातेस्सतो०' इत्यपपाठः ।

इतिहासविरोधोऽयं [1]पूर्वदोषविलक्षणः ॥८०॥
इत्यतो भेदतोऽवोचद् अ[दि]तिम्सर्वमित्यृषिः ।
विवक्षितार्थतायां[2] हि विध्यानर्थक्यमोरितम् ॥८१॥
जामिता[3] [4]संप्रहारस्य स्यादेषा संप्रकीर्तिता ।
व्याख्याने प्रकृते यत्तु व्याख्यास्याम इतीदृशम् ॥८२॥
व्याख्येयाः प्रस्तुता मन्त्रा इति निर्देष्टुमीरितम् ।
अस्पष्टार्थास्तथा[5] केचिदम्यगादिपदाश्रिताः[6] ॥८३॥
यदि प्रत्यायका मन्त्रा कस्यार्थस्येह कथ्यताम् ।
नह्येषां शक्यते बोद्धुमर्थं[7] इत्येवमब्रवीत् ॥८४॥
दोषोऽयं न भवेत्तेषां येषामुच्चारणात् फलम् ।
अविवक्षितबोध्यार्थाः[8] मन्त्रास्स्युर्वैदिकास्त्विमे ॥८५॥
शब्दक्रमविशेषाभ्यां [9]नियताश्च जपादिवत् ।
ऋग्यजुर्लक्षणा मन्त्रा न स्युरर्थस्य वाचकाः ॥८६॥
मन्त्रत्वात् [10]सामवत् सर्वे मन्त्रा वा लौकिका यथा ।
अर्थवन्तस्तु[11] मन्त्रास्स्युः शब्दसामान्यहेतुतः[12] ॥८७॥
शब्दसामान्यशब्देन [13]नामाख्यातपदात्मना ।
वैदिकानामनन्यत्वं लौकिकेभ्यः प्रसाधितम् ॥८८॥

---

१. कोशे 'पूर्वकोपविलक्षणः' इत्यपपाठः ।
२. कोशे 'विवक्षितार्थतां याहि' इत्यपपाठः । ३. पुनरुक्तिरित्यर्थः ।
४. कोशे 'संप्रहारस्या जेषा संप्रकीर्त्तित्ताः' इत्यपपाठः ।
५. अथाप्यविस्पष्टार्था भवन्ति—अम्यग् यादृश्मिन् जारयायि काणुकेति । निरु० १।१५॥
६. कोशे 'अस्पोष्टोर्थाः तथा केचिर्दम्यतादिपदाहिता' इत्यपपाठः ।
७. कोशे 'बोद्धुमर्थमित्येव०' इत्यपपाठः ।
८. कोशे 'अविवक्षितबुद्धार्थाः' इत्यपपाठः ।
९. कोशे 'नियतश्चाज्जायादिवत्' इत्यपपाठः । १०. कोशे 'समवत्' इत्यपपाठः ।
११. अर्थवन्तः शब्दसामान्यात् । निरु० १।१६॥
१२. कोशे 'शब्दसामान्यहेतुकः' इत्यपपाठः ।
१३. कोशे 'नामाख्याता पदात्मता' इत्यपपाठः ।

तद् यानोति[1] वाक्येन नामादीनां सुयुक्तितः ।
प्रयुज्यन्ते हि ये शब्दा लोके [2]नामादिलक्षणाः ॥८९॥
अर्थवन्तस्तु ते सिद्धा मन्त्राश्चैव तदात्मकाः ।
यथा विवक्षितार्थास्ते तथा [3]मन्त्रेष्वभेदतः ॥९०॥
यथा शक्तं पदं लोके स्वार्थं वक्तुं समीरितम् ।
मन्त्रेष्वपि तथा शक्तम् अभेदादिति गम्यताम् ॥९१॥
पदार्थाश्च[4] यथा लोके वाक्यार्थप्रतिपादने ।
शक्तास्तथैव मन्त्रेषु वैलक्षण्यं न विद्यते ॥९२॥
यथोपयुज्यते लोके वाक्यार्थप्रत्ययो हि नः ।
मन्त्रेष्वपि तथैवेति विशेषो नैव कश्चन ॥९३॥
शाल्यन्नं मुद्गसूपेन सर्पिषा सोपदंशकम् ।
भुक्त्वा पीत्वा सकर्पूरं तोयं [5]भुक्तिः समर्जिता ॥९४॥
इत्याद्याकर्ण्य वाक्यं हि तदर्थमवधार्य च ।
प्रवर्तते यथा लोके तथा मन्त्रार्थमप्ययम्[6] ॥९५॥
प्रैषार्थं[7] प्रेषितो बुद्ध्वा कुर्याद् ऋत्विगसंशयम् ।
करणार्थं[8] तथा ज्ञात्वा [8]करणेन प्रवर्तते ॥९६॥
बर्हिर्देवेति[9] मन्त्रादौ स्पष्टमेतद्धि दृश्यते ।
यूपाञ्जनादिमन्त्राश्च[10] क्रियमाणानुवादिनः ॥९७॥

---

१. 'तदद्यान्येतानि चत्वारि पदजातानि' इत्यादिः प्रथमाध्यायस्य प्रथमखण्डस्य पाठोऽत्र विवक्षितः ।

२. कोशे 'नानादिलक्षणः' इत्यपपाठः ।

३. कोशे 'मन्त्रेष्वभेःता' इत्यपपाठः ।

४. कोशे 'पदार्थश्च' इत्यपपाठः ।

५. कोशे 'भुक्तिःसमर्जितम्' इति पाठः ।

६. कोशे 'मन्त्रार्थमव्ययम्' इत्यपपाठः ।

७. अग्नीदग्नीन् विहर (तै० सं० ६।३।१।२) इत्यादयः प्रैषमन्त्राः ।

८. कोशे 'कार०' इत्यपपाठः । यतो हि मन्त्रा क्रियमाणकर्मस्मारणकर्मणि करणाभूता भवन्ति ।

९. कोशे 'बर्हिर्देवेति' इत्यपपाठः । तथा च मन्त्रः—'बर्हिर्देवसदनं दामि' । मै० सं० १।१।८॥

१०. कोशे 'आपाञ्जनादि' इत्यपपाठः । तथा च यूपाञ्जनमन्त्रः—'अञ्जन्ति त्वामध्वरे देवयन्तः' । ऋ० ३।८।१॥

स्वार्थस्य क्रियमाणस्य [1]स्मारका ह्यप्रकारकाः ।
प्रारम्भस्मृतिविच्छेदे[2] न तत्कर्म समाप्यते ॥९८॥
आ समाप्तेरतः[3] कार्यं स्मारणं तत्र ते स्थिताः ।
स्तोत्रशस्त्रगता[4] ये च तेषामर्थे विवक्षिते ॥९९॥
स्तौति शंसति शब्दोक्तं कर्म सिध्यति नान्यथा ।
गुणगुण्यभिधानं हि स्तुतिर्नाक्षरकीर्तनम् ॥१००॥
न चाप्युच्चारणेनैव शस्त्रकर्मोपपद्यते ।
गुणगुण्यभिधानं चेत् स्तोत्रं शस्त्रं च सम्मतम् ॥१०१॥
स्फुटं विवक्षितस्तेषाम् अर्थ इत्यवधार्यते[5] ।
ननु सामात्मकं स्तोत्रं न तदर्थस्य वाचकम् ॥१०२॥
तस्य गोत्यात्मकत्वेन गोतिः सामेति[6] च स्थितम् ।
सामाधारपदानां[7] च वाचकत्वेन सिध्यति ॥१०३॥
गुणगुण्यभिधाभावो गीत्या नैव प्रणश्यति ।
ननु गोत्या विनष्टत्वात् पदेभ्यो न स्तुतौ मतिः[8] ॥१०४॥
अनित्यत्वाद् विनाशेऽपि ग्रहणं न पुनर्भवेत् ।
मानकाले तिरोधानात् पदानां यद्यपि क्वचित् ॥१०५॥

---

१. कोशे 'स्मारता' इत्यपपाठः ।

२. वेदाध्ययनेन या स्मृतिः पदार्थक्रमविषयिका अभूत्, सा कर्मकाले कर्मणां सांकुल्येन नश्यति । तथा सति स्मृतिविच्छेदे कर्म समापयितुं न शक्यते इत्यतो मन्त्राः स्मृतिहेतवो भवन्ति ।

३. कोशे 'असमाप्तेरतः' इत्यपपाठः ।

४. तथा च स्तोत्रशस्त्रलक्षणम्—प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम् ।

५. अत्र 'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद् देवताभिधानम्' इति जैमिनीयं सूत्रम् (पू० मी० २।१।१३) तदीयं शाबरभाष्यं चानुसन्धेयम् ।

६. 'गीतिषु सामाख्या' इत्याह जैमिनिः । पूर्वमीमांसा २।१।३६॥

७. कोशे 'सामासारपदानां' इत्यपपाठः । अत्रायं भावः—साम्नां यान्याधारभूतानि पदानि अर्थात् येषु पदेषु साम गीयते तेषां वाचकत्वेन नात्र दोषोद्भावनं शक्यते कर्तुम् ।

८. कोशे 'मति' इत्यपपाठः ।

तथापि स्मरणात् तेषाम् अर्थज्ञानं प्रवर्तते ।
पदार्थस्मृतिसद्भावे[1] वाक्यार्थस्मृतिसम्भवः ॥१०६॥
स्तुतिश्च तावतैव स्याद् गीतिस्तस्या[2] न नाशिकाः ।
गायन्नपि तथा श्लोकैः श्लोकैः स्तौतीति भण्यते ॥१०७॥
पठित्वा यस्य नामानि लोके गीतिः प्रवर्तते ।
स्तौमि स्तूयेऽहमित्येवं तयोरुत्पद्यते मतिः ॥१०८॥
देवतायास्तथैव स्याद् ऋत्विजोऽर्थविदस्तथा ।
देवतायाश्च विद्वत्ता भाष्यकारेण[3] वक्ष्यते ॥१०९॥
अतश्च स्तोत्रता सिद्धा साम्नामाधारवर्त्मना ।
'पृष्ठैः स्तुवते'[4] इत्यादिर्विधिरेवं च दृश्यते ॥११०॥
जपानुवाचनार्थानां यद्यप्युच्चारणं श्रुतम्[5] ।
तथापि [6]तद् भवेत्तेषाम् अर्थज्ञानपुरःसरम् ॥१११॥
मन्त्रार्थदेवतामाहुस्तद्विद् यष्टाऽथ याजकाः ।
'यो ह वा'[7] इति वाक्येन दृष्ट्वैवं [8]शौनकोऽब्रुवीत् ॥११२॥

---

१. कोशे 'पदार्थस्मृतितद्भावे' इत्यपपाठः ।

२. स्तुतेरित्यर्थः ।

३. भाष्यकारेण यास्केनेत्यर्थः । यास्कः सप्तमाध्याये 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' (७।१) इत्येवं वक्ष्यति । यदि हि नाम देवता स्तुत्यर्थं न विजानाति तर्हि कथं सा स्तोतुरिच्छां पूरयितुं समर्था स्यात्, किन्निमित्तं च स्तोता देवतां स्तुवीत ।

४. अनुपलब्धमूलम् ।

५. जपेद्, अनुब्रूयाद् इत्यादिनोच्चारणेन चोदितमित्यर्थः ।

६. कोशे 'तद्भेत्तेषाम्' इत्यपपाठः ।

७. यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति । अयातयामान्यस्य छन्दांसि भवन्ति । आर्षेय ब्रा० १।१०॥

८. कोशे 'शनको०' इत्यपपाठः ।

मन्त्राणां[1] [2]ब्राह्मणार्षेयच्छन्दोदैवतविन्न यः ।
याजनाध्यापनादेति[3] छन्दसां यातयामताम् ॥११३॥
स्थाणुं[4] वच्छेति गर्त्तं वा पद्यते वा प्रमीयते ।
पापीयान् भवतीत्यर्थ एवं ब्राह्मणमाह तम् ॥११४॥
मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतवित्तु यः ।
याजनाध्यापनाभ्यां[5] स श्रेय एवाधिगच्छति ॥११५॥
अर्थवत्तवमेतेषां सर्वत्रैवोपपद्यते ।
लिङ्गमप्यर्थवत्वस्य[6] न्यायसिद्धं च दृश्यते ॥११६॥
एतद्वा[7] इति वाक्येऽस्मिन् समृद्धं यज्ञकर्मणः ।
अर्थाभिधानसामर्थ्यं मन्त्राणां रूपमुच्यते ॥११७॥
समृद्धता च रूपेण रूपवन्मन्त्रवाच्यता ।
व्याख्याता ब्राह्मणेनैव [8]यत्कर्मेत्यादिना हि सा ॥११८॥
कर्माभिवदतीत्येतदानर्थक्यं न युज्यते ।

---

१. इमास्तिस्रः (११३-११५) कारिकाः शौनकीया इति वेङ्कटमाधवोऽपि ऋगर्थदीपिकायां (१।१।५-७) निर्दिदेश (द्र० रामलाल कपूर प्रकाशितायाम् ऋग्वेदानुक्रमण्यां ५।१।५-७)। शौनकप्रणीत 'आर्षानुक्रमणी' नामा ग्रन्थः (कलिकाता-प्रकाशिकग्रन्थाद् भिन्नः) वेङ्कटमाधवोद्धृत-कारिकाणामाकर आसीदिति कुञ्जन् राजः (द्र० ऋग्वेदानुक्रमणी मद्रास सं० परिशिष्ट २, पृ० ४५)। नीलकण्ठोऽपि तस्मादेव शौनकग्रन्थाद् इमाः कारिका उज्जहारेति कल्प्यते। अत्रोद्धृतकारिकाणां पाठो वेङ्कटमाधवग्रन्थमनुसृत्य शोधितः।

२. कोशे 'ब्राह्मणार्षेयं छन्दोदैवतवित्तु यः' इत्यपपाठः।

३. कोशे 'याजनाध्यापनोध्येति' इत्यपपाठः।

४. कोशे 'स्थाणुं गच्छति गर्तं वा पात्यते मीयतेऽपि वा' इति पाठः।

५. कोशे 'ऽध्यापनाभ्यास' इत्यपपाठः।

६. कोशे 'ऽर्थवत्तस्य न्यायसिद्धश्च' इत्यपपाठः।

७. एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणम् ऋग् यजुर्वाभिवदतीति च ब्राह्मणम्। निरु० १।१६॥

८. एतद् वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति। गोपथ ब्रा० २।२।६॥ तु०—ऐ० ब्रा० १।४॥

व्याचक्षाणानि[1] दृश्यन्ते मन्त्रार्थान् [2]ब्राह्मणानि च ॥११९॥
अर्थवन्तस्ततोऽपि [3]स्युर्मन्त्रा इत्यवधार्यते ।
इहैव स्तम् इति त्वस्मान् [4]मन्त्राद् योऽर्थः प्रतीयते ॥१२०॥
तस्याविवक्षितत्वं हि कथमेवाभिधीयते ।
इहैव स्वगृहे नित्यं [5]भवतं नाश्रमान्तरे ॥१२१॥
यावज्जीवाग्निहोत्रादेः कार्यतंतेन सूचिता[6] ।
मा प्राप्नुतं वियोगं च सर्वं चायुरवाप्नुतम् ॥१२२॥
यौतिरत्र[7] पृथग्भावे [8]यथैवायुतसिद्धता ।
सामान्यमयुते[9] चेति प्रयोगो वैदिकस्तथा ॥१२३॥
क्रीडन्तौ पुत्रपौत्रैश्च हृष्यन्तौ दम्पती सदा ।
स्वगृहग्रहणेनापि स्वामिभावो विवक्षितः ॥१२४॥
अपराश्रयजोवत्वं तद्धि सर्वेण काङ्क्षितम् ।

---

१. कोशे 'व्याचक्षाणा हि दृश्यन्ते मन्त्रार्था ब्राह्मणानि च' इत्यपपाठ ।

२. तथा चाह भट्टभास्करः—ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्याग्रन्थः (तै० सं० १।५।१ भाष्ये) ।

३. कोशे 'स्युः मन्त्रा इत्यवधीयते' इत्यपपाठः ।

४. तथा च मन्त्रवर्णः—इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम् । क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ ऋ० १०।८५।४२॥

५. कोशे 'भवता' इत्यपपाठः ।

६. आश्रमान्तरनिषेधो यावज्जीवाग्निहोत्रत्वं च सामान्यगृहस्थमुलक्ष्य कीर्तितम् । यदा तु 'यदहरेव विरजेत्तदहरेव प्रव्रजेत् गृहाद्वा वनाद्वा ब्रह्मचर्यादेव प्रव्रजेत्' इति श्रुत्यन्तरविहिताश्रमान्तराधिकारी भवति तदा आश्रमान्तरपरिग्रहो नानेन वार्यते । यद्वा 'सर्वमायुर्व्यश्नुतम्' इत्यत्र श्रुतं सर्वत्वं 'सर्वत्वमाधिकारिकम्' (पू० मी० १।२।१६) इति जैमिनीयवचनानुसारं गृहस्थाश्रमस्य यावदायुर्विहिता तत्र युवयोर्वियोगो मा भवतु तावदायुःपर्यन्तं गृहाश्रमे तिष्ठतमितिपरं व्याख्येयम् ।

७. कोशे 'योतिरत्र' इत्यपपाठः ।

८. यथाऽयुतसिद्धशब्दे यौतिः पृथग्भाववचनस्तथैवेहेत्यर्थः । युतः पृथग्भूतः, न युतोऽयुतः—अपृथग्भूतः ।

९. कोशे 'सामान्याहयुते' इत्यपपाठः । सामान्यं अयुतसिद्धं भवतीति नैयायिकानां मतम् ।

ईदृशस्याविवक्षायां ब्राह्मणं चाप्यनर्थकम् ॥१२५॥
ब्राह्मणार्थविवक्षायां मन्त्रार्थोऽपि विवक्षितः ।
विवक्षायां विशेषोऽपि नोभयत्रापि लक्ष्यते ॥१२६॥
विधित्वमथ चेद्धेतुस्तन्मन्त्रेष्वपि दृश्यते ।
पृणीयादनुपश्येत[1] पन्थामिति यथेरितम् ॥१२७॥
आनर्थक्यप्रतिज्ञा[2] च प्रत्यक्षेण विरुध्यते ।
स्पष्टः प्रतीयते ह्यर्थो यथेहैवेति[3] दर्शितम् ॥१२८॥
अर्थस्य त्वविवक्षायां प्रमाणं नापि किंचन ।
मन्त्रत्वादिति चाप्येतन्नानर्थक्यस्य कारणम् ॥१२९॥
अर्थवन्तो हि दृश्यन्ते मन्त्रास्सन्तोऽपि लौकिकाः[4] ।
'दीप्ता हाटककेशेति' नारसिंहादयो यथा ॥१३०॥
सामवच्चेति चाप्यस्य स्तोत्रत्वात् [5]स्वार्थहीनता ।
स्तोत्रता साधिता[6] [7]साम्नामाधारस्यार्थवत्तया ॥१३१॥
मन्त्रा[8] विवक्षितार्थास्स्युरभिप्रेतार्थवत्त्वतः ।
प्रत्यक्षाद्यविरोधित्वे तादृग् ब्राह्मणवाक्यवत् ॥१३२॥
वाचोयुक्त्यानुपूर्व्यस्य[9] नियमादिति यत्पुनः[10] ।

---

१. कोशे प्रीणायादनुपश्येत पथामिति' इत्यपपाठः । द्र०—ऋ० १०।११७।५।

२. कोशे '०प्रतिज्ञान्च' इत्यपपाठः ।

३ कोशे 'यथैहैवेति' इत्यपपाठः । 'इहैव स्तं मा वियौष्टम्' इति मन्त्रे ।

४. अत्रैवमनुमानम्—वैदिका मन्त्रा अर्थवन्तः, मन्त्रत्वसामान्यात् यथा लौकिका मन्त्रा अर्थवन्तः तथा वैदिका अपि तस्माद् वैदिका मन्त्रा अर्थवन्तः ।

५. कोशे 'सोप्यहीनता' इत्यपपाठः ।

६. अस्मिन्नेव पादे पूर्वत्र (श्लोक सं० १०३) स्तोत्राणामर्थवत्त्वं प्रतिपादितम् ।

७. 'कोशे 'ताम्नामा०' इत्यपपाठः । ८. कोशे 'मात्रा' इत्यपपाठः ।

९. कोशे 'वाचोयुक्त्यनुपूर्वस्य' इत्यपपाठः ।

१०. यथो एतन्नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद् यथेन्द्राग्नी पितापुत्राविति । निरु० १।१६।

अर्थवत्स्वपि शब्देषु [1]दृश्यते लौकिकेषु तत्[2] ॥१३३॥
यथेन्द्राग्नी पितापुत्राविति नैकान्तिकं ततः ।
उच्यते हि न शक्राग्नी [3]नाग्नोन्द्राविति वा तथा । ॥१३४॥
तस्मादसाधुशब्दत्वात् साधुत्वान्नियमस्तथा ।
अजादित्वाददन्तत्वाद्[4] इन्द्राग्नी साधुरिष्यते ॥१३५॥
शक्राग्नी नैव साधुस्स्याद् घेश्च [5]पूर्वनिपातनात् ।
प्रत्यवायनिवृत्तिर्वा फलमभ्युदयोऽपि वा[6] ॥१३६॥
साधुशब्दप्रयोगस्य न[तत्]स्यात् तद्विपर्यये ।
एवं नियतरूपेण मन्त्रेणार्थे प्रकल्पिते ॥१३७॥
सगुणं सफलं कर्म तेन स्यान्नियमोऽर्थवान्[7] ।
उच्चारणाद् यथाऽदृष्टं तथैव नियमादपि ॥१३८॥
नैतावता परित्यागो[8] दृष्टस्यार्थस्य युज्यते ।
अदृष्टं केवलं ते स्यान्मत्पक्षे तूभयं[9] भवेत् ॥१३९॥
नादृष्टं[10] केवलं ज्याया दृष्टादृष्टफलं स्फुटम् ।

---

१. कोशे 'दृश्यन्ते' इत्यपपाठः । २. कोशे 'तम्' इत्यपपाठः ।

३. कोशे 'नाग्नीन्द्रादिति' इत्यपपाठः ।

४. अजाद्यदन्तम् (अष्टा० २।२।३३) इति पाणिनीयमनुशासनम् 'इन्द्राग्नी' पदस्य साधुत्वे स्मारितम् ।

५. 'द्वन्द्वे घि' (अष्टा० २।२।३२) इति पाणिनीयानुशासनात् ।

६. साध्वसाधुशब्दाभ्यामर्थप्रतीतावपि साधुः शब्द एव व्यवहर्तव्य इति नियमः असाधुशब्दव्यवहारप्रत्यवायनिवृत्यर्थः, अथवा साधुप्रयोगेणैवाभ्युदयो भवति इत्येवमभ्युदयफलनियमार्थः ।

७. कर्मकाले प्राप्तकार्यस्मरणं मन्त्रव्यतिरिक्तशब्दैरपि सम्भवति तथापि मन्त्रेणैव स्मृतं कर्म कर्तव्यमिति नियमः सगुणस्य सफलस्य कर्मणः सिद्ध्यर्थं ज्ञेयम् ।

८. यथा मन्त्रानर्थक्ये मन्त्रोच्चारणमदृष्टाय तथा मन्त्रेणैव स्मृतं कर्मकर्तव्यमिति नियमोऽप्यदृष्टाय । उभयत्राप्यदृष्टत्वस्य समानत्वेऽपि मन्त्रस्य दृष्टार्थता हातुं न युज्यते ।

९. अदृष्टं दृष्टमर्थज्ञानं चोभयं फलम् ।

१०. कोशे 'अदृष्टं' इत्यपपाठः । दृष्टादृष्टफले स्फुटेऽदृष्टं केवलं न ज्याय इति भावः ।

ब्राह्मणेनेति[1] यच्चोक्तं न तन्मन्त्रविधित्सया ॥१४०॥
प्राप्तत्वादेव रूपेण[2] स्तुत्यर्थं तदनूद्यते ।
प्रथनं स्तूयते ह्यत्र स्तुत्या तच्च विधीयते ॥१४१॥
तदर्थमनुवादः स्यान्मन्त्राणां प्राप्तिरर्थतः ।
यदप्यनुपपन्नार्था[3] [4]इत्युक्तं नैव तत्तथा ॥१४२॥
ओषध्याद्यर्थजातस्य स्मृत्यैवानुप्रयोजनम् ।
न तत्सम्बोधनेनार्थ इति तन्न विवक्षितम्[5] ॥१४३॥
अधिष्ठात्र्यथवा[6] काचित् सर्वस्याभ्युपगम्यते ।
ईश्वरा[7] सर्वविच्चैव तस्यास्संबोधनं ततः ॥१४४॥
एक आत्मेति वा पक्षे सम्बुद्धिर्न विरुध्यते ।
त्रायस्वेत्यादिका[8] चापि भवेदध्येषणा ततः ॥१४५॥
त्रायते [9]देवता ह्येनं विधिना संस्कृतं पशुम् ।
अधिष्ठात्रात्मिका यद्वा स एवात्मा यथोदितः ॥१४६॥
आम्नायवचनादेषा विहितत्वाज्जपादिवत् ।

---

१. यथो एतद् ब्राह्मणेन रूपसम्पन्ना विधीयन्त इत्युदितानुवादः स भवति । निरु० १।१६॥

२. रूपेणार्थाभिधानसामर्थ्येन (द्र० श्लोकः ११७) उरु प्रथस्व इति मन्त्रः प्रथनक्रियां ब्रुवन् स्वत एव प्राप्तः । तदेव 'इति प्रथयति' इति ब्राह्मणवचनेनानूद्यते । स चानुवादः 'यजमान-मेव स्वर्गे लोके प्रथयति' इति प्रथनकर्मस्तुत्यर्थः ।

३. कोशे 'यद्यप्यनुपपन्नार्थम्' इत्यपपाठः ।

४. यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत । निरु० १।१६॥

५. ओषध्यादीनामचेतनत्वान्न तत्र सम्बुद्धिफलम् । अतो यस्यां विभक्तौ ओषधिशब्द-वचनं सार्थकं भवति तस्यां तद्विपरिणमते । एवं च 'ओषधे त्रायस्व' इति मन्त्रः 'ओषधि-स्त्रायते' इत्येवमर्थं ब्रूते । अयमेव चाभिप्रायः स्वामिदयानन्द सरस्वतीपादैः स्वीये वेदभाष्ये-ऽभिधीयते । अत एव जडपदार्थविषयकं यत्र सम्बोधनं मध्यमपुरुषप्रयोगो वा वेदे दृश्यते तत्र ते व्यत्ययमुक्त्वा प्रथमान्ते प्रथमपुरुषे च तदभिप्रायं निदर्शयन्ति ।

६. कोशे 'अधिष्ठाद्यथवा' इत्यपपाठः । अधिष्ठात्रीदेवतापक्षो न नैरुक्तैराद्रियते न च मीमांसकैः । अतोऽस्य पक्षस्यात्र निर्देशः स्वशास्त्र विरुद्ध एव ।

७. कोशे 'ईश्वरात्सर्व०' इत्यपपाठः । ८. कोशे 'त्रायं सत्वादिका' इत्यपपाठः ।

९. कोशे 'भवता' इत्यपपाठः ।

अहिंसैव[1] प्रतीयेत श्रेयस्मावनंहेतुतः ॥१४७॥
निषिद्धोऽनर्थहेतुः स्यान्निषेधो धर्मलक्षणः ।
न हिंसात्वादधर्मत्वं निषिद्धत्वादभक्ष्यवत् ॥१४८॥
हिंसैव विहिताऽप्येषा यद्यपि स्यात् स्वरूपतः ।
अहिंसेत्युच्यते गौ[णी स्वर्गनयन]लक्षणा ॥१४९॥
मा हिंसारिति वाक्यार्थः स्वर्गमेनं नयेति[2] तु ।
स्वर्गाय नीयमानो हि हिंसितः स्यात् सुदुःखितः ॥१५०॥
स्वर्गाय नीयमानस्तु रक्षितो दुःखयोनितः[3] ।
तथा च ब्राह्मणेनेदं 'पशुर्वा'[4] इति दर्शितम् ।१५१॥
पशुर्वै नीयमानोऽयं मृत्युं प्रापश्यदग्रतः ।
नाकामयत देवांस्तु[5] ततो देवाः[6]पशुं किल ॥१५२॥
अब्रुवंस्तं सुरा[7] भीतं मा भैषीरेहि कृच्छ्रतः ।
सुगतिं[8] प्रापयामस्त्वामस्माकञ्चोपकारिणम् ॥१५३॥
तदेतद् दुःखभूयिष्ठं परित्यज्य कलेवरम् ।
व्रज त्वं स्वर्गमेवाद्य देवताभावमाप्नुहि ॥१५४॥
एवमुक्तः पशुर्धीमान् सर्वकामस्तथाऽकरात् ।
विधिना मरणेनैव पशवः स्वर्गमाप्नुयुः ॥१५५॥
मनुश्च[9] भगवान् प्राह [10]प्राप्नुवन्त्युत्सृतीरिति ।
यत्तु[11] विप्रतिषिद्धार्था इत्यत्राप्यभिधीयते ॥१५६॥

---

१. कोशे 'अहि सैव' इत्यपपाठः । २. कोशे 'नयन्ति' इत्यपपाठः ।
३. कोशे 'दुःखयोनिकः' इत्यपपाठः ।
४. तथा च ब्राह्मणम्—पशुर्वै नीयमानः स मृत्युं प्रापश्यत् स देवान् नान्वकामयतैतुम्, तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्यामः (ऐ० ब्रा० २।६) इति ।
५. कोशे 'वेगस्तु' इत्यपपाठः । ६. कोशे 'पशुः' इत्यपपाठः ।
७. कोशे 'सुराभीक तन्मा' इत्यपपाठः ।
८. कोशे 'संगतिं प्रापयास्त्वं मेऽस्मा०' इत्यपपाठः ।
९. मनु० ५।४० १०. कोशे '०न्त्युच्छ्रितीरिति' इत्यपपाठः ।
११. यथो एतद् विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतद् यथासपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति । निरु० १।१६॥

एक एवेह रुद्रोऽस्ति न द्वितीयोऽस्ति कश्चन ।
इत्ययं यदि मन्त्रार्थस्तदैव[1] स्याद् विरुद्धता ॥१५७॥
नायमस्य भवेदर्थो यस्त्वर्थस्सोऽभिधीयते ।
रणार्थं निर्भयो रुद्र[2] एक एव व्यवस्थितः ॥१५८॥
द्वितीयो न स्थितः कश्चिन्नष्टास्त्वन्ये भयात् ततः ।
संग्रामावस्थितस्यैवमेकत्वं न स्वरूपतः ॥१५९॥
असंख्यातसहस्रत्वं स्वरूपेणाभिधीयते ।
न चैकरुद्रदेवत्वे कर्मण्येकत्वमेव च ॥१६०॥
अनेकत्वं तथा तत्तु यत्कर्मानेकरुद्रकम् ।
एवं विप्रतिषिद्धार्थाविती नैव भविष्यतः ॥१६१॥
प्रधाने निहते शत्रौ तथेन्द्रस्याऽप्यशत्रुता ।
सन्तोऽपि शत्रवोऽन्ये [3]स्युर्निस्सारत्वादशत्रवः ॥१६२॥
लौकिकेष्वपि वाक्येषु दृष्टमेवेदमीदृशम् ।
ब्राह्मणो ह्यसपत्नोऽयं राजेत्येषोऽनमित्रकः[4] ॥१६३॥
प्रयोगो दृश्यते लोके न त्वेतदुपपद्यते ।
तथा च भगवानाह [5]पाराशर्योऽत्र वस्तुनि ॥१६४॥
मुनेरपि[6] वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः[7] ॥१६५॥
असपत्नो यथा विप्रो यथा राजाऽनमित्रकः ।
तथेन्द्रोऽशत्रुरित्येवमविरोधो भविष्यति ॥१६६॥
यत्तु[8] जानन्तमित्यादि तच्च युक्तं प्रतीयते ।

---

१. कोशे 'ऽर्थःतदेव' इत्यपपाठः । २. कोशे 'रुद्रः एक' इत्यपपाठः ।
३ कोशे 'स्युः निस्सारत्वाद्' इत्यसंहितः पाठः ।
४. नास्ति मित्रं यस्य स अमित्रकः, न अमित्रक = अनमित्रकः ।
५. पाराशर्यो भगवान् कृष्णद्वैपायनः ।
६. कोशे 'मुनेपि हि वनस्थस्य' इत्यपपाठः । ७. महाभारत इति शेषः ।
८. यथो एतज्जानन्तं सम्प्रेष्यतीति जानन्तमभिवादयते जानते मधुपर्कं प्राहेति । निरु० १।१६॥

विज्ञातं चापि यत्कर्म प्रयोगे समुपस्थिते ॥१६७॥
कर्तुं न शक्यते तावदविस्मृत्य कथंचन ।
तस्य संस्मरणार्थानामुपायानां समागमे ॥१६८॥
प्रैषो नियम्यते तत्र पक्षे प्राप्तः[1] स शक्तिमान् ।
प्रैषेणोत्पादितं ज्ञानं कर्मकालेऽङ्गमिष्यते[2] ॥१६९॥
प्रैषस्याप्यर्थवत्तैवमन्यथाऽदृष्टकल्पना[3] ।
दृष्टश्चेत् सम्भवत्यर्थो नादृष्टं कल्प्यते बुधैः ॥१७०॥
नियमादप्यदृष्टश्चेत् तत्र दृष्टोऽपि [युज्य]ते ।
उच्चारणाददृष्टत्वे[4] दृष्टो नैवास्ति कश्चन ॥१७१॥
अवघातो[5] यथा यज्ञेऽदृष्टमर्थं प्रसाधयेत् ।
प्रैषश्चापि तथैवेति विशेषो नात्र विद्यते ॥१७२॥
अभिवादयते यद्वज्जानन्तं नाम कीर्तयन्[6] ।
मधुपर्कमपीत्याह जानते[7] च यथा तथा ॥१७३॥
संप्रेष्यते[8] विजानन्तं दृष्टादृष्टार्थता समा ।
अभिवादनवेलायां मधुपर्केऽप्युपस्थिते ॥१७४॥
नामाद्युपहितं ज्ञानं तदङ्गं [9]तद्वदिष्यते ।

---

१. प्रयोगे समुपस्थिते स्मारकार्थानां बहुविधानामुपायानां मध्ये प्रैषोऽपि प्राप्तः, इत्यत आह—पक्षे प्राप्तः । स शक्तिमान् प्रैषो नियम्यत इत्यर्थः । तथा च 'नियमः पक्षिके सति' इत्याहुर्न्यायविदः ।

२. कोशे 'कर्मकाले गमिष्यते' इत्यपपाठः । ३. कोशे 'प्रैषस्य व्यर्थ०' इत्यपपाठः ।

४. कोशे 'उच्चारणाद्दृष्टन्तु' इति पाठः । अत्रायमभिसन्धिः—उच्चारणात् प्रैषोच्चारणाद् अदृष्टत्व एव स्वीक्रियमाणे दृष्टार्थो नाम न कश्चिद् भविष्यति ।

५. कोशे 'अपघातो' इत्यपपाठः । अयमभिप्रायः—'व्रीहीन् अवहन्ति' इत्यवघातो वितुषीकरणार्थः । तत्रावघातेनैव वितुषीकरणं न तु नखादिभिरिति नियमोऽदृष्टं प्रसाधयति ।

६. अभिवादनकर्ता नामोच्चारणपूर्वकं यमभिवादयते स गुर्वादिरभिवादनकर्तुर्नाम जानाति तथापि नामसंकीर्तनमभिवादनकर्मणि दृश्यते ।

७. यस्मै मधुपर्कः प्रदीयते स मधुपर्कं दीयमानं जानाति, तथापि 'मधुपर्को मधुपर्को मधुपर्कः प्रतिगृह्यताम्' (आश्व० गृह्य १।२४७) इति वदति ।

८. कोशे 'संप्रेष्यतेव' इत्यपपाठः । ९. कोशे 'तत्वदिष्यते' इत्यपपाठः ।

अदितेरपि[1] सर्वत्वं माहाभाग्याद्[2] भविष्यति ॥१७५॥
न[3] दीनताऽभिधायी वा शब्दो वक्ष्यति तत्तथा ।
त्वमेव मे पिता माता भ्रातेत्यादिवदेव[4] वा ॥१७६॥
लौकिकेष्वपि वाक्येषु दृश्यते तादृशं वचः ।
अनुप्राप्ता[5] रसास्सर्वे पानीयमिति तद्यथा ॥१७७॥
पानीयस्तुतिरेवैषा सर्वत्वं चादितेस्तथा ।
अविस्पष्टार्थतादोषो[6] यश्च[7] पूर्वमुदाहृतः[8] ॥१७८॥
नासावर्थविवक्षायास्तथैवार्थमजानतः ।
नैष इत्यादिना ह्येष तदुपमानेन वर्ण्यते ॥१७९॥
यदन्धः स्थाणुमासाद्य स्थाणुघातेन पीड्यते ।
न स्थाणोरपराधोऽसावन्धस्यैव ह्यपश्यतः ॥१८०॥
अभ्यगादेस्तथाऽर्थस्य नापराधोऽस्ति कश्चन ।
कौत्सस्याजानतस्त्वेव[9] जानतां स्पष्ट एव सः ॥१८१॥
स्पष्टार्थता यथा तेषां तथा व्याख्यास्यते स्वयम्[10] ।
यास्स्युर्जानपदे काश्चिज्जानपद्यः[11] क्रियास्तु ताः ॥१८२॥
अन्नपाकादिरूपा वा यद्वा चित्रादिलक्षणाः ।

---

१. यथो एतददितिः सर्वमिति लौकिकेष्वप्येतद् यथा सर्वरसा अनुप्राप्ताः पानीयमिति । निरु० १।१६॥

२. कोशे 'महाभाग्या' इत्यपपाठः ।

३. द्र०—अदितिरदीना देवमाता । निरुक्त ४।२२॥

४. तथा चाहु—त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥

५. कोशे 'अनुप्राप्तं' इत्यपपाठः । ६. कोशे 'अपिस्पष्टार्थता' इत्यपपाठः ।

७. कोशे 'यच्च' इत्यपपाठः ।

८. यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति । यथा जानपदीषु विद्यातः पुरुषविशेषो भवति, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति । निरु० १।१६॥

९. कोशे 'कोत्सस्याजानतस्त्वव' इत्यपपाठः । १०. निरु० ६।१५; ५।११॥

११. कोशे 'जानपद्य' इति निर्विसर्गः पाठः ।

पुरुषाणां विशेषः स्याद् विद्यातस्तासु नान्यथा ॥१८३॥
अभ्यस्यत्युपवेदेन[1] श्रद्धया चैव [2]यो भृशम् ।
सोऽभियोगविशेषेण श्रद्धया प्रज्ञया तथा ॥१८४॥
तथैवाचार्यसम्पत्त्या वेत्ति जानपदीः क्रियाः[3] ।
नेतरस्त्वनुपायत्वान्मन्त्रार्थेषु[4] तथा गतिः ॥१८५॥
तस्मादाचार्यवाक्येन तपसा प्रज्ञया तथा ।
तपसा साभियोगेन मन्त्रार्थः स्पष्टतां व्रजेत् ॥१८६॥
परम्परोपदेशस्तु [5]पारोवर्यं महोच्यते ।
स्याद्वा[6] [परोवरो]भावः कर्म वादः परोवरम् ॥१८७॥
परेषामुपदेष्टृत्वम् अपरेषां च शिष्यता ।
श्रवणं परिचर्या वा [7]पारोवर्यम् उदाहृतम् ॥१८८॥
तेन ये वेदितारस्स्युरर्थानामभियोगतः ।
भूयोविद्यस्तु यस्तेषां प्रशस्यस्स तु नेतरः ॥१८९॥
मन्त्रार्थस्य परिज्ञाने न यस्सोत्प्रेक्षयान्वितः[8] ।
पदवाक्यप्रमाणज्ञो योऽभियोगपरायणः ।
श्रद्दधानस्तपस्वी च नास्पष्टं तस्य किंचन ॥१९०॥

॥ [इति] निरुक्त[श्लोक]वार्त्तिके[षष्ठाध्यायस्य]पञ्चमः पादः ॥

---

१. कोशे 'अभ्यस्यत्युपदेन' इत्यपपाठः । २. कोशे 'यादृशम्' इत्यपपाठः ।
३. कोशे 'जानपदी क्रिया' इत्यपपाठः ।
४. कोशे 'नेतरस्त्वनुपायत्वान् मन्त्रार्थेषु' इत्यपपाठः ।
५. कोशे 'परोपर्यम्' इत्यपपाठः ।
६. कोशे 'स्याद्वा भावः कर्मवाच्यः परोपरम्' इति भ्रष्टः पाठः ।
७. कोशे 'परोपर्यं उदाहृतः' इत्यपपाठः । ८. उत्प्रेक्षा=अनवधानम् ।

# षष्ठः पादः

विवक्षिताभिधेयत्वमेवं मन्त्रस्य साधितम् ।
अथापीत्यादिनेदानीं[1] व्याचष्टेऽन्यत् प्रयोजनम् ॥१॥
पदानां प्रविभागश्च विनाऽनेन न सिध्यति ।
निरवग्रहमेवेदं पदं सावग्रहं त्विह ॥२॥
आःकारान्तमिदं[3] चान्यन्नैकारान्तमसंभवात् ।
पञ्चम्यर्थोपपत्तेश्च पञ्चम्यन्तं[4] तदिष्यते ॥३॥
षष्ठ्यर्थः[5] सम्भवेद् यत्र षष्ठ्यन्तं तद् भविष्यति ।
चतुर्थ्यन्तोपपत्तेश्च तथैकारान्तमित्यपि ॥४॥
निरुक्तेन विना ह्येतज्ज्ञातुमेव न शक्यते ।
यथार्थं[6] हि पदानि स्युरर्थानां तन्निरुक्ततः ॥५॥
पदानामर्थपरिज्ञानापरिज्ञानपुरस्सरम् ।
पदानां प्रविभागश्च पदलक्षणहेतुकः ॥६॥
पाठादेवाथवा सोऽपि लक्षणं चाप्यनर्थकम् ।
यदि स्यादर्थविज्ञानं पदज्ञानादृते तव ॥७॥
अनर्थकं पदज्ञानं पदार्थैर्न प्रयोजनम् ।
पदार्थैरपि विज्ञातैर्वाक्यार्थो ह्यवगम्यते ॥८॥
अनेकधा पदच्छेदे सम्भवत्यर्थनिर्णयात् ।
विभज्यन्ते पदानीति न दोषोऽयं भविष्यति ॥९॥

---

१. अथापीदमन्तरेण पदविभागो न विद्यते । निरु० १।१७ ।
२. कोशे 'प्रयजनम्' इत्यपपाठः ।
३. कोशे 'आकारा०' इत्यपपाठः ।
४. कोशे 'पञ्चम्यन्तस्तदिष्यते' इत्यपपाठः ।
५. कोशे 'षष्ठ्यर्थसम्भवाद् यश्चा' इत्यपपाठः ।
६. कोशे 'यथार्थो हि' इत्यपदाठः ।

निश्चित्यार्थमतश्चैव लक्षणं पदगोचरम् ।
संशयस्यापनुत्त्यर्थं मन्त्रेपूर्वं[1] यथाक्रमम् ॥१०॥
संहितापाठवत् पाठो नैषां चाकर्तृपूर्वकः ।
स्मर्यते हि विभागोऽयं शाकल्यादिप्रकल्पितः ॥११॥
पाठात् पुनः परिज्ञानमन्येषां पदगोचरम् ।
जायते मन्दबुद्धीनां तेभ्यश्चाप्यर्थनिर्णयः ॥१२॥
संशयस्य निवृत्तिस्तु तेषामप्यर्थनिर्णयात् ।
किमेवं[2] पदमेतत् स्यात् किमेवं त्विति संशयः ॥१३॥
निवर्ततेऽर्थविज्ञाने[3] तच्चानेनेति साधितम् ।
पदज्ञानादृतेऽप्यर्थे कथञ्चिन्नावधारिते ॥१४॥
ज्ञेयान्येव पदानि स्युः स्वाध्यायार्थमसंशयम् ।
पदानां [4]सक्रमाणां हि प्रयोगे श्रूयते फलम् ॥१५॥
ऋषयस्तु स्वयं ज्ञात्वा पदान्येवं [5]क्रमानपि ।
भृग्वादयः [6]पुरा सर्वे ब्रह्मयज्ञं प्रचक्रिरे ॥१६॥
शक्तिहीनांस्तु विज्ञाय तेभ्योऽर्वाक्कालजन्मनः ।
पदान्यदर्शयन् पूर्वे दुर्बलानुजिघृक्षया ॥१७॥
संहितावद् यदाप्येषां विभागस्स्यादकृत्रिमः ।
तस्मिन्नतिशयेनैषां कर्तृत्वमुपचर्यते ॥१८॥
तदानीमपि सन्देहो बहूनां यदि जायते ।
निवर्त्यस्सोऽर्थविज्ञानान्न तस्मात्तच्च सिध्यति ॥१९॥
अथापीत्यादि साधूक्तमतो भाष्यकृता स्फुटम् ।
मयोभूस्सुखकृद्[7] भूत्वा वातो गाः [8]प्रति गच्छतु ॥२०॥

१. कोशे 'यत्रपूर्वं' इत्यपपाठः । २. कोशे 'क्रमेव' इत्यपपाठः ।
३. कोशे 'निर्वतिते' इत्यपपाठः । ४. कोशे 'संक्रमाणां' इत्यपपाठः ।
५. कोशे 'क्रमान्यपि' इति पाठः । ६. कोशे 'पुरास्सर्वे' इत्यपपाठः ।
७. तथा च मन्त्रवर्णः—मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिशन्ताम् ।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड ॥ ऋ० १०।१६९।१॥
८. मन्त्रस्थोऽभिशब्दः कर्मप्रवचनीयः (अष्टा० १।४।९१) प्रत्यर्थे ।

वायुना [1]सुख्यमानाश्च गाव आस्वादयन्तु ताः ।
ओषधीर्विविधा दृष्टा[2] रसैर्बहुभिरन्विताः ॥२१॥
पीवो[3] बलमिति प्राहुः तद् यासां बहु विद्यते।
बलस्योत्पादिकास्त्वेव जीवधन्याः पिबन्तु वः ॥२२॥
धिनोतेः[4] प्रीणनार्थस्य धन्यास्ताः प्रीणयन्ति हि ।
जीवाख्या[5] वा धनं गावस्ताभ्य[6] आपो हिता यतः ॥२३॥
जोवधन्यास्ततः प्रोक्ता आपः शब्दार्थकोविदैः ।
गोरूपायावसायाऽस्मै रुद्र त्वं च सुखो भव ॥२४॥
अवसं[7] गाव[8] इत्याह [9]पद्वदिति विशेषणात् ।
गवां[10] चाधिकृतत्वेन तच्च पथ्यदनं विदुः ॥२५॥
क्षीरादेर्गोविकारस्य पथि चाप्यद्यमानतः ।
गवां पथ्यदनत्वस्य कारणं कल्पितं बुधैः ॥२६॥
कार्यस्य वाचकः शब्दः कारणेऽपि प्रवर्तते ।
कारणस्य तथावत्ता क्वचित् कार्येऽप्यसंभवात् ॥२७॥
गत्यर्थस्यावतेराहुरवसं[11] प्रत्ययेऽप्यसे ।
अवन्त्यनेन [12]गच्छन्ति ततस्स्यादवसं[13] हि तत् ॥२८॥
धातूपसर्गभेदस्य विवक्षायामवग्रहः ।
अवेति[14] धातुरेवेह तस्मान्नैवावगृह्यते ॥२९॥

---

१. कोशे 'सुख्यमानश्च' इत्यपपाठः । २. कोशे 'दृष्टाः रसै' इत्यपपाठः ।
३. कोशे 'पीवोरबलमिति' इत्यपपाठः । ४. धा० १।५८५।
५. कोशे 'जीवाख्यु वा' इत्यपपाठः ।
६. '०ताप्य आपो हि तास्वतः' इत्यपपाठः ।
७. कोशे 'अ.वासं' इत्यपपाठः।
८. पदवदवसं गावः पथ्यदनमवतेर्गत्यर्थस्यासो नामकरणस्तस्मान्नावगृह्णन्ति । निरु० १।१७॥
९. कोशे 'पद्यत्वदविशेषणात' इत्यपपाठः । १०. कोशे 'गावां' इत्यपपाठः ।
११. कोशे 'गत्यर्थस्यापतेराहुरपसम्प्रत्यतेप्यसौ' इत्यपपाठः ।
१२. कोशे 'यद्यास्ति' इत्यपपाठः । १३. कोशे 'स्यादवकं' इत्यपपाठः ।
१४. धा० १।६३१॥

योनिष्ट[1] इति चैतस्यां सोपसर्गोऽवगृह्यते ।
इन्द्रोपवेशनार्थं ते योनिरेष[2] प्रकल्पितः ॥३०॥
कर्मोपसर्गनिर्देशादध्याहार्यं[3] पदान्तरम् ।
तमागत्य निषीद त्वं संस्कृतं वेदिलक्षणम् ॥३१॥
स्वानश्शब्दायमानोऽश्वो [4]हेषितं वा समाचरन् ।
यथैव शीघ्रमागच्छेत् तथाऽऽगत्येति योज्यते ॥३२॥
वयस्त्विति[5] द्वितीयार्थे [6]रश्मयोऽश्वस्य सम्मताः ।
रश्मीन् विमुच्य [7]योक्त्राणि तथाऽश्वानवसाय च ॥३३॥
स्यतेर्विमोचनार्थस्य[8] [9]ल्यबन्तस्यावपूर्वकम् ।
अवसायेति रूपं स्यान्मुक्त्वेत्यर्थः प्रतीयते ॥३४॥
दोषावस्तोरहोरात्रं वोढृन् सातिशयं सदा ।
प्रपित्वे प्राप्त इत्यर्थो यागकाले समागते ॥३५॥
भेदस्य विद्यमानत्वादिह धातूपसर्गयोः ।
अध्येतारोऽवगृह्णन्ति तच्च युक्तं प्रतीयते ॥३६॥
देवा[10] इत्यनया[11] होमः कपोते गृहमागते[12] ।

---

१. तथा च मन्त्रवर्णः—
योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा ।
विमुच्या वयोऽवसायाश्वान् दोषा वस्तोर्वहीयसः प्रपित्वे ॥ ऋ० १।१०४।१॥
२. कोशे 'योनिरेषां प्रकल्पिता' इत्यपपाठः ।
३. मन्त्रे 'तम्' इति कर्म, 'आ' इत्युपसर्गः, तयोर्निर्देशादित्याशयः ।
४. ह्रेषृसमानार्थको हेषृधातुः (द्र० धातुवृत्तिः) ।
५. कोशे 'पयस्त्विति' इत्यपपाठः । ६. कोशे 'रश्वयोश्वस्य' इत्यपपाठः ।
७. कोशे 'योत्राणि' इत्यपपाठः ।
८. स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति । निरु० १।१७॥ षो=धा० ४।३९॥
९. कोशे 'लबन्तस्यावपूर्वकः' इत्यपपाठः । १०. तथा च मन्त्रवर्णः—
देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमा जगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ऋ० १०।१६५।१॥
११. कोशे 'इत्यनयो' इत्यपपाठः ।
१२. तथा च विहितम्—कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा । आश्व० गृह्य० ३।७।७।

इषितः प्रेषितो दूतः कपोतो दुष्टचेतनः ॥३७॥
कृच्छ्रस्यापादिका त्वेषा निर्ऋतिर्मृत्युदेवता ।
तत्सकाशादिति त्वर्थः पञ्चम्यर्थे विवक्षिते ॥३८॥
तस्याः[१] स्वभूत इत्यर्थः षष्ठ्यर्थो यदि संश्रितः ।
आःकारान्तमिति[२] त्वेतद् द्विधाऽप्यर्थोपपत्तितः ॥३९॥
पञ्चम्यन्तमिदं[३] यद्वा षष्ठ्यन्तमिति गम्यताम् ।
तस्मा इति तु तादर्थ्यं तन्निवृत्त्याऽत्र गम्यते[४] ॥४०॥
यत्कर्तुमागतो दूतः तस्य [५]व्यावृत्तिमिद्धये ।
पूजयामो वयं देवान् विश्वान् [६]कुर्मश्च निष्कृतिम् ॥४१॥
निष्कृतिर्निष्क्रिया[७] त्वत्र याग एव सदक्षिणः ।
अस्माकं द्विपदे चैव तथैवापि चतुष्पदे ॥४२॥
शं सुखं [८]सर्वदैवास्तु देवा युष्मत्प्रसादतः ।
गमनं वाऽपि रोगाणां शमित्यत्र विवक्षितम् ॥४३॥
कपोतागमनाद्[९] दुःखं यत्तन्मा भूत् कदाचन ।
देहान्मदीयतोऽपेहि[१०] [११]मृत्यो त्वं मनसस्पते ॥४४॥
मनसो मोहकत्वेन[प्राणिनां] तद्वशात् पतिः ।
मृत्युरप्युच्यते गौण्या वृत्त्या नैव[१२] तु मुख्यतः ॥४५॥
शरीरादप्यपेत्य त्वमपक्राम समीपतः ।

---

१. कोशे 'रस्याः' इत्यपपाठः ।
२. 'निर्ऋत्याः' इति भावः । कोशे 'आकारान्त०' इत्यपपाठः ।
३. पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वाःकारान्तम् । निरु० १।१७॥
४. यथा मशकार्थो धूमः । ५. कोशे 'व्यवृत्ति०' इत्यपपाठः ।
६. कोशे 'कर्मञ्च' इत्यपपाठः ।
७. कोशे 'निष्कृति निष्ठचन्त्वत्र नाम एव' इत्यपपाठः ।
८. कोशे 'सर्वदेवास्तु' इत्यपपाठः । ९. कोशे 'कपोतगमनात्' इत्यपपाठः ।
१०. कोशे '०मदीयको०' इत्यपपाठः । ११. तथा च मन्त्रवर्णः—
अपेहि मनसस्पतेऽपक्राम परश्चर ।
परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मम ॥ ऋ० १।१६४।१॥
१२. कोशे 'मैव' इति पाठः ।

समीपादप्यपक्रम्य सुदूरं परितश्चर ॥४६॥
परो भूत्वा तथाऽऽचक्ष्व निर्ऋत्यै जीवतो मनः ।
आयुष्मतो[1] यथाऽन्यस्य मनो मोहं न गच्छति ॥४७॥
तथैवाऽस्य मनोऽद्यापि न मृत्योः काल [2]आगते ।
आयुष्कामेष्टियुक्तत्वं स्वधर्मस्य च पालनम् ॥४८॥
वर्जनं च निषिद्धस्य बहुधेति विवक्षितम् ।
आचक्ष्वेति [3]प्रयुक्तत्वाच्चतुर्थ्यर्थोऽत्र गम्यते[4] ॥४९॥
आख्यायते हि [5]तद्यस्मै वक्ताभिप्रैति चेतसा ।
अतः [6]सा सम्प्रदानं स्यात् [7]ऐकारान्तं पदं ततः ॥५०॥
स्यादेतत् संहितैवास्तु नैव [8]सन्ति पदानि तु ।
कल्पितान्येव तानि स्युर्विभागोऽतो न युज्यते ॥५१॥
नैवोपलभ्यमानत्वात् प्रत्यक्षेण बलीयसा ।
प्रधानानि च तान्येव तेषां धर्मस्तु संहिता ॥५२॥
सन्निकर्षः[9] [10]परस्तेषां तेभ्यो वस्त्वन्तरा न सा[11] ।
प्राधान्यमर्थवत्त्वेन तेषां नार्थवती तु सा[11] ॥५३॥
अर्थे प्रयुक्तपूर्वत्वात् पदानामेव तत्पुनः ।
अर्थे प्रयुक्तपूर्वत्वमिति सिद्धार्थवाचिता ॥५४॥
प्रयोगो ननु नैवास्ति पदानां कर्मणि क्वचित् ।
कृतकान्येव[12] तान्याहुः [13]शाकल्यादिप्रणीततः ॥५५॥

---

१. कोशे 'आयुष्मते' इत्यपपाठः । २. कोशे 'आगतः' इत्यपपाठः ।
३. कोशे 'प्रयुक्तत्वादचतु०' इत्यपपाठः । ४. चतुर्थ्यर्थंप्रेक्षैकारान्तम् । निरु० १।१७॥
५. कोशे 'यद्यस्मै वक्ता हि प्रैत चेतसा' इत्यपपाठः । ६. सा=निर्ऋतिः ।
७. ऐकारान्तं 'निर्ऋत्यै' इति भावः । कोशे 'एकारन्तं' इत्यपपाठः ।
८. कोशे 'सन्निपदानि' इत्यपपाठः ।
९. परः सन्निकर्षः संहिता । पदप्रकृतिः संहिता । पदप्रकृतीनि सर्वचरणानां पार्षदानि । निरु० १।१७॥ १०. कोशे 'परं तेषां' इत्यपपाठः । ११. सा संहितेत्यर्थः ।
१२. कोशे 'कृता कान्या च तानाहुः' इत्यपपाठः ।
१३. पदपाठः शकल्यादिभिर्ऋषिभिस्तत्तत्संहितानां प्रणीतः ।

उक्ता तु नित्यतैतेषां प्रत्यभिज्ञानहेतुतः ।
अभिव्यक्तिः पुनस्तेषां पूर्वाचार्यैः[1] प्रवर्तिता ॥५६॥
स्वाध्याये च [2]प्रयुज्यन्ते तच्च[3] कर्मेव चोदितम्[4] ।
पदात्मा संहितात्मा च वेदो वै द्विविधः[5] स्मृतः ॥५७॥
पदात्मा त्वर्थमाचष्टे संहितात्मा प्रयुज्यते ।
संहितात्मन्यधीते च पदात्मा शब्दलक्षणैः ॥५८॥
प्रतीयेतोपदेशैश्च[6] सा पूर्वं तेन पठ्यते ।
एवं चेद् द्विविधस्यापि प्राधान्यमुपपद्यते ॥५६॥
पदानि प्रकृतिर्यस्याः सा [7]पदप्रकृतिः स्मृता ।
पदानि हि समादाय संहितानुविधीयते ॥६०॥
रचयन्तो हि दृश्यन्ते पदान्यादाय संहिताम् ।
प्राधान्यात् [8]प्रकृतित्वं च तेषामेवोपपद्यते ॥६१॥
पदप्रतिकृतान्येव[9] पार्षदान्यपि सर्वशः ।
चरणानां प्रदृश्यन्ते सर्वेषामविशेषतः ॥६२॥
पर्षत्सु[10] प्रभवत्वात्तु पार्षदानि प्रचक्षते ।
प्रातिशाख्यानि[11] तानि स्युः पदानां लक्षणानि तु ॥६३॥
प्रकृतित्वं पदानां हि संहितां प्रत्यसंशयम्[12] ।
प्रातिशाख्येषु सर्वेषु शौनकादिभिरादृतम्[13] ॥६४॥

---

१. अयमर्थो जैमिनिना 'नित्यस्तु स्याद् दर्शनस्य परार्थत्वात्' (पू० मी० १।१।१८) सूत्रेण प्रतिपादितः ।
२. कोशे 'प्रयुज्यस्ते' इत्यपपाठः ।
३. तच्छब्देन स्वाध्यायः परामृश्यते । सामान्येन नपुंसकत्वम्, यथा संस्कृतं भक्षाः (अष्टा० ४।२।१५) इति ।
४. स्वाध्यायोऽध्येतव्यः । शत० ब्रा० ११।५।७।१०; तै० आ० २।१५।५॥
५. कोशे 'द्विविध स्मृतः' इत्यपपाठः ।
६. कोशे 'प्रतीयतोपदेशैश्च' इत्यपपाठः ।
७. कोशे 'पदप्रकृत्ति स्मृता' इत्यपपाठः ।
८. कोशे 'प्रकृतित्वाच्च' इत्यपपाठः ।
९. अत्र 'पदं प्रति कृतान्येव' इति वा पाठः साधुतरः स्यात् ।
१०. कोशे 'पर्षसुप्राभवत्वात्तु' इत्यपपाठः ।
११. कोशे 'प्रातिशाख्यान्वितानि' इत्यपपाठः ।
१२. कोशे 'प्रत्यसंशयः' इत्यपपाठः ।
१३. कोशे '०रावृतम्' इत्यपपाठः ।

पदानां प्रकृतिर्यद्वा संहिता वैदिकी त्वियम्[१] ।
संहितापाठपूर्वं हि पदज्ञानं प्रवर्तते ॥६५॥
तथापि प्रातिशाख्येषु वैपरीत्यमवस्थितम् ।
एवं व्याचक्षते केचित् किमर्थं त्वित्युदीर्यते ॥६६॥
पदानां संहितायाश्च [२]प्राधान्यस्य विवक्षया ।
पदानामर्थवत्त्वेन संहितायाः प्रयोगतः ॥६७॥
आद्ये त्वभ्युच्चयोक्तिस्स्याद् व्याख्याने चरणग्रहः ।
विभागो युज्यते त्वेव पदानां सोऽप्युदाहृतः ॥६८॥
प्रयोजनमिदं चान्यद् [३]अथापीत्यभिधीयते ।
प्रदेशा विषयः सन्ति बहवो यज्ञकर्मणि ॥६९॥
दैवतं [४]देवतालिङ्गमाग्नेयत्वादि तद्धितः ।
आग्नेयी वैष्णवी[५] वा स्याद् [६]अतद्देवतयेति चेत् ॥७०॥
तद्देवत्याः कथं तास्स्युस्तद्वाचित्वेन हेतुना ।
इयमग्निं वदत्येषा विष्णुमिन्द्रमियं तथा ॥७१॥
इत्येतद् ईक्षितव्यं हि नैरुक्तेनैव युक्तितः ।
उपगम्य [७]समर्थत्वान्नान्येन स्यादशक्तितः ॥७२॥
मन्त्रस्य देवता बोद्धुं नैरुक्तेनैव शक्यते ।
नैघण्टुकमिदं नाम प्राधान्येनेदमित्यपि ॥७३॥
वक्ष्यमाणमिमं[८] [९]भेदं नैरुक्तो वेत्ति नेतरः ।
नेमं भेदमविज्ञाय देवता ज्ञायते क्वचित् ॥७४॥

---

१. कोशे 'त्वयम्' इत्यपपाठः । २. कोशे 'प्राधान्यविवक्षया' इत्यपपाठः ।

३. अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति । तदेतेनोपेक्षितव्यम् । निरु० १।१७।।

४. कोशे 'दैवता०' इत्यपपाठः ।

५. उपतिष्ठते व्युच्छन्त्यामैन्द्रचा सद आग्नेय्याग्नीध्रं वैष्णव्या हविर्धानम् (मानवश्रौत० २।३।१।१) इति ज्योतिष्टोमे इन्द्राग्निविष्णुदेवताकाभिर्ऋग्भिर्यथासंख्यं सद-आग्नीध्र-हविर्धानानाम् उपस्थानम् ।

६. कोशे 'अतद्देवत्यतयेति' इत्यपपाठः । ७. कोशे 'धमर्थत्वा०' इत्यपपाठः ।

८. निरु० १।२०।। ९. कोशे '०मिदं' इत्यपपाठः ।

ब्रूयुश्चेद्[1] [2]याज्ञिका: केचिल्लिङ्गज्ञा:[3] स्मो वयन्त्विति ।
देवतावाचिन:[4] शब्दान्निरुक्तेन विना वयम् ॥७५॥
ज्ञास्यामो देवता[5] ऋक्षु निरुक्तं स्यादनर्थकम् ।
क: [6]पुनर्देवतावाचो शब्दो [7]ब्रूताऽङ्ग याज्ञिका: ॥७६॥
अग्निरित्यग्निमाचष्टे तथेन्द्र इति मध्यमम् ।
सूर्यं सूर्य इति ब्रूते विष्णुं विष्णुरिति स्फुटम् ॥७७॥
सत्यम् अग्न्यादय: शब्दा[8] अग्न्यादीन् ब्रुवते सदा ।
नैतावता[9] तु शक्यन्ते बोद्धुं मन्त्रेषु देवता: ॥७८॥
इन्द्र[10] न त्वेति मन्त्रेऽस्मिन्निन्द्रशब्द: प्रदृश्यते ।
वायुशब्दस्तथाऽऽग्नेये[11] [12]मान्यवे [13]चाग्निरित्यपि ॥७९॥
तथा ह्यैन्द्रो न मन्त्रोऽयं[10] वायव्यो वा कथंचन ।
तथैवाग्निरिवेत्येष[13] नाग्नेयो मान्यवत्वत: ॥८०॥
नैघण्टुकानि नामानि मन्त्रयोरुभयोरपि ।
इन्द्रवाय्वाग्निरूपाणि परार्थत्वेन हेतुना ॥८१॥
परार्थं चोपमानत्वाद् इन्द्रं नेत्युपमानता ।
उपरिष्टादुपाचारो नेति स्यादुपमानता[14] ॥८२॥

---

१. ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति । निरु० १।१७॥ ।

२. कोशे 'ब्रूयुश्चेत्याज्ञिका:' इत्यपपाठः । ३. कोशे 'लिङ्गज्ञा स्मो' इत्यपपाठः ।

४. कोशे 'देवतावाचिश्शब्दा०' इत्यपपाठः । ५. कोशे 'देवता दृक्षु' इत्यपपाठः ।

६. कोशे 'पनर्देवतावाची' इत्यपपाठः । ७. कोशे 'ब्रूतंग' इत्यपपाठः ।

८. कोशे 'आग्नयादय: शब्दा:' इत्यपपाठः । ९. कोशे 'नैतावस्तु शक्यस्ते' इत्यपपाठः ।

१०. तथा च मन्त्रवर्णः—त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि न: श्रोष्यग्ने । इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ ऋ० ६।४।७॥

११. कोशे 'वायुशब्दं तथा०' इत्यपपाठः ।

१२ वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे "तथाग्निर्मान्यवे मन्त्रे । निरु० १।१७॥

१३. तथा च मन्त्रवर्णः—अग्निरिव मन्यो त्विषित: सहस्व सेनानीर्नः सहुरे हूत एधि । ऋ० १०।८४।२॥ अस्मिन् मान्यवे मन्त्रेऽग्निः श्रूयते ।

१४. द्र० निरुक्त १।४॥

वायोरप्युपमानत्वं नेत्येतेनैव[1] संगतेः ।
इवशब्देन चाप्यग्नेरुपमानत्वमीरितम् ॥८३॥
नैरुक्तस्य विवेकोऽयं नेतरस्येदृशो[2] भवेत् ।
त्वां[3] हि [4]स्तुत्यतमां वह्ने देवतां संभजामहे ॥८४॥
अर्कशोकैरिति[5] त्वत्र [6]शोकार्कैरिति गम्यते ।
अर्को मन्त्र इति प्रोक्तः[7] दीपनं शोक[8] उच्यते ॥८५॥
त्वद्गुणदीपनैर्मन्त्रैस्त्वद्गुणानां[9] प्रकाशकैः ।
स्तुमस्त्वां[10] संततं भक्त्या तस्माच्छृणु महद् वचः ॥८६॥
यथैवेन्द्रं यथा [11]वायुं तथा त्वां देवतां सदा ।
शवसा राधसा चैव प्रीणयन्ति नरोत्तमाः ॥८७॥
शवस्तु [12]शवतेर्धातोर्बली[13] स्याद् गतिकर्मणः ।
धनं[14] राध इति प्रोक्तं[15] हविरत्रापि तद्भवेत् ॥८८॥
व्याख्यातोऽग्निरिवेत्येष [16]निपातार्थप्रसङ्गतः[17] ।
इह[18] त्विषितशब्दार्थो भाष्यकारेण वर्णितः ॥८९॥
तेनात्रैव [19]प्रदेशेऽस्य व्याख्या भाष्यकृतो मता ।
अर्थस्त्विषितशब्दस्य प्रसङ्गे नेह भाषितः ॥९०॥

---

१. स्कन्दस्तु लुप्तोपमयोपमानत्वं व्याख्याति २. कोशे 'नेतरस्य दृशो' इत्यपपाठः ।
३. इतो मन्त्रार्थं वक्ति । ४. कोशे 'स्तत्यतमं' इत्यपपाठः ।
५. कोशे 'अर्थशोकै०' इत्यपपाठः । ६. कोशे 'शोकोक्तैरिति' इत्यपपाठः ।
७. द्र० निरुक्त ५.४॥ ८. शुच दीप्तौ (निघ० १।१६) इत्यस्माद् घनि शोकः ।
९. कोशे 'त्वद्गुणोदीप०' इत्यपपाठः । १०. कोशे 'स्तुमत्वा' इत्यपपाठः ।
११. कोशे 'वायुः' इत्यपपाठः । १२. धा० १।७६१॥
१३. कोशे 'बला इत्यपपाठः । शवश्शब्दो बलनामधेयं निघण्टौ (२।९) संगृहीतः । अत्र त्वन्तर्हितमत्वर्थो द्रष्टव्यः । तथा च 'शवसा बलवता सारवता राधसा धनेन हविर्लक्षणेन' इत्यर्थोऽभिप्रेयते ग्रन्थकृता । १४. काशे 'धनरोध इति' इत्यपपाठः । १५. निरु० ४।४॥
१६. कोशे 'निष्पातार्थ०' इत्यपपाठः ।
१७. द्वितीयपादारम्भे निपातप्रसङ्गे (निरु० १।४) इत्यर्थः ।
१८. त्विषितो ज्वलितः, त्विषिरित्यप्यस्य दीप्तिर्नाम भवति । निरु० १।१७॥
१९. कोशे 'प्रदेशस्य' इत्यपपाठः ।

प्रयोजनमिदं[1] चान्यद् [2]अथापीत्यादिनोच्यते ।
किं तज्ज्ञानप्रशंसा च निन्दा [3]चाज्ञानगोचरा ॥६१॥
स्मृतौ[4] चैव श्रुतौ चैव ज्ञानं वेदार्थगोचरम् ।
प्रशस्यते तथा ज्ञानं कार्याकार्ये ततस्तु ते ॥६२॥
प्रशस्तं चैव कर्तव्यं नाप्रशस्तं कदाचन ।
प्रशस्तज्ञानहेतुत्वं निरुक्तस्योपपादितम् ॥६३॥
भारधारी[5] यथा स्थाणुः फलं भारस्य[6] नाश्नुते ।
अजानन्नपि वेदार्थं वेदधारी तथा नरः ॥६४॥
पदार्थं नैव यो वेत्ति पठित्वा वेदमादरात् ।
स मूढात्मा भवेत् स्थाणुश्छिन्नशाख इव द्रुमः ॥६५॥
अधीत्यविधिवद् वेदं [7]तस्याऽर्थमधिगम्य च ।
ऐहिकं सकलं भद्रं भजनीयमुपाश्नुते ॥६६॥
पूजां संभावनां कीर्तिमिष्टमर्थं च विन्दति ।
वेदार्थज्ञानपूतात्मा स्वर्गमप्यश्नुते पुनः ॥६७॥
पाठेनैव[8] गृहीतं यद् अविज्ञातं तथार्थतः ।
शब्दयते[9] निगदेनैव [10]भृशमुच्चैरधीयते ॥६८॥
अनग्नाविवशुष्कैधो न तज्ज्वलति कर्हिचित् ।
अतीवशुष्कमप्येधो [11]नाग्निशून्यो यथा ज्वलेत् ॥६९॥

---

१. कोशे 'प्रयोजनञ्चान्यद्' इत्यपपाठः ।
२. अथापि ज्ञानप्रशंसा च भवत्यज्ञाननिन्दाच । निरु० १।१७॥
३. कोशे 'च ज्ञानगोचरा' इत्यपपाठः ।
४. स्थाणुरित्यादिश्लोकद्वयं स्मृतिः. एत त्व इत्यादृग्द्वयं श्रुतिः ।
५.स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥ निरु १।१८॥ ६. कोशे 'भारेण' इत्यपपाठः ।
७. कोशे 'तस्यार्थमधिगम्यते' इत्यपपाठः ।
८. यद् गृहीतमविज्ञातं निगदेनैव शब्दयते ।
अनग्नाविव शष्कैधो न तु ज्वलति कर्हिचित् ॥ निरु० १।१८॥
९. कोशे 'शब्दयाते' इत्यपपाठः । १०. कोशे 'भृशमुच्चरधीयते' इत्यपपाठः ।
११. कोशे 'नान्दिशून्यो यथा ज्वलत्' इत्यपपाठः ।

वेदार्थज्ञानशून्येऽपि[1] तथैवाध्ययनं नरे ।
तिष्ठतेः[2] स्थाणुरित्युक्तम् [3]अर्थोऽर्तेर्गतिकर्मणः[4] ॥१००॥
तिष्ठत्येव यथा स्थाणुर्निश्चेष्टो नाश्नुते सुखम् ।
वेदार्थज्ञानशून्योऽपि तथैवेत्युपपादितम् ॥१०१॥
तिष्ठतेः स्थाणुरित्येवं स्थाणुशब्दं[5] निरब्रवीत् ।
अर्थस्य ज्ञेयतां वक्तुम्[6] अर्थोऽर्तेरित्यभाषत ॥१०२॥
यस्तावच्छब्दवाच्योऽर्थः स शब्दादवगम्यते ।
हिरण्यादिस्तथैवार्थः स्फुटमेवाऽयते जनैः ॥१०३॥
कथं वा ह्रियमाणोऽसौ [7]नीयमानोऽथवा पुनः ।
ऋच्छेद् देशान्तरं गच्छेद् अस्थिरत्वेन हेतुना ॥१०४॥
अरो[8] हि वर्तन्त इत्यस्यामस्थिरत्वं तथोदितम् ।
अरणं गमनं विद्यात् तिरोधानं[9] ध्वनेरिह ॥१०५॥
शब्दे तिरोहितेऽप्यर्थस्तिष्ठतीत्यर्थ उच्यते ।
स्वामिनो गमनं यद्वा मरणं स्याद् विवक्षितम् ॥१०६॥
मरणे स्वामिनो ह्यर्थस्तिष्ठत्येव न गच्छति ।
उत[10] [11]त्व इति वैताभ्याम् उक्तोऽर्थः स्पष्टमिष्यते ॥१०७॥
अप्यर्थे चोतशब्दोऽत्र स च संभावनात्मकः[12] ।
अप्येक इति चाप्युक्तः पश्यन्नित्यत्र योज्यते ॥१०८॥

---

१. कोशे '०ज्ञानशून्योऽपि' इत्यपपाठः ।

२. स्थाणुस्तिष्ठतेरर्थोऽर्तेररणस्थो वा । निरु० १।१८॥ धा० १।६७५ ।

३. कोशे 'अर्थोक्तेर्गतिकर्मणः' इत्यपपाठः । ४. धा० १।६८३॥

५. कोशे 'स्थाणु शब्दनिरबवीत्' इत्यपपाठः ।

६. कोशे 'ज्ञेयता वक्तु अर्थोऽक्तेरि०' इत्यपपाठः ।

७. कोशे 'ह्रीयमाणो सौ भीयमानी०' इत्यपपाठः । द्र० निरुक्त २।१० हिरण्यशब्द-निर्वचनम् । ८. कोशे 'अोहि वर्तत' इत्यपपाठः । ऋ० १०।११७।५ ।

९. कोशे 'तिरोश्रानध्वने०, इत्यपपाठः । १०. कोशे 'उत त्वमिति' इत्यपपाठः ।

११. तथा च मन्त्रवर्णः—उत त्वः पश्यन्न ददर्श वाचमुत त्वः श्रृण्वन् न शृणोत्येनाम् । उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥ ऋ० १०।७१।४॥

१२. कोशे 'संभावनात्मका' इत्यपपाठः ।

त्वशब्दस्त्वेकपर्यायो वागत्र श्रुतिलक्षणा[१] ।
वाचं वेदात्मिकां सर्वामेको यद्यपि पश्यति ॥१०९॥
न पश्यति तथाप्येनां तावता निष्फलत्वतः ।
ग्रहणं [२]ग्रन्थमात्रस्य नहि वेदेन चोच्यते ॥११०॥
फलाभावाददृष्टं[३] चेन्न तदस्त्यप्रमाणतः ।
दृष्टस्यार्थस्य सत्तात्वे नादृष्टः परिकल्प्यते ॥१११॥
फलवत् कर्मणां[४] ज्ञानं दृष्टोऽर्थोऽत्र प्रतीयते ।
स्वाध्यायाध्ययनं तेन कर्मज्ञानस्य साधनम् ॥११२॥
अतोऽर्थज्ञानशून्यां तां पश्यन्नपि न पश्यति ।
शृण्वन्नपि[५] तथैवैनां वाचमन्यैरुदाहृताम् ॥११३॥
तदर्थज्ञानशून्यत्वाच्छृणोत्येनां न पुष्कलाम् ।
शब्दार्थज्ञानसिद्ध्यर्थं [६]शब्दः श्रोतुमिहेष्यते ॥११४॥
तदर्थं चेन्न जानाति श्रवणं निष्फलं[७] भवेत् ।
ग्रन्थधारणसिद्ध्यर्थमिति[८] चेत् तेन किं तत्र ॥११५॥
अदृष्टायेति चेद्[९] ब्रूयाद् विना दृष्टेन न ह्यसौ ।
दृष्टस्यैव[१०] प्रतीतस्य त्यागे दोषोऽप्युदाहृतः ॥११६॥
ग्रहणं श्रवणं चैव वेदस्य ज्ञानवर्जितम् ।
उत त्व इति पादाभ्यां निर्दिष्टं निष्फलं त्विति ॥११७॥
परैः[११] पादैश्चतुर्भिश्च ज्ञानमेव प्रशस्यते ।
पराभ्यामपि[१२] पादाभ्याम् अज्ञानं निन्द्यते पुनः ॥११८॥
एकस्मै त्वपि [१३]कस्मैचिन्महाभागाय धीमते ।

१. कोशे 'श्रुतिलक्षणम्' इत्यपपाठः । २. कोशे 'ग्रस्थमात्रस्य' इत्यपपाठः ।
३. कोशे 'फलभावाद्' इत्यपपाठः । ४. कोशे 'फलवत्कर्मणा' इत्यपपाठः ।
५. कोशे 'शृण्वन्नवितथैवैनां' इति पाठः । ६. कोशे 'शब्दं' इत्यपपाठः ।
७. कोशे 'निष्कलं' इत्यपपाठः । ८. कोशे 'ग्रस्तधारण०' इत्यपपाठः ।
९. कोशे 'च' इति पाठः । १०. कोशे 'दृष्टाश्चैव ह्यतीतस्य' इत्यपपाठः ।
११. अनेनोत्तरार्द्धर्चेनाग्रिमेण च पूर्वार्द्धर्चेनेत्यर्थः । १२. अग्रिमेणोत्तरार्द्धर्चेनेत्यर्थः ।
१३. कोशे 'तस्मै०' इत्यपपाठः ।

विसस्रे[1] श्रद्दधानाय तनुं स्वां सा प्रकाशयेत् ॥११९॥
तनुशब्दोऽर्थवाच्यत्र बोधनं तु विसारणम् ।
जायेव पत्य इत्याह सुखेन प्रतिपत्तये ॥१२०॥
जाया कामयमाना हि यथा पत्ये तनुं स्वकाम् ।
अर्पयेदुपभोगार्थं तथा वागर्थमात्मनः ॥१२१॥
[इत्यविद्वाँस]माहार्धम्[2] इत्यर्धर्चाऽर्थकीर्तनम्[3] ।
वाचोपोत्तमयाप्याह[4] ज्ञानमर्थप्रकाशनम् ॥१२२॥
तृतीयस्य तु पादस्य व्यापारोऽनेन वर्णितः ।
उपमोत्तमयेत्यस्मि[न्]पाठेऽध्याहारकल्पनम्[5] ॥१२३॥
उपमोच्यत इत्येवमन्त्यपादार्थवर्णनम् ।
धर्मार्थोपगमं वक्तुम् ऋतुकालपरिग्रहः ॥१२४॥
पत्ये[6] जायेव वागेषा तनुं यस्मै[7] प्रकाशयेत् ।
स पश्येच्छृणुयाच्चैनां वाचमर्थस्य चोदनात् ॥१२५॥
ऋतुस्नातां यथा भार्यां पतिः पश्येत् समागमे ।
तथैवार्थवतीं[8] वाचं प्राज्ञ एको नु पश्यति ॥१२६॥
यथा[9] स इति चानेन [10]पतिदृष्टान्त ईरितः ।

---

१. कोशे 'स' इत्यपपाठः । सा=वाक् ।

२. अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन् न शृणोत्येनामित्यविद्वांसमाहार्धम् । निरु० १।१९॥

३. कोशे '०त्यर्धर्च्यर्थे०' इत्यपपाठः ।

४. अप्येकस्मै तन्वं विसस्र इति स्वात्मानं विवृणुते । ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा । निरु० १।१९॥

५. 'अनया उपोत्तमया वाचा' इत्येव स्कन्दस्वामिनः (बी० सी० कोशयोः) पाठः (मुद्रितग्रन्थे 'उपमोतमया' इत्यपपाठः) । 'अनेन उत्तमसमीपस्थेन वचनेन' इति च स्कन्दकृतस्तदर्थनिर्देशः । नीलकण्ठोऽपि तमेव पाठमनुसरति, दुर्गपाठं (उपमोत्तमया) च पाठान्तररूपेण स्वीकृत्य व्याचष्टे ।

६. जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु, सुवासा कल्याणवासाः, कामयमाना ऋतुकालेषु यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा । निरु० १।१९॥

७. कोशे 'पत्यै जयेव वागेषां तनुं यस्यै' इत्यपपाठः ।

८. कोशे 'तथैवार्तवतीं' इत्यपपाठः ।

९. कोशे 'तथा' इत्यपपाठः ।

१०. कोशे 'पतिदृ ष्टान्त' इत्यपपाठः ।

जायैनामिति निर्दिष्टा यथाऽसौ तां[1] प्रपश्यति ॥१२७॥
स वाचं शृणयात् पश्येत् तथा विद्वान् इति स्थितः ।
अर्थज्ञस्य प्रशंसेयम् ऋचैव प्रतिपादिता ॥१२८॥
पश्यन्न पश्यतीत्येतन्नान्यथा ह्युपपद्यते ।
तस्यास्य[2] कथितस्यैव भूयसे वचनाय[3] तु ॥१२९॥
उत्तरोत[4] त्वमित्येषा [5]भूयस्त्वं स्पष्टताकृतम् ।
नैनं हिन्वन्त्यधेन्वेति[6] स्पष्टता ह्युपलभ्यते ॥१३०॥
स्थिरपीतं[7] विपीतार्थं विदितार्थमसंशयम् ।
अप्याहुरेकमेवेमं स्थिरं[8] सख्ये मनीषिणः ॥१३१॥
सख्यमप्यत्र[9] वाचैव लब्धं मा [10]चाधिकारतः ।
साऽस्मिन्नधिकृता[11] सूक्ते वाचो वाचमपीत्यपि ॥१३२॥
तेनैव[12] भाष्यकारेण [13]वाक्सख्य इत्युदाहृतम् ।
पिबतेर्ज्ञानकर्मत्वमनेकार्थाभिधानतः[14] ॥१३३॥
अथवा लक्षणैवेयमाश्रिता लौकिकी हि सा ॥१३४॥[15]
यो[16] यत् पिबति लोकेऽपि [17]स तत् प्राप्नोत्यसंशयम् ।

---

१. कोशे 'ता' इत्यपपाठः । २. तस्योत्तरा भूयसे निर्वचनाय । निरु० १।१९॥
३. कोशे 'पचनाय' इत्यपपाठः ।
४. कोशे 'उत्तरेतत्व०' इत्यपपाठः । तथा च मन्त्रवर्णः —
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ऋ० १०७१।५॥
५. कोशे 'भूयस्थं स्पष्टां कृतम्' इत्यपपाठः । ६. कोशे 'हिन्वन्त्यथेत्वेति' इत्यपपाठः ।
७. अप्येकं वाक्सख्ये स्थिरपीतमाहुः, रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा । निरु० १।२०॥ ८. कोशे 'स्थितं' इत्यपपाठः ।
९. कोशे 'संख्य०' इत्यपपाठः । १०. कोशे 'वाधिकारतः' इत्यपपाठः ।
११. सा वागित्यर्थः । १२. तेन कारणेनेत्यर्थः ।
१३. कोशे 'पाकसख्येत्युदा०' इत्यपपाठः ।
१४. अनेकार्था हि धातव इति नैरुक्तनां वैयाकरणानां च मतम् । तेन धातुपाठे पठितोऽर्थो निदर्शनमात्रम् । १५. श्लोकार्द्धेऽत्र संख्यानिर्देशो यथाकोशं विहितः ।
१६. कोशे 'योयं' इत्यपपाठः । १७. कोशे 'सकृत्'इत्यपपाठः ।

पातौ लक्ष्यते प्राप्तिर्ज्ञानं प्राप्त्यापि लक्ष्यते ॥१३५॥
अयमेव [1]स्थिरो नित्यं वाचा सख्ये [2]तदर्थवित् ।
इत्येवं ब्रुवते प्राज्ञा इत्यर्थोऽत्र विवक्षितः ॥१३६॥
वाङ्मयेन हि निर्जित्य द्विषतो वेदवित्तमः ।
पूजां संभावनां कीर्तिं धनं चाप्नोति पुष्कलम् ॥१३७॥
वाचा सख्यं ततश्चैवमर्थज्ञस्योपपद्यते ।
वाचस्सत्यं[3] तथाऽनेन सदर्थो विदितस्त्विति ॥१३८॥
अहमर्थवती यस्मात् कृताऽनेन महात्मना ।
अयमेव सखा तस्मादिति [4]वागवगच्छति ॥१३९॥
रममाणमिति त्वेतत् सामर्थ्याक्षिप्तमुच्यते ।
रमते हि सखा सख्ये प्राकृते प्राकृतोऽपि यः ॥१४०॥
किं पुनर्वेदतत्त्वज्ञो [5]वाक्सख्ये रमते त्विति ।
सख्यं ह्या............वागर्थस्य धीमतः ॥१४१॥
अनोऽसौ रमते सख्ये वाचा वेदार्थवित्तमः ।
सख्यमप्यनयोरिष्टं ज्ञातृज्ञेयत्वलक्षणम् ॥१४२॥
सखीनामथवा कर्म सख्यमित्यभिधीयते ।
ऋत्विजश्च सखायो हि[6] तेषां कर्मणि तद्विदः ॥१४३॥
[कर्मविधिज्ञ]मेवाहुस्संशयस्यापनुत्तये ।
देवैरेवाथवा सख्यमृगर्थं [7]चाभिजानतः ॥१४४॥
तच्च स्याद् रमणीयेऽस्य स्थाने स्वर्गे महात्मनः ।
निरुच्य देवतां सम्यक् [8]ताद्भाव्यं प्रतिपद्यते ॥१४५॥
यां यामित्यादिना चैतद् भाष्यकारेण वक्ष्यते[9] ।

१. कोशे 'स्थितो' इत्यपपाठः । २. कोशे 'तदर्थकृत्' इत्यपपाठः ।
३. तुलना विधेया—'विदुषां संसदि या सत्कथा सात्र सखिकर्मत्वात् सख्यमित्युच्यते' (स्कन्दटीका प्रथमभाग पृष्ठ ११२) ।
४. कोशे 'वाऽवगच्छति' इत्यपपाठ ।
५. कोशे 'वाक्संख्ये' इत्यपपाठः । ६. कोशे 'ति' इत्यपपाठः ।
७. कोशे 'चभिजानतः' इत्यपपाठः । ८. कोशे 'तद्भाव्यं' इत्य पाठः ।
९. द्र०—निरुक्त १३।१३॥

देवताभावमापन्नः स[ख्ये वाचा स्थि]रो यतः ॥१४६॥
भवेदर्थज्ञ एवेति स्थिरपीतमितीरितम् ।
स्थिरं पीतं दृढं व्याप्तं सख्यमेतेन तद्विदा ॥१४७॥
इत्येवं[1] प्राप्तिकर्मैव पक्षेऽस्मिन् पिबतिर्भवेत् ।
मुख्यया वाऽथ गौण्या वा वृत्त्येत्येवमुदाहृतम् ॥१४८॥
अस्मिन् सामर्थ्यसिद्धन्तु विज्ञातार्थमितीरितम् ।
अथवा [2]स्वार्थतैवाऽस्य न्याय्या मुख्योपपत्तितः ॥१४९॥
वाक्सख्ये देवसख्ये वा यद्वा [3]स्यात् सोमकर्मणि ।[4]
वाचा सख्यमनुप्राप्य पिबेदमृतमुत्तमम् ॥१५०॥
तथैव देवताभिश्च तेन तस्य स्थिरं[5] ततः ।
सोमाख्यं[6] सुस्थिरं पीतममृतं यज्ञकर्मणि ॥१५१॥
एकेन तद्विदैवेति[7] केचिदेवं प्रचक्षते ।
अपि[8] चैनं[9] न हिन्वन्ति नानुगच्छन्ति केचन ॥१५२॥
वाजिना[10] वागिनास्त्वर्था [11]वाग्ज्ञेयास्तत्प्रमाणकाः ।
वागेवेनेश्वरा[12] येषां [13]शक्ता स्यात् प्रतिपादने ॥१५३॥
तेष्वर्थेषूच्यमानेषु नै[न]मन्येऽनुयान्ति हि ।
न शक्नुवन्ति तानर्थान् वक्तुमन्ये ह्यतद्विदः ॥१५४॥

---

१. कोशे 'इत्यवं प्राप्तिकर्मेव' इत्यपपाठः ।

२. कोशे 'स्वार्थतेवास्य न्याय्यान्मुख्यो०' इत्यपपाठः ।

३. कोशे 'स्यास्सविकर्मणि' इत्यपपाठः ।

४. इतोऽग्रे 'एकेन तद्विदैवेति केचिदेवं प्रचक्षते ।''''''एकेनैव तु तद्विदा ।' इति पाठः कोश उपलभ्यते । स लिपिकरप्रमादः, अनुपदं यथास्थानं तस्योपलम्भात् ।

५. कोशे 'स्थिरा' इत्यपपाठः । ६, कोशे 'सामाख्यं त्वस्थिरं' इत्यपपाठः ।

७. कोशे 'तद्विदेवैति' इत्यपपाठः ।

८. विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वपि । निरु० १।२०॥

९. कोशे 'चैवं' इत्यपपाठः । १०. कोशे 'वाचिना' इत्यपपाठः ।

११. कोशे 'वा ज्ञेया०' इत्यपपाठः ।

१२. कोशे 'वागेव नैश्वरावेषां' इत्यपपाठः । तु०—'वाग् इना ईश्वरी येषाम्' (स्कन्दटीका प्रथमभाग पृ० ११२) । १३. कोशे 'शक्तस्स्यात्' इत्यपपाठः ।

अर्थज्ञस्य प्रशंसेयं शेषेणाज्ञस्तु निन्द्यते ।
अधेन्वा[1] माययैवासौ वाचस्तु प्रतिरूपया ॥१५५॥
चरेद् यच्छ्रुतवान् वाचमपुष्पामफलां तथा ।
अदोग्धृत्वात् तु कामानामर्थज्ञानविवर्जिता ॥१५६॥
अधेनुरिति निर्दिष्टा मायेत्यपि मनीषिभिः ।
वाचः[2] पुष्पं फलं प्राहुर्मन्त्रार्थं बहुलक्षणम् ॥१५७॥
याज्ञं कर्मेह पुष्पं स्याद् दैवतं फलमुच्यते ।
अथवा दैवतं पुष्पं फलमध्यात्ममिष्यते ॥१५८॥
[कारणं स्याद्]यथापुष्पं तत्कार्यं च फलं यथा ।
कारणत्वात् तथा पुष्पं याज्ञं स्याद् दैवतं प्रति ॥१५९॥
फलं च दैवतं तस्य तत्कार्यत्वेन हेतुना ।
कृत्वा [3]याज्ञानि कर्माणि देवताभावमश्नुते ॥१६०॥
देवता भावमासाद्य तथाध्यात्मपरं च तत्[4] ।

---

१. अधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया । नास्मै कमान् दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु, यो वाचं श्रुतवान् भवत्यफलामपुष्पामिति । अफला अस्मा अपुष्पा वाग् भवतीति वा किञ्चित्पुष्पफलेति वा । निरु० १।२०।

२. अर्थं वाचः पुष्पफलमाह, याज्ञदैवते पुष्पफले दैवताध्यात्मे वा । निरु० १।२०॥

३. कोशे 'यज्ञानि' इत्यपपाठः । यद्वात्र 'यज्ञादि कर्माणि' इति शुद्धः पाठः स्यात् ।

४. वस्तुतो यथा लोके 'यद् ब्रह्माण्डे त त्पिण्डे'इत्यनुश्रुतिः, तथा ब्रह्माण्डपिण्डयो रचनासादृश्यं विज्ञायते । तेन ब्रह्माण्डज्ञो नैरुक्तमतानुसारं दैवतज्ञः पिण्डज्ञोऽध्यात्मज्ञः सम्पद्यते । एवं च ब्रह्माण्डज्ञानं (दैवतज्ञानं) पुष्पस्थानीयम् पिण्डज्ञानं (अध्यात्म ज्ञानं) फलस्थानीयं भवति । इत्थमेवाधियज्ञज्ञानं दैवतज्ञाने (ब्रह्माण्डज्ञाने) कारणत्वात् पुष्पस्थानीयम्, दैवतज्ञानं च तत्कार्यत्वात् फलस्थानीयम् ।

श्रौतकर्मसु यानि नैत्यिकानि कर्माण्यग्निहोत्रदर्शपूर्णमासचातुर्मास्यादीनि तानि ब्रह्माण्डज्ञानाय तदनुकृतिरूपेण महर्षिभिर्विरचितानि । यथा भूगोलखगोलज्ञानाय तच्चित्राणि तद्विवरण रूपाणि च पुस्तकानि निर्मीयन्ते ताभ्यां भूगोलखगोलज्ञानं सम्पाद्यते यथा वा भूतकालिकं किञ्चिद् वृत्तं ज्ञातुं नाटकं लिख्यते रङ्गस्थाने च प्रयुज्यते. ताभ्यां परोक्षभूतमितिवृत्तं साक्षाद् विज्ञायते, तथैव ब्रह्माण्डज्ञाने तदनुकृतिरूपं यज्ञकर्म ज्ञेयम् । अतो यज्ञकर्मणां ज्ञानेन ब्रह्माण्डज्ञानं सम्पद्यते । अत्र यज्ञविज्ञानं ब्रह्माण्डविज्ञाने निमित्तत्वात् पुष्पस्थानीयम् ब्रह्माण्डज्ञानं च फलस्थानीयम् इत्यास्माकीनं मतम् । मतमिदमन्यत्र विस्तरेण सोदाहरणं सप्रमाणं प्रपञ्चितं तत् तत एवानुगन्तव्यम् ।

अथ वा यज्ञविज्ञानं याज्ञमित्यत्र सम्मतम् ॥१६१॥
दैवतं देवताज्ञानम् अध्यात्मं चात्मवेदनम् ।
यज्ञवित् तु[1] क्रियायुक्तः देवतां वेत्ति तत्त्वतः ॥१६२॥
तद्विच्चाराध्य[2] तां सम्यग् आत्मानं तत्प्रसादतः[3] ।
ऋगादिलक्षणां वाचं यज्ञादिज्ञानवर्जिताम् ॥१६३॥
शृणुयाद् यः पठेद्वापि नासौ कामानुपाश्नुते ।
स्वाध्यायाध्यनेनेह[4] प्रवृत्तं कर्म वैदिकम्[5] ॥१६४॥
अनासाद्यार्थविज्ञानं[6] मृतश्चापि न नश्यति ।
चोदनार्थे प्रवृत्तत्वादिति वक्तुमभाषत ॥१६५॥
किञ्चित्पुष्पफलेत्येतन्नहि नश्येत् स्वकर्मकृत् ।
अतः पठितमात्रापि वागेषा न निरर्थिका ॥१६६॥
'अज्ञेभ्यो ग्रन्थिनः श्रेष्टा' इत्येवं चाब्रवीन्मनुः[7] ।
न दुग्धे त्विति यत्प्रोक्तं[8] तद्विध्यर्थविवक्षया ॥१६७॥
उक्तप्रयोजनस्यैव निरुक्तस्यास्य युक्तितः ।
साक्षादित्यादिनेदानीं[9] [10]सम्बन्धोऽप्यभिधीयते ॥१६८॥
तमाहुस्त्रिविधं केचित् सम्बन्ध्यन्तरभेदतः ।
उभे[11] पर्व क्रिया चैत्र ताभ्यामन्यत् प्रयोजनम् ॥१६९॥
प्रयोजनेन शास्त्रस्य सम्बन्धः कैश्चिदिष्यते ।
क्रियया चापरैरिष्टस्तथान्यैर्गुरुपर्वणा ॥१७०॥

---

१. कोशे 'तं' इत्यपपाठः ।
२. देवताविदित्यर्थः ।
३. वेत्तिनान्वयः ।
४. कोशे 'स्वाध्यायाध्ययनेह' इत्यपपाठः ।
५. कोशे 'वेदितम्' इत्यपपाठः ।
६. कोशे 'अनासाद्यवार्थविज्ञान' इत्यपपाठः ।
७. मनु० १२।१०३॥
८. कोशे 'यत्प्रोक्त' इत्यविभक्त्यन्तः पाठः ।

९. साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे विल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च । निरु० १।२०॥

१०. अध्येतृप्रवृत्तये विषयप्रयोजनसम्बन्धाधिकारीत्यनुबन्धचतुष्टयं शास्त्रादौ वर्ण्यते । तत्र प्रयोजनानन्तरं सम्बन्ध इदानीमभिधीयत इत्यभिप्रायः

११. कोशे 'उत' इत्यपपाठः ।

एवमर्थमिदं[1] शास्त्रमिति शास्त्रप्रयोजने ।
कथिते कथितस्त्वेव सामर्थ्यात् [2]सप्रयोजनः ॥१७१॥
ननु प्रयोजने ज्ञाते प्रवृत्तिरुपपद्यते ।
अविज्ञातेऽपि सम्बन्धे तेनोक्तिस्तस्य निष्फला[3] ॥१७२॥
प्रयोजनं हि शास्त्रस्य यदेदमिति गम्यते ।
प्रवर्तते तदा त्वर्थो सम्बन्धो न प्रवर्तकः ॥१७३॥
सत्यं प्रयोजने ज्ञाते प्रवृत्तिरुपपद्यते ।
तद्विज्ञानं तु सम्बन्धे कथितेऽनेन वर्ण्यते ॥१७४॥
अस्मै प्रयोजनायेदमस्येदं वा प्रयोजनम् ।
एवमर्थमिदं वेति वाच्यं शास्त्रप्रयोजनम् ॥१७५॥
चतुर्थ्या वाऽपि षष्ठ्या वा समासेनाथवा पुनः ।
सम्बन्धोक्त्यैव[4] शास्त्रस्य वक्तुं [5]शक्यं प्रयोजनम् ॥१७६॥
अतो भेदेन सम्बन्धस्तस्य तादर्थ्यलक्षणः ।
न वक्तव्योऽर्थसिद्धत्वान्नैवमन्यौ[6] प्रसिध्यतः[7] ॥१७७॥
साक्षादित्यादिना[8] तौ तु स्वयमेवाह भाष्यकृत् ।
शास्त्रप्राशस्त्यविज्ञानं[9] तदुक्त्याप्युपजायते ॥१७८॥
साक्षादेव कृतो धर्मो यथोक्तं यैरनुष्ठितः ।
ते साक्षात्कृतधर्माणो बभूवुर्ऋषयस्तथा ॥१७९॥
अधीत्य विधिवद् वेदान् वेदार्थानधिगम्य वा ।
व्यतीतकल्पे[10] सम्भूताः शुद्धात्मानः [स्व] कर्मभिः ॥१८०॥
ददृशुर्वेदवाक्यानि कल्पेऽस्मिन् विविधानि यत् ।

---

१. कोशे 'एवमर्थविदा' इत्यपपाठः ।
२. कोशे 'सप्रयोजनम्' इत्यपपाठः । अत्र 'सम्बन्धः' इति शेषो ज्ञेयः ।
३. कोशे 'निष्फलम्' इत्यपपाठः ।
४. कोशे 'सम्बन्धोक्त्यैव' इत्यपपाठः ।
५. कोशे 'शक्यप्रयोजनम्' इति पाठः ।
६. पर्वक्रियाभ्यां सम्बन्धौ ।
७. कोशे 'प्रसिद्धतः' इत्यपपाठः ।
८. कोशे 'सत्वादित्यादिना' इप्यपपाठः ।
९. कोशे '०विज्ञानस्तदुक्त्या०' इत्यपपाठः ।
१०. कोशे 'व्यतीते कल्पसम्भूता शुद्धात्मान कर्मभिः' इत्यपपाठः ।

ब्रह्मादीनामृषित्वं तद् दृष्टत्वं वेदगोचरम् ॥१८१॥
अज[इत्या]द्युपक्रम्य तथेदं तैत्तिरीयके ।
व्याख्यातं शौनकादीनामार्षे[यत्वं]स्थितं तथा ॥१८२॥
वेदे जन्मान्तराधीते तपसा कारणेन च ।
दर्शनं स्मर[णं]त्वेव यथा [1]सुप्तोत्थितस्य वै ॥१८३॥
प्रतिभानादने तेषां संवादेन प्रमाणता ।
ब्रह्मणा[2] सह संवादो मन्वादीनां हि विद्यते ॥१८४॥
ऋषीणां च तथाऽन्योऽन्यमिति [3]नैवं विरुध्यते ।
सस्मार[4] भगवान् ब्रह्मा वेदान् सर्वानशेषतः ॥१८५॥
सस्मरुर्मुनयश्चापि किञ्चित् किञ्चिद् यथातपः ।
पादमेकं तथा कश्चिदर्द्धर्चं च तथापरः ॥१८६॥
ऋचमेकां तथा बह्वीरपश्यन् मण्डलं परः ।
दृष्टवन्तस्त्वृचश्चान्ये सहस्रं च सुरोचिषः ॥१८७॥
एवं संवादसद्भावे कथमेवाप्रमाणता ।
अधीतादेव ते यद्व[द्]दृष्टादर्थविनिश्चयः ॥१८८॥
अधीत्य वा [5]स्मृतात् तद्व[द्]दृष्टाच्चापि भविष्यति ।
कल्पाश्च बहवो वृत्ता वर्त्स्यन्ति च तथाऽपरे ॥१८९॥
प्रतिकल्पमृषीणां च कर्मनामादितुल्यता[6] ।
मन्वादिजातिसद्भावो व्यक्तिभेदस्तथाश्रितः[7] ॥१९०॥
एवं सति तु यत्सूक्तं यन्नाम्ना यद्विधेन च ।
दृष्टं[8] तत् तद्विधेनैव तन्नाम्ना द्रक्ष्यते पुनः ॥१९१॥
एवं पौराणिकैः प्रोक्तं विरोधोऽतो न विद्यते ।

---

१. कोशे 'सुप्तो स्थितस्य' इत्यपपाठः ।
२. कोशे 'ब्रह्मण' इत्यपपाठः । ३. कोशे 'तेनैवं' इत्यपपाठः ।
४, 'सस्मार मण्डलं परः'इति पङ्क्तिचतुष्टयम् अस्मत्कोशे लिपिकरप्रमादात् त्यक्तम् ।
५. कोशे 'स्मृता' इत्यपपाठः । ६. कोशे 'कर्मनामादितुल्यताम्' इत्यपपाठः ।
७. कोशे '०तदाश्रितः' इति पाठः । ८. कोशे 'दृष्टन्तद्विविधेनैव' इत्यपपाठः ।

असाक्षात्कृतधर्मभ्यस्तेऽपरेभ्यो[1] यथाविधि ॥१९२॥
उपदेशेन सम्प्रादुर्मन्त्रान् ब्राह्मणमेव च ।
ऋगेषा यजुरेतच्च[2] सामैतद् ब्राह्मणं त्विदम् ॥१९३॥
इत्येवमुपदेशेन सार्थान्[3] वेदान् ददुः क्रमात् ।
क्रमश्च ब्रह्मदृष्टस्स्यान्मन्त्रब्राह्मणगोचरः ॥१९४॥
क्रमेऽपि तेन संवादो मुनीनां पदवद् भवेत् ।
असाक्षात्कृतधर्मत्वं किञ्चिदूनतया ततः ॥१९५॥
किञ्चिदूनाश्च ते वेदान् सकृद् आकर्ण्य तत्त्वतः ।
जगृहुः श्रद्धया सार्थान् मेधया श्रद्धयान्विताः ॥१९६॥
अपरे ये ततो न्यूना [4]ग्लायन्तस्ते सकृच्छ्रुतौ ।
सम्यगभ्यस्तवन्तस्तु वेदान् साङ्गान् यथाविधि ॥१९७॥
प्रपेदिरे तदर्थांश्च वेदाङ्गैस्सुसमाहिताः ।
प्रथमाः प्रतिभानेन[5] द्वितीयास्तूपदेशतः ॥१९८॥
अभ्यासेन [6]तृतीयास्तु वेदार्थान् प्रतिपेदिरे ।
क्लेशेन महतैवान्ये तेभ्यो ये हीनशक्तयः ॥१९९॥
क्लेशेन महताऽप्यन्ये नैव जानन्ति तत्त्वतः ।
साक्षादित्यादिकं ग्रन्थमन्यथाऽन्ये प्रचक्षते ॥२००॥
ये साक्षात्कृतधर्माणो बभूवुश्शुद्धमानसाः ।
वेदार्थदर्शनं तेषामृषित्वं नान्यलक्षणम् ॥२०१॥
स्वधर्मं विधिवत् कृत्वा ये वेदानध्यगीषत ।
श्रवणेन विना तेऽर्थान्[7] वेदानां ददृशुः पुरा ॥२०२॥
असाक्षात्कृतधर्मत्वा[द्] अपरे ये त्वशक्तयः ।
उपदेशेन सम्प्रादुस्तेभ्यो मन्त्रान् यथाविधि ॥२०३॥

---

१. कोशे 'असाक्षाकृधर्म०' इत्यपपाठः । 'तेऽवरेभ्यः' इति मूले प्रसिद्धः पाठः ।
२. कोशे 'यजते तच्च' इत्यपपाठः । ३. कोशे 'सार्थाद०' इत्यपपाठः ।
४. कोशे 'ग्लायन्नेते' इत्यपपाठः । ५. कोशे 'प्रतिहानेन' इत्यपपाठः ।
६. कोशे 'तृतीयां स्तु' इत्यपपाठः । ७. कोशे 'तेऽर्थाः' इत्यपपाठः ।

अर्थोऽयमस्य मन्त्रस्य ब्राह्मणस्यायमित्यपि ।
व्याख्यैवात्रोपदेशः स्याद् वेदार्थस्य विवक्षितः ॥२०४॥
व्याख्यातवन्त[1] इत्यर्थो जगृहुश्चैव ते तथा ।
अशक्तास्तूपदेशेन ग्रहीतुमपरे तथा ॥२०५॥
वेदमभ्यस्तवन्तस्ते[2] वेदाङ्गान्यपि यत्नतः ।
उपायं बिलममित्याहुः[3] सोऽभ्यासान्नान्य इष्यते ॥२०६॥
अभ्यासश्चापि वेदस्य [4]साङ्गस्य श्रवणान्वितः ।
उपायो [5]बिलमशब्दोक्तः स हि तस्मिन् प्रदृश्यते ॥२०७॥
महता ह्यभियोगेन शुश्रुषुरनहंकृतः ।
वेदार्थं शक्नुयाद् बोद्धुं[6] श्रद्दधानो जितेन्द्रियः ॥२०८॥
बिलमं[7] भिलममिति त्वाह[8] बिभर्त्यर्थविवक्षया ।
उपायो हि बिभर्त्यर्थं[9] उपेयं वेदगोचरम् ॥२०९॥
अथवा भासनं बिलमं[10] [11]भासतेर्दीप्तिकर्मणः ।
अभ्यासेन हि वेदोर्थो भास्यते दीप्यते स्फुटम् ॥२१०॥
अस्मै[12] बेत्यादिमन्त्रे हि [13]बिलमशब्दाभिधेयधीः ।
यथा स्यादिति संचिन्त्य [14]बिलमशब्दं निरब्रवीत् ॥२११॥
दर्शनेनोपदेशेन [15]समाम्नानेन तत्त्वतः ।

---

१. अयं श्लोकोऽस्मत्कोशे लिपिकरप्रमादात् त्यक्तः ।
२. कोशे 'वेदमभ्यस्तयन्तस्ते' इत्यपपाठः । ३. कोशे 'बिल्वमित्याहु सो०' इत्यपपाठः ।
४. कोशे 'सङ्गस्य' इत्यपपाठः । ५. कोशे 'बिल्व०' इत्यपपाठः ।
६. कोशे 'बोध्यं श्रद्धधानो' इत्यपपाठः । ७. कोशे 'बिल्वं बिल्वमिति' इत्यपपाठः ।
८. बिल्मं भिल्मं भासनमिति वा । निरु० १।२०॥
९. कोशे 'बिभत्यर्थमुपेयं' इत्यपपाठः । १०. कोशे 'बिल्वं भासते दीप्ति०' इत्यपपाठः ।
११. धा० १।६५५॥ १२. तथा च मन्त्रवर्णः—
अस्मै बहूनावमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परिवन्द ऋग्भिः ॥ ऋ० २।२५।१२॥
१३. कोशे 'बिल्वशब्दा०' इत्यपपाठः । १४. कोशे 'बिल्वशब्द' इत्यपपाठः ।
१५. कोशे 'समाम्नोनेन' इत्यपपाठः ।

विशिष्टयाऽस्य[1] सम्बन्धः क्रिययैवंप्रकारया ॥२१२॥
गुरूणां महतामेवमृषीणां [2]पर्वणां तथा ।
तेषां परम्परैवात्र पर्वशब्देन भाष्यते ॥२१३॥
एतावन्त[3] इति त्वेतदभिधेयाभिधित्सया ।
अभिधेयानि पञ्चास्य[4] संक्षेपेणाह भाष्यकृत् ॥२१४॥
समानकर्मधातूनामियत्तैषाभिधीयते[5] ।
एतावन्त्यस्य [सत्त्वस्य] नामानीत्येकमुच्यते ॥२१५॥
अभिधानमिदं चैषामर्थानामिति चापरम् ।
नाम नैघण्टुकं चेति प्राधान्येनेति [6]चापरम् ॥२१६॥
एकार्थवाचिनां नाम्नां धातूनां चैककर्मणाम् ।
संख्या प्रकरणे त्वाद्ये प्रोक्ता नैघण्टुके[7] क्रमात् ॥२१७॥
अभिधानमिदं [8]चैषामित्यैकपदिके[9] तथा ।
देवतायाः प्रधानं च नाम नैघण्टुकं तथा ॥२१८॥
वक्ष्यते[10] दैवते[11] त्वेवं शास्त्रमेवं त्रिधा स्थितम् ।
स्वार्थस्य धारणादाह [12]दधातेर्धातुरित्यपि[13] ॥२१९॥
प्रतिपादनमर्थस्य धारणं स्यात् स्वशक्तितः ।
नैघण्टुकं तु यन्नाम तस्य रूपमथोच्यते ॥२२०॥
यदन्यदेवते[14] मन्त्रे नाम किञ्चित् प्रवर्तते ।

---

१. कोशे 'विशिष्टे याऽस्य सम्बन्ध क्रिय०' इत्यपपाठः ।
२. पर्वशब्दो भाष्यकृता यास्केनास्मिन्नर्थे न क्वचित् प्रयुक्तः ।
३. एतावन्तः समानकर्माणो धातवः । एतावन्त्यस्य सत्त्वस्य नामधेयानि । एतावतामर्थानामिदमभिधानम् । नैघण्टुकमिदं देवतानाम । प्राधान्येनेदमिति । निरु० १।२०॥
४. वक्ष्यमाणानि पञ्चाभिधेयान्यस्य निघण्टुनिरुक्तशास्त्रस्येत्यर्थः ।
५. '०मियत्तैताभि०' इत्यपपाठः ।
६. कोशे 'चापरे' इत्यपपाठः ।
७. निघ० अध्याय १–३ (निरु० अ० २–३) ।
८. कोशे 'चैषामित्येकपदिके' इत्यपपाठः ।
९. निघ० अध्याय ४ (निरु० ४–६) ।
१०. निघ० अध्याय ५ (निरु० ७–१२) ।
११. कोशे 'देवने' इत्यपपाठः ।
१२. धा० ३।१०॥
१३. धातुर्दधातेः । निरु० १।२०॥
१४. तद् यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत् । निरु० १।२०॥

तत्तु नैघण्टुकं प्रोक्तं गुणभूतं परार्थतः ॥२२१॥
अश्वं[1] नेति मृगो[2] नेति यथाश्वश्च यथा मृगः ।
स्यातां नैघण्टुके त्वेवं नामनी परशेषतः ॥२२२॥
अनयोश्चोपमानत्वम् इन्द्राग्न्योरुपमेयता ।
यथाऽश्वो बालवान्[3] बालैर्दंशानां विनिवारकः ॥२२३॥
अनर्थानां तथैवाग्निरर्चिर्भिर्विनिवारकः[4] ।
अश्वं न त्वेत्यतः प्राह दृष्ट्वा त्वेवं समावुभौ ॥२२४॥
वन्दध्या[5] इति निर्देशात् कामये वन्दितुं त्विति ।
वाक्यशेषोऽत्र कर्तव्यो वन्दे त्वामिति वानतिः ॥२२५॥
स्तुतिवाची नमश्शब्द ऐश्वर्ये राजतिः[6] स्मृतः ।
अथवा दीप्तिवाची स्याद् ईशानं यज्ञकर्मणाम् ॥२२६॥
यज्ञेषु दीप्यमानं वा गृणाम्यग्निं स्तवैश्शुभैः ।
दंशानां[7] वारणार्थत्वाद् [8]वाला [9]वारयतेः स्मृताः ॥२२७॥
दंशस्तु [10]दंशतेरिष्टः खादत्यर्थस्स पठ्यते ।
मृगो भीमो यथा [11]कश्चित् कुचरः पर्वताश्रयः ॥२२८॥
स दूराद्धन्तुम्[12] आगच्छेद् दुर्बलान् बलवत्तमः ।
आगच्छेन्द्र तथैव त्वं अस्मच्छत्रुवधेप्सया ॥२२९॥

---

१. तथा च मन्त्रवर्णः—अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम् ॥ ऋ० १।२७।१॥
२. तथा च मन्त्रवर्णः—मृगो न भीमः कुचरो गिरिष्ठा परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि वि मृधो नुदस्व ॥ ऋ० १०।१८०।२॥
३. कोशे 'यथाश्वोपायवान्' इत्यपपाठः । ४. कोशे 'र्चिभिर्विनिवारक' इत्यपपाठः ।
५. कोशे 'वन्दध्या इति निर्देशाङ् कामय विन्दितुन्त्विति' इत्यपपाठः ।
६. कोशे विसर्गरहित पाठः । धा० १।८७४॥
७. वाला दंशवारणार्था भवन्ति । दंशो दशतेः । निरु० १।२०॥
८. कोशे 'वालं वारयते स्मृताः' इत्यपपाठः ।
९. धा० १०।२७१॥ १०. धा० १।१०३८॥
११. कोशे 'कश्चिदचरः' इत्यपपाठः । १२. कोशे 'दूराद्धन्तम्' इत्यपपाठः ।

आगत्य च [1]सृकं वज्रं पविं शत्रुविशोधनम् ।
संशाय[2] तीक्ष्णमासाद्य तेन नो जहि विद्विषः ॥२३०॥
हतशिष्टान् मृधश्चान्यान् संग्रामं कर्तुमिच्छतः ।
उपायैर्विविधैश्चैव [3]नुदस्व प्रेरयान्तिकात् ॥२३१॥
गत्यर्थस्य[4] मृगो [5]मार्ष्टेर्मार्ष्टि[6] गच्छेदसौ यतः ।
बिभ्यत्यस्मादिति त्वेवं भीमः [7]प्राणी भयानकः ॥२३२॥
एतस्मादेव[8] भीष्मोऽपि निरुक्तः सदृशागतः ।
कुचरस्त्विति[9] चाप्यत्र [10]चरतेः कर्म कुत्सितम् ॥२३३॥
कर्मार्थ इति निर्दिष्टं कुशब्दस्तस्य निन्दकः ।
प्राणिहिंसाप्रवृत्तत्वाच्चरेत्[11] कुत्सितमेव सः ॥२३४॥
इन्द्रश्चेत् कुचरोऽत्रेष्टः क्व चायं न चरेदिति ।
योज्यमत्र नशब्दोऽस्य वाचकः पठितोऽर्थतः ॥२३५॥
कुशब्दः पृथिवीवाची ताश्च तिस्रः प्रकीर्तिताः ।
यदिन्द्राग्नी[12] इति त्वादौ सर्वासु पृथिवीष्वसौ ॥२३६॥
चरेद् वाय्वात्मना हीन्द्रः क्वायं नेत्युच्यते ततः ।
गिरिष्ठा[13] [हि]गिरिस्थायी पर्वतो गिरिरुच्यते ॥२३७॥
गिरिशब्दाभिधेयत्वं समुद्गीर्णत्वहेतुतः ।
संगतो हि पृथिव्याऽसावुद्गीर्ण इति लक्ष्यते ॥२३८॥
मत्वर्थीयस्तकारोऽत्र पर्ववान् पर्वतस्ततः ।

---

१. कोशे 'स्मृतं वज्रं पवीं' इत्यपपाठः । १३. कोशे 'संशायन्ती०' इत्यपपाठः ।
३. कोशे '०विधैश्चैवन्ददस्व' इत्यपपाठः ।
४. मृगो मार्ष्टेर्गतिकर्मणः । भीमो बिभ्यत्यस्माद्, भीष्मोऽप्येतस्मादेव । निरु० १।२०॥
५. निघ० २।१४॥ ६. कोशे 'मार्ष्टेर्मार्ष्टि' इत्यपपाठः ।
७. कोशे 'प्राणिभयानकः' इत्यपपाठः । ८. कोशे 'एकस्मादेव भीषोऽपि' इत्यपपाठः ।
९. कुचर इति चरतिकर्म कुत्सितम् । अथ चेद् देवताभिधानं क्वायं न चरतीति । निरु० १।२०॥ १०. धा० १।५६१॥ ११. कोशे '०चरं' इत्यपपाठः ।
१२. कोशे 'यदीन्द्रणी' इत्यपपाठः । तथा च मन्त्रवर्णः—
यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः । ऋ० १।१०८।१०॥
१३. गिरिष्ठा गिरिस्थायी । गिरिः पर्वतः, समुद्गीर्णो भवति । पर्ववान् पर्वतः । निरु० १।२०॥

पर्वशब्दस्य मुख्योऽर्थः प्रसङ्गेनाभिधीयते[1] ॥२३९॥
स काल[:]पर्वशब्दोक्तः [2]पृणातेर्दानकर्मणः ।
दीयते[3] हि हविस्तस्मिन् देवेभ्यश्शास्त्रचोदितम् ॥२४०॥
प्रीणातेरथवा[4] पर्वसिद्धिस्तस्यापि [5]तद्‌ भवेत् ।
प्रीणन्ति तर्पयन्त्यस्मिन् देवानित्यस्य पर्वता ॥२४१॥
तृप्त[6] एवैनमित्यादिरर्थवादश्च दृश्यते ।
न[7] भुङ्क्ते देवतेत्यन्ये[8] गौणी तृप्तिरियं ततः ॥२४२॥
गौणी वाऽप्यथवा मुख्या धातुरत्र विकल्प्यते ।
प्रतिपत्पञ्चदश्योस्तु[9] सन्धौ [10]यागोऽभिचोदितः ॥२४३॥
परम्[11] प्रीणनं चैव तेन तस्मिन् दिवौकसाम् ।
ततश्च पर्वशब्दस्य मुख्योऽर्थस्सन्धिरेव सः ॥२४४॥
ननूपपादिता[12] तस्मिन्नल्पे यागस्य विद्यते ।
विधानस्यान्यथासिद्धेस्सन्धेः पूर्वापरावुभौ ॥२४५॥
आसन्नापातिकौ कालौ गौणी स्यात् पर्वताऽनयोः ।
प्रधानस्यैकदेशोऽपि यथा सन्धौ भविष्यति ॥२४६॥
तथैवाङ्गानि कार्याणि विधिनैवं नियुज्यते ।
अनेन कथितेनालं प्रकृतं त्वभिधीयते ॥२४७॥
प्रकृतित्वं तु मुख्यस्य गौणोऽर्थो विकृतिस्त्विह ।
उक्तस्तत्प्रकृतीत्येवं बहुव्रीहिसमाश्रयात्[13] ॥२४८॥

---

१. पर्व पुनः पृणातेः प्रीणातेर्वा । अर्धमासपर्व देवानस्मिन् प्रीणन्तीति तत्प्रकृती-तरत् सन्धिसामान्यात् । निरु० १।२०॥

२. कोशे 'बृणाते०' इत्यपपाठः । धा० ९।१९॥

३. कोशे 'भीयते' इत्यपपाठः । ४. धा० ९।२॥ ५. तथेत्यर्थे ।

६. अनुपलब्धमूलम् । ७. कोशे 'द भुङ्कते' इत्यपपाठः ।

८. अन्ये मीमांसका इत्यर्थः । ९. पौर्णमासीप्रतिपदोरमावास्याप्रतिपदोश्चेत्यर्थ ।

१०. कोशे 'योगो०' इत्यपपाठः । ११. कोशे 'चरणं' इत्यपपाठः ।

१२. 'ननु नोत्पादिका तस्मिन्' इति पाठः साधीयान् स्यात् ?

१३. सा=कालसन्धिरूपा प्रकृतिः=मुख्या यस्य तद् शिलादिपर्वेति गौणोऽर्थोऽत्र बहुव्रीहिणा तत्प्रकृतिपदेनोक्त इत्याशयः ।

कालसन्धौ शिलासन्धौ सामान्यं सन्धि[र]स्ति हि ।
शिलासन्धिस्तथा पर्व तेन स्यात् पर्ववान् गिरिः ॥२४९॥
तथैव [1]वंशपर्वादि गौणपर्वेति [2]बोधितम् ।
यदा त्विन्द्रो[3] गिरिस्थायी[4] तदा मेघो गिरिर्भवेत् ॥२५०॥
उद्गीर्ण इव मेघोऽपि वायुना वा स्वरेण वा ।
एतस्मादिति[5] पूर्वोक्तमुद्गीर्णत्वमुदाहृतम्[6] ॥२५१॥
उक्तं[7] नैघण्टुकं नाम प्रधानं यत्तदुच्यते[8] ।
स्तुतिः[9] प्राधान्यतो यासां देवतानां प्रदृश्यते ॥२५२॥
तद्वाचीनि प्रधानानि नामानि च प्रचक्षते ।
इन्द्रं[10] नाग्निरिवेत्यादौ स्तुतिर्नेन्द्रादिगोचरा ॥२५३॥
यत्र[11] तद्गोचरा तत्र तन्नाम्नस्स्यात् प्रधानता ।
न हि क्वचित् स्तुतत्वेन सर्वदैव प्रधानता ॥२५४॥
गुणप्रधानभावो[हि] वाक्येनैवावसीयते ।
प्राधान्यं च विशेष्यस्य[12] गुणभूतं विशेषणम् ॥२५५॥
विशेष्यदेवतानाम्ना प्राधान्यं तेन गम्यते ।
विशेष्यदेवतानाम्नां समूहो दैवतं त्विति ॥२५६॥
तृतीयं देवताकाण्डमाहुरेवं प्रसिद्धितः ।
आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा ॥२५७॥
तृतीयं दैवतं नाम शास्त्रमेवं त्रिधा स्थितम् ।

१. कोशे 'वशपर्वाभि०' इत्यपपाठः । २. कोशे 'वैदिकः' इत्यपपाठः ।
३. कोशे 'त्विन्दो' इत्यपपाठः ।
४. मेघस्थायी । मेघोऽपि गिरिरेतस्मादेव । निरु० १।२०॥
५. कोशे 'एतेस्मात् इति' इत्यपपाठः । ६. कोशे '०दाहृतः' इत्यपपाठः ।
७. कोशे 'उक्त नैघण्टुकं' इत्यपपाठः ।
८. तद् यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवतमित्याचक्षते । तदुपरिष्टाद् व्याख्यास्यामः । नैघण्टुकानि नैगमानीहेह । निरु० १।२०॥
९. कोशे 'स्तुतिप्राधान्यतो यस्यां' इत्यपपाठः ।
१०. कोशे 'इन्द्र नाग्नि०' इत्यपपाठः । अत्र 'इन्द्रं न त्वा' 'अग्निरिव मन्यो' इति मन्त्री प्रति निर्देशः । ११. कोशे 'यत्र तं गोचरा' इत्यपपाठः । १२. कोशे 'विशेजस्य' इत्यपपाठः ।

उत्कर्षो दैवतस्येह हेतुमत्त्वविवक्षया ॥२५८॥
हेतुत्वं पूर्वयोरस्ति दैवतं प्रत्यसंशयम् ।
आद्यं चैव द्वितीयं च नाविज्ञाय हि दैवतम् ॥२५९॥
शक्यते[1] बोद्धुमित्येवं हेतुत्वं पूर्वयोर्भवेत् ।
तज्ज्ञानाधीनविज्ञानाद्[2] दैवतं हेतुमत्तथा[3] ॥२६०॥
देवतातत्त्वविज्ञानात् प्रधानं फलवत् ततः ।
ताद्भाव्यं च फलं तस्य [4]यां यामित्यत्र वक्ष्यति ॥२६१॥
नैघण्टुकानि नामानि गवादीन्याह भाष्यकृत् ।
मन्त्रेऽन्यदेवते यानि प्रायेणोपलभामहे ॥२६२॥
इह नैघण्टुके[5] काण्डे तानि व्याचक्ष्महे वयम् ।
नैघण्टुकपदार्थत्वात् तच्च नैघण्टुकं स्मृतम् ॥२६३॥
अविस्पष्टार्थवाचीनि यत्रैव स्युः पदानि हि ।
निगम्यान्यवबोध्यानि निगमस्सोऽप्युदाहृतः ॥२६४॥
तत्रस्थानि [6]पदान्याह नैगमानीति भाष्यकृत् ।
तानि व्याचक्ष्महेऽत्रैव द्वितीये[7] त्विति योजनात् ॥२६५॥
इहेहेति[8] द्विरभ्यस्तमाद्याध्यायसमाप्तये ।
शिष्याणां विश्रमार्थाय दृश्यते [9]ब्राह्मणे तथा ॥२६६॥

॥ इति निरुक्त-श्लोकवार्त्तिके [षष्ठाध्यायस्य] षष्ठः पादः ॥

[॥ इति पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके
प्रथमोऽध्यायः समाप्तः ॥]

---

१. कोशे 'बोध्यमि०' इत्यपपाठः ।
२. कोशे 'तज्ज्ञानाधी०' इत्यपपाठः ।
३. कोशे 'हेतुमर्थता' इत्यपपाठः ।
४. द्र०—निरु० १३।१३॥
५. कोशे 'नैघण्डुको' इत्यपपाठः ।
६. कोशे 'पदान्याहुर्नै०' इत्यपपाठः ।
७. द्वितीयप्रकरणे (अ० ४–६) इत्यर्थः ।
८. कोशे 'इति इति' इत्यपपाठः ।
९. ऐतरेयब्राह्मणे पञ्चिकान्तेऽभ्यासो दृश्यते ।

# द्वितीयोऽध्यायः

साभिधेयं ससम्बन्धं निरुक्तं सप्रयोजनम् ।
एवमुक्तमथेदानीं व्याख्योपायोऽभिधीयते ॥१॥
अभिधेयाभिधानेन शब्दनिर्वचनेन च ।
इष्यते द्विविधा व्याख्या प्रतिशब्दं च सेष्यते ॥२॥
तत्रार्थकथनं[1] तावदितीमान्येकविंशतिः ।
पृथिवीनामधेयानि तथा[2] पञ्चदशेति च ॥३॥
समाम्नायक्रमेणैव सर्वेषामभिधास्यते ।
निर्वाच्यशब्दभूयस्त्वाद् ग्रन्थभूयस्त्वदोषतः ॥४॥
न निर्वक्ष्यति सर्वाणि गवादीन्येव कानिचित् ।
श्वादीन्यपि[3] च सर्वाणि निर्वाच्यान्यविशेषतः ॥५॥
धातुजत्वप्रतिज्ञानादनाम्नातानि यानि च ।
उपायेन निरुच्यन्ते येन तस्याभिधित्सया ॥६॥
अब्रवीन्मन्दमत्यर्थम् [4]अथ निर्वचनं त्विति ।
आनन्तर्येऽथशब्दोऽत्र वृत्तादेतदनन्तरम् ॥७॥
ब्रूमो निर्वचनं तावद् व्याख्यास्यामस्ततः परम् ।
नन्वथेति विना तेन वृत्तादेतदनन्तरम् ॥८॥
पाठेनैव समाम्नातम् अथशब्दो निरर्थकः ।
नैव सम्बन्धवाचित्वाद्[5] वृत्तवर्त्तिष्यमाणयोः ॥९॥
हेतुहेतुमदाकारः सम्बन्धोऽनेन कथ्यते ।
व्याख्या चावश्यकर्तव्या व्याख्या तस्य प्रयोजिका ॥१०॥

---

१. कोशे 'कथा' इत्यपपाठः ।
२. हिरण्यनामानि पञ्चदश इति वक्ष्यति भाष्यकृत्, तस्यायं निर्देशः ।
३. अत्र कदाचिद् 'रमादीन्यपि' इति पाठः स्यात् ?
४. अथ निर्वचनम् । निरु० २।१।।
५. सम्बन्धद्योतकत्वादित्यर्थः ।

प्रयुक्तश्च तथोपायः[1] सम्बन्धोऽस्त्यनयोरतः ।
उपेयस्य प्रयोक्तृत्वम् उपायस्य प्रयोज्यता ॥११॥
अयमेवानयोरिष्टः सम्बन्धोऽथेति वर्णितः ।
निरुच्येते [2]पदाद्येन प्रकृतिप्रत्ययौ पृथक् ॥१२॥
तथैव समुदायार्थस्तत्स्यान्निर्वचनं[3] [4]त्विह ।
व्याख्यानोपाय[5] इत्यर्थः षोढाऽसावभिधीयते ॥१३॥
मुख्यो मुख्यतरश्चैव तथा [6]मुख्यतमोऽपरः ।
गौणो गौणतरश्चैव तथा गौणतमोऽपरः ॥१४॥
तद्येष्वित्यादिनोक्तास्तु[7] पूर्वे मुख्यादयस्त्रयः ।
तदभावे चतुर्थस्स्याद्[8] गौणोऽथाऽनन्विते त्विति ॥१५॥
अविद्यमान इत्येवमुक्तो गौणतरस्तथा ।
नत्वेवेत्यनयोक्त्या तु तथा [9]षष्ठोऽभिधास्यते ॥१६॥
तत्रेत्यर्थे[10] तदित्येतत् तेषां मध्ये द्वयोरिह ।
स्वरूपं [11]सुप्रसिद्धत्वाभावाद् वाच्यमिति स्वयम् ॥१७॥
स्वरादिशब्दवाच्योऽर्थो [12]व्याख्यातोऽप्यभिधीयते ।
अविस्मरणसिद्धयर्थम्[13] अनुक्तोऽप्यपरस्तथा[14] ॥१८॥
उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा ।
चतुर्धा यः स्वरः प्रोक्तस्संस्कारः शब्दलक्षणम्[15] ॥१९॥

---

१. कोशे 'तथोपाय' इति विसर्गरहितः पाठः ।

२. पदात् पृथक् निष्कृष्येत्यर्थः । ३. कोशे '०तस्यान्निर्वचनं' इत्यपपाठः ।

४. तु०—अपिहितस्यार्थस्य परोक्षवृतावतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम्—इति दुर्गः । पदान्निष्कृष्याविनष्टरूपेण धातुना प्रातिपदिकेन वा यदर्थस्य वचन तन्निर्वचनम्—इति स्कन्दस्वामी । ५. कोशे 'व्याख्यायोपान' इत्यपपाठः ।

६. कोशे 'गौणतमो' इत्यपपाठः । ७. कोशे '०नोक्तस्तु' इत्यपपाठः ।

८. कोशे 'चतुर्थस्स्या' इत्यपपाठः । ९. षष्ठः=गोणतम इत्यर्थः ।

१०. तद् येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्, तथा तानि निर्ब्रूयात् । निरु० २।१॥ ११. कोशे 'सुप्रसिद्धार्थत्वाभावा वाच्य०' इत्यपपाठः ।

१२. द्र०—निरु० १।१२.१४ व्याख्या (पृ० २४४ आदि) ।

१३. कोशे 'अप्रस्मरसि०' इत्यपपाठः । १४. कोशे '०प्यपरं तथा' इत्यपपाठः ।

१५. कोश 'शब्दलक्षणः' इत्यपपाठः ।

शब्द[:]संस्क्रियते येन प्रकृतिप्रत्ययात्मकः ।
शब्दशास्त्रप्रसिद्धोऽसौ संस्कारोऽत्र विवक्षितः ॥२०॥
समर्थौ सङ्गतार्थौ तावर्थः स्पष्टत्वलक्षणः ।
स्पष्टावित्येतदुक्तं स्यात् स्पष्टौ प्रत्यक्षगोचरौ ॥२१॥
अर्थः प्रदृश्यमानत्वात् प्रदेशो द्रव्यलक्षणः ।
द्रव्यमेव क्रियाधार इति तस्येह संग्रहः ॥२२॥
क्रिया [1]विकारशब्देन द्रव्यस्थेह विवक्षिता ।
पूर्वं गुणपदेनापि सैवोक्ता लम्बचूडके[2] ॥२३॥
सहप्रतीयमानत्वं विकारेणान्वयस्तयोः ।
सकृदुच्चारिताच्छब्दात् [3]स्वरसंस्कारकर्मणाम् ॥२४॥
भवेत् प्रतीतिरित्येवं सहभावो मुनेर्मतः ।
युगपन्नहि भिन्नेषु प्रतीतिस्संप्रवर्तते ॥२५॥
गताभि[प्राय]तोऽन्यत्र युगपत् तद्धि जायते ।
पदेषु येषु दृश्यन्ते [4]श्रुतेष्वेते स्वरादयः ॥२६॥
तथैव [5]तानि निर्ब्रूयात् स्वरसंस्कारकर्मभिः ।
पाचको लावकः कर्त्ता [6]भर्तेत्यादीन्युदाहरेत् ॥२७॥
पाचकः पचतीत्येव वाच्यः पाचयतीति वा ।
लावकोऽपि लुनाती[ति] यद्वा [7]लावयतीत्यपि ॥२८॥
करोतीति तथा कर्त्ता हर्त्ता स्याद्धरतीत्यपि ।
त्रातारमिन्द्रमित्यादौ[8] त्रातेत्याद्यपि वैदिकम् ॥२९॥
त्राता त्राणस्य कर्तृत्वाद् अवनादविता तथा ।
एवं मुख्यतमोपायो यौगिकेषु निर्दर्शितः ॥३०॥
मध्यमो जातिशब्देषु जातिज्ञानतिरोहिते ।

---

१. आकरे 'गुणेन' इति दुर्गपाठः, 'विकारेण' इति स्कन्दस्वामिपाठः ।
२. द्र०—निरु० अ० १ खण्ड १४ । ३. कोशे 'स्वरस्कार०' इत्यपपाठः ।
४. कोशे 'श्रुतेष्वेते' इत्यपपाठः । ५. कोशे 'तानिति ब्रूयात्' इत्यपपाठः ।
६. अत्र 'हर्त्ता' इति पाठो युक्ततरकः स्यात् ? ७. कोशे 'लपयती०' इत्यपपाठः ।
८. कोशे 'भ्रातर०' इत्यपपाठः । त्रातारमिन्द्रम्—ऋ० ६।४७।११॥

यौगिकेषु क्रिया बुद्धिर्यथा शीघ्रं प्रवर्तते ॥३१॥
न तथा [1]जातिशब्देषु तस्मान्मुख्यतमस्त्वसौ[2] ।
जातिज्ञानतिरोधानान्मध्यमोऽपि तथोदितः ॥३२॥
यथार्थं इति मुख्यः स्यात् [3]संस्कारश्छान्दसोऽस्ति हि ।
व्यत्ययस्य विभक्तीनां धात्वर्थस्य श्रुतत्वतः ॥३३॥
चतुर्थो न्याय्य इत्येवं मुख्य इत्येव संज्ञितः ।
गौर्गतेरशनादश्वः[4] पुरुषः पूरणादिना ॥३४॥
हस्तवत्त्वेन हस्ती स्याद्धननाद्धस्त उच्यते ।
घटश्च घटनादिष्टः पटश्च पटनात्स्मृतः ॥३५॥
नातिप्रसङ्गदोषः स्याद् रूढितो जातिवाचिनाम् ।
इत्येतद्विस्तरेणोक्तं न्यायतो लम्बचूडके ॥३६॥
प्रकृतिं प्रत्ययं चैव यथा विज्ञाय तत्त्वतः ।
निर्वक्तुं शक्यते शब्दः स्वरं चापि तथा क्वचित् ॥३७॥
यजिं हि प्रकृतिं ज्ञात्वा प्रत्ययं च तृचं तथा ।
यष्टेत्येतत्पदं यद्वद् [5]यजतीति निरुच्यते ॥३८॥
अधायीति[6] स्वरं ज्ञात्वा तथा वायादिकं पदम् ।
तथापि [7]स्थूलवृत्त्यादौ [8]स्वरेणार्थविनिश्चयः ॥३९॥

---

१. कोशे 'न तथाजिशब्देषु' इत्यपपाठः ।

२. असौ यौगिकः । यथा—पाचकः पक्ता इत्येवमादयः ।

३. कोशे 'मुख्यस्याद् संस्कारं छान्दसो॰' इत्यपपाठः ।

४. कोशे 'गौर्गतेरदनादश्वः पुरुषः पुरुणादिना' इत्यपपाठः ।

५. कोशे 'यच्छतीति' इत्यपपाठः ।

६. कोशे 'अध्यायीति' इत्यपपाठः । अधायिपदं वेदे (ऋ॰ १०।२९।१) सर्वानुदात्तं पठ्यते । अस्मिन्नेव मन्त्रे 'वनेनवायोन्यधायि' इत्यत्र शाकल्यकृतो 'वा—यः' इति पदद्वयपाठ आश्रीयेत चेत् तर्हि यद्वृत्तत्वाद् 'अधायि' पदेनोदात्तवता भाव्यम् । सर्वानुदात्तत्वदर्शनाद् यास्केन शाकल्पमतं निराकृत्य 'वायः' एकं पदमित्युक्तम् । द्र॰—निरु॰ ६।२८॥

७. अत्र 'तथा स्थूलपृषत्यादौ' इति पाठो युक्तो भवेत् ।

८. 'स्थूलपृषती' शब्दे स्वरं दृष्ट्वा निर्णयो भवतीति भगवान् पतञ्जलिरवोचत् । तदुक्तम्—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत इति । तस्यां सन्देहः—स्थूला चासौ पृषती च स्थूलपृषती,स्थूलानि वा पृषन्ति यस्याः सा स्थूलपृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः,अथान्तोदात्तत्वं ततस्तत्पुरुष इति । महा॰ पस्पशा॰ ।

इत्येवमुपयोगित्वात् स्वरस्य ग्रहणं कृतम् ।
ननु संस्कारशब्देन शब्दलक्षणवाचिना ॥४०॥
स्वरो लभ्यत इत्येवं स्वरोक्तिरतिरिच्यते ।
येन संस्क्रियते शब्दः स संस्कार इतीरितः ॥४१॥
लक्षणं पाणिनीयं तु प्रकृत्याद्यवधारणे ।
प्रकृतिप्रत्ययौ यद्वल्लक्ष्येते[1] पदगोचरौ ॥४२॥
तेनैव [2]तद्गतस्तद्वद् उदात्तादिरसंशयम् ।
यद्येवं स्वरशब्देन शब्दमात्राभिधायिना ॥४३॥
वाचो नामस्वधीतेन[3] तद्विशेषोऽभिधित्सितः ।
कोऽसौ धातुरिति ब्रूमो येषु धातुः प्रतीयते ॥४४॥
लक्षणं चैव सम्बद्धं[4] धातुवाच्या[5] क्रिया तथा ।
तद् धातुजपदार्थेषु तेषां प्रत्यक्षवृत्तिता ॥४५॥
व्याख्योपायो न वक्तव्यः पूर्वेषां परयोरिह ।
निर्ब्रूयादिति[6] तेनेदम् उत्तरार्थमनूद्यते ॥४६॥
अर्थोऽप्यनन्विते[7] [8]क्वापि शब्देनोपाय उच्यते ।
स्ववाच्यव्यतिरिक्तोऽर्थश्शब्देनानन्वितः स्मृतः ॥४७॥
स्ववाच्यव्यतिरिक्तेऽर्थे यदा शब्दः प्रयुज्यते ।
प्रादेशिको विकारश्च नास्ति तस्मिन् पुरोदितः ॥४८॥
अर्थोऽस्मिन्[9] वर्तते शब्द इत्यतो वृत्तिरिष्यते[10] ।
वाच्यावाच्यार्थसामान्यं[11] वृत्तिसामान्यमत्र तु ॥४९॥

---

१. कोशे '०लक्ष्यते' इत्यपपाठ । २. कोश 'तद्गतं तद्वद्' इत्यपपाठः ।
३. निघण्टुः १।११॥ ४. कोशे 'रञ्जत्वे' इत्यपपाठः ।
५. कोशे 'धातुप्राच्या' इत्यपपाठः । ६. कोशे 'निब्रूया०' इत्यपपाठः ।
७. कोशे 'अर्थे०' इत्यपपाठः ।
८. अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येन । निरु० २।१॥ ९. कोशे 'अर्थे०' इति पाठः ।
१०. वर्तते शब्दो यस्यामिति वृत्तिरित्यतो वृत्तिशब्देनार्थो गृह्यत इत्याशयः ।
११. कोशे 'वाच्यवाच्यार्थ०' इत्यपपाठः ।

परीक्षेतेति[1] चाप्यत्र परीक्षाया न साध्यता ।
निबन्धनप्रतीतेस्तु[2] सामर्थ्यात् साध्यतेष्यते ॥५०॥
परीक्षापूर्वकं तस्माच्छब्दवृत्तेर्निबन्धनम् ।
अर्थनित्यस्तदा भूत्वा परीक्षेत विचक्षणः ॥५१॥
परीक्षाकर्मसामर्थ्याच्छब्दवृत्तेर्निबन्धनम् ।
प्रतीयादर्थसामान्याद् इत्यर्थोऽत्र विवक्षितः ॥५२॥
असमर्थसमासोऽयम् अप्रादेशिक इत्ययम् ।
क्रियापदेन [3]सम्बन्धाद् [4]नाऽयं स्यादसतीति तु ॥५३॥
संहितायास्तु[5] तुल्यत्वात् पदं प्रादेशिके त्विति ।
कृत्वाऽध्याह्रियते कैश्चिदसतीत्यपरं पदम् ॥५४॥
सत्यन्यस्मिन्निति त्वन्यैः परैरश्राद्धभोजिवत्[6] ।
असमर्थसमासोऽपि न दोषायेति कल्प्यते ॥५५॥
पर्ववत्त्वादिकं शब्दमत्रोदाहरणं विदुः ।
पर्वार्धमासयोः सन्धिरिति [7]पूर्वं प्रकीर्तितम् ॥५६॥
परणं[8] प्रीणनं चापि देवानां तत्र विद्यते ।
तत्र[9] तत्पर्वशब्दस्य प्रवृत्तेः स्यान्निबन्धनम् ॥५७॥
अन्वितः पर्व शब्देन पक्षसन्धिरतः स्फुटम् ।
प्रयुज्यते यदाऽन्यत्र पर्वतः पर्ववानिति ॥५८॥
न तदा परणं तत्र प्रीणनं वा यथोदितम् ।
नाप्यसौ पक्षयोस्सन्धिः कथं तत्र प्रयुज्यते ॥४९॥
कालसन्धि परित्यज्य परणं प्रीणनं तथा ।
सन्धिसामान्यमात्रेण शिलासन्धौ प्रयुज्यते ॥६०॥
तथा वंशादिपर्वाऽपि न मुख्यं गौणमेव तत् ।

---

१. कोशे 'परीक्षतेति' इत्यपपाठः ।
२. निबन्धनम्=निमित्तम् ।
३. कोशे 'सम्वन्धान्यायं' इत्यपपाठः ।
४. कोशे 'न्यायं' इत्यपपाठः ।
५. कोशे 'सा हिता यास्तु' इत्यपपाठः ।
६. द्र०—महाभाष्य १।१।४३॥
७. पूर्वत्र अ० १, पाद ६–श्लोक २३७—२४२॥
८. कोशे 'वरणं' इत्यपपाठः ।
९. कोशे 'नत्र' इत्यपपाठः ।

उक्तं तत्प्रकृतीत्येतत् [1]पूर्वं भाष्यकृता स्वयम् ॥६१॥
व्याख्यातृभिरुपन्यस्तं[2] [3]गोर्न पर्वेति वैदिकम् ।
तत्रावयवसामान्यात् [4]सन्धिसामान्यतोऽपि वा ॥६२॥
त्यक्त्वा प्रयुज्यते मुख्यं [5]गोश्चैवाऽवयवे तथा ।
तथा[च]वृत्तपाकस्य पक्वशब्दोऽपि वाचकः ॥६३॥
पायसादेरिति प्राहु[ः]पार्थिवेनैव वह्निना ।
पक्वो[6] व्रीहिर्यवः पक्वः पक्वमाम्रफलं तथा ॥६४॥
इत्यादाविष्यते[पक्वः]पार्थिवाग्निविवर्जनात् ।
अर्थसामान्यमत्रापि निष्पन्नत्वं प्रतीयते ॥६५॥
पार्थिवाग्निकृतं पाकं तेनायमपहाय वै ।
निष्पन्नत्वार्थसामान्याद् व्रीह्यादौ संप्रयुज्यते ॥६६॥
आमासु[7] पक्वमित्यादौ पक्वमित्यपि वैदिकम् ।
तत्रापि गोगते क्षीरे पक्वशब्दः प्रयुज्यते ॥६७॥
उदके वापि मेघस्थे निष्पन्नत्वाविशेषतः[8] ।
आमास्विति तु निर्दिष्टा गाव ओषधयोऽपि वा ॥६८॥
प्रवृत्तौ पक्वशब्दस्य परत्रैव निबन्धनम् ।
यथासम्भवमाख्येयं परीक्ष्यैवेह युक्तितः ॥६९॥
तस्मिन्नविद्यमानेऽपि[9] सामान्ये प्रकृते त्वयम् ।

---

१. द्र०—निरु० १।२०॥
२. व्याख्यातृपदेनात्र स्कन्दस्वामी लक्षितः स्यात्, तेन तस्योपन्यस्तत्वात् ।
३. कोशे 'गौर्न' इत्यपपाठः । ऋ० १।६१।१२॥ द्र०—निरु० ६।२०॥
४. कोशे '०क्षामान्या सन्धिधामान्यतो' इत्यपपाठः।
५. कोशे 'गौश्वो' इत्यपपाठः । ६. कोशे 'व्रीहिः यवः' इत्यसांहितिकः पाठः ।
७. तथा च मन्त्रवर्णः—
आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
घर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ ऋ० ८।८९।७॥
८. कोशे 'निष्पन्नत्वाद्विशेषतः' इत्यपपाठः ।
९. अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निब्रूयात् । निरु० २।१॥

परीक्षेतेति[1] चाप्यत्र परीक्षाया न साध्यता ।
निबन्धनप्रतीतेस्तु[2] सामर्थ्यात् साध्यतेष्यते ॥५०॥
परीक्षापूर्वकं तस्माच्छब्दवृत्तेर्निबन्धनम् ।
अर्थनित्यस्तदा भूत्वा परीक्षेत विचक्षणः ॥५१॥
परीक्षाकर्मसामर्थ्याच्छब्दवृत्तेर्निबन्धनम् ।
प्रतीयादर्थसामान्याद् इत्यर्थोऽत्र विवक्षितः ॥५२॥
असमर्थसमासोऽयम् अप्रादेशिक इत्ययम् ।
क्रियापदेन [3]सम्बन्धाद् [4]नाऽयं स्यादसतीति तु ॥५३॥
संहितायास्तु[5] तुल्यत्वात् पदं प्रादेशिके त्विति ।
कृत्वाऽध्याह्रियते कैश्चिदसतीत्यपरं पदम् ॥५४॥
सत्यन्यस्मिन्निति त्वन्यैः परैरश्राद्धभोजिवत्[6] ।
असमर्थसमासोऽपि न दोषायेति कल्प्यते ॥५५॥
पर्ववत्त्वादिकं शब्दमत्रोदाहरणं विदुः ।
पर्वार्धमासयोः सन्धिरिति [7]पूर्वं प्रकीर्तितम् ॥५६॥
परणं[8] प्रीणनं चापि देवानां तत्र विद्यते ।
तत्र[9] तत्पर्वशब्दस्य प्रवृत्तेः स्यान्निबन्धनम् ॥५७॥
अन्वितः पर्व शब्देन पक्षसन्धिरतः स्फुटम् ।
प्रयुज्यते यदाऽन्यत्र पर्वतः पर्ववानिति ॥५८॥
न तदा परणं तत्र प्रीणनं वा यथोदितम् ।
नाप्यसौ पक्षयोस्सन्धिः कथं तत्र प्रयुज्यते ॥४६॥
कालसन्धिं परित्यज्य परणं प्रीणनं तथा ।
सन्धिसामान्यमात्रेण शिलासन्धौ प्रयुज्यते ॥६०॥
तथा वंशादिपर्वाऽपि न मुख्यं गौणमेव तत् ।

१. कोशे 'परीक्षतेत्ति' इत्यपपाठः । २. निबन्धनम्=निमित्तम् ।
३. कोशे 'सम्बन्धान्यायं' इत्यपपाठः । ४. कोशे 'न्यायं' इत्यपपाठः ।
५. कोशे 'सा हिता यास्तु' इत्यपपाठः । ६. द्र०—महाभाष्य १।१।४३॥
७. पूर्वत्र अ० १, पाद ६—श्लोक २३७—२४२॥
८. कोशे 'वरणं' इत्यपपाठः । ९. कोशे 'नत्र' इत्यपपाठः ।

उक्तं तत्प्रकृतीत्येतत् [1]पूर्वं भाष्यकृता स्वयम् ॥६१॥
व्याख्यातृभिरुपन्यस्तं[2] [3]गोर्न पर्वेति वैदिकम् ।
तत्रावयवसामान्यात् [4]सन्धिसामान्यतोऽपि वा ॥६२॥
त्यक्त्वा प्रयुज्यते मुख्यं [5]गोश्चैत्राऽवयवे तथा ।
तथा [च] वृत्तपाकस्य पक्वशब्दोऽपि वाचकः ॥६३॥
पायसादेरिति प्राहु[ः] पार्थिवेनैव वह्निना ।
पक्वो[6] व्रीहिर्यवः पक्वः पक्वमाम्रफलं तथा ॥६४॥
इत्यादाविष्यते [पक्वः] पार्थिवाग्निविवर्जनात् ।
अर्थसामान्यमत्रापि निष्पन्नत्वं प्रतीयते ॥६५॥
पार्थिवाग्निकृतं पाकं तेनायमपहाय वै ।
निष्पन्नत्वार्थसामान्याद् व्रीह्यादौ संप्रयुज्यते ॥६६॥
आमासु[7] पक्वमित्यादौ पक्वमित्यपि वैदिकम् ।
तत्रापि गोगते क्षीरे पक्वशब्दः प्रयुज्यते ॥६७॥
उदके वापि मेघस्थे निष्पन्नत्वाविशेषतः[8] ।
आमास्विति तु निर्दिष्टा गाव ओषधयोऽपि वा ॥६८॥
प्रवृत्तौ पक्वशब्दस्य परत्रैव निबन्धनम् ।
यथासम्भवमाख्येयं परीक्ष्यैवेह युक्तितः ॥६९॥
तस्मिन्नविद्यमानेऽपि[9] सामान्ये प्रकृते त्वयम् ।

---

१. द्र०—निरु० १।२०॥
२. व्याख्यातृपदेनात्र स्कन्दस्वामी लक्षितः स्यात्, तेन तस्योपन्यस्तत्वात् ।
३. कोशे 'गौर्न' इत्यपपाठः । ऋ० १।६१।१२॥ द्र०—निरु० ६।२०॥
४. कोशे '०सामान्या सन्धिधामान्यतो' इत्यपपाठः।
५. कोशे 'गौश्वो' इत्यपपाठः । ६. कोशे 'व्रीहिः यवः' इत्यसांहितिकः पाठः ।
७. तथा च मन्त्रवर्णः—
आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
घर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ ऋ० ८।८९।७॥
८. कोशे 'निष्पन्नत्वाद्विशेषतः' इत्यपपाठः ।
९. अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् । निरु० २।१॥

उपायोऽक्षरसामान्यं वर्णसामान्यमेव वा ॥७०॥
भवेच्चोभयसामान्यं त्रिधैतच्चापि कथ्यते ।
सस्वरं व्यञ्जनं प्राहुरक्षरं [1]कवयस्त्विह ॥७१॥
ब्रुवते व्यञ्जनं तेन वर्णं वर्णविदस्तथा ।
अकारादिस्वरं चैव [2]भेदारम्भस्त्रिधा मतः ॥७२॥
सस्वरस्य चकारस्य [3]चतुरश्छ्यताविति[4] ।
अक्षरस्यादिभूतस्य लोपस्तत्र समाश्रितः ॥७३॥
सस्वरं व्यञ्जनं तस्माद् अत्राक्षरमुच्यते ।
व्यञ्जनं शुद्धमेवाह [5]वर्णशब्देन भाष्यकृत् ॥७४॥
अकारादिष्वतो[6] भेदश्शौनकेनाप्ययं श्रितः[7] ।
स्वरो वर्णोऽक्षरं मात्रा [8]विनियोगोऽर्थ एव च ॥७५॥
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ।[9]
भेदोऽयं[10] नाभविष्यच्चेन्नावक्ष्यच्छौनकस्तथा ॥७६॥
स्वरादयोऽपरैस्सर्वे वर्णा इत्येव संमताः ।
अक्षराणीति [11]योऽप्यन्यैरुक्तो भेदोऽपि कैश्चन ॥७७॥
स्वरोऽपि वर्णशब्देन लोपे [12]वर्णद्विवर्णयोः ।
सस्वरं व्यञ्जनं पक्षे भाष्यकारेण वक्ष्यते ॥७८॥
अतः पुरोदितो भेदो न स्यादित्यपरे विदुः ।
एवं चेदक्षराख्योऽत्र शब्द एव विवक्षितः ॥७९॥

---

१. कोशे 'कवयन्त्विह' इत्यपपाठः । २. कोशे 'वेदारम्भस्त्रिधो' इत्यपपाठः ।

३. कोशे 'चतुरश्रयुता०' इत्यपपाठः ।

४. चतुरश्छ्यतावाद्यक्षरलोपश्च । महा० वा० ५।२।५१॥

५. कोशे 'वर्णोशब्देन' इत्यपपाठः । ६. कोशे 'अकारादिस्वरो' इत्यपपाठः ।

७. कोशे 'त्रितः' इत्यपपाठः । ८. कोशे 'तत्प्रयोगो०' इत्यपपाठः ।

९. षड्गुरुशिष्यः कात्यायनीयसर्वानुक्रमणीवृत्तौ वेदार्थदीपिकायाम् (१।२) उद्धृतवान् । सायणोऽपि ऋग्वेदभूमिकायां स्मृतिवचनत्वेनोपन्यास्थत् ।

१०. कोशे 'भेदे०' इत्यपपाठः । ११. कोशे 'या०' इत्यपपाठः ।

१२. कोशे 'वर्णविवर्णयोः' इत्यपपाठः ।

तस्याक्षरस्य वर्णोऽपि स्वरूपं स्याद् विवक्षितम् ।
शब्दस्वरूपसामान्यादित्येवोक्तं प्रतीयते ॥८०॥
एवं चेत् शब्दसामान्याद् इत्यप्युक्ते प्रसिध्यति ।
सत्यं तथापि तन्नेष्टं [1]शब्दशब्दनियोगतः ॥८१॥
पदमेव पदेऽन्यस्य तत्सामान्यस्य हेतुतः[2] ।
नियम्येतेति तत्प्रोक्तं तद्व्यावृत्तिप्रसिद्धये ॥८२॥
न तत्सामान्यमेवेष्टं निरुक्तेरिह कारणम् ।
तदेकदेशसामान्यमपीत्येवमवादि तत्[3] ॥८३॥
सामान्यं सस्वरस्यापि व्यञ्जनस्येष्यते क्वचित् ।
क्वचित्तु व्यञ्जनस्यैव तथा स्यादुभयोः क्वचित् ॥८४॥
अक्षराद्याश्रयं भेदं तेनैवमृषिरब्रवीत् ।
यस्य नास्त्यर्थसामान्यं तस्योदाहरणानि वै ॥८५॥
जठरांशुशितामानि व्याख्यातारः[4] प्रयुञ्जते ।
लोके जठरशब्दोऽयं मूलकादावकोमले[5] ॥८६॥
मूलकालाबुशृङ्गाणि जठराणीति दृश्यते ।
अयमेव तथा वेदे सिञ्च स्वजठरे[6] त्विति ॥८७॥
उदरे दृश्यते स्पष्टं सामान्यं नार्थयोस्तयोः ।
पिबा सोममिति[7] ह्युक्त्वा तथाऽनुष्वधमित्यपि[8] ॥८८॥
सिञ्च स्वजठरे मध्व इत्युक्तेरुदरं स्फुटम् ।
काठिन्योदरसामान्यं[9] न तावदुपलभ्यते ॥८९॥
वस्तुत्वादि समानं चेत् तत्सर्वत्रैव विद्यते ।

---

१. कोशे 'शब्दशब्दो नियोगतः' इति पाठः । २. कोशे 'हेतुता' इति पाठः ।
३. कोशे '०वमवादितम्' इत्यपपाठः । ४. स्कन्दस्वाम्यादयो निरुक्तटीकाकृतः ।
५. अकोमले=कठिने । जठरशब्दो ह्यलाबुके लोके प्रसिद्धः, जठरमलाबुकमिति । स्कन्दटीका निरु० २।१॥ ६. ऋ० ३।४७।१॥ निरु० ४।७॥
७. कोशे 'पिपासोन्ममिति' इत्यपपाठः । ८. कोशे '०नुष्वधमिष्यति' इत्यपपाठः ।
९. कोशे 'काठिनोदर०' इत्यपपाठः ।

न सामान्यविशेषेण[1] विनेयं कल्पना भवेत् ॥९०॥
तस्मादक्षरसामान्यादुदरे यत्प्रवर्तते ।
ध्रियते धीयते वाऽस्मिञ्जग्धमित्यपि वक्ष्यति[2] ॥९१॥
जग्धधानपदे[3] चैव तथा जग्धधरे[4] पदे ।
समानो जठरे चैव जकार उपलभ्यते ॥९२॥
जकारेणान्विते पूर्वे पदे शक्ते यथोदरम् ।
तद्युक्तत्वात् तथा वक्तुं तृतीयमपि शक्नुयात् ॥९३॥
एवमक्षरसामान्याद् यदि शक्तिः प्रकल्प्यते ।
गवयो गौः[5] प्रसक्तस्ते गौश्चैव गवयस्तथा ॥९४॥
गकाराक्षरसामान्याद् विशेषो नहि दृश्यते ।
सामर्थ्यं कठिनं वक्तुं पूर्वयोश्च प्रसज्यते ॥९५॥
अन्वितत्वाज्जकारेण जठरस्यैवं ते स्फुटम् ।
संस्कारः सर्वशब्दानां सर्वार्थेषु तथा भवेत् ॥९६॥
सर्वेष्वेव हि सामान्यं स्वरेण व्यञ्जनेन वा ।
वर्णेन वा विशिष्टेषु केनचित् किञ्चिदस्ति वै ॥९७॥
तस्मादक्षरसामान्यान्निरुक्तिर्नोपपद्यते ।
क्लृप्ता यथोदरं वक्तुं जकारस्याप्तिपूर्वयोः ॥९८॥
जठरस्थस्य सा शक्तिस्त्यक्तुं नैवोपपद्यते ।
द्विजाजगजवाजेषु सा शक्तिः किन्न विद्यते ॥९९॥
अथ सा ग्धादियुक्तस्य[6] जठरस्थस्य सा कथम् ।
न ह्यस्ति जठरे ग्धादि ठकारेणान्वितं हि तत् ॥१००॥
तस्माज्जठरशब्दोऽत्र साक्षादेवोदरं वदेत् ।
अलाब्वाद्यथवा[7] किञ्चिन्नाक्षरस्य समानतः ॥१०१॥

---

१. कोशे 'सामान्यं विशेषेण' इत्यपपाठः । २. निरुक्त ४।७॥
३. कोशे 'जग्धं धान०' इत्यपपाठः । ४. कोशे 'जग्धंधर०' इत्यपपाठः ।
५. कोशे 'गौ' इत्यविसर्गकोऽपपाठः ।
६. जग्धशब्दे ग्धयुक्तस्य जकारस्य सा शक्तिरिति चेत् इति भावः ।
७. कोशे 'अलब्वोद्य०' इत्यपपाठः ।

अत्रोच्यते न दोषोऽस्ति संकरो नैव जायते ।
मार्गोऽयं क्वचिदेवेष्टो यत्र नास्त्यपरा गतिः ॥१०२॥
जात्यादिषु स्फुटं शब्दा[1] रूढा गोगवयादयः ।
शक्तयश्च तथैतेषां रूढ्यर्थेषु व्यवस्थिताः ॥१०३॥
रूढो[2] जठरशब्दोऽपि कठिने नोदरे यथा ।
तथा[3] तद्विषयैवास्य शक्तिर्नान्यार्थगोचरा ॥१०४॥
युक्तं कल्पयितुं यस्मात्[4] क्लृप्तौ नास्ति प्रमाणधीः ।
जठरे मघ्व[5] इत्यादावन्यस्यासम्भवो यदा ॥१०५॥
उदरे सम्भवश्चास्य तदा युक्तं विचार्यते ।
यथास्य[6] कठिने शक्तिः कल्पिता किं तथोदरे ॥१०६॥
अर्थसामान्यवत् किं वा शब्दसामान्यमुच्यताम् ।
दृश्यते शब्दसामान्यं शक्तिर्नैवोपपद्यते ॥१०७॥
प्रत्यक्षं न च संत्यज्य साध्वी स्यात् कल्पना क्वचित् ।
अन्यथानुपपन्नत्वे शक्तिः सर्वत्र कल्प्यते ॥१०८॥
अर्थापत्तिरिह क्षीणा शब्दसामान्यदृष्टितः ।
किमर्थमर्थसामान्यं शब्दवृत्तेर्निबन्धनम् ॥१०९॥
इष्यते कल्प्यते चैव शक्तिरेवमिहेष्यताम् ।
जग्धधानपदं[7] यद्वद् यद्वा जग्धधरं पदम् ॥११०॥
जकारेणान्विताद् योगादुदरे वर्तते तथा ।
काठिन्यं चैव योगं च त्यक्त्वेदं जठरं पदम् ॥१११॥
उक्तमक्षरसामान्यं[8] वर्णसामान्यमुच्यते ।
ते[9] सोमाद इति त्वस्यामंशुशब्द उदाहृतिः ॥११२॥

---

१. कोशे 'शब्दं रूढं' इत्यपपाठः ।
२. कोशे 'रूढे' इत्यपपाठः ।
३. कोशे 'तदा' इत्यपपाठः ।
४. 'यस्मा' इत्यपपाठः ।
५. ऋ० ३।४७।१॥
६. कोशे 'यदास्य' इत्यपपाठः ।
७. कोशे 'जग्धाधान०' इत्यपपाठः ।
८. कोशे '०सामान्या' इत्यपपाठः ।
९. ऋ० १०।९४।९ ॥

अंशुश्शमष्टमात्रः स्याद्[1] भवेद्वाऽप्यननाय शम्[2] ।
निर्वक्ष्यति[3] द्विधाप्यंशु वर्णसामान्यतः स्फुटम् ॥११३॥
अशेर्मध्यमनुप्राप्य[4] मकारस्तु यदा शमः ।
अनुस्वारीकृतस्तिष्ठेदुकारे[5] प्रत्यये तदा ॥११४॥
अंशुश्शमष्टमात्रः[6] स्याद् इति निर्वचनं भवेत् ।
अनुस्वार्यानितेरन्तं[7] शकारश्च शमो यदा[8] ॥११५॥
स्थाप्यते[9] प्रत्यये तस्मिन् अंशु[ः] [10]स्यादननाय शम् ।
तदा शवर्णसामान्यमिति व्याचक्षते बुधाः ॥११६॥
स्वरसामान्यमप्यस्ति पक्षयोरुभयोः स्फुटम् ।
अकारस्योपलब्धत्वात् तस्य ताभ्यां परिग्रहः ॥११७॥
नात्र स्याद् वर्णसामान्यम् अर्थसामान्यसम्भवात् ।
अंशुशब्देन भण्यन्ते सोमसूर्याग्निरश्मयः ॥११८॥
प्रथमाः शीतधर्माणः परे चाप्युष्णधर्मकाः ।
भास्वराश्चैव ते सर्वे तमसश्चापनोदकाः ॥११९॥
रूढस्तेष्वंशुशब्दोऽयम् एवंभूतेषु रश्मिषु ।
प्रवृत्तौ चैव तेष्वस्य निमित्तं द्विविधं स्थितम् ॥१२०॥
उष्णकालेऽष्टमात्राः[11] स्युः प्रथमास्सुखहेतवः ।
शीतकाले द्वितीयास्तु जीवनायोभयेऽपि वा ॥१२१॥
उष्णार्ताः शीतसंस्पृष्टाः शीतार्ताश्चोष्णरश्मिभिः ।
जीवन्ति हि सुखं सर्वे तेनैषामंशुशब्दनम् ॥१२२॥
शीतोष्णभास्वरान् धर्मान् त्यक्त्वा धात्वर्थमात्रया ।

---

१. कोशे '०मात्रं स्या' इत्यपपाठः । २. कोशे '०प्यननाशयम्' इत्यपपाठः ।
३. निरु० २।५॥ ४. कोशे 'अंशे०' इत्यपपाठः । धा० ५।१८ ।
५. कोशे 'अनुस्वारकृतस्तिष्ठेदकारे' इत्यपपाठः ।
६. कोशे '०मात्र' इति विसर्गरहितः पाठः । ७. धा० २।६१॥
८. द्र०—निरुक्तश्लोकवार्त्तिक २।२।३५–३७॥
९. कोशे 'स्थाप्यन्ते' इत्यपपाठः । १०. कोशे 'स्यादननशयम्' इत्यपपाठः।
११. कोशे 'उष्णकालेषु मात्रा स्युः' इत्यपपाठः ।

लतांशावंशुशब्दस्य प्रवृत्तिरुपपद्यते ॥१२३॥
लतांशौ[1] [2]प्राष्टमात्रे हि विधिना यज्ञकर्मणि ।
सुखमुत्पद्यते यष्टुः[3] कृतकृत्योऽस्म्यहं त्विति ॥१२४॥
रसायनप्रयोगे वा जीवनाय सुखं भवेत् ।
देवताभावमापन्नो जीवेद्वा सुखमेव सः[4] ॥१२५॥
अपाम सोमम्[5] इत्यादिर्मन्त्रवर्णश्च दृश्यते ।
अतो न वर्णसामान्याद् धातुरूपे विनिश्चिते ॥१२६॥
अर्थः[6] सामान्यसिद्धस्स्याद् इत्यर्थस्तेन विद्यते ।
रश्मिष्वपि प्रवृत्तस्य तथा धातुविनिश्चयात् ॥१२७॥
क्रियायोगावबोधस्स्यात्[7] स च तेनैव सिध्यति ।
अनुस्वारीकृतस्तावद् वर्णो योऽशुपदेऽस्ति हि ॥१२८॥
स शमोऽप्येकदेश[:] स्यात् तथा धात्वन्तरस्य[8] च ।
शकारोंऽशुशब्दे यः [9]सोऽप्यशेरपरस्य[10] वा ॥१२९॥
उक्तयोरेकदेशौ[11] चेद् उक्तोऽर्थ उपपद्यते ।
अनितेश्च [12]शमश्चैव यदा स्यातां तदाप्यसौ ॥१३०॥
रश्मयश्च तदात्मानो वर्णसामान्यतस्ततः ।
धातुनिश्चय एवेष्टः तस्मात्स्वार्थोऽस्य वर्तते ॥१३१॥
निबन्धनं विनिश्चित्य तत्सामान्याल्लतात्मके ।
अंशावस्य प्रवृत्तिस्स्याद् इत्येवं तद्विवक्षितम्[13] ॥१३२॥
जठरेऽपि जकारेण धातुरेवावसीयते ।

१. द्र०—निरुक्तश्लोकवार्त्तिक २।२।३८–४० ॥
२. कोशे 'प्राप्त०' इत्यपपाठः । ३. कोशे 'यष्टु' इत्यपपाठः ।
४. कोशे 'सा' इत्यपपाठः । ५. ऋ० ८।४८।३॥
६. कोशे 'अर्थ' इति विसर्गरहितः पाठः ।
७. कोशे 'क्रियायोगापबोध०' इत्यपपाठः ।
८. अनितेरित्यर्थः । ९. 'ऽप्यंशेरपरस्या' इत्यपपाठः ।
१०. शम इत्यर्थः । ११. कोशे 'उक्तं योरेक०' इत्यपपाठः ।
१२. कोशे '०शमेश्चैव' इत्यपपाठः । १३. कोशे 'तद्विवक्षितः' इत्यपपाठः ।

जग्धधानात्मको[1] वाऽपि [2]यद्वा जग्धधरात्मकः ॥१३३॥
नन्वत्र नार्थसामान्यम् अक्षरस्यैव तद् भवेत् ।
तथैव वर्णसामान्यं केवलं यत्र दृश्यते ॥१३४॥
तदेवोदाहरेन्नांशु[3] विशेषो वाऽभिधीयताम् ।
कठिने न च विज्ञातं[4] प्रवृत्तावस्य कारणम् ॥१३५॥
रश्मिष्विवांशुशब्दस्य[5] यदि स्यादभिधीयताम् ।
अत्रोच्यतेऽर्थसामान्यं यदंशावुपलभ्यते ॥१३६॥
नर्ते त[द्]वर्णसामान्यात् तेन तस्य परिग्रहः ।
जठरे नार्थसामान्यमिति [6]चाऽवादि यत्पुनः ॥१३७॥
मा भूद्विनैव तेनेष्टं[7] सिद्धमेव यथोदितम् ।
प्रवृत्तौ कठिने तस्य [8]कारणं नेति यत्तथा ॥१३८॥
उक्तं तत्रापि किञ्चित् स्याद् धातुजत्वे[9] व्यवस्थिते ।
एवं जठरशब्दस्य जठतिर्धातुरिष्यताम्[10] ॥१३९॥
काठिन्यगुणसंवादी [11]दृष्टाऽर्थानुगुणत्वतः ।
प्रकृतिर्यस्य शब्दस्य धातुपाठे न दृश्यते ॥१४०॥
अष्टाध्याय्यामुणादौ वा सा तस्यापि[प्र]कल्प्यते ।
धातुजत्वस्य सिद्धत्वाद् [12]ऊह्यमित्यभिभाषितम् ॥१४१॥
सामान्यादर्थविज्ञानं शिताम्नः[13] स्यात् तथोभयोः ।
शितामशब्दवाच्योऽर्थो[14] लोके सिद्धो न कश्चन ॥१४२॥

---

१. कोशे 'जग्धावा०' इति पाठः । २ कोशे 'यया' इत्यपपाठः ।
३. कोशे 'तदेवोदाहरेणांशु' इत्यपपाठः । ४. कोशे 'विज्ञानं' इति पाठः ।
५ कोशे '०वांशशब्दस्य' इत्यपपाठः । ६. कोशे 'यावादि' इत्यपपाठः ।
७ कोशे 'तेनैष्टं' इत्यपपाठः । ८. कोशे 'करणं' इत्यपपाठः ।
९. कोशे 'धातुजत्व व्यस्थिते' इति पाठः ।
१०. 'जठ काठिन्ये' इति धातुरूह्यः । अयमर्थोऽग्रे विस्तरेणोच्यते ।
११. कोशे 'दृष्ट्वार्थो०' इति पाठः । १२. तथा चोक्तम्—

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ महाभाष्य ३।३।१॥

१३. कोशे 'शीताम्न स्यात्' इत्यपपाठः । १४. कोशे सर्वत्रैव 'शीताम०' इत्यपपाठः ।

[यः]शब्दो दृश्यते वेदे तस्यार्थो ज्ञायते कथम् ।
यावन्न ज्ञायते ऽस्यार्थस्तावत् कर्म न सिध्यति ॥१४३॥
प्रकारादपि निर्दिष्टाद्[1] दृष्टेनास्यार्थवेदने ।
उपायो विद्यते कश्चिद् इति तस्य परिग्रहः ॥१४४॥
प्रस्तुतेष्ववदानेषु[2] पार्श्वादिषु पशोरिह ।
शितामाऽप्यवदानं[3] स्यात्[4] किञ्चिदित्यवगम्यते ॥१४५॥
तद्विशेषबुभुत्सायां द्वयसामान्यतस्तथा[5] ।
श्यामतस्त्वित्युपक्रम्य[6] [7]यकृत्तश्चेति वक्ष्यति ॥१४६॥
वर्णस्य हि शकारस्य मकारस्याक्षरस्य च ।
पदद्वयेऽस्ति[8] सामान्यमिति तन्निर्वचस्तथा ॥१४७॥
नातिप्रसङ्गदोषोऽस्ति प्रक्रमे स्यात् क्रियात्मनि ।
निरुक्तेरभ्युपायोऽयं यत्र नास्ति स्वरादिकः ॥१४८॥
तत्र किं कार्यमित्याह [9]न त्वेवेत्यथ भाष्यकृत् ।
प्रकारेणाविरुद्धेन कर्मानुष्ठानसिद्धये ॥१४९॥
यदा शितामशब्देन [10]दोर्योनिर्वाऽभिधीयते[11] ।
तदा नाक्षरसामान्यं वर्णसामान्यमेव वा ॥१५०॥
अर्थान्तरे[गते दृष्ट]मर्थसामान्यमप्यदः ।

---

१. कोशे 'निर्दिष्टा दृश्यते नास्या०' इति पाठः ।

२. कोशे 'प्रस्तुतेष्व पदं तेषु' इत्यपपाठः ।

३. कोशे 'शीतामाप्यपदानम्'इत्यपपाठः ।

४. अवदानेषु पश्वङ्गेषु पाठात् शितामनामकमपि किंचिद् अवदानं पश्वङ्गं स्यादिति सामान्येनावगम्यते । अवदानं नाम पशुहविषः परिमितभागस्योत्कर्तनम् उत्कृत्तभागो वा ।

५. कोशे 'द्वयसामान्यकस्तथा' इत्यपपाठः ।

६. द्र०—श्यामतो यकृत्त इति तैटीकिः ।……शितिमांसतो मेदस्त इति गालवः । निरुक्त ४।३॥ ७. कोशे 'यत्तृत्त०' इत्यपपाठः ।

८. द्वयोः पदयोः—शिताम-श्यामयोः पदयोः ।

९. न त्वेव न निब्रूयात् । निरु० २।१॥

१०. दोः शिताम भवति…योनिः शितामेति शाकपूणिः । निरुक्त ४।३॥

११. कोशे 'दोर्योनि वा०' इत्यपपाठः ।

शाखान्तरे [शितामेति दृष्टं] दोष्णो: क्रमे यदा ॥१५१॥
योनिर्वाऽथान्यशाखायां क्रमेणापि तदेष्यताम् ।
तेनैवोपांशुजं[1] यस्य दण्डिरित्यभिधा यथा ॥१५२॥
तथा तेनानयोरिष्टा शितामेत्यविरुद्धता ।
संस्कारस्य[2] पुरोक्तस्य निरुक्त्यङ्गस्य संप्रति ॥१५३॥
असम्भवे [ऽर्थसंम्बन्धे न] संस्कार:[3] प्रतीयते ।
हसेस्तन्प्रत्यये[4] रूपं हस्तशब्दस्य संस्कृतम् ॥१५४॥
नासौ येन [5]हसामश्चेत् क्रियासंगत्यभावत: ।
हस्तशब्दाभिधेयस्य पाणेर्लोकप्रसिद्धया ॥१५५॥
सम्बन्धो दृश्यते नैव क्रियया हसिवाच्यया ।
तया[6] चैवान्वितं दृष्टमास्यं [7]नास्यास्ति हस्तता ॥१५६॥
हसतीवाथ[8] चेद्धस्तो यथा स्याद्विरलाङ्गुलि: ।
एवं चेद्धस्तशब्दार्थो मुख्यस्तेऽन्य: प्रसज्यते ॥१५७॥
न ह्यास्ये हस्तशब्दस्य प्रयोगो लोकसम्मत: ।
पाणौ रूढस्य तस्यापि निमित्तं यद्धि संभवेत् ॥१५८॥
तदेव युज्यते वक्तुं न तु यन्नोपपद्यते ।
युज्यते हननं तस्य तत्र वृत्तौ निबन्धनम् ।१५९॥
तस्मात्तन्प्रत्यये[9] [10]हन्तेर्नकारस्य सकारत: ।
निर्वाच्यो हस्तशब्द: स्यात् न [11]हसेरिति गम्यते ॥१६०॥

---

१. अत्र कोशे पाठो भ्रष्ट: । २. न संस्कारमाद्रियेत । निरु० २।१॥

३. कोशे 'संस्कार' इति पाठ: ।

४. कोशे 'विनि स तत् प्रत्यये' इत्यपपाठ: । [धा० १।७५७]

५. कोशे 'येनासौ न घटाम०' इति पाठ: । अयमत्र भाव: येन हस्तवाच्ङ्गेन न हस।मश्चेत् क्रियासंगत्यभावत: स संस्कारो नादरितुं योग्य: ।

६. तया=हसिक्रियया । ७. अस्य=आस्यस्य हस्तता नास्ति ।

८. यदि हस्तो हसति तर्हि स विरलाङ्गुलि: सम्पद्यते । संकुलाङ्गुलेरेव हस्तत्वं प्रसिद्धम्, न लोके विरलाङ्गुले: । ९. कोशे 'तत् प्रत्यये' इत्यपपाठ: ।

१०. धा० २।२॥ ११. धा० १।७५७॥

शब्दशास्त्रविरुद्धं चेन्नाविरुद्धविरोधिता ।
प्रामाण्यं नहि[1] तस्यास्ति संस्कारो भ्रान्तिमूलकः ॥१६१॥
भ्रान्तेरवयवत्त्वं[2] च वृत्तीनां मूलमब्रवीत् ।
प्रवृत्तयस्तु शब्दानां वृत्तयः परिकीर्तिताः ॥१६२॥
पदेष्वक्षरसामान्यात्[3] संशयस्तासु जायते ।
पदस्य हस्त इत्यस्य हकारो यः प्रदृश्यते ॥१६३॥
हसिहन्त्योरसौ तु स्यात् सकारश्चाधिको भवेत् ।
तन्प्रत्ययविधाने[4] च सकारादेशनाद् ऋते ॥१६४॥
रूपसिद्धेर्लघीयस्त्वाद् भ्रान्तिश्शब्दविदां भवेत् ।
लघीयस्त्वेऽपि[5] रूपस्य तथार्थानुपपत्तितः ॥१६५॥
हन्त्यर्थस्योपपत्तेश्च[6] हस्तो हन्तेरितीरितम् ।
नह्यङ्गाङ्गानुरोधेन युक्तमर्थस्य बाधनम् ॥१६६॥
अर्थं प्रत्यंशभूतो[7] हि शब्दस्तस्य च संस्कृतिः ।
तस्मादर्थानुगुण्येन शब्दसंस्कार ऊह्यताम् ॥१६७॥
अर्थप्राधान्यतस्त्वेव [8]विभक्तीनां च सन्नतिम् ।[9]
भाष्यकृन्मन्यते न्याय्यां हृत्स्वित्येकं निदर्शनम् ॥१६८॥
हृदयानीति तत्रार्थो निर्दहेत्यस्य कर्मतः ।
अमीषां[10] चित्तमित्यस्यां भाष्यकारेण वक्ष्यते[11] ॥१६९॥
कारकाणां विशेषेऽपि विभक्तिर्या व्यवस्थिता ।

---

१. कोशे 'प्रामाण्ये न ह' इति पाठः ।
२. विशयवत्यो हि वृत्तयो भवन्ति । निरु० २।१॥
३. कोशे 'पदान्यक्षर०' इत्यपपाठः । ४. कोशे 'तत्प्रत्यये०' इत्यपपाठः ।
५. कोशे 'लघीयस्त्वे विरूपस्य' इत्यपपाठः । ६. कोशे 'हस्त्यर्थस्यो०' इत्यपपाठः ।
७. कोशे '०भूत्तोपि शब्दं तस्य च संस्कृतिम्' इति पाठः ।
८. कोशे 'वृत्तीनां' इत्यपपाठः । ९. यथार्थं विभक्तीः सन्नमयेत् । निरु० २।१॥
१०. तथा च मन्त्रवर्णः—
अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् । ऋ० १०।१०३।१२॥
११. निरुक्त १।३३ इत्यत्र ।

तदुक्तेन विशेषेण [1]वाक्यस्यार्थो यदा भवेत् ॥१७०॥
तदा कारकसामान्यं सम्बन्धात् तेन[2] लक्ष्यते ।
तेनापि तद्गतो भेदो वाक्यार्थे समवैति यः ॥१७१॥
सामान्यलक्षणा[3] धारा विशेषस्य हि लक्ष्यते ।
या सैव सन्नतिस्तासां नान्यथा नित्यवाचिनाम् ॥१७२॥
एवं निर्वचनोपायो विभक्तीनां च सन्नतिः[4] ।
सम्भवेदिति मत्वाह [5]यथार्थं त्विति भाष्यकृत् ॥१७३॥
वर्णसामान्यतश्चैव तथैवाक्षरसाम्यतः ।
शब्दनिर्वचनं न्याय्यमित्येवं प्रतिपादितम् ॥१७४॥
सिद्धं शब्दविदां तत्र दृष्टान्तोऽप्यधुनोच्यते ।
यथा धात्वादिशेषादौ धातुः सत्यपि गम्यते ॥१७५॥
वर्णादिनैकदेशेन तथैवेत्यवगम्यताम् ।
धात्वादी[6] एव शिष्येते प्रत्तावत्तपदे यथा ॥१७६॥
तथा जेठरमित्यादौ जकारोऽप्यत्रशिष्यते ।
नास्ति चेल्लक्षणं तत्र तदूह्यं स्यादितीरितम् ॥१७७॥
ददातेस्तत्[7] प्रपूर्वस्य प्रत्तमित्येतदिष्यते ।
द्यतेश्चा[प्य]वपूर्वस्य[8] [9]तथावत्तमितीदृशम् ॥१७८॥
निष्ठात्मके[10] तकारे हि [11]परभूते घुमंज्ञयोः[12] ।

---

१. कोशे 'वाक्यार्थो' इत्यपपाठः । २. कोशे 'तेनु' इत्यपपाठः ।
३. कोशे 'सामान्यलक्षणोद्वारं' इति पाठः । ४. कोशे 'सन्नतिम्' इत्यपपाठः ।
५. यथार्थं विभक्तीः सन्नमयेत् । निरु० २।१॥
६. प्रत्तमवत्तमिति धात्वादी एव शिष्येते । निरु० २।१॥
७. धा० ३।६॥ ८. धा० ४।४०॥ अत्र १२ निर्दिष्टा टिप्पणी द्रष्टव्या ।
९. कोशे 'तथावत्तमि०' इत्यपपाठः ।
१०. पाणिनीयम् 'अच उपसर्गात्तः' (अष्टा० ७।४।४७) लक्षणं व्याख्याति ।
११. कोशे 'परदूतेषु यज्ञयोः' इत्यपपाठः ।
१२. ददातेर्द्यतेश्च द्वयोरित्यर्थः । द्वावपि घुसंज्ञकौ । अत्र काशिकापाठोऽनुसंधेयः—'द्यतेरित्त्वादचस्त इत्येतद् भवति विप्रतिषेधेन । अवत्तं प्रत्तं जुहोति ॥ कशिका ४।७।५७॥

उपसर्गादजन्ताद् वै धात्वोश्च[1] परभूतयोः ॥१७९॥
तकारादेशभावः[2] स्याद् इष्टश्चाकारयोरसौ ।
अस्येत्येवानुवृत्तत्वाद्[3] द्वयोर्वा द्वितकारतः ॥१८०॥
चर्त्वे दकारयोश्चैव[4] संहितायां प्रसिध्यतः ।
प्रत्तावत्तपदे तावद् आदिशेषः कथं भवेत् ॥१८१॥
तकारो[5] मध्यमस्तत्र सवर्णे झरि लुप्यते ।
दकारावादिभूतौ तु शिष्येते तात्मना तयोः ॥१८२॥
एवं धात्वादिशेषः स्यादिति व्याचक्षते बुधाः ।
ननु व्यापत्तिरेवेयं तकारत्वाद् द्वयोरपि ॥१८३॥
जकारत्वे[6] दकारस्य यथा ज्योतिरितीदृशी[7] ।
आदेरेव क्वचित् सेष्टा क्वचिच्चैवोभयोरपि ॥१८४॥
क्वचिच्च सर्ववर्णानां [8]तद्यथा ह्यत्र दृश्यते ।
निघण्टव[9] इति त्वत्र सर्वव्यापत्तिरीरिता ॥१८५॥
आदेश्चैव[10] तथाऽन्तस्य क्वचिच्चेत्यभिधास्यते[11] ।
तथैव प्रत्तमित्यत्र सर्वव्यापत्तिरिष्यताम् ॥१८६॥

---

१. कोशे 'धातोचश्च' इत्यपपाठः । २. कोशे '०भावस्यात्' इत्यपपाठः ।

३. पाठोऽत्र भ्रष्टः प्रतीयते । अत्र काशिकापाठोऽनुसंधेयः—'उपसर्गादिति पञ्चमी निर्देशादादेरलः स्थाने प्राप्नोति । तत्र समाधिमाहुः अच इत्यावर्त्यते । तत्रैकं पञ्चम्यन्तमुपसर्गविशेषणार्थम्, अपरं षष्ठ्यन्तं स्थानिनिर्देशार्थमित्याकारस्य स्थाने भवति । द्वितकारो वा संयोगोऽयमिष्यते । सोऽनेकाल्त्वात् सर्वस्य भविष्यति ।' काशिका ७।४ ४७॥

४. कोशे 'च......दकारयोश्चैव' इति पाठः ।

५. 'प्र दा त' इत्यवस्थायाम् आकारमात्रस्य तादेशे 'प्र द त् त' इत्यवस्थायां मध्यमस्य तकारस्य **झरो झरि सवर्णे** (अष्टा० ८।४।६५)इति लोपे खरि च (अष्टा० ८।४।५) इति दकारस्य तकारादेशे रूपम् ।

६. द्र०—द्युतेरिसिन्नादेश्च जः (उ० २।११०) इत्यादिना इसिन् प्रत्ययो दकारस्य जकारादेशश्च विधीयते ।

७. कोशे '०रिन्द्रशीः' इत्यपपाठः । ८. कोशे 'यद्यथा यव' इत्यपपाठः ।

९. कोशे 'निघण्डव' इत्यपपाठः । १०. कोशे 'आदेच्चैव' इत्यपपाठः ।

११. अत्रैव प्रकरणे २६२ तमादयः श्लोका द्रष्टव्याः ।

अम्बुजः पङ्कजो गोद इत्यादावादिशेषता[1] ।
वक्तव्या यदि वाच्या स्यान्न प्रत्तादावभावतः ॥१८७॥
अपि त्वत्रान्तलोपस्य भवेदेतन्निदर्शनम् ।
अन्तलोपोऽपि[2] यत्र स्यात् तत्राप्यादिः प्रशिष्यते ॥१८८॥
आदिलोपश्च [3]यत्रेष्टस्तत्राप्यन्तोऽवशिष्यते ।
[विकारो वा स वाच्यः स्याद् वर्णस्तु]यत्र लुप्यते ॥१८९॥
व्यापत्तेश्च विकारस्य भेदो नैवोपलभ्यते ।
श्रुतस्य ह्यन्यरूपत्वमुभयत्रापि विद्यते ॥१९०॥
आद्यादीनां तथा लोपः पञ्चानां नैव विद्यते ।
वर्णान्तरात्मना यत्र दृश्यते[ऽन्यनिवर्तनम्] ॥१९१॥
सैव व्यापत्तिरत्रेष्टा [4]लुप्ते नावयवान्तरे ।
नाक्षरान्तरलोपश्च[5] न [6]प्रत्तावत्तशब्दयोः ॥१९२॥
ज्योतिरित्यादिके लोपो[7] न त्वन्यस्योपलभ्यते ।
व्यापन्नस्यापि लोपोऽस्ति यस्य नादेस्स शिष्यते ॥१९३॥
अव्यापन्नस्तथा [8]तिष्ठन् आदिशेषोऽभिधीयते ।
अम्बुजः पङ्कजो गोद इति यद्वत् त्वयेरितम् ॥१९५॥
अव्यापन्नस्य लोपोऽपि यस्यान्तस्येष्यते क्वचित् ।
तत्र त्वेवान्तलोपोक्तिरिति भेदोऽनयोरयम् ॥१९५॥
गत्वेत्य[त्रा]न्तलोपेऽपि[9] नादिरेवावशिष्यते ।
अकारो मध्यमश्चापि नादिशेषस्ततस्त्विह ॥१९६॥
तत्रैव त्वादिशेषोक्तिर्यत्रादेरेव शेषता ।

---

१. अम्बुजपङ्कजयोर्जनेष्टिलोपे गोदे च ददातेराकारलोपे यथासंख्यमाद्योर्जकारदकारयोः शेष इत्यर्थः । २. कोशे 'अन्तलोपे०' इत्यपपाठः ।
३. कोशे 'तत्रेष्टः' इत्यपपाठः, उत्तरत्र 'तत्र' श्रवणात् ।
४. कोशे 'लुप्तो' इत्यपपाठः ।
५. द्वौ नञौ प्रकृतमर्थं ब्रूत इति न्यायेन प्रत्तावत्तयोरक्षरान्तरलोपोऽस्त्येवेत्यभिप्रायः ।
६. कोशे 'प्रत्तापत्तश०' इत्यपपाठः । ७. कोशे 'लोपे' इत्यपपाठः ।
८. कोशे 'तिष्ठद्' इत्यपपाठः । ९. कोशे '०लोपोऽपि' इत्यपपाठः ।

आदिलोपेऽन्तशेषस्तु [1]भिन्नः सोऽप्यन्तशेषतः ॥१९७॥
आद्यादिनानुरक्तत्वात्[2] तथा [3]लोपात् प्रभिद्यते ।
विकारः[4] स्वर आदिष्टः स्वरस्य व्यञ्जनस्य वा ॥१९८॥
व्यञ्जनान्तरमादिष्टं[5] व्यापत्तिर्व्यञ्जनस्य तु ।
आदिशेषादिलोपौ तु लोपोऽन्तस्य तथापरः ॥१९९॥
उपधायास्तथा लोपो विकारश्च तथा क्वचित् ।
आद्यन्तयोर्विपर्यास आदेर्व्यापत्तिरेव च ॥२००॥
अन्तस्येष्टा क्वचित्सैव तथा वर्णागमोऽपरः ।
एकादशविधस्त्वेवं[6] भाष्यकारेण वर्णितः ॥२०१॥
शेषो[7] लोपो विकारश्च विपर्यासस्तथागमः ।
पञ्चधैव परैरिष्टश्चतुर्धेत्यपरे विदुः ॥२०२॥
शेषस्य लोपनिष्ठत्वाद्[8] [9]व्यापत्तिर्विकृतिः स्फुटम् ।
व्यापत्तौ च विकारे च श्रुतान्यत्वस्य साम्यतः २०३॥
प्रत्ते[10] चैव तथावत्ते यथादेशशेषतेष्यते ।
उपसीति[11] तथैव स्याद् वर्णसामान्यसिद्धये ॥२०४।

---

१. कोशे 'भिस्स सोप्यन्तरं जितः' इत्यपपाठः ।

२. आद्यादिना विशिष्टत्वाच्छेषो लोपाद् भिद्यत इति भावः ।

३. कोशे 'लोपा' इत्यपपाठः ।

४. कोशे 'विकार स्वर' इति पाठः ।

५. कोशे 'मादिष्ट' इत्यपपाठः ।

६. विशयवर्तीनां वृत्तीनां भेद एकादशविधः । एकादशविधत्वं भाष्यकारोक्तं क्रमश एवं ज्ञेयम्— १. आदिशेषः, २. आदिलोपः, ३. अन्तलोपः, ४. उपधालोपः, ५. उपधाविकारः, ६. वर्णलोपः, ७. द्विवर्णलोपः, ८. आद्यन्तयोर्विपर्यासः, ९. आदेर्व्यापत्तिः, १०. अन्तस्य व्यापत्तिः, ११. वर्णागमः । अत्र तु टीकाकृता षष्ठसप्तमभेदौ न परिगणितौ । ग्रन्थपातो वात्र संजातः स्यात् ।

७. कोशे 'शेषे' इत्यपपाठः ।

८. लोपनिष्ठत्वात् लोपे जाते शेषस्य स्वयं सिद्धत्वादित्यर्थः ।

९. कोशे 'व्यापत्तेर्विकृतिः' इत्यपपाठः ।

१०. कोशे 'वृत्ते चैव तथापत्ते' इत्यपपाठः ।

११. कोशे 'उपनीति' इत्यपपाठः ।

आदिलोपो[1] [2]यथेष्टोऽस्तेः[3] स्तस्सन्तीत्यादिके पदे।
ऋदूदरे[4] मकारस्य तथादेर्लोप इष्यताम् ॥२०५॥
निवृत्तिश्चेह[5] सामर्थ्याद् गुणादेरवगम्यताम्।
कितश्चैव ङितश्चैव स्थानानि प्रत्ययास्तथा ॥२०६॥
ङित्यस्तेरादिलोपः स्यात्[6] स्तस्सन्तीति यथोदितम्।
अनुनासिकलोपोऽयं अन्तलोप[7] इतीरितम् २०७॥
क्ङित्यसाविष्यते[8] चैव गत्वेत्यादिसमीरणात्।
जग्मतुर्जग्मुरित्येवमुपधा[9] क्ङिति [10]लुप्यते ॥२०८॥
प्रत्तादावादिशेषो[11] हि यथेष्टो[12] लोकवेदयोः।
तथैवासीन[13] इत्यस्याम् उपसीत्यादिशेषता ॥२०९॥
तिष्ठतेरुपपूर्वस्य[14] कृते कप्रत्यये त्विदम्।
उपस्थ इति रूपं [15]स्यान्न्याय्यमादिर्यदा पुनः ॥२१०॥
सकारः शिष्यते रूपम् उपसीति तदा भवेत्।
स्तस्सन्तीत्यादिलोपश्च[16] यथास्तेरिष्यते[17] त्वया ॥२११॥

---

१. अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति। निरु० २।१॥

२. कोशे 'यथेष्टस्ते' इति पाठः। ३. धा० २।५६॥

४ कोशे 'ऋतूदरे' इत्यपपाठः। ऋदूदरेण सख्या सचेय। ऋ० ८।४८।१०॥ निरु० ६।४॥ ५. निरुक्तोक्ते 'निवृत्तिस्थानेषु' पाठे।

६. कोशे '०लोपस्य स्त०' इत्यपपाठः। ७. कोशे 'अनुलोप' इत्यपपाठः। अथाप्यन्तलोपो भवति गत्वा गतमिति। निरु० २।१॥

८. कोशे 'ङित्यस्याविष्यते' इत्यपपाठः। अनुदात्तोपदेशवनति० (अष्टा० ६।४।३७) सूत्रेणेति भावः।

९. अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति। निरु० २।१॥

१०. गमहनजनखनघसां लोपः (अ० ६।४।९८) इति सूत्रेण।

११. पूर्वं (श्लो० २०४—२०८) दिङ्मात्रं निर्दिश्य विस्तरेणाद्य निरूप्यते।

१२. कोशे 'यथेष्टा' इत्यपपाठः।

१३. आसीन ऊर्ध्वामुपसि क्षिणाति। ऋ० १०।२७।१३॥ निरु० ६।६॥

१४. धा० १।९७५॥ १५. कोशे 'स्यान्नयार्यमादि०' इत्यपपाठः।

१६. कोशे 'स्तस्समित्या०' इत्यपपाठः। १७. धा० २।५६॥

मृद्गूदरादिलोपे च तथा मे स्याद् ऋद्गूदरम् ।
अन्तलोपो [1]गमेर्यद्वद् गत्वेत्यादौ त्वयेष्यते ॥२१२॥
तथा शुरुध इत्येवं शुचेरन्ते[2] विलोपिते ।
भवेद् [3]ऋतस्य हीत्यस्यां चकारे[4] रूपमीदृशम् ॥२१३॥
जग्मतुर्जग्मुरित्यादावुपधा[5] लुप्यते यथा ।
तथा [6]कदा वसोर्मन्त्रे [7]श्मशेत्यत्रापि लुप्यते ॥२१४॥
अकारश्चोपधा तस्य श्मशैव स्याद्विपर्यये[8] ।
अशेरप्रत्ययेऽथापि[9] रूपमेतदशेति[10] तु ॥२१५॥
उपधाया[11] विकारश्च यथा राजेति संश्रितः ।
तथा [12]श्रायन्त इत्येवं विकारश्छान्दसो भवेत् ॥२१६॥
श्रयतेः[13] शतृयुक्तस्य शपि स्याच्च कृते त्वियम्[14] ।
गुणायादेशसद्भावे[15] [16]श्रायन्त इति रूपता ॥२१७॥
यथाप्येकस्य वर्णस्य[17] लोपस्तत्वेति[18] संश्रितः ।
तथा [19]कत्पयमित्यत्र सकारस्यापि वैदिकः[20] ॥२१८॥

---

१. कोशे 'नमेर्यद्वा' इत्यपपाठः । [धा० १।१०३१॥]

२. धा० १।१९८॥

३. तथाहि मन्त्रः—ऋतस्य हि शुरुधः सन्ति पूर्वीः । ऋ० ४।२३।८॥ निरुक्त ६।१६; १०।४१॥ ४. चकारे विलोपिते इत्यर्थः । ५. कोशे '०जंग्म इत्या०' इत्यपपाठः ।

६. तथाहि मन्त्रः—कदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः । ऋ० १०।१०५।१॥ निरु० ५।१२॥ ७. कोशे 'दिशे०' इत्यपपाठः। ८. लोप इत्यर्थः ।

९. धा० ५।१८॥ १०. शम+अशा=श्मशा । अत्रागेरुपधाया अकारस्य लोपः ।

११. अथाप्युपधाविकारो भवति राजा दण्डीति । निरु० २।१॥

१२. श्रायन्त इव सूर्यम् । ऋ० ८।९९।३॥ निरु० ६।८॥

१३. कोशे 'श्रयते' इति विसर्गरहितः पाठः । [धा० १।९४५॥

१४. इयं रूपतेत्यन्वयः । १५. गुणेऽयादेशेऽवर्णस्य दीर्घत्वे चेत्यर्थः

१६. कोशे 'प्रायन्त' इत्यपपाठः ।

१७. अथापि वर्णलोपो भवति तत्वा यामीति । निरु० २।१॥

१८. कोशे '०तत्रेति संज्ञितः' इत्यपपाठः ।

१९. कोशे 'कल्पयदित्यत्र' इत्यपपाठः । २०. कोशे 'वैदिकम्' इत्यपपाठः ।

त्यं[1] चिदित्थेति मन्त्रेऽस्मिन् यत्पदं कत्पयं त्विति[2] ।
तद्गतस्य सकारस्य लोपे स्यात् तद्धि तादृशम् ॥२१९॥
मेघः सुखपयास्तत्र भाष्यकारेण वक्ष्यते[3] ।
कं शब्दस्य [4]मकारोऽथ व्यापन्नस्तत्त्वरूपतः ॥२२०॥
तत्त्वा यामीति नैवेदं प्रतीकं स्यादृचस्तथा ।
तत्त्वेत्येतावदेवेह वर्णलोपनिदर्शनम् ॥२२१॥
यामीत्यनुप्रयोगोऽयमस्यैवेत्यवगम्यते ।
नैवोदाहरणान्येवं[5] लौकिकानि प्रकृत्य हि ॥२२२॥
अकस्माद् युज्यते वक्तुं वैदिकं तेन लौकिकम् ।
त्वाप्रत्यये [6]तनोतेः स्याद् रूपं [7]तत्त्वेति पाक्षिकम् ॥२२३॥
इडभावे तनित्वेति भवेदिट्पक्ष ईदृशम् ।
अनुनासिकलोप[:] स्यात् प्रथमे कित्त्वहेतुकः ॥२२४॥
द्वितीये तु न [8]लोपः स्यान् न क्त्वा[9] सेडित्यकित्त्वतः ।
तत्त्वेत्यप्यन्तलोपस्य भवेदेतन्निदर्शनम् ॥२२५॥
सत्यं तथापि तत्त्वेति पूर्वमेव निर्दशितम् ।
कः पुनर्वर्णलोप[:] [10]स्यादिडभावस्तु पाक्षिकः[11] ॥२२६॥
याचत्यर्थे च यामीति निघण्टुष्वेव पठ्यते[12] ।
यातेरेव[13] ततोरूपं[14] याच्ञार्थस्य स जायते ॥२२७॥

---

१. तथा च मन्त्रः—त्यं चिदित्था कत्पयम् । ऋ० ५।३२।६।। निरु० ६।३।।
२. कोशे 'कल्पयन्त्विदि' इत्यपपाठः । ३. निरुक्त ६।३—सुखपयसम्, सुखमस्य पयः ।
४. कोशे 'मकालोप व्यापन्नस्त्वत्ररूपतः' इत्यपपाठः ।
५. नैवपदस्योत्तरेण वक्तु पदेन सम्बन्धः । स्कन्दस्वाम्यपीत्थमेव व्याचख्यौ ।
६. कोशे 'ततो ते' इत्यपपाठः । [धा० ८।१]
७. कोशे 'तस्येति' इत्यपपाठः । ८. कोशे 'लोपे' इत्यपपाठः ।
९. कोशे 'सेडित्यवित्वतः' इत्यपपाठः । द्र०—अष्टा० १।२।१८।
१०. कोशे 'स्यादि स भावेस्तु' इत्यपपाठः ।
११. उदितो वा (अष्टा० ७।२।५६) इतीटो वैकल्पिकत्वादिकाराभाव एवात्र वर्णलोप इत्याशयः । १२. निघण्टु:—३।१९।। १३. कोशे 'यतेरेव' इत्यपपाठः । [धा० २.४०]
१४. कोशे 'रूप याज्ञार्थस्य न' इत्यपपाठः ।

न वर्णलोपक्लृप्तिश्च यातेस्तादर्थ्यसम्भवे ।
अर्थापत्तिक्षयाद्[1] युक्ता लक्षणेन विना तथा ॥२२८॥
अतः पर्यायतैव स्याद् यामियाचामिशब्दयोः ।
यामीत्यपि भवेदेतत् यद्वोदाहरणान्तरम् ॥२२९॥
लौकिकं[2] याचतेरेव[3] चकारश्चैव लुप्यते ।
शब्दशास्त्रान्तरे सिद्धमाकारस्सन्निकृष्यते[4] ॥२३०॥
प्रसिद्धश्चैव दृष्टान्तो लौकिको न तु वैदिकः ।
असिद्धत्वादसिद्धश्च प्रसिद्धे न प्रसाध्यते ॥२३१॥
लक्षणेन तु सिद्धस्स्याद् वैदिकस्स[5] तृचो यथा ।
तृचवद् वा भवेदेतत्[6] तत्वा यामीति वैदिकम् ॥२३२॥
स्वरः सन्धीयते तत्र चकारस्त्वेव लुप्यते ।
इडभावो न लोपः स्यात् तत्र लोपाप्रसिद्धिनः ॥२३३॥
रूपसिद्धेर्लघीयस्त्वे यातेरप्यर्थसम्भवे ।
शब्दशास्त्रान्तरे याचेर्यामीत्येतत् किलेष्यते ॥२३४॥
तदायुर्यामि[7] याचामि ब्रह्मणा[8] त्वामहं स्तुवन् ।
आयुरेव तदाशास्ते यजमानोऽपि वै स सः ॥२३५॥
हविर्भी राजसूयस्थैरक्रुध्यञ्छृणु[9] मे वचः ।
उरुशंस[10] बृहत्स्तोत्र मा न आयुर्विनोनशः ॥२३६॥

---

१. न युक्तेत्यन्वयः । २. धा० १।९१६॥
३. कोशे 'कारणश्चैव' इत्यपपाठः ।
४. चकारलोप आकारद्वयं दीर्घैकादेशेन सन्धीयत्त इत्यर्थः ।
५. कोशे 'वैदिकस्य' इत्यपपाठः । ६. तथा च मन्त्रः—
तत्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥ ऋ० १।२४।११॥
७. तत्वा यामीति मन्त्रं विवृणते—तदायुरिति ।
८. कोशे 'ब्रह्मणास्त्वामहं' इत्यपपाठः ।
९. कोशे '०रकुर्याच्छृणु' इत्यपपाठः ।
१०. कोशे 'गुरुशंस' इत्यपपाठः ।

इत्येवं प्रार्थयामास शुनःशेपः[1] प्रचेतसः ।
ऋचि[2] त्रेरिति वाक्येन[3] त्रिशब्दस्य प्रसारणम् ॥२३७॥
ऋकारस्य तथा लोपम् ऋक्शब्दादेः प्रचक्षते ।
इकारो[4] यत् त्रिशब्देऽभूत् तस्य चानुपलब्धितः ॥२३८॥
ऋक्शब्दस्यादिलोपाच्च वर्णयोर्लोप ईरितः[5] ।
तृचशब्दे यथा लोपो [6]वर्णयोरिष्यते द्वयोः ॥२३९॥
अलातृणपदे[7] तद्वत् तत्रोह्यं लक्षणं भवेत् ।
लौकिको वैदिको वापि शब्दो यो दृश्यते यथा ॥२४०॥
तथै[व]तस्य वक्तव्यं लक्षणं नास्य वारणम् ।
शब्दलक्षणशास्त्रस्य दृष्टशब्दानुसारितः[8] ॥२४१॥
व्याप्त्यभावे[9] भवेदूह्यमिति शब्दविदां मतम् ।
अलमाङुपसृष्टस्य ल्युडन्तस्य [10]तृदेरिदम्[11] ॥२४२॥
अलमातर्दनो मेघ इति[च]वक्ष्यते[12] यथा ।
न्याय्यमेवं[13] भवेद् रूपं छान्दस[:]स्यादलातृणः ॥२४३॥
दकाराकारलोपौ तु धातुप्रत्यययोरिह ।
आत्वं चैव मकारस्य विज्ञेयं[14] स्यात् तथालमः[15] ॥२४४॥

१. कोशे 'शुनःशेफः प्रचेतसा' इति पाठः ।

२. तथा च वार्त्तिकम्—ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि । महाभाष्य ६।१।३७॥

३. वाक्यशब्दो वार्त्तिकपरः । अत एव वार्त्तिककारो वाक्यकार इत्यप्युच्यते वैयाकरणैः ।

४. कोशे 'ऋकारो' इत्यपपाठः ।

५. अथापि द्विवर्णलोपस्तृच इति । निरु० २।१॥

६. कोशे 'वर्णतेरिष्यते' इत्यपपाठः ।

७. ऋ० ३।३०।१०॥

८. प्रयुक्तशब्दानुसारित्वादित्यर्थः ।

९. लक्षणस्येति शेषः ।

१०. धा० ७।६॥

११. कोशे 'तृदेरितम्' इत्यपपाठः ।

१२. निरुक्त ६।२॥

१३. कोशे 'न्यायमेव' इत्यपपाठः ।

१४. कोशे 'विज्ञेया' इत्यपपाठः ।

१५. कोशे 'तथामल.' इत्यपपाठः । सत्यामेवं कल्पनायामपि ल्युटि प्राप्तस्य गुणस्य वारणं छान्दसत्वादेव सम्भवति ।

लोपेन[1] वर्णयोरेवं वैदिकेनैव[2] वैदिकः ।
शब्दशास्त्राप्रसिद्धेन[3] साध्योऽसिद्धो यथाक्रमम् ॥२४५॥
विपर्यासो[4] यथैवेष्टः [5]स्तोकाद्याद्यन्तयोस्तथा[6] ।
मधुपर्जन्यताल्वादौ भवतीत्यवधार्यताम् ॥२४६॥
धमतेर्विपरीतस्य[7] मध्वित्येवं हि वक्ष्यते[8] ।
आद्यन्तविपरीतस्य तृपेः पर्जन्य इत्यपि[9] ॥२४७॥
लततेर्विपरीतस्य तथा तालु तलं यथा[10] ।
स्तोकान्तिकेति[11] निर्देशात् स्तोकशब्दस्य साधुता ॥२४८॥
पाणिनीयेऽपि सिद्धैव प्रकृतिप्रत्ययौ पुनः ।
ऊह्यावाख्यातजत्वेन [12]श्चुतेस्तौ कल्पितौ बुधैः ॥२४९॥
श्चुतेरप्रत्ययान्तस्य[12] [13]सकारं चापनीय तु ।
चकारं[14] च तकारं च विपर्यस्य परस्परम् ॥२५०॥
गुणे कुत्वे कृते चैव स्तोकशब्दः प्रसिध्यति ।
श्चुत्यर्थेन च संबन्धस्तथैष मन्त्रवर्णतः[15] ॥२५१॥
घृतवन्त[16] इति त्वस्यां स्तोका[:]श्चोतन्ति मेदसः ।
क्षरन्तश्चोपलभ्यन्ते मेदसो[17] बिन्दवस्तथा ॥२५२॥

---

१. कोशे 'लोपो न' इत्यपपाठः ।

२. कोशे 'वैदिकेने' इत्यपपाठः । ३. कोशे 'शब्दशास्त्र प्रसिद्धेन' इति पाठः

४. अत्राकरग्रन्थविपर्यासः समजनि । यथाकरं द्विवर्णलोपानन्तरम् आदिविपर्ययो व्याख्येयः, ततश्चाद्यन्तविपर्ययः । स्कन्दव्याख्यायामप्ययमेव क्रमोऽनुस्रियते ।

५. अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्क्विति । निरु० २।१॥

६. यथाकोशं पाठः । ७. कोशे 'समेते०' इत्यपपाठः ।

८. निरुक्त १०।३१॥ ९. निरुक्त १०।१०॥ १०. निरुक्त ५।२६॥

११. कोशे 'योन्तिकेति' इत्यपपाठः । द्र०—अष्टा० २।१।३८॥

१२. कोशे 'श्च्युते०' इति पाठः । [धा० १।४०]

१३. कोशे 'सकारञ्चेपनीय' इत्यपपाठः । अपनीय=पृथक्कृत्य न तु विलोप्य । स्कन्दस्तु 'श्च्युतेर्यकारमपनीय' इत्यवोचत् । १४. कोशे 'चकारञ्चे तकारस्य' इत्यपपाठः ।

१५. कोशे 'श्च्युत्यर्थेन च सम्बन्धः तथैषां मन्त्रवर्जितः' इत्यपपाठः ।

१६. ऋ० ३।२१।२॥ १७. कोशे 'मेधसो' इत्यपपाठः ।

सृजेरुप्रत्ययान्तस्य[1] गुणे हि रसकारयोः[2] ।
विपर्यये कृते चैव सकारस्य च जश्त्वतः ॥२५३॥
श्चुत्वे[3] चैव कृते रूपं रज्जुरित्यवतिष्ठते[4] ।
सृज्यते जन्यते यस्मात् तस्माद् रज्जुरिति स्मृता ॥२५४॥
सृजेरुप्रत्यये त्वस्य विना चैव विपर्ययात् ।
कृत्वाऽसुमागमं[5] चैव [6]यणादेशं ततः परम् ॥२५५॥
सकारस्यादिभूतस्य[7] लोपे रज्जुस्तु[8] पूर्ववत्[9] ।
नात्रोदाहरणं[10] पक्षे भवेदेतद् विपर्यये ॥२५६॥
विना विपर्ययेणैव लक्षणेन[11] प्रसिध्यति ।
रज्जुशब्दे कथं चैवं भाष्यकारेण वर्णितम् ॥२५७॥
शब्दशास्त्रान्तरे त्वेवं सिद्धमित्यभिधीयताम् ।
लघुत्वञ्चैवमस्येति नानुदाहरणं ततः ॥२५८॥
लक्षणात् पाणिनीयाद्वा भवेदेतत् पुरातनम् ।
ततश्च युज्यते वक्तुमेवं वर्णविपर्ययः ॥२५९॥
कसेर्विपर्यये[12] रूपं कसयोस्सिकतास्त्विति ।
अकारस्य तथैवेत्त्वं[13] प्रत्ययोऽप्यत इत्ययम् ॥२६०॥

---

१. धा० ४।६६॥ २. कोशे 'गुणे रहसकारयोः' इत्यपपाठः ।

३. जश्त्वेन (अष्टा० ८।४।५२) दकारः, श्चुत्वेन (अष्टा० ८।४।३९)जकारः । भृज्जति-निर्देशाद् (अष्टा० ६।१।१६) नासिद्धत्वमित्यभिमानः ।

४ सृज् उ=सर् ज् उ=र् अस् ज् उ=र् अ द् ज् उ=र् अ ज् ज् उ=रज्जुः ।

५. द्र०—उणादिसूत्रम्—सृजेरसुं च (१।१५), सलोपश्चोपरिष्टादनुवर्तते । तेन स् ऋ अस् ज् उ=स् रसु ज् उ=रस् ज् उ=रज् ज् उ=रज्जुः ।

६. कोशे 'यन्नादेशं' इत्यपपाठः ।

७. कोशे 'सकारस्याभिभूतस्य' इत्यपपाठः ।

८. कोशे 'रज्जुस्त' इत्यपपाठः ।

९. 'पूर्ववत्' इत्यनेन सकारस्य जश्त्वश्चुत्वे उच्येते । यथा वर्णविपर्ययपक्षे सृजेः रज्जुशब्दसिद्धौ तथैव सृजेरसुमागमपक्षेऽपीत्यर्थः ।

१०. कोशे 'नत्रोदाहरणं' इत्यपपाठः । ११. लक्षणेन उणादिसूत्रेणेति भावः ।

१२. धा० १।६१३॥ १३. कोशे 'तथैवत्वं' इत्यपपाठः ।

एवं विकसनादेव सिकताः परिकीर्तिताः[1] ।
कृतेरुप्रत्यये[2] चैव विपर्यासे कृतात्मनोः ॥२६१॥
गुणे [तर्क्व] ति रूपं स्याद् मध्वादौ [3]तद्वदिष्यताम् ।
व्यापत्तौ[4] च यथा त्वादेर्ज्योतिरित्यादिरिष्यते ॥२६२॥
दकारस्य जकारेण [5]व्यापत्तौ गुणतस्तथा ।
सकारस्य शकारेण[6] तथा श्वघ्नीति सिध्यति ॥२६३॥
हकारस्य घकारेण[7] [8]हन्तेर्व्यापत्तिस्तथा ।
उप्रत्यये[9] कृते रूपं बिन्दुरित्यवतिष्ठते ॥२६४॥
बिन्दुशब्दं [10]भिदेरन्यं पूर्ववत् स्यादुदाहृतिः ।
भकारस्य बकारेण [11]भटेर्व्यापत्तितस्तथा ॥२६५॥
ण्यप्रत्यये[12] तथा वृद्धौ ब्राटच इत्यवतिष्ठते ।
बटेरेव[13] यदा रूपं तदाप्युक्ता समर्थता[14] ॥२६६॥
व्यापत्तौ[15] च यथान्तस्य[16] [17]वहेरोघ इतीष्यते ।
तथैव [18]द्योततेर्द्युम्नं तकारस्य मकारतः ॥२६७॥

---

१. अपि द्र०—महाभाष्यं हयवरट् सूत्रे ।

२. धा० ६।१४१६॥ ३. कोशे 'मद्वदिष्यताम्' इत्यपपाठः ।

४. अथाप्यादिव्यापत्तिर्भवति ज्योतिर्घनोबिन्दुर्बाटच इति । निरु० २।१॥ अयं पाठः स्कन्दभाष्याद् उदिध्रयते, नीलकण्ठस्य तदनुसारित्वात् । निरुक्तकोशेष्वत्र 'अथाप्यादिविपर्ययो भवति...' इति पाठ उपलभ्यते । ५. द्युतेरिसिन्नादेश्च जः । उ० २।११२॥

६. अयं भावः—स्वं हन्ति स्वघ्नी=शकारापत्त्या—श्वघ्नी । निरु० ५।२२॥

७. मूर्तौ घनः । अष्टा० ३।३।७७॥ ८. धा० २।२॥

९. अतः पूर्वं कदाचित् 'भकारस्य बकारेण भिदेर्व्यापत्तितस्तथा' इति श्लोकार्द्धं लुप्तः स्यात् । तथा सति, अग्रिमे श्लोकार्द्धे 'बिदेरन्यं' इति पाठेन भाव्यम् । स्कन्दग्रन्थोऽस्याः सम्भावनाया आधारः । १०. धा० ७।२॥ ११ कोशे 'हृदेर्व्यापत्ति०' इत्यपपाठः । [धा० १।३२६॥

१२. कोशे 'न्य प्रत्यये' इत्यपपाठः ।

१३. कोशे 'इटेरेव' इत्यपपाठः । अत्र स्कन्दव्याख्यासम्पादकस्य टिप्पणी द्रष्टव्या (निरुक्तभाष्यटीका भाग २, पृ० १३, टि० १३) । १४. कोशे 'समर्थका' इत्यपपाठः ।

१५. अथाप्यन्तव्यापत्तिर्भवति । ओघो मेघो नाघो गाधो वधूर्मध्विति । निरु० २।१,२॥

१६. कोशे 'यथोक्तस्य' इत्यपपाठः । १७. धा० १।१०५३॥

१८. कोशे 'द्योतते द्युम्न' इत्यपपाठः । [धा० १।७७७] । निरु० ५।५॥ ऋ० ७।२५।३॥

प्रसारणे गुणे कुत्वे वहेरप्योघ इष्यते ।
मिहेर्मेघस्तथैव[1] स्याद् वर्जयित्वा प्रसारणम् ॥२६८॥
हकारस्य [2]णहेर्घातोर्दीर्घत्वे चोपधात्मनः ।
नाधो घञि[3] तथा [4]गाधो [5]गाहेरित्यवगीयते ॥२६९॥
वहेरूप्रत्यये[6] घत्वे हकार[स्य]वधूस्तथा ।
मदेरुप्रत्यये[7] घत्वे दकारस्य[8] तथा मधुः ॥२७०॥
असिद्धं पाणिनीये तत् यत् किञ्चिदिह वर्ण्यते ।
शब्दशास्त्रान्तरे सिद्ध[मित्यास्थेयं मनीषिभिः] ॥२७१॥
आस्थ[द्][9] द्वारो भरूजेति [10]वर्णस्योपजनो यथा ।
तथैव[11] वाजपस्त्यादौ [12]सकारादेरिति स्थितिः ॥२७२॥
लुङ्चस्यतेस्थकार[:][13] स्यादुपजातो[14] यदाधिकः ।
तदास्थ[द्]इति रूपं स्याद् द्वारो [15]वारयतेर्यदा ॥२७३॥
दकारस्तु तदेष्टस्स्यात् तस्यैवोपजनस्तथा ।
ऊकारश्च [16]भृजेरिष्टो भरूजा येन सिध्यति ॥२७४॥
चतुर्धा पञ्चधा वापि यद्वैकादशधाऽपि वा ।
आदिशेषादयो[17] लोके वेदे चाप्युपपादिताः[18] ॥२७५॥

---

१. कोशे 'मिघेर्मेघ०' इत्यपपाठः। [धा० १।१०४१]
२. कोशे 'णहेर्धात्वोर्दीघत्वे' इत्यपपाठः । [धा० ४।५७]
३. कोशे 'घणि' इत्यपपाठः । ४. कोशे 'गाधं' इत्यपपाठः ।
५. धा० १।६८०॥ ६. कोशे 'वहेरु०' इत्यपपाठः । [धा०१।१०५३]
७. धा० १०।१६५॥
८. कोशे 'भकारस्य' इत्यपपाठः । स्कन्दस्तु—मनेरुकारप्रत्यये नकारस्य व्यापत्तिर्वकारेण –इत्याह । ९. अथापि वर्णोपजन आस्थद् द्वारो भरूजेति । निरु० २।२॥
१०. कोशे 'वस्त्रोभजनो' इत्यपपाठः । ११. कोशे 'तथैवा जपत्यादौ' इत्यपपाठः ।
१२. ऋ० ६।६८।१२॥ निरु० ५।१५॥
१३. कोशे 'लटचर्घ्यते०' इत्यपपाठः । [धा० ४।१००]
१४. कोशे '०जाते यथाधिकः' इत्यपपाठः । १५. धा० १०।२७१॥
१६. कोशे 'कृतेरिष्टो' इत्यपपाठः । [धा० १।१।९१]
१७. कोशे 'आदिशेषोदयो' इत्यपपाठः । १८. कोशे '०पादितम्' इत्यपपाठः ।

तद्यत्रेत्यादिनेदानीम्[1] अन्योपायाभिधित्सया ।
शब्दशास्त्रप्रसिद्धं तु किमप्येवमनूद्यते ॥२७६॥
स्वरादनन्तरान्तस्था यत्रान्तर्धातु विद्यते ।
स्थानं द्विप्रकृतीनां तत् प्रदिशन्तीह[2] सूरयः ॥२७७॥
अकारादिः[3] स्वरस्तात्रद् अन्तस्था [4]यादिरुच्यते ।
अन्तर्धात्विति चानेन सैव[5] धातौ व्यवस्थिता ॥२७८॥
अनन्तरेति निर्दिष्टा व्यवधानविवर्जिता ।
पुरस्ताद्वाऽप्यकारादेः [6]परस्ताद्वा व्यवस्थिता ॥२७९॥
स्थानं प्रदेश इत्यर्थ[:] प्रदिशन्ति प्रचक्षते ।
हेतु[:] प्रकृतिशब्दोक्त[:] स्वभावो वाभिधीयते ॥२८०॥
इह प्रसारणं चैव तदभावं तथैव च ।
द्विशब्दवाच्यमिच्छन्ति[7] तद्धेतून् प्रकृतीरपि ॥२८१॥
कारणं हेतुरित्युक्तं निमित्तं तद् द्वयोरपि ।
संप्रसारणहेतुश्च प्रत्यय[:] स्यात् [8]किदादिकः ॥२८२॥
अभावस्तदभावस्य[9] किदादेः कारणं त्विह ।
यत्र यस्मिन् पदेऽन्तस्था धातुमध्ये यथोदिता ॥२८३॥
विद्यते तत्र तौ[10] हेतू तयोरित्यभिमन्वते[11] ।
अन्तस्थास्संप्रसार्यन्ते [12]कित्सु ङित्सु लिटि क्वचित् ॥२८४॥

---

१. तद् यत्र स्वरादनन्तराऽन्तस्थाऽन्तर्धातु भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिक्षन्ति । निरु० २।२॥

२. कोशे 'प्रदिशन्नीह' इत्यपपाठः ।

३. कोशे 'अकारादि स्वर०' इत्यपपाठः ।

४. यरलवा इत्यर्थः ।

५. सा=अन्तस्था

६. कोशे 'पुरस्त द्वा' इत्यपपाठः ।

७. कोशे 'विशब्दं वाच्यविच्छन्ति' इत्यपपाठः ।

८. कोशे 'तिदादिकः' इत्यपपाठः ।

९. कोशे 'अभावं तद०' इत्ययपपाठः । किदादेरभावस्तु तदभावस्य (सम्प्रसारणाभावस्य) कारणमित्यन्वयः ।

१०. तौ =किदकितौ । तयोः=सम्प्रसारणासम्प्रसारणयोः ।

११. कोशे '०मत्वते' इत्यपपाठः ।

१२. कोशे 'तित्सु' इत्यपपाठः ।

अभावे न प्रसार्यन्ते तेषां स्थानं ततस्तु तत् ।
इष्ट्वेष्टिरिष्टमित्यादि किति दृष्टं प्रसारणम् ॥२८५॥
तदभावे न दृष्टं तु [१]यष्टु यष्टेत्युदाहृतिः ।
उप्तमुप्तिस्तथोप्त्वेति किति दृष्टं प्रसारणम् ॥२८६॥
वप्ता[२] वप्तु तथा वाप इत्यभावे न दृश्यते ।
तथा गृहीतमित्यादौ किति स्पष्टं प्रदृश्यते ॥२८७॥
तदभावे न दृष्टं च [३]ग्रहीतेत्यादिके तथा ।
गृह्णातीत्यादिके[४] वाच्यं ङित्यप्येवं प्रसारणम् ॥२८८॥
उवाचोवासशब्दादौ [५]तथाऽन्येष्वपि दृश्यते ।
वृक्णसंवीतशब्दादौ[६] वकारो यः प्रदृश्यते ॥२८९॥
स्वरानन्तरवाक्येन[७] तस्य तत्प्रतिषिध्यते ।
उपरिष्टात् स्वरादेव तदानन्तर्यमिष्यताम् ॥२९०॥
आदिष्टो [८]वृक्णमित्यादौ स्वरः सन्नप्यकारणम् ।
अन्तस्थानन्तरा[९] त्वस्य तेनासौ व्यवधायकः ॥२९१॥
स्वरानन्तरवाक्येन स एवायमुदीरितः[१०] ।
दीव्यत्यादौ[११] यकारस्य प्रत्ययान्तर्गतत्वतः ॥२९२॥
प्रसारणनिवृत्त्यर्थम् अन्तर्धात्विन्युदाहृतम् ।
प्राप्नोति रक्तवान्तादौ[१२] लक्षणस्याविशेषतः ॥२९३॥
प्रसारणमनिष्टं तत् तस्मादेतदशोभनम् ।
नैवं प्रकृतिशब्देन तद्धेतोरभिधानतः ॥२९४॥

---

१. कोशे 'यष्ट' इत्यपपाठः ।  २. कोशे 'चप्तावप्तं' इत्यपपाठः ।
३. कोशे 'गृहीतेत्यो०' इत्यपपाठः ।  ४. कोशे 'गृह्णादीत्यादिके' इत्यपपाठः ।
५. कोशे 'तथान्येपि' इत्यपपाठः ।  ६. कोशे 'वृकसंपीत' इत्ययपाठः ।

७. आकरे स्वरादनन्तरेति वचनाद् व्रश्च्-व्येञ्-धात्वोर्वकारस्य सम्प्रसारणं प्रतिषिध्यते रेफयकाराभ्यां व्यवहितत्वादित्यभिप्रायः ।

८. कोशे 'वृक्त०' इत्यपपाठः ।  ९. कोशे 'अन्तस्थानन्तर त्वस्य' इत्यपपाठः ।

१०. वैयाकरणैः **न सम्प्रसारणे सम्प्रसारणम्** (अष्टा० ६।१।३६)इति यत् सम्प्रसारणं प्रतिषिध्यते, तदिह 'स्वादनन्तरा' इति वचनेन साध्यते इति भावः ।

११. कोशे 'दीप्यत्यादौ' इत्यपपाठः ।  १२. कोशे 'रक्तवान्नादौ' इत्यपपाठः ।

इष्टाः[1] प्रसारणस्येह यथैव स्युः किदादयः ।
तथैव तद्गतो धर्मो हेतुस्तस्यापरो मतः ॥२९५॥
विशिष्टधातुसंबन्धस्तेन नातिप्रसज्यते ।
वच्यादयो[2] विशिष्टास्तु येषु दृष्टं प्रसारणम् ॥२९६॥
ते च प्रकृतिशब्देन गृहीता हेतुवाचिना ।
यदा[3] वच्यादिसंयुक्ता हेतवः स्युः किदादयः ॥२९७॥
न तदा रक्तवान्तादौ प्रसज्येत प्रसारणम् ।
प्रसारणस्य सद्भावस्तदभावस्तथा क्वचित् ॥२९८॥
इष्टो यः शब्दशास्त्रेण स एवायमनूद्यते ।
तदचत्रेत्यादिवाचैवं क्लिष्टयाऽन्यविवक्षया ॥२९९॥
यद्वा प्रकृतिशब्देन स्वभावोऽत्र विवक्षितः ।
इग्यणौ[4] तु द्विशब्दोक्तौ धातवस्तत्स्वभावकाः ॥३००॥
अन्तर्धातु पदे यस्मिन् अन्तस्था[5] विद्यते क्वचित् ।
स्थानं द्विप्रकृतीनां तत् प्रदिशन्ति पदं बुधाः ॥३०१॥
पदं संस्क्रियते यस्माद् धातुभिर्द्विस्वभावकैः ।
तेन [6]तत्स्थानमित्याहुर्धातूनामुक्तधर्मणाम् ॥३०२॥
इगात्मनां हि धातूनाम् अकिदादौ यणिष्यते ।
यणात्मनां[7] च धातूनां किदादौ स्यात्प्रसारणम् ॥३०३॥
तत्र[8] या[9] प्रकृतिस्सिद्धा यदि सा नोपपद्यते ।
प्रकृत्येतरया[10] स्थानं कल्पयेत् तत्परोक्षया ॥३०४॥

---

१. कोशे 'इष्टं' इत्यपपाठः । २. कोशे 'पच्या०' इत्यपपाठः ।
३. कोशे 'यथा' इत्यपपाठः । ४. कोशे 'तद्वि०' इत्यपपाठः ।
५. कोशे 'अन्तस्थाः विद्यते' इत्यपपाठः ।
६. कोशे 'तस्थान०' इत्यपपाठः ।
७. कोशे 'यन्नामनाञ्च' इत्यपपाठः ।
८. तत्र सिद्धायाम् अनुपपद्यमानायाम् इतरयोपपिपादयिषेत् । निरु० २।२।
९. कोशे 'याः' इत्यपपाठः ।
१०. कोशे 'प्रकृत्येतरयो' इत्यपपाठः ।

उषास्तुरीयमित्यादौ [1]प्रकृतिर्नैव विद्यते ।
प्रसारणस्य सद्भावे किदादिर्या पुरोदिता ॥३०५॥
दृष्टं प्रसारणं तत्र तदभावे न युज्यते ।
अतश्च तत्प्रसिद्ध्यर्थं कल्प्यो हेतुः किदादिकः ॥३०६॥
स्थानं च [2]तस्य [3]वच्यादिर्भवेद् येन प्रसारणम् ।
उषा वष्टेस्तुरीयं च त्वरतेरिति वक्ष्यति[4] ॥३०७॥
तत्राप्येके[5] परोक्षायां प्रकृतौ धातवस्त्विमे ।
निष्पत्तयः प्रसारस्य [6]विषयेऽल्पे प्रसाधिकाः ॥३०८॥
धातूनामथवा येषाम् अल्पनिष्पत्तिरिष्यते ।
अल्पनिष्पत्तिशब्दास्ते बहुव्रीहावयं क्रमः ॥३०९॥
प्रसारणस्य निष्पत्तिर्येषां स्याद् विषये क्वचित् ।
अल्पनिष्पत्तयस्ते स्युरिह क्लिष्टगिरोदिताः[7] ॥३१०॥
तदद्यथैतदवत्यादेरूत्याद्यात्मकमिष्यते[8] ।
रक्षणे तर्पणादौ च विषये क्वचिदेव हि ॥३११॥
अवतेरूतिरित्येतत्[9] शब्दशास्त्रान्तरे किल ।
प्रसारिकं पदं तेन तन्मतेनैवमीरितम् ॥३१२॥
म्रदेः[10] प्रसारणे रूपं मृदुरुप्रत्यये[11] तथा ।
प्रथेरुप्रत्यये[12] तद्वत् पृथुरित्यवतिष्ठते ॥३१३॥

---

१. कोशे 'प्रकृतिन्नैव' इत्यपपाठः । २. तस्य प्रसारणस्येत्यर्थः ।

३ कोशे 'पच्यादि०' इत्यपपाठः ।

४. उषा वष्टेः कान्तिकर्मणः । निरु० १२.५॥ तुरीयं त्वरतेः । निरु० १३.९॥

५. कोशे 'तत्राप्येते' इत्यपपाठः । तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति । तद् यथैतद् ऊतिर्मृदुः पृथुः पृषतः कुणारुमिति । निरु० २।१॥

६. कोशे 'विषयो' इत्यपपाठः ।

७. कोशे '०गिरोदिता' इति विसर्गरहितः पाठः ।

८. कोशे '०पत्यादेः दत्या०' इत्यपपाठः ।

९. कोशे 'अवतेरुति०' इत्यपपाठः । [धा० १।६३१]

१०. कोशे 'मृदेः' इत्यपपाठः । [धा० १।८०४]

११. कोशे 'मृदुरुप्रत्रये' इत्यपपाठः । १२. धा० १।८०२॥

गुणैकविषयत्वेन[1] [2]तत्राल्पं विषयं विदुः ।
प्रच्छेः[3] पृषत इत्येतत् [4]प्रुषेरन्ये [5]प्रचक्षते ॥३१४॥
प्रसारणं द्वयोरिष्टं प्रत्ययोऽप्यत इत्ययम् ।
क्वणेरारुकि[6] रूपं स्यात् कुणारुः सम्प्रसारणे ॥३१५॥
मृगैकविषयत्वेन पृषतोऽप्यल्पगोचरः ।
मेघैकविषयत्वेन कुणारुश्चाल्पगोचरः ॥३१६॥
अल्पनिष्पत्तितैतेषामेवं[7] व्याख्यायते बुधैः ।
प्रसारणं यथैतेषां प्रकृत्या स्यात् परोक्षया ॥३१७॥
तथा परोक्षयैवेष्टम् उषा इत्यादिषु स्फुटम् ।
सिद्धायां[8] प्रकृतौ चापि यत्र नास्ति प्रसारणम् ॥३१८॥
तत्रापि प्रकृतिः कल्प्या तदभावप्रसिद्धये ।
तद्यथैव यजेर्धातोः क्तिन्येव प्रत्यये सति ॥३१९॥
न दृष्टं [9]देवयज्याया इत्यादौ हि प्रसारणम् ।
परोक्षा प्रकृतिस्तस्मात् तदभावे प्रकल्प्यते ॥३२०॥
अथापि शब्दशास्त्रेषु विचित्रो दृश्यते विधिः ।
सोऽपि बोद्धव्य एवेह मन्त्रान्निर्वक्तुमिच्छता ॥३२१॥
नन्वेवं नैव वक्तव्यं तद्विदोऽत्राधिकारतः ।
नावैयाकरणायेति तस्यैवाऽसौ हि वक्ष्यते[10] ॥३२२॥
सत्यं तथापि वक्तव्यं दृष्टान्तस्याभिधित्सया ।
ग्रन्थं व्याख्या[य]वक्ष्यामो दृष्टान्तं त्विष्टसिद्धये ॥३२३॥

---

१. मृदुत्वादिनेत्यर्थः ।
२. कोशे 'तच्चाल्पं' इति पाठः ।
३. धा० ६।१२०॥
४. धा० ६।५५॥
५. दुर्गादयः । स्कन्दस्तु प्रच्छेरेव प्रचख्यौ ।
६. धा० १।४७७॥
७. कोशे 'कल्प०' इत्यपपाठः ।
८. कोशे 'निद्धायां' इत्यपपाठः ।
९. कोशे 'दैवयज्वाया' इत्यपपाठः । [मा० सं० १।१३]
१०. निरु० २।३॥

धातुभ्यो[1] भाषिकेभ्यस्तु भाष्यन्ते नैगमाः कृतः[2] ।
दमूनाः क्षेत्रसाधाश्च [3]तत्रोदाहरणे त्विमे ॥३२४॥
दमेरूनसि[4] वाच्येऽग्नौ दमूना इति सिध्यति ।
जुष्टो[5] दैत्यादिमन्त्रे[6] हि दमूना इति वक्ष्यते[7] ॥३२५॥
साधेश्च[8] क्षेत्रपूर्वस्य [9]साधास्स्यान्नैग[म]स्त्वसौ ।
अग्निं वः पूर्व्यमित्यस्यां[10] क्षेत्राणां हि प्रसाधके ॥३२६॥
द्वितीयान्तं पदं दृष्टं मित्रं न क्षेत्रसाधसम्[11] ।
भाषिकत्वेन[12] धातूनां छान्दसत्वं न वार्यते ॥३२७॥
अविशेषोपदिष्टत्वाद्[13] उभयत्राऽपि दृष्टतः ।
सौमारौद्रे[14] दमिर्दृष्टो[15] यथायं [16]स्याद् दमे दमे ॥३२८॥
अक्यत्वादनुवक्तुं हि न दोषोऽयं[17] प्रसज्यते ।
अविशिष्टोपदिष्टानां नैगमप्रत्ययो भवेत् ॥३२९॥
नैगमत्वं किमेतेन वचनेन नियम्यते ।
नैवं नियमपक्षे हि भाषायां न स्युरेव ते ॥३३०॥
अदान्तान्[18] दमयेत्[19] [20]सिद्धस्सिद्धिस्साधनमित्यपि ।
भाषायामपि दृश्यन्ते तस्मान्नैवंपरं वचः ॥३३१॥

---

१. अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इति । निरु० २.२॥
२. कोशे 'कृताः' इत्यपपाठः ।
३. कोशे 'तत्रादाहरणौ' इत्यपपाठः ।
४. धा० ४।६४॥
५. कोशे 'जुष्टौ दैत्यादि मन्त्रे हि दमुना' इत्यपपाठः ।
६. ऋ० ५।४।५॥
७. निरुक्त ४।५॥
८. कोशे 'सोधेश्च' इत्यपपाठः । [धा० ५।१७]
९. कोशे 'साधेस्स्या नैगस्त्वसौ' इत्यपपाठः ।
१०. ऋ० ८।३१।१४॥
११. कोशे 'क्षेत्रसाधनम्' इत्यपपाठः ।
१२. कोशे 'भाषितत्वेन' इत्यपपाठः ।
१३. कोशे 'अविशेषोपदष्टत्वात्' इत्यपपाठः ।
१४. ऋ० ६।७४।१॥
१५. कोशे 'दमिरुष्टो' इत्यपपाठः ।
१६. कोशे 'स्यादुमे' इत्यपपाठः ।
१७. कोशे 'नदो यत्प्रसज्यते' इत्यपपाठः ।
१८. गौ० धर्म० ११।२८॥
१९. कोशे "अदान्तान् दवये०' इत्यपपाठः ।
२०. अत्र 'साद्धस्साद्धिसाधन०' इति पाठः स्यात् ?

एवं व्याख्यायमानस्य नह्वि किञ्चित् प्रयोजनम् ।
प्रतीयतेऽस्य वाक्य[स्य] गुणेनानूद्य चोद्यते ॥३३२॥
एवं यच्छन्दशास्त्रस्य क्वचिच्छाखान्तरे[1] त्विमम् ।
दमिसाध्यादिकं[2] धातुं भाषायामित्यधीयते ॥३३३॥
तदपेक्षमिदं[3] वाक्यं भाषिकेभ्य इतीदृशम् ।
नियमो भाषिकत्वस्य [4]प्रतिषेध्यस्त्वनूद्यते ॥३३४॥
भाषायामप्यधीतेभ्यो नैगमाः प्रत्ययाः कृतः ।
दृष्टत्वान्नैगमत्वेऽपि धातूनां हेतवः स्फुटम् ॥३३५॥
प्रसारणस्य दृष्टत्वाद् यद्वादृष्टत्वतः[5] क्वचित् ।
कल्प्यतां कारणं तद्वद् इत्यर्थं त्विदमीरितम् ॥३३६॥
पूर्वशेषत्वमस्यैवमन्यथेदमनर्थकम्[6] ।
नित्यानुवादभावेन [7]तेनेदमुपवर्णितम् ॥३३७॥
अथापि[8] नैगमेभ्यस्स्युर्धातुभ्यो भाषिका[:] कृतः ।
तत्राप्युदाजहारेदं यथोष्णं घृतमित्यपि ॥३३८॥
उषेर्णप्रत्यये[9] रूपं उष्णमित्यवतिष्ठते ।
जिघर्तेश्चैव[10] निष्ठायां घृतमित्यपि तिष्ठति ॥३३९॥
अत्राह नैगमत्वेन भाषिकत्वं न वार्यते ।
उभयोरपि दृष्टत्वात् कृतोऽप्येतदद्वयोः स्थिता[:]॥३४०॥
वेदे तु [11]वाय उष्णेन [12]घृतं चापां घृतस्य च ।
तेनैते नैगमाश्चापि केवलं नैव [13]भाषिकाः ॥३४१॥

---

१. कोशे 'क्वचिच्चावान्तरे त्विमाः' इत्यपपाठः ।
२. कोशे 'दमी०' इत्यपपाठः । ३. कोशे 'तदपेक्ष्यमिदं' इत्यपपाठः ।
४. कोशे 'निषेध्य०' इत्यपपाठः । ५. कोशे 'यद्वा दृष्टवतः' इत्यपपाठः ।
६. कोशे '०मन्यतेदम०' इत्यपपाठः । ७. कोशे 'तेनेवेद०' इत्यपपाठः ।
८. अथापि नैगमेभ्यो भाषिका उष्णं घृतमिति । निरु० २।२॥
९. धा० १।७२७॥ १०. धा० ३।२४॥
११. द्र०—उष्णेन वाय उदकेनैधि । आश्व० गृह्य १।१७।६॥ तु० पार० गृह्य २।१।६॥ गोभिल गृह्य २।६।११॥ १२. ऋ० १०।५१।८॥ १३. कोशे 'भाविका' इत्यपपाठः

अधीत्यापि[1] जिघर्त्यादीन् [2]छन्दसीति पठन्ति ये[3] ।
तदपेक्षमिदं चापि नैगमत्वमुदाहृतम् ॥३४२॥
कृतां च [4]भाषिकत्वोक्त्या नैगमत्वं न वार्यते ।
नियमो[5] नैगमत्वस्य धातूनां विनिवार्यते ॥३४३॥
भाषिकैः प्रत्ययैर्युक्ता नैगमा [6]अपि भाषिकाः ।
जायन्ते[7] धातवो यद्वत् तथा [8]सिद्धं प्रसारणम् ॥३४४॥
अथाप्येकेषु[9] देशेषु शब्दाः प्रकृतिरूपतः ।
व्यवस्थयैव भाष्यन्ते विकारस्त्वेव केषुचित् ॥३४५॥
इह प्रकृतिशब्देन तिङन्तानाह भाष्यकृत् ।
तथा[10] विकृतिशब्देन नामान्याख्यातजत्वतः ॥३४६॥
गत्यर्थः[11] [12]शवतिर्धातु[:] [13]कम्बोजेष्वेव भाष्यते ।
आख्यातप्रत्ययोपेतश्शव त्वं शवतीति च ॥३४७॥
निर्वतितु[14] प्रसङ्गेन कम्बोजेष्वित्युदाहृतिः[15] ।
बलेत्यक्षरयोर्लोपात्[16] कंशब्दात् परभाविनोः ॥३४८॥
भकारस्य तथा बत्वे कम्बोजा इति सिध्यति ।
हिमार्दितास्तु कम्बोजाः कम्बलानुपभुञ्जते ॥३४९॥
ततः कम्बलभोजास्ते [17]कम्बोजाः स्युः परोक्षतः ।
विषयान् कमनीयान् वा भुञ्जते ते यथेष्टतः ॥३५०॥

---

१. कोशे 'अधीत्योपि' इत्यपपाठः । २. कोशे 'छन्दसी त्रिपठन्ति' इत्यपपाठः ।
३. पाणिनीयधातुपाठेऽपि घृप्रभृतयो धातवश्छान्दसा अधीयन्ते ।
४. कोशे 'भाषितत्वोक्त्या' इत्यपपाठः । ५. कोशे 'निगमो' इत्यपपाठः ।
६. कोशे 'अल्पिभाषिका' इत्यपपाठः । ७. कोशे 'जायते' इत्यपपाठः ।
८ कोशे 'सिद्धे' इत्यपपाठः ।
९. अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु । निरु० २।२॥ कोशे 'अथाप्येतेषु' इत्यपपाठः । १०. कोशे 'तथापि कृति०' इत्यपपाठः ।
११. शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते । कम्बोजाः कम्बलभोजाः कमनीयभोजा वा कम्बलः कमनीयो भवति । निरु० २।२॥
१२. कोशे 'गत्यर्थं शयति०' इत्यपपाठः । १३ कोशे 'कम्भोजे०' इत्यपपाठः ।
१४. कोशे 'निर्वतितु' इत्यपपाठः । १५. कोशे '०दाहृतः' इति पाठः ।
१६. कोशे '०र्लोपा' इत्यपपाठः । १७. कोशे 'कम्बला स्युः' इत्यपपाठः ।

म्लेच्छत्वात् तेन तेषाँ स्यात् कमनीयार्थभोजता[1] ।
पचाद्यचि[2] [3]भुजे रूपं गुणे भोज इतीदृशम्[4] ॥३५१॥
प्रसङ्गात् कम्बलं चापि निर्वक्तीह समागतम् ।
प्रत्यये तु [5]कमेरिष्टो बले कृत्यार्थवर्तिनि ॥३५२॥
कम्बलः कमनीयः स्यात् प्रार्थनीयो हिमार्दितैः ।
कमर्थं वा बलं यस्य सुखार्थः कम्बलस्त्वसौ ॥३५३॥
विकारं[6] [7]शवतेरस्य नामार्थेषु [8]प्रयुञ्जते ।
मृतके शव इत्येव भूमित्वं हि [9]शवत्यसौ ॥३५४॥
प्राच्येषु लवनार्थे च [10]दातिर्धातुः प्रयुज्यते ।
व्रीहीन्दाति यवान्दाति कुशान् [11]दातीत्यपि स्फुटम् ॥३५५॥
दानेस्त्रप्रत्यये दात्रमुदीच्येषु[12] प्रयुज्यते ।
येषु देशेषु यश्शब्दो यस्मिन्नर्थे प्रयुज्यते ॥३५६॥
तेभ्यस्सोऽर्थाधिगन्तव्यो मन्त्रान् निर्वक्तुमिच्छता ।
अविस्पष्टार्थवाचीनि यानि वेदे पदानि हि ॥३५७॥
तेषामन्यतमं क्वाऽपि[13] देशे स्पष्टार्थमेव तु ।
दृश्यते तदयथा तावत् पद्मे तामरसं त्विति ॥३५८॥
कोकिले पिक इत्येतत् [14]तथार्धे नेम इत्यपि ।
दारवे वर्तुले पात्रे शतच्छिद्रे तथा सतम्[15] ॥३५९॥

---

१. कोशे 'भोजतः' इत्यपपाठः ।

२. अजपि सर्वधातुभ्यः (महाभाष्य वा० ३।१।१३४) इति वार्त्तिकेनेत्यर्थः ।

३. धा० ७।१७॥ ४. कोशे 'इतीदृशाः' इत्यपपाठः । ५. धा० १।४७०॥

६. विकारमस्यार्येषु भाषन्ते शव इति । दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु । निरु० २ २॥ [तु०—महाभाभाष्य पस्पशा०]

७. कोशे 'शंबते०' इत्यपपाठः । ८. कोशे 'प्रयुज्यते' इति पाठः ।

९. कोशे 'शपत्यसौ' इत्यपपाठः । १०. धा० २।५०॥

११. कोशे 'दीती०' इत्यपपाठः । १२. कोशे '०मुदेच्येषु' इत्यपपाठः ।

१३. कोशे '०तमत्वा पि' इत्यपपाठः । १४. कोशे 'तदार्धे' इत्यपपाठः ।

१५. अत्र पूर्वमीमांसायाः प्रथमाध्यायस्य तृतीयपादस्य पिकनेमाधिकरणमपि द्रष्टव्यम् । शाबरभाष्येऽत्रैव 'सतः' इति पुंल्लिङ्गः पठ्यते ।

अतो देशान्तरेभ्यश्च काव्येभ्यश्चापि यत्नतः ।
शब्दप्रयोगमालक्ष्य निर्ब्रूयाद् वैदिकं पदम् ॥३६०॥
एवमर्थमथापीति देशवार्तादुदाहृतम् ।
प्राकृतैरपि शब्दैस्तु ज्ञायते वैदिकं पदम् ॥३६१॥
तद्यथा [1]बेकनाटेति 'बे' इति प्राकृतं द्वयोः ।
प्रयुक्तं दृश्यते लोके द्वैगुण्यं तेन लक्ष्यते ॥३६२॥
एवं[2] बहुविधोक्तेन व्याख्योपायेन यत्नतः ।
विज्ञायैकपदान्येव निर्ब्रूयादविरोधतः ॥३६३॥
अवृत्तिजानि यानीह तान्याहैकपदानि तु ।
पदानां वृत्तिजानां हि पृथगेवाभिधास्यते ॥३६४॥
निर्दिष्टविधिसाम्येऽपि[3] तद्धितेष्वितरेषु[4] च ।
विशेषं कञ्चिदाख्यातुम् [5]अथेत्यध्यकरोद्[6] ऋषिः ॥३६५॥
तद्धिताश्च समासाश्च प्रसिद्धाश्शब्दशास्त्रतः ।
तेषाञ्चाप्येकपर्वत्वम् अथैकानेकपर्वता ॥३६६॥
पर्वशब्दस्य मुख्योऽर्थः कालसन्धिः पुरेरितः ।
प्रकृतिप्रत्ययानां तु मन्धयस्तद्धितेष्विह ॥३६७॥
समासेषु पदानां च पर्वशब्देन लक्षिताः ।
दण्ड्यः कक्ष्या तथा [7]तान्वः [8]स्त्रैणानीत्येकमन्धयः ३६८॥
कक्ष्यावानपि[9] [10]कक्षीवांस्तथा स्याद् [11]वाजिनीवति ।

---

१. निरु० ६।२६॥ २. एवमेकपदानि निर्ब्रूयात् । निरु० २।२॥
३. कोशे 'निदिष्ट०' इति पाठः । ४. कोशे 'तद्धितेषुत्तरेषु' इत्यपपाठः ।
५. अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् । निरु० २।२॥
६. कोशे 'अथेत्यध्याकरोद्' इति पाठः ।
७. कोशे 'तच्व' इत्यपपाठः । ऋ० ३।३१।२॥ निरु० ३।६॥
८. कोशे 'स्तैणानि०' इत्यपपाठः । ऋ० १०।९५।१५॥
९. एकसन्धीन् तद्धितान् उदाहरति—कक्ष्यावानपीति ।
१०. ऋ० १।१८।१॥ निरु० ६।१०॥ ११. ऋ० १।३।१०। निरु० ११।२६॥

तथा पवीरवाँश्चैव[1] भवेत् पावीरवी[2] तथा ॥३६६॥
चित्रगुः शुक्लवासाश्च तथा स्याद् राजपूरुषः ।
इन्द्रशत्रुस्तथेन्द्राग्नी समासाश्चैकसन्धयः ॥३७०॥
विश्चकद्रादिकास्सर्वे तथैवानेकसन्धयः ।
एकपर्वसु चैकेषु तथैवानेकपर्वसु ॥३७१॥
विधिर्निर्वचनस्याथ विशेषेणाभिधीयते ।
एकेन पूर्वशब्देन भागः पूर्वोऽभिधीयते ॥३७२॥
द्वितीयेन तथैवात्र क्रमः प्राथम्यलक्षणः ।
तद्धितेषु समासेषु [3]पूर्वं योऽवयव[:]स्थितः ॥३७३॥
प्रविभज्य [4]तु तं पूर्वं निर्ब्रूयादुत्तरं पुनः[5] ।
प्रयोजनं तु नानेन न चैतदुपपद्यते ॥३७४॥
अध्वरे ध्वरतेश्चैव[6] पूर्वमर्थोऽपरस्य तु ।
लक्ष्यतेऽकथितस्यापि प्रथमस्य तथा पुनः[7] ॥३७५॥
दृष्टप्रयोजनं नापि किञ्चिदस्योपलभ्यते ।
न चापि [8]प्रथमात् पूर्वं प्रविभज्यापरं पुनः ॥३७६॥
निर्ब्रूयात्तु[9] यथैवेष्टमित्यर्थ उपपद्यते ।
पूर्वापरविभागो हि नाध्वरादिषु[10] दृश्यते ॥३७७॥

---

१. कोशे 'पर्वीरवाँश्चैव' इत्यपपाठः । ऋ० १०।६०।३॥ निरु० १२।३०॥

२. कोशे 'पापीरपी' इत्यपपाठः । ऋ० १०।६५।१३॥ निरु० १२।३०॥

३. कोशे 'पूर्वंयोवयवस्थितः' इत्यपपाठः ।

४. कोशे 'कृतं पूर्वं निब्र०' इत्यपपाठः ।

५. पूर्वोऽवयवस्तावद् विभागशो निर्वक्तव्यः, तत उत्तरोऽवयवो विभागशो निर्वक्तव्य इत्याशयः ।

६. कोशे 'त्वरतेश्चैव' इत्यपपाठः ।

७. अध्वर इति यज्ञनाम । ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः । निरु० १।८॥

८. कोशे 'प्रथमः' इति पाठः ।

९. पूर्वावयवाद् अपरमवयवं पृथक्कृत्य यथाभिमतम् (यथाक्रमम् अन्यथा वा) अवयवद्वयं निर्ब्रूयादित्यभिप्रायः ।

१०. आदिपदेन विधवादिपदानां संग्रहः । तथा च(ा)ह भाष्यकारः—धव इति मनुष्यनाम तद्वियोगाद् विधवा । निरु० ३।१५॥

तथा प्रयोजनं नैव दृष्टमत्रापि विद्यते ।
न दोषः पूर्वशब्देन वाक्यार्थोऽत्र विवक्षितः[१] ॥३७८॥
प्रथमेन द्वितीयेन क्रम एवाभिधित्सितः[२] ।
पदार्थोऽपरशब्देन प्रथमेन विवक्षितः[३] ॥३७९॥
क्रम एव द्वितीयेन यः पूर्वं समुदाहृतः ।
प्रविभागो हि बुद्ध्या वा वचनेनाथवा भवेत् ॥३८०॥
वाक्यार्थस्यापि पूर्वत्वं पूर्वमेवावधारणात् ।
विज्ञाय हि प्रमाणेन वाक्यार्थं सप्रयोजनम् ॥३८१॥
वक्तुमिच्छेत् पदं योग्यं द्वे वा त्रीण्यथवेरयेत् ।
ननु वाक्यार्थविज्ञानं पदार्थज्ञानपूर्वकम् ॥३८२॥
सत्यं [४]तथाप्युपेयत्वात् प्राधान्यात् पूर्वमेव तत् ।
उपेये[५] हि मतिः पूर्वमुपेयं प्राप्तुमिच्छताम् ॥३८३॥
उपाये तु तदर्थत्वात् पश्चात् सा संप्रवर्तते ।
प्रतिपाद्यस्य[६] वा पूर्वं पदार्थज्ञानमिष्यते ॥३८४॥
पश्चाद् [७]वाक्यार्थविज्ञानं [८]व्याख्यातुस्तद्विपर्ययः ।
पदार्थज्ञानपूर्वो हि वाक्यार्थप्रत्ययो भवन्[९] ॥३८५॥
प्रतिपादनवेलायां बुद्धिस्थः पूर्वमिष्यताम् ।
यदि विस्मृत्य वाक्यार्थं निर्वदेत् तु पदान्ययम् ॥३८६॥
अनभिप्रेतबोधो हि कदाचित्तत्र जायते ।
साधारण्यात् पदार्थानां तस्मात्तस्य निवृत्तये ॥३८७॥
वाक्यार्थं सम्मतं पूर्वं बुद्ध्या निश्चित्य तत्त्वतः ।
पदानि तद्वशेनैव व्याख्येयान्याह भाष्यकृत् ॥३८८॥

---

१. यथा—अध्वर इति यज्ञनाम । निरु० १।८॥ २. कोशे '०धित्सितम्' इत्यपपाठः ।
३. यथा—ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः । निरु० १।८॥
४. कोशे 'तथाप्यपेयत्वात्' इत्यपपाठः । ५. कोशे 'उपये' इत्यपपाठः ।
६. कोशे 'प्रतिपाद्यस्यथवा' इत्यपपाठः । ७. कोशे 'व्याक्यार्थं०' इत्यपपाठः ।
८. कोशे 'व्यातुन्तद्विपर्ययः' इत्यपपाठः । ९. कोशे '०प्रत्ययोक्तवत्' इति पाठः ।

एवं व्याख्यायमानोऽयं ग्रन्थो दृष्टार्थतां व्रजेत् ।
तस्माद् वाक्यार्थमालोच्य [1]पदार्थानिह निर्वदेत् ॥३८९॥
पूर्वापरविरोधोऽपि नैवं स्यात् पूर्वमीरितः ।
तद्धितस्यैकसन्धेस्तु दण्डचः कक्ष्येत्युदाहृतिः[2] ॥३९०॥
दण्डच[3] इत्यस्य शब्दस्य पुरुषं वाच्यमब्रवीत् ।
समुदायार्थनिर्देशो यथैतद् दण्डमर्हति ॥३९१॥
तस्यैव तु विकल्पोऽयं सम्पद्यत इतीरितः ।
प्रत्ययस्यार्हतीत्यर्थो यद्वा संपद्यते त्विति ॥३९२॥
प्रकृतिस्तु[4] ददत्यादिरर्थोऽस्या धारणादिकः ।
अकृत्यकृन्नरो[5] लोके दण्डं [6]दण्डनमर्हति ॥३९३॥
योग्यो दण्डयितुं दुष्ट इत्यर्थोऽत्र विवक्षितः ।
व्यस्तेन वा समस्तेन [7]दण्डेन हि धिगादिना ॥३९४॥
सम्पद्यते तु यो दुष्टः स वा [8]दण्डचोऽभिधीयते ।
संगच्छत [9]इति त्वर्थः सम्पद्यत इतीरितः ॥३९५॥
सम्पद्यतेऽथवा साधुर्जायते पापनाशतः[10] ।
शास्त्रोक्तेनैव दण्डेन [11]दण्डचते यो हि पापकृत् ॥३९६॥
स मुक्तस्सर्वपापेभ्यः[12] साधुरेव भविष्यति ।
ददतेर्धारणार्थत्वं[13] लोके वेदे च दृश्यते ॥३९७॥
लोके तावदिदं दृष्टम् अक्रूरो ददते मणिम् ।
मणिं धारयतीत्यर्थः शिरसा तमधारयत् ॥३९८॥

---

१. कोशे 'पदार्थानीह' इत्यपपाठः ।
२. दण्डचः पुरुषो, दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा । निरु० २।२॥
३. कोशे 'दण्डया' इत्यपपाठः । ४. कोशे 'प्रकृतेस्तु' इति पाठः ।
५. कोशे 'आकृत्य०' इत्यपपाठः । ६. दण्डम् इत्यस्यार्थं स्फोटयति—दण्डनमिति ।
७. कोशे 'दण्डो नहि' इत्यपपाठः । ८. कोशे 'दण्डचो विधीयते' इति पाठः ।
९. कोशे 'इत' इत्यपपाठः । १०. कोशे 'पापनाशकः' इत्यपपाठः ।
११. कोशे 'दण्यते' इत्यपपाठः । १२. कोशे 'सर्वपापेभ्यो इत्यपपाठः ।
१३. दण्डो ददतेर्धारयतिकर्मणः । अक्रूरो ददते मणिमित्यभिभाषन्ते । दमनादित्यौपमन्यवः । दण्डमस्याकर्षतेति गर्हायाम् । निरु० २।२॥

तत्काले[1] वर्तमाने क्तः प्रत्ययो ददते त्विति ।
वृष्ण्यन्धकपतिः श्रीमान् अक्रूरो नाम धार्मिकः ॥३९९॥
स्यमन्तकमणिं दिव्यं ददते शिरसा किल ।
हरिवंशे कथाशेषो विस्तरेणेव पठ्यते ॥४००॥
पुष्करे[2] त्वा ददन्तेति [3]ददमानादितीह च ।
ददतेर्धारणार्थत्वं वेदे [4]वक्ष्यति भाष्यकृत् ॥४०१॥
व्यापन्ने ददतेरन्ते [5]डकारे प्रत्यये तथा ।
दण्ड इत्यपि [6]रूपं स्याद् यथा भाष्यकृतेरितम् ॥४०२॥
निरुणद्धि नरं यस्मात् प्रतिषिद्धान्निवारितात्[7] ।
तस्माद् दण्ड इति प्रोक्तो यद्वा स्याद् दमनादसौ ॥४०३॥
दमेर्डप्रत्यये[8] दण्डस्तेनादान्तो हि [9]दम्यते ।
दण्डं सभासद्रो ह्यस्य तथैवाकृषतेति च ॥४०४॥
गर्हायां दृश्यते तेन तादर्थ्यं चास्य विद्यते ।
उक्तयोरेव तादर्थ्यमन्ये दण्डयतेर्विदुः ॥४०५॥
यद्वा दण्डयतेरेव कृत्यस्स्याद[त्र]गोचरः[10] ।
दण्डोऽस्य प्राप्त इत्येव [11]प्राप्तकाले भविष्यति ॥४०६॥

---

१. कोशे 'तत्कालं वर्त्तमानेक्षः' इत्यपपाठः ।

२. ऋ० ७।३३।११॥ द्र०—निरु० ५।१४—'पुष्करे त्वा धारयन्त' इति । कोशे 'ददन्तीति' अपपाठः ।

३. चतुरश्चिददमानाद् बिभीयात् । ऋ० १।४१।९॥ द्र०—निरुक्त ३।१६—चतुरश्चिद धारयत इति ।

४. निरुक्त ३।१६;५।१४॥

५. कोशे 'धकारे' इत्यपपाठः ।

६. कोशे 'लेपं' इत्यपपाठः ।

७. कोशे 'प्रतिषिद्धाद्विनारिता' इति पाठः ।

८. कोशे 'दमे ड०' इत्यपपाठः । [धा० ४।९४]

९. कोशे 'दृश्यते' इत्यपपाठः ।

१०. अर्हे कृत्यतृचश्च (अष्टा० ३।३।१६९) । दण्डार्हो दण्डनीयो दण्ड्यः ।

११. प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च (अष्टा० ३।३।१६३) । तथा च गर्हा प्रतीयते ।

एवं व्याख्यायमाने[1] तु तद्धितो नैव दर्शितः[2] ।
भाष्यकारानुसारित्वाद् व्याख्या पूर्वैव शोभना ॥४०७॥
धार्यो वाऽप्यथवा दम्यो [3]गर्ह्यो वा दण्डच उच्यते ।
धारणं तु निरोधस्स्याद् दमनं देहपीडनम् ॥४०८॥
गर्हा[4] या चैव निन्दा सा भिन्नो धात्वर्थ ईदृशः ।
धातुमात्रविकल्पोऽयं भेदो नेत्यपरे[5] विदुः ॥४०९॥
निरुद्धस्यापि पीडा स्यान्निन्दा चेति न विद्यते ।
निन्दायामपि पीडा स्यान्निरोधस्तु न विद्यते ॥४१०॥
यश्चार्थान्न [6]स शब्दार्थस्तस्माद् भेदः पुरोदितः ।
कक्ष्येव युक्तमित्यादौ[7] उपयोग्यस्य भावतः ॥४११॥
कक्ष्येत्युदाजहारेदं[8] द्विती[य]ञ्चैकपर्वणः[9] ।
रज्जुरित्यभिधेयोक्तिरश्वसन्नहनी च[10] सा ॥४१२॥
समुदायार्थनिर्देशः कक्षं[11] सेवत इत्ययम् ।
सेवते[12] त्विति चानेन तद्धितार्थो निदर्शितः ॥४१३॥
भवार्थ[13] एव निर्दिष्टः सेवते त्विति नापरः[14] ।
भवत्यर्थो हि यो यत्र सेवते [15]तमसौ स्फुटम् ॥४१४॥

---

१. स्कन्दकृतेयं व्याख्या, अनुपदं निराकरिष्यते ।
२. स्यादिति शेषः । ३. कोशे 'गह्यो वा दण्ड' इत्यपपाठः ।
४. कोशे 'गहा व चैव' इत्यपपाठः ।
५. तथा चाह स्कन्दः—धात्वन्यत्वमात्रमेव, न वस्तुभेदः । उभयस्योभयत्र भावात् । स्कन्द व्याख्या द्वितीय भाग पृ० २८।।
६. कोशे 'च' इति पाठः ।
७. ऋ० १०।१०।१३।। ८. कक्ष्या रज्जुरश्वस्य कक्षं सेवते । निरु० २।२।।
९. कोशे '०ञ्चेक०' इत्यपपाठः ।
१०. कोशे 'व' इत्यपपाठः ।
११. कोशे 'कक्ष्यं सेवक इत्ययम्' इत्यपपाठः ।
१२. कोशे 'सेवके' इत्यपपाठः ।
१३. कोशे 'भावार्थ' इति पाठः । १४. कोशे 'नापरा' इत्यपपाठः ।
१५. कोशे 'तमसो' इत्यपपाठः ।

कक्षो[1] [2]विलोडनार्थस्य [3]गाहतेः प्रत्ययस्तु सः ।
गकारस्य[4] ककारत्वे [5]ह्रासे चैवोपधात्मनः ॥४१५॥
हो ढत्वे चैव कुत्वे च षत्वे च प्रत्ययात्मनः ।
कक्ष[6] इत्येव शब्दस्या[द्]वाच्योऽनूपादिरस्य तु ॥४१६॥
नद्यनूपोऽर्णवानूपस्तथा[7] पर्वतकुञ्जकः ।
कक्ष इत्युच्यते लोके गाहनीयो हि नाष्टिकैः[8] ॥४१७॥
विलोड्यते ह्यसौ नष्टं [9]गवाव्यश्वोष्ट्रमिच्छुभिः ।
ख्यातेर्वाऽनर्थकोऽभ्यासः[10] ककारोऽन्यो निरर्थकः ॥४१८॥
खकारस्य ककारत्वे यकारे चापि लोपिते ।
आकारे ह्रसिते चैव [वि]नामे[11] प्रत्ययस्य च ॥४१९॥
कक्ष इत्यपि रूपं स्यात् ख्याते[:]ख्यानीय एव सः ।
तृणादिव्यूहनेनासौ ख्यापनीयो हि नाष्टिकैः ॥४२०॥
किमस्मिन् ख्यानमित्येवमथवा कक्ष इष्यताम् ।
किमः[12] ख्यातेश्च कक्षस्यान्न ख्यातेरेव सम्मतः ॥४२१॥
नानर्थक्यं ककारस्य द्वितीयस्य प्रसज्यते ।
न किञ्चित् ख्यानमित्यर्थो [13]गहनत्वेन कस्यचित् ॥४२२॥

---

१. कोशे 'ककोपिलो उनार्थस्य' इत्यपपाठः ।

२. कक्षो गाहतेः क्स इति नामकरणः । ख्यातेर्वानर्थकोऽभ्यासः । किमस्मिन् ख्यानमिति । कषतेर्वा । तत्सामान्यान्मनुष्यकक्षः । बाहुमूलसामान्यादश्वस्य । निरु० २।२॥

३. कोशे 'गाहते' इति विसर्गरहितः पाठः । [धा० १।६८०]

४. कोशे 'गगारस्य' इत्यपपाठः ।

५. कोशे 'ह्रासे' इत्यपपाठः ।

६. कोशे 'अक्ष' इत्यपपाठः ।

७. कोशे 'नद्यरूपोर्णवारूपः' इत्यपपाठः ।

८. कोशे 'नापिकैः' इत्यपपाठः । प्रणष्टस्य वस्तुनः स्वामी नाष्टिक इत्युच्यते ।

९. कोशे 'गवाद्यश्वो०' इति पाठः । १०. धा० २।५१॥

११. दन्त्यस्य मूर्द्धन्यापत्तिर्विनाम इति प्रातिशाख्येषु प्रसिद्धिः ।

१२. कोशे 'क्रमख्यातेश्च' इत्यपपाठः ।

१३. कोशे 'न हनत्वेन' इत्यपपाठः ।

न किञ्चिद् दृश्यते तत्र गहनत्वात्[1] तृणादिभिः ।
तेनासौ कक्ष इत्युक्तो यद्वा स्यात् [2]कषतेरसौ ॥४२३॥
कषेः सप्रत्यये कुत्वे सकारस्य षढोः क सि[3] ।
प्रत्ययस्य तथा षत्वे कक्ष इत्यवतिष्ठते ॥४२४॥
गुल्मगुच्छतृणैः प्रायः कक्षे कण्डूप्रसाधनैः ।
स्पृष्टस्य जायते कण्डूः कषणं तन्निवृत्तये ॥४२५॥
एवमुक्तक्रियः कक्षो [4]मुख्यः [5]कुञ्जादिकस्त्रिधा ।
तत्सामान्यान्मनुष्यस्य कक्षो गौणस्समाश्रितः ॥४२६॥
तदित्येतेन शब्देन क्रियास्ताः पर्यकीर्तयत् ।
तासामेव तु सामान्यं तत्सामान्यमितीरितम् ॥४२७॥
घृतार्थं बाहुमूलेन दधि नित्यं विलोड्यते ।
स्त्रीकक्षः [6]ख्यापनीयश्च [7]द्रष्टुमिच्छत्सु कामिषु ॥४२८॥
न किंचित् ख्यापनीयं वा तत्र स्यान्निस्पृहं प्रति ।
ख्यानं वा कुत्सितं तत्र स्वेददुर्गन्धदोषतः[8] ४२९॥
स्विन्नत्वाज्जायते कण्डूः कषणं च ततो भवेत् ।
मनुष्यबाहुमूलस्य [9]कक्षवाच्यत्वमीरितम् ॥४३०॥
परित्यज्य क्रियास्तास्तु बाहुमूलत्वसाम्यतः ।
अश्वकक्षस्य कक्षत्वं हस्त्यादेरपि तादृशः ॥४३१॥
एकपर्वसमासोऽयं यथाऽयं राजपूरुषः[10] ।
[अस्यैव] समुदायार्थो राज्ञः पुरुष[11] इत्ययम् ॥४३२॥

---

१. कोशे 'गगनत्वा तृणा०' इत्यपपाठः । २. धा० १।७१६'।
३. द्र०—पाणिनीयं लक्षणम्—षढोः कः सि । अष्टा० ८।२।४१॥
४. कोशे 'मख्यः' इत्यपपाठः । ५. कोशे 'कुण्डादिक०' इत्यपपाठः ।
६. कोशे 'व्यापनीय०' इत्यपपाठः । ७. कोशे 'दष्टुमि०' इत्यपपाठः ।
८. कोशे '०दोषदः' इत्यपपाठः । ९. कोशे 'कक्ष्या०' इत्यपपाठः ।
१०. छन्दोऽनुरोधादिह दीर्घत्वम् ।
११. राज्ञः पुरुषो राजपुरुषः । राजा राजतेः । पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य । निरु० २।३॥

दण्डचः कक्ष्येत्युदाहृत्य तद्धितं निरभाषत ।
समुदायार्थमुक्त्वा तु समासोदाहृतिः कृता ॥४३३॥
यत्तस्य परिहारोऽयं बभाषे[1] कैश्चिदीदृशः[2] ।
वाक्यस्थं न पदं त्वत्र राजेत्यादि निरुच्यते ॥४३४॥
इत्येतद् वक्तुकामेन समासार्थः पुरेरितः ।
उदाहृत्य समासं हि निरुच्येत पदं यद्वि ॥४३५॥
वाक्यस्थमिति गम्येत तन्माभूदित्ययं क्रमः ।
माभूद् वाक्यस्थमित्येतत् किमर्थं पुनरुच्यते ॥४३६॥
वाक्यस्थस्येतरस्यापि भेदो नाप्युपलभ्यते ।
एक एव हि राजेति शब्दः पुरुष इत्यपि ॥४३७॥
देशकालाद्यभेदेन प्रत्यभिज्ञायते स्फुटम् ।
शब्दो[3] राजेत्यभिन्नोऽयं तथा पुरुष इत्यपि ॥४३८॥
तथाप्युभयसंयुक्तं[4] ताभ्यामन्यत् पदं स्फुटम् ।
राज्ञः पुरुष इत्यस्य वाक्यस्यार्थे प्रवर्तते ॥४३९॥
राजेत्येतावतो नैव पदत्वं तत्र विद्यते ।
विद्यते [5]त्वेतदेवेष्टं पदमेकत्र वाचकम् ॥४४०॥
नावित्यनेन[6] संयुक्तं तदेव स्यात् पदान्तरम् ।
एवं [7]राजस इत्यादि वर्णाधिक्ये पदान्तरम् ॥४४१॥
तथैव[8] राज इत्येतत् पुरुषे लोटि मध्यमे ।
तावत्स्वेव च वर्णेषु पदान्यत्वं तथा क्वचित् ॥४४२॥

१. द्र०—स्कन्दव्याख्या द्वितीयभागः पृ० ३० ।
२. कोशे '०दीदृशम्' इत्यपपाठः ।
३. कोशे 'शब्दं' इत्यपपाठः ।
४. कोशे '०संयुक्तः ताभ्यामन्यंपदं' इत्यपपाठः ।
५. कोशे 'त्येतदेवेष्टं' इत्यपपाठः ।
६. 'राजानौ' इत्येतत् ।
७. राजृधातोर्लोटि मध्यमपुरुषैकवचने 'राजसे' ।
८. परस्मैपदे रूपं यथोक्तम् । छन्दोऽनुरोधात् संहिताकार्याभावः ।

राज्ञः पुरुषः इत्येतद् गृहीत्वा [1]तु पदद्वयम् ।
कृतमेतत् पदं तावत् यथेदं राजपूरुषः ॥४४३॥
नित्यत्वादविकार्यत्वं[2] नित्यत्वं च प्रसाधितम् ।
पदद्वये[3] कृते तस्मिन्ननित्यत्वं प्रसज्यते ॥४४४॥
तद्धितेष्वपि नन्वेतद् अस्त्येव यदि नित्यता ।
सत्यं [4]तत्रापि विज्ञेयम् इहोक्तं स्यात् प्रदर्शनम् ॥४४५॥
नित्यत्वेन[5] पुरोक्तेन नैवं काचिद् विरुद्धता ।
यद्वोदाहरणे चापि पूर्वं वाक्यार्थवाच्यता[6] ॥४४६॥
वक्तव्येत्येवमत्रापि क्रमोऽन्यस्समुदाहृतः ।
राजा तु [7]राजतेरिष्टो राजनं दीप्तिरिष्यते ॥४४७।
क्षत्रियस्याभिषिक्तस्य भवेदैश्वर्यमेव वा ।
दीप्यते ह्यभिषिक्तोऽसौ लोकपालवपुर्धरः ॥४४८॥
सर्वस्य च तथैवेष्टे वर्जयित्वा द्विजोत्तमम्[8] ।
पुरुषः पुरिशादस्स्यात्[9] [10]पूश्शरीरमिहोच्यते ॥४४९॥
शादस्तु[11] शाद्यमानत्वा[त्]पुरीषादिर्मलः[12] स्मृतः ।
पुरि शादो मलो यस्य पुरिशादस्स[13] उच्यते ॥४५०॥
इकारोत्वे शषत्वे च विकारे चोपधात्मनः ।
स एव पुरिशादस्स्या[त्] पुरुषो दस्य लोपतः[14] ॥३५१॥

---

१. कोशे 'नु' पाठः । २. कोशे '०पि कार्यत्वं' इत्यपपाठः ।
३. कोशे 'पदद्वयकृते' इत्यपपाठः । ४. कोशे 'ततापि' इत्यपपाठः ।
५. कोशे 'तन्नित्यत्वेन' इत्यपपाठः । ६. '०वाच्यताम्' इत्यपपाठः ।
७. धा० १।८७४॥ ८. कोशे 'द्विजोत्तमः' पाठः ।
९. स्कन्दस्वामिपाठः । नीलकण्ठः स्कन्दपाठं व्याख्यानमार्गं चानुसरतीत्यत्र नितरां स्पष्टम् । 'पुरिषादः' इति दुर्गपाठः । १०. कोशे 'पुश्शरीर०' इत्यपपाठः।
११. 'शद्लृ शातने'(धा० ११९०८) इत्यतः कर्मणि अकर्तरि च कारके संज्ञायाम्(अष्टा० ३।३।१९) इति घञ्प्रत्ययः ।
१२. कोशे 'पुरुशाभिर्मलः' इत्यपपाठः । १३. कोशे 'पुरिशोभस्स' इत्यपपाठः ।
१४. अस्यायं भावः—पुरिशाद इत्यत्र इकारस्योकारे पुरुरूपम्, शकारस्य षत्वे उपधाया ह्रस्वत्वरूपे विकारे दकारलोपे च 'ष' इति रूपम् । एवं 'पुरुषः' इति सम्पद्यते ।

गत्यर्थो[१] वा शदिस्त्वत्र पूश्शब्दोपपदा[त्] ततः ।
डप्रत्ययविधिर्ज्ञेयष्टिलोपो येन सिध्यति ॥४५२॥
ऊकारे ह्रसिते चैव उकारे[२] च तथाधिके ।
[३]पुरुशस्त्विवतिरूपं स्या[त्] पुरुषस्तु शषत्वतः[४] ॥४५३॥
सुखदुःखोपभोगार्थं पुरमात्मा हि शीयते ।
शरीरं गच्छतीत्यर्थो गमना[त्] प्राप्तिरिष्यते ॥४५४॥
सर्वगस्य गतिर्नैव साक्षादस्योपपद्यते ।
लक्ष्यते गमनेनातः प्राप्तिस्तत्फलभावतः ॥४५५॥
देहेऽहमिति विज्ञानं देहप्राप्तिरिहोच्यते ।
पूर्वदेहकृतेनैव[५] कर्मणा तच्च जायते ॥४५६॥
तत्पूर्वभाविना पूर्वं तच्च तत्पूर्वभाविना ।
इत्येवं नादिरस्तीति संसारस्य समाश्रितम् ॥४५७॥
पुरिशादवचस्त्वेवं न व्युत्पत्त्यर्थमोरितम् ।
किन्तु सामर्थ्यसिद्धस्य तदर्थस्योपवर्णनम् ॥४५८॥
यः [६]पुरं शीयते तस्य शादस्तस्यां हि विद्यते ।
पुरिशादवचस्त्वेवं[७] यथोक्तमुपपद्यते ॥४५९॥
घञेव वा भवेद् भावे भाष्यमेवं समञ्जसम् ।
पुरि शादो[७] गतिर्यस्य [७]पुरिशादस्स पूर्ववत् ॥४६०॥
पाठोऽयमपरेषां तु [८]पुरुशाद इतीदृशः ।
यथोक्तार्थो[९] घञेव[स्याद्] व्युत्पत्तिस्तु लघीयसी ॥४६१॥

---

१. शदेरगतौ तः (अष्टा० ७।३।४२) इति गतिप्रतिषेधादस्य गत्यर्थत्वम् आक्षिप्यते ।

२. कोशे 'विकारे' इति पाठः । छन्दोऽनुरोधात् संहिताकार्याभावः ।

३. कोशे 'पुरिश०' इत्यपपाठः ।

४. अयं भावः—पूर् शद् उ=पुर् श् अ=पुरु श् अ=पुरुश=पुरुषः । अत्र' पूर्' इत्यत्र वोरुपधाया दीर्घ इकः (अष्टा० ८।२।७६) इति यदुपधादीर्घत्वं तस्य ह्रस्वत्वम् 'ऊकारे ह्रसिते' इत्यनेन प्रतिपाद्यते ।

५. कोशे 'पूर्वदेहकृतादेव' इति पाठः ।

६. कोशे 'परं शीयते कस्य' इत्यपपाठः ।

७. कोशे 'पुरी' इत्यपपाठः ।

८. कोशे 'पुरीशाद' इत्यपपाठः ।

९. कोशे 'यथोक्तर्थो' इत्यपपाठः ।

पुरुशादो बहुश्शादो रागादिर्यस्य विद्यते ।
गतिर्बहुविधा वापि [1]पुरुशादस्स उच्यते ॥४६२॥
पुरुषस्य हि संसारे परिवृत्ते निबन्धनम् ।
बह्वस्ति शाद्यमित्यर्थः तच्छ्रेयोऽर्थी[2] विशातयेत् ॥४६३॥
कर्मभिश्चास्य सम्बन्धो वर्तमानैस्तथेतरैः ।
गतयो बहवः कष्टास्तेन[3] तावन्निवर्तते ॥४६४॥
यद्वा [4]पुरिशयस्त्वेव पुरुषः परिकीर्तितः ।
पुरि पूरयितव्यायां तन्वां शेतेऽवतिष्ठते[5] ॥३६५॥
[6]भोक्तृत्वेनान्नपानाभ्यां भवेत् पुरिशयस्त्वतः ।
सर्वास्वित्याद्युपक्रम्य बृहदारण्यके[7] तथा ॥४६६॥
आत्मा पुरिशयः प्रोक्तः पुर्यां चैवोपलभ्यते ।
यद्वा [8]पूरयतेरेव पुरुषस्त्वयमिष्यते ॥४६७॥
पूरयत्यन्तरित्युक्तो हेतुः[9] पूरयतेरयम् ।
अन्तरः पुरुषस्तावत् क्षेत्रज्ञोऽत्र विवक्षितः ॥४६८॥
पूरयत्यन्तरित्येष शरीरस्य स्वमात्मना ।
तेन स्थूलं च सूक्ष्मं च शरीरं व्याप्तमिष्यते ॥४६९॥
तद् यावद् व्याप्तिभूतोक्त्या तृतीयेऽप्यभिधास्यते[10] ।
इह प्रविष्टमित्युक्तम्[11] आनखाग्रेभ्य इत्यपि ॥४७०॥
नन्वेवं देहमात्रत्वमात्मनोऽस्य प्रसज्यते ।
न दोषः सर्वगेनापि देहो यत्पूर्यते ततः ॥४७१॥

---

१. कोशे 'पुरिशाद०' इत्यपपाठः ।
२. 'कोशे '०र्थीपिशातयेत्' इत्यपपाठः ।
३. निबन्धनशातनेनोपायेनेत्यर्थः ?
४. कोशे 'पुरीशय०' इत्यपपाठः ।
५. कोशे 'शेतेवतिषुते' इत्यपपाठः ।
६. कोशे 'भोक्तृत्वेनन्नपानाभ्यां' इत्यपपाठः ।
७ बृहदा० २।५।१८॥
८. धा० १०।२६१॥
९. कोशे 'हेत्वपूरयते०' इत्यपपाठः ।
१०. यत्रा सुपर्णा अमृतस्य भागम् (ऋ० १।१६४।२१) इति मन्त्रस्य यास्ककृता (निरु० ३।१२) व्याख्यात्राभिप्रेयते ?
११. आ विवेश (ऋ० १।१६४।२१) इत्यस्य व्याख्यानमेतत् स्यात् ?

सत्यं[1] न देहपूरणेन कथितेन प्रयोजनम् ।
देहोपभोग्यतां वक्तुं तस्य पूरणमर्थवत् ॥४७२॥
आत्मनस्सर्वगस्यापि देहस्थस्यैव भोक्तृता ।
तेनैवमब्रवीद् यास्कः पूरयत्यन्तरित्यदः ॥४७३॥
तेनेदं[2] पूर्णमित्येष निगमश्चोक्तसिद्धये ।
न स्तः परापरे यस्माद् [3]अणीयो ज्याय एव च ॥४७४॥
स्थाणुवन्निश्चलश्चैको यो दिव्यात्मन्यवस्थितः ।
तेनैव पुरुषेणेदं पूर्णं सर्वं शरीरकृत् ॥४७५॥
तस्मात् पूरयतेरात्मा पुरुषः समुदाहृतः ।
परमित्यूर्ध्वमात्रोक्तमधश्चापरमित्यपि[4] ॥४७६॥
आत्मनः सर्वगतत्वेन [5]तदभावोऽत्र वर्णितः ।
निर्भागत्वादणीयस्त्वं[6] ज्यायस्त्वं सर्वगत्वतः ॥४७७॥
न पुनर्भागभूम्नैव नहि [7]तेऽनुपलब्धितः ।
अपरिच्छिन्नतैवास्य[8] ज्यायस्ता तेन संश्रिता ॥४७८॥
भागभावेन[9] सा यस्य प्रमाणं तत्र दृश्यते ।
सर्वगस्यास्य तन्नास्ति वेदान्ते [10]सर्वगे स्थिते ॥४७९॥
व्योमादेरेवमात्मत्वं नोक्तस्यार्थस्य बाधकम् ।
भवेद् [11]व्योमादिरप्येवमात्माप्येवं भविष्यति ॥४८०॥

---

१. कोशे 'सत्यनदेत पुरेण' इत्यपपाठः ।

२. तथा च मन्त्रवर्णः—
'यस्मात्परं नापरमस्ति किंचिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥' तै० आ० १०।१०।३॥ श्वेता० उप० ३।९॥ महाना० उप० १०।४॥

३. कोशे 'अणीया' इत्यपपाठः ।

४. कोशे '०मर्धं०' इत्यपपाठः ।

५. गत्यभाव इत्यर्थः ।

६. कोशे 'निभागत्वा०' इत्यपपाठः ।

७. ते भागा इत्यर्थः ।

८. कोशे '०छिन्नतेवास्य' इत्यपपाठः ।

९. कोशे 'भानभावेन' इत्यपपाठः ।

१०. कोशे 'सर्वगस्थिते' इति पाठः ।

११. कोशे 'व्योमारप्येव…माप्येवमभविष्यति' इत्येवं भ्रष्टस्त्रुटितश्च पाठो दृश्यते ।

क्षेत्रज्ञस्यैवमात्मत्वं न्यायसिद्धमनूद्यते ।
कश्चिदित्यस्य शब्दस्य [1]किञ्चिदित्येव सन्नतिः ॥४८१॥
स्तब्ध इत्यपि चानेन निश्चलत्वं विवक्षितम् ।
उपपन्नं च तत्स्थाणाविति [2]स्यात्तद्धितेन[3] सः ॥४८२॥
निश्चलो वा यदा वृक्षस्तदा दृष्टान्त इष्यताम् ।
ज्ञानेन द्योतमानत्वाद् द्यौरात्मैवेह[4] कथ्यते ॥४८३॥
यद्वा [5]प्रदर्शनायाऽसौ पृथिव्यादेर्भविष्यति ।
एक इत्यसहायत्वं विरक्त्यर्थमुदाहृतम् ॥४८४॥
तिष्ठतीत्यनयोक्त्या च सर्वदाऽस्तित्वमोरितम् ।
पूर्णं यद्यपि चानेन जगत् सर्वं च शेषतः ॥४८४॥[6]
तथापि क्षेत्रमेवोक्तं पूर्णमत्रोपभोग्यतः ।
शरीरे त्वेव भोगोऽस्य सर्वगस्यापि नान्यतः ॥४८६॥
एवमध्यात्मदृष्टचोक्तम् [7]अधिदैवमथोच्यते ।
पूरयत्यन्तरित्यन्तो ग्रन्थः क्षेत्रज्ञगोचरः ॥४८७॥
अन्तरः पुरुषस्तस्मात् सर्वस्याभ्यन्तरः परः ।
सर्वज्ञस्सर्वलोकेशः परमात्मेति यं विदुः ॥४८८॥
निगमस्तमभिप्रेत्य[8] तेनेत्येवमुदाहृतः[9] ।
वेदान्तेषु प्रसिद्धोऽसौ तपसा ज्ञायते शनैः ४८९॥
श्रद्धया परया भक्त्या स्वकर्मनिरतैर्द्विजैः ।
द्वा[10] सुपर्णेति चानेन क्षेत्रज्ञस्स च भाषितः ॥४९०॥
क्षेत्रज्ञस्य च भोक्तृत्वं संसारित्वेन हेतुना ।
तदभावादभोक्ताऽन्यश्शुद्धोऽनश्नन्नितीरितः ॥४९१॥

---

१. कोशे 'किन्त्विदित्येव' इत्यपपाठः । २. कोशे 'स्यत्तद्धितेन' इत्यपपाठः ।
३. वृक्षशब्देन वृक्षविकारः स्थाणुरुच्यत इत्यर्थः ।
४. कोशे 'द्यौरात्मेवेह' इत्यपपाठः । ५. उपलक्षणमित्यर्थः ।
६. इत्यत आरभ्य कोशे ४३५ इत्येवं पञ्चाशत् संख्या न्यूना लिख्यते ।
७. परमात्मदृष्टयेत्यर्थः । ८. तेनेदं पूर्णं पुरुषेण सर्वम् । द्र० पृ० २७० टि० २ ॥
९. कोशे '०दाहृतम्' इति पाठः । १०. ऋ० १।१६४।२०॥

क्षेत्रज्ञस्यान्यता[1] तस्मात् तथानन्यत्वमिष्यते ।
स्वाभाविकमनन्यत्वम् अन्यत्वं भ्रान्तिहेतुकम् ॥४९२॥
वेदान्तेष्वेवमेवेदं युक्त्या सम्यगवस्थितम् ।
कारणं परमित्युक्तम् अन्यदेवापरं तथा ॥४९३॥
यस्मादन्यत् परं किञ्चित् कारणं नैव विद्यते ।
अणीयश्च तथा ज्यायो [2]निश्चलो यश्च सर्वगः ॥४९४॥
सर्वगश्चाप्युपासार्थं[3] दिवि सूर्यस्य मण्डले ।
[4]यस्तिष्ठत्यात्मभाहात्म्यात् तेन पूर्णमिदं जगत् ॥४९५॥
आनन्दस्यैव[5] शुद्धस्य भोक्तासौ पुरुषो [6]विभुः ।
अध्यक्षस्सर्वभूतानाम् [7]उपास्यत्वेन गीयते ॥४९६॥
[8]समासोऽनेक [9]पर्वाऽयं [10]विश्वेत्यादिभिरुच्यते ।
श्वगताविति निर्दिष्टस्त्वभिधेयो[11] [12]द्वयोरपि ॥४९७॥
श्वभिस्सह गतिर्यस्य श्वानो वा गतिराश्रयः ।
श्वगतिस्स तु विज्ञेय[स्] तथा श्वागणिकश्च[13] सः ॥४९८॥
भाष्यते त्विति निर्दिष्टं भाषिकत्वं द्वयोरपि ।
भाषिकावेव तौ शब्दौ शब्दशास्त्रान्तरे स्थितौ ॥४९९॥
पृषोदरादिसिद्धा वाऽनयोर्व्युत्पत्तिरिष्यते[14] ।
द्रातीति धातुनिर्देशस्तदर्थो गतिकुत्सना ॥५००॥

---

१. कोशे 'क्षेत्रज्ञस्यान्यथा' इत्यपपाठः । २. कोशे 'निश्चयो' इत्यपपाठः ।
३. कोशे 'सर्वगस्याप्युपा०' इत्यपपाठः । ४. कोशे 'यत्तिष्ठन्नात्म' इत्यपपाठः ।
५. कोशे 'आनन्दस्यैत्र' इत्यपपाठः । ६. कोशे 'विदुः' इत्यपपाठः ।
७. कोशे 'उपासत्वेन' इति पाठः ।
८. विश्चकद्राकर्षो वीति चकद्र इति श्वगतौ भाष्यते । द्रातीति गतिकुत्सना । कद्रतीति द्रातिकुत्सना । चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासः । तदस्मिन्नस्तीति विश्चकद्रः । निरु० २।३॥ ९. कोशे '०नेकपर्वो०' इत्यपपाठः । १०. कोशे 'विश्वेत्या०' इत्यपपाठः ।
११. कोशे '०त्वमिधेया' इत्यपपाठः ।
१२. वीति चकद्र इति चेत्यर्थः ।
१३. कोशे 'श्वागणिनश्च' इत्यपपाठः । १४. द्र०—अष्टा० ६।३।१०९॥

कुत्सितायां ग[तौ] [1]धातुरित्यर्थोऽत्र विवक्षितः ।
आपन्नेन कुशब्देन कद्रूपं[2] [3]द्रातिनिन्दिता ॥५०१॥
कुत्स्यते द्रा गतिस्सैव ततश्चात्यन्तकुत्सिता ।
कद्रैव[4] तु चकद्रा स्याच्चकारोऽयमनर्थकः ॥५०२॥
उपजातो निमित्तेन विनेत्यर्थो विवक्षितः ।
सत इत्यत्र नैवेदं [5]कारकस्यावधारणम् ॥५०३॥
धातोरेवं विधस्येति धातुरूपं विवक्षितम् ।
अभ्यासस्य विशेषार्थाविवक्षा[6] तस्य युज्यते ॥५०४॥
कारकस्य विवक्षायामभ्यासग्रहणं वृथा ।
प्रत्ययस्तद्धितो [7]वीति मत्वर्थीयस्तथोक्तितः[8] ५०५॥
प्रत्ययोऽप्यादिभागिष्टो यथा बहुपटुस्तथा ।
[9]पारस्करादिभावाच्च सुटि [10]विश्चेति सिध्यति ॥५०६॥
तदस्मिन्नि[ति] चानेन तद्धितार्थोऽत्र दर्शितः ।
यस्मात् सा सारमेयेऽस्ति [11]गतिः कद्रेति योदिता ॥५०७॥
स[12] विश्चकद्र इत्युक्तस्तत्कर्मोपपदः[13] परः ।
समासः पुरुषस्त्वेवं वाच्य[:] [14]श्वागणिकस्तु सः ॥५०८॥

---

१. धा० २।४५॥ २. कोशे 'तद्रूपं' इत्यपपाठः ।
३. कोशे 'द्रातिनोदिता' इति पाठः । द्रा+अतिनिन्दिता ?
४. कोशे 'कदैव' इत्यपपाठः । ५. कोशे 'मकारस्या०' इत्यपपाठः ।
६. कोशे 'विशेषार्थत्रिवक्षा' इत्यपपाठः ।
७. कोशे 'पीति' इत्यपपाठः । अस्यायमर्थः—'विश्चद्राकर्षः' इत्यत्र विर्मत्वर्थीयः प्रत्ययः । बहुपटव इत्यादौ प्रयुज्यमानबहुच्प्रत्ययवदस्य पूर्वप्रयोगः ।
८. तदस्मिन्नस्तीति भाष्यकृत उक्त्येत्यर्थः ।
९. द्र०—पारस्करप्रभृतीनि च संज्ञायाम् । अष्टा० ६।१।१५७॥ पारस्करप्रभृतिराकृतिगण इति व्याख्याकाराः (द्र०—काशिकाऽत्रैव) ।
१०. कोशे 'विश्वेति' इत्यपपाठः । ११. कोशे 'गति कद्रेति योजितः' इत्यपपाठः ।
१२. कोशे 'विश्वकद्र' इत्यपपाठः ।
१३. विश्चकद्रम् आकर्षतीति विगृह्योपपदसमास इति भावः ।
१४. श्वगणेन चरतीति श्वगणाट् ठञ् च (अष्टा० ४।४।११) इति ठञि साधुः ।

पुरुषस्य गतिर्यद्वा चक्रद्रेत्यभिधीयते ।
अत्यन्तकुत्सिता सापि चरतः श्वगणेन हि ॥५०९॥
पक्षेऽस्मिन् पुरुषस्त्वेव [1]विश्चकद्रो भविष्यति ।
षष्ठीसमास एवं च बाहुराकर्ष उच्यते ॥५१०॥
[2]आकर्षफलकेनेति होमसाधनचोदनात् ।
तत्राहुः फलकं[3] पाणिमभियुक्तास्तु याज्ञिकाः ॥५११॥
श्वगताविति[4] वाक्यं तु पक्षेऽस्मिन्न[5] हि युज्यते ।
श्वगताविति चानेन [6]सख्यमित्येव गम्यताम् ॥५१२॥
व्यापारो वा चकद्र[:] स्याद् बाहौ यस्मिन् स विद्यते ।
व्यापारः कुत्सितोऽप्यस्ति बाहौ चापि श्वसंगतेः ॥५१३॥
स बाहुर्विश्चकद्रः[7] स्याद् बहुव्रीहिसमासतः ।
आकर्षो [7]विश्चकद्रोऽस्य पुरुषस्येति युज्यते ॥५१४॥
आकृष्यते ह्यनेनेति बाहोस्तच्छब्दवाच्यता ।
वीतस्स्यादुपसर्गोऽयं[8] द्वितीयोदाहृताविह ॥५१५॥
वैविध्ये पठ्यते सोऽपि निष्ठान्तस्य [9]पुरस्त्वणः ।
समासश्च बहुव्रीहिः पुमा[न्] वाच्यः पुरेरितः ॥५१६॥
विविधं तु [10]गता वीता चकद्रा यस्य कुत्सिता[11] ।
[स]वाच्यः पुरुषो लोके [12]वीतेत्यादिपदस्य वै ॥५१७॥

---

१. कोशे 'विश्वकद्रोर्भविष्यति' इत्यपपाठः ।

२. आकर्षफलकेन जुहुयात् । पा० गृह्य० २।१०।१७॥

३. आकर्षफलको नाम बाहुप्रमाण औदुम्बरः सर्पाकृतिः पात्रविशेषः । तस्याग्रभागः बलकः पाणिः (पाण्याकृतिः) ।

४. कोशे 'श्वगतानिति' इत्यपपाठः ।

५. कोशे 'पक्षेस्मिन्निति युज्यते' इति पाठः ।

६. कोशे 'सत्यमि०' इत्यपपाठः ।

७. कोशे 'विश्वकद्रः' इत्यपपाठः ।

८. वीतशब्दे श्रूयमाणो यो वीत्युपसर्ग स एव विश्चकद्रशब्देऽपीत्याशयः ।

९. कोशे 'परन्त्विणः' इति पाठः ।

१०. कोशे 'गता ज्ञात' इत्यपपाठः ।

११. कोशे 'कुत्सया' इति पाठः ।

१२. वीतचकद्रपदस्येत्यर्थः । स्कन्दमूलिकेयं व्याख्या । द्र०—स्कन्दव्याख्या द्वितीयभाग पृ० ३४ ।

कल्याणेत्याद्युदाहृत्य[1] समुदायार्थमब्रवीत् ।
कल्याणो यस्य वर्णस्स्यात् तस्य कल्याणवर्णता ॥५१८॥
मण्यादेस्तस्य यद्रूपं रूपं तेनापरं सदृक् ।
दृश्यते यस्य विप्रादेः स तद्रूप इतीरितः[2] ॥५१९॥
कल्याणं कमनीयं स्यात् प्रार्थनीयं हि तत्सदा ।
[3]वृणोतेर्वर्ण इष्टस्स्यादाश्रयं हि वृणोत्यसौ ॥५२०॥
रूपं तु [4]रोचतेर्धातोर्दीप्त्यर्थस्य प्रकीर्तितम् ।
एवमित्यादिवाक्येन[5] विधिरुक्तोऽतिदिश्यते ॥५२१॥
अनुक्तविधिकेष्वेषु तद्धितेष्वितरेषु च ।
स पूर्वं पूर्वमित्यादिरेकपर्वस्वितीरितः[6] ॥५२२॥
[7]एकशब्दोऽसहयार्थ एकाग्न्येकहलादिवत्[8] ।
असहायानि तानि स्युर्यान्यवाक्यगतानि[9] वै ॥५२३॥
जहानिधाशितामेति[10] सन्दिग्धार्थान्यनेकधा[11] ।
प्रस्तुताद्यर्थविज्ञानादृते वक्तुमशक्तितः ॥५२४॥
प्रस्तुतं वक्ष्यमाणं वा सामर्थ्यं वाऽनपेक्ष्य हि ।
निर्वक्तुं नैव शक्यानि[12] [13]जहादीनि[हि] केनचित् ॥५२५॥

---

१. कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपम् । कल्याणं कमनीयं भवति । वर्णो वृणोतेः । रूपं रोचतेः । निरु० २।३॥

२. कोशे 'इतीरितम्' इति पाठः ।

३. धा० ५।८॥ ४. धा० १।७८१॥

५. एवं तद्धितसमासान् निब्रूयात् । निरु० २।३॥

६. कोशे 'सपूर्वपूर्व...पर्वस्विदीरितः' इत्यपपाठः ।

७. एवं नैकपदानि निब्रूयात् । निरु० २।३॥

८. तु०—एकशब्दोऽयं बह्वर्थः ।...अस्त्यसहायवाची, तद्यथा—एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति । असहायैरित्यर्थः । महाभा० १।१।२४॥

९. कोशे 'यानि वाक्यगतानि' इत्यपपाठः ।

१०. जहाति धारितामेति' इत्यपपाठः । द्र०—निरु० ४।१॥

११. कोशे '०नेकधम्' इत्यपपाठः ।

१२. कोशे 'वाक्यानि' इत्यपपाठः । १३. निरु० ४।१॥

निर्ब्रुवन्नपहास्यस्स्यान्मृषोक्तौ[1] नारकस्तथा[2] ।
एवमेकपदानीति[3] नवाऽनेन विरुध्यते ॥५२६॥
वाक्यस्थानीह तानि स्युरेषामप्यसहायता ।[4]
उक्त्वा निर्वचनोपायं विस्तरेणाधुना त्विदम् ॥५२७॥
विद्यास्थानं न वक्तव्यं यस्मै तं प्राह भाष्यकृत् ।
नावैयाकरणायेति[5] ब्रूयादित्यनुषज्यते[6] ॥५२८॥
नावैयाकरणश्शक्तो ज्ञातुं तेन निषिध्यते ।
उच्यमानमशक्ताय ज्ञातुं निष्फलमेव हि ॥५२९॥
शब्दशास्त्रविदे भाष्यमितिसामर्थ्यभाषितम् ।
नोपसन्नस्तु[7] यश्चापि तस्मा अपि न निर्वदेत् ॥५३०॥
निर्ब्रूयादुपसन्नाय शब्दशास्त्रविदे ततः ।
उक्तद्वयगुणायापि वक्तव्यं नानिदंविदे ॥५३१॥
इदमित्यत्र किं प्रोक्तं निरुक्तं सर्वमेव वा ।
अथवा किञ्चिदेवान्यत् त्रिधाऽप्येवं न युज्यते ॥५३२॥
निरुक्तं चेन्न तज्ज्ञाय व्याख्यानं सफलं भवेत् ।
नहि यो वेत्ति यत्तस्मै तद्वाच्यं यदि तत्त्वतः ॥५३३॥
वेत्ति[8] यो नैव यत्तस्य तद्व्याख्या सफला भवेत् ।
नापि सर्वमिदं तावत् सर्वज्ञायाप्यनर्थकम्[9] ॥५३४॥
सर्वज्ञो नैव [10]कश्चित् स्यात् किञ्चिदन्यच्च किं तु तत् ।
भवेन्निरुक्तमेवेदं प्रस्तुतत्वेन हेतुना ॥५३५॥

---

१. कोशे 'निब्रुवन्न०' इत्यपपाठः । २. कोशे 'नरकं तथा' इति पाठः ।

३. एवमेकपदानि निब्रूयात् निरु० २।२॥

४. तत्रैकपदानीति शब्देन वाक्यस्थान्यवृत्तिजानि पदान्यभिहितानि, इह तु वाक्यात् पृथक्कृतानीति भेदः ।

५. नावैयाकरणाय नानुपसन्नायानिदंविदे वा । निरु० २।३॥

६. कोशे '०त्यनुयुज्यते' इति पाठः । ७. कोशे 'सोपसन्न०' इत्यपपाठः ।

८. कोशे 'ये नैव' इति पाठः । ९. कोशे '०प्यनर्थकः' इति पाठः ।

१०. कोशे 'किञ्चित्' इति पाठः ।

वेत्ति व्याख्यायमान[1] यः स [2]त्विदंविदिहोच्यते ।
कश्चिद् व्याख्यायमानं[3] च नैव वेत्त्यसमर्थतः ॥५३६॥
अधीते नैव यो वेदमशक्तो[4] ऽसावसंशयम् ।
शब्दज्ञश्चोपपन्नोऽपि वेदं यो नाध्यगीष्ट हि ॥५३७॥
तस्मा अप्यसमर्थाय न व्याख्येयमितीरितम् ।
एवं व्याख्यायमानोऽयं ग्रन्थो दृष्टार्थतां व्रजेत् ॥५३८॥
इदमुक्तमनेनेति यो न वेदेह मानवः ।
[सोऽनिदंविदिति प्रोक्तः] कश्चिदन्यैरनात्मवित्[5] ॥५३९॥
आत्माऽपि शक्यते वक्तुम् इदमित्यपरोक्षतः ।
अहमित्येव विज्ञानं प्रत्यक्षमात्मगोचरम् ॥५४०॥
अध्यात्मं चाधिदैवं च [6]स शक्तो [7]बोद्धुमञ्जसा ।
अवाच्यत्वप्रसिध्यर्थं[8] हेतुर्नित्यमितीर्यते ॥५४१॥
तस्मादवाच्यमित्युक्ते [9]नित्यं हीत्याह कारणम् ।
सर्वदैव [10]ह्यविज्ञातुरसूया जायतेऽक्षमा ॥५४२॥
शास्त्रार्थं वदतः सम्यग् विज्ञाने शास्त्रगोचरे ।
शास्त्रार्थं यदि वेदायं बोधयेन्मामसंशयम् ॥५४३॥
न बोधयेदयं यस्मात् तस्मादज्ञोऽवसीयते ।
इत्येव मन्यते दुष्टो [11]नाऽत्मदोषं प्रपश्यति ॥५४४॥
तथा मत्ययशो लोके श्रमवैयर्थ्यमेव वा ।
जायते वक्तुरित्येवं[12] न ब्रूयादित्युदाहृतम् ॥५४५॥

---

१. कोशे 'व्याख्यायमाना' इत्यपपाठः ।
२. कोशे 'त्वहंविदि०' इत्यपपाठः ।
३. कोशे 'व्याख्यायमानश्च' इत्यपपाठः ।
४. कोशे 'वेदमसक्तो०' इत्यपपाठः ।
५. कोशे '०रनात्मवत्' इत्यपपाठः ।
६. आत्मविदित्यर्थः ।
७. कोशे 'बोध्यम०' इत्यपपाठः ।
८. कोशे 'अवाच्यत्वं प्रसिध्यर्थं हेतु' इत्यपपाठः ।
९. नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया । निरु० २।३॥
१०. कोशे 'ह्यभिज्ञातु०' इत्यपपाठः ।
११. कोशे 'नामदो' इत्यपपाठः ।
१२. कोशे 'वक्तुरित्यवं' इत्यपपाठः ।

[1]उपसन्नाय [2]निर्ब्रूयात् शिष्यतामागताय तु ।
अवैयाकरणश्चापि शिष्योऽयं श्रद्धयान्वितः ॥५४६॥
शुश्रूषुरभियुक्तश्च तस्मै ब्रूयाद् दयान्वितः ।
[3]श्रद्धाभक्तिप्रसादेन सोऽपि कालेन [4]वेत्स्यति ॥५४७॥
विज्ञातुं वाप्यलं [5]यस्स्यात् समर्थोऽलमितीरितः ।
समर्थस्तु भवेत् प्राज्ञो नाशक्यं तस्य संविदि ॥५४८॥
ईषत् प्रदर्शिते मार्गे प्राज्ञश्शक्तो निवेदितुम् ।
तस्मा अपि ततो ब्रूयाद् [6]विद्यानुच्छित्तिसिद्धये ॥५४९॥
यद्वा मेधाविने ब्रूयात् सोऽपि शक्ष्यति वेदितुम् ।
उक्तमात्रपरिज्ञानं तथाहुस्तस्य धारणम् ॥५५०॥
मेधाभावोऽस्य[7] सामर्थ्यं प्रज्ञेत्येवमजामिता[8] ।
तपस्विनेऽथवा ब्रूयान्नासाध्यं[9] तपसोऽस्ति हि ॥५५१॥
समर्थश्चोपसन्नश्च मेधावी तपसान्वितः ।
तस्मै वक्तव्यमेतत् स्यादिति वा ग्रन्थयोजना ॥५५२॥
पदवाक्यप्रमाणज्ञः[10] समर्थोऽत्र विवक्षितः ।
समुच्चयेऽत्र[11] वाशब्दस्तुशब्दश्चावधारणे ॥५५३॥
विद्याहेत्यादि[12] वाक्येन [13]द्रढयत्यधुनोदितम् ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥५५४॥

---

१. उपसन्नाय तु निर्ब्रूयात्, यो वालं विज्ञातुं स्याद्, मेधाविने तपस्विने वा निरु २।३॥
२. कोशे 'निर्ब्रूयात्' इत्यपपाठः । ३. कोशे 'शुद्धाः' इत्यपपाठः ।
४. विदेः सेट्त्वेऽप्यनिडो रूपं छन्दः पारतन्त्र्येण वेद्यम् । यद्वा वेत्ता वेत्तुम् इत्यादिषु बहुत्रानिट्त्वदर्शनादनिड्रूपमपि साधु ।
५. कोशे 'यस्यास्समर्थो' इत्यपपाठः ।
६. कोशे 'विद्वानु०' इत्यपपाठः । ७. कोशे 'मेवाहावो०' इति पाठः ।
८. अजामिता = अपुनरुक्तिता । ९. कोशे 'ब्रूयान्नसाध्यं' इत्यपपाठः ।
१०. व्याकरणमीमांसान्यायविदित्यर्थः ।
११. कोशे 'समुच्चये वा शब्द०' इत्यपपाठः ।
१२. विद्या ह ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥ निरु० २।४॥
१३. कोशे 'दृढय०' इत्यपपाठः ।

पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश ।[1]
देवता[2] या त्वधिष्ठात्री सा विद्यानामिहोच्यते ॥५५५॥
ब्राह्मणं सर्वशास्त्रज्ञं सा जगाम शरीरिणी ।
गोपाय रक्ष मां सम्यग् इति चेदमभाषत ॥५५६॥
रक्षिता च भविष्यामि तवाहं शेवधिर्निधिः ।
निधिवत् सुखदा ते स्याम् इत्यर्थोऽत्र विवक्षितः ॥५५७॥
असूयकादिवाक्येन रक्षणोपाय उच्यते ।
हैतुको [3]गुरुद्विट् चेह विज्ञेयस्स्यादसूयकः ॥५५८॥
वदत्यन्यत् करोत्यन्यद् यश्शठस्सोऽनृजुः स्मृतः ।
अयतो भिन्नवृत्तस्स्याद् अशुचिर्दुर्बलेन्द्रियः ॥५५९॥
एवंविधाय दुष्टाय मा वोचो[4] मां कथञ्चन ।
तस्मै चावक्ष्यमाणाऽहं भवेयं वीर्यवत्तमा[5] ॥५६०॥
करिष्यसि महद्वीर्यं त्वं मया यत्र कुत्रचित् ।
यथा भवेयमित्यर्थो रक्षणीया ततस्त्वया ॥५६१॥
पालयेत् तु यथा विद्यामाचार्यो भाषितं तथा ।
पालयेद् येन मार्गेण शिष्यस्तां सोऽधुनोच्यते[6] ॥५६२॥
कर्णौ[7] योऽवितथेनैव सत्येन वचसा गुरुः ।
आतृणत्यमृतं ज्ञा[नं सम्यग् यच्छन्] प्रविध्यति ॥५६३॥
दुःखादन्यददुःखं स्यात् [8]किन्नु तत्सुखमेव हि ।
कुर्वन्तत्सुखमित्यर्थः[9] समासोऽयं समर्थतः[10] ॥५६४॥

१. वायु पु० ६१।७८॥ अपि द्र०—विष्णु पु० ३।६।२८६॥ मत्स्य पु० ५३।५॥ याज्ञ० स्मृ० १।३॥
२. कोशे 'देवतायास्त्वधि०' इत्यपपाठः ।
३. कोशे 'गुरुवीचिद्ध' इत्यपपाठः ।
४. कोशे 'वाचो' इत्यपपाठः ।
५. कोशे 'वीर्यवत्तमाः' इत्यपपाठः ।
६. य आतृणत्यवितथेन कर्णाविदुःखं कुर्वन्नमृतं सम्प्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्चनाह ॥ निरु० २।४॥
७. कोशे 'कण्डो योपि तथैनैव' इत्यपपाठः ।
८. कोशे 'स्यारिन्न' इत्यपपाठः ।
९. कोशे 'कुर्वन्तस्सुख०' इत्यपपाठः ।
१०. असमर्थसमासोऽयं गमकत्वात् साधुरित्याशयः ।

पितरं मातरं चैव तं मन्येत[1] गुरुं सदा ।
पितृवन्मातृवच्चैनमुपासीतेति भाषितम् ॥५६५॥
कतमत् किञ्चिदित्यर्थश्चनेत्यप्यर्थ इष्यते ।
अहेत्यनेन शब्देन तथोक्तमवधारणम् ॥५६६॥
गुरवे पितृभूताय न द्रुह्येदेव किञ्च[न] ।
गुरावनादरे दोषो विद्यानैष्फल्यमुच्यते ॥५६७॥
[2]अध्याप्य [3]ग्राहिता विद्यां नाद्रियन्ते हि ये गुरुम् ।
कर्मणा मनसा वाचा विद्या तान्नैव पालयेत् ॥५६८॥
यथैवेत्यत्र दृष्टान्तः [4]कृत्यः कर्तर्ययं त्विह ।
यथा न भोजकाश्शिष्या गुरोस्तेषां श्रुतं तथा ॥५६९॥
कर्मण्यपि. यथा [5]कृत्यस्तथाप्यत्राभिधीयते ।
नाद्रियन्ते [6]गुरुं ये हि भोजनीया [7]गुरोर्न ते ॥५७०॥
गुरुणा नैव पाल्यन्ते यथा तद्वच्छ्रुतेन ते ।
यस्मै शिष्याय वक्तव्यं [8]यमेवेत्युच्यतेऽथ सः ॥५७१॥
शुचिं यमेव जानीषे शुद्धमन्तर्बहिस्तथा ।
श्रवणे परिचर्यायाम् अप्रमत्तं मनस्विनम् ॥५७२॥

---

१. कोशे 'मन्येतं' इत्यपपाठः ।

२. अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥ निरु० २।४॥

३. कोशे 'ग्राहिका विद्या' इत्यपपाठः ।

४. कोशे 'कृत्या' इत्यपपाठः । 'भोजनीयाः' इत्यत्रानीयर् इति कृत्यः प्रत्ययः कृत्यल्युटो बहुलम् (अष्टा० ३।३।११३) इति बहुलग्रहणात् कर्तरीत्यभिप्रायः ।

५. कोशे 'कृत्यं तथा०' इत्यपपाठः । तयोरेव कृत्यक्तखलर्थाः (अष्टा० ३।४।७०) इति कर्मणि कृत्यः 'अनीयर्' प्रत्ययः ।

६. कोशे 'गुरुर्ये' इत्यपपाठः ।

७. कोशे 'गुरुर्न' इत्यपपाठः ।

८. यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥ निरु० २।४॥

ब्रह्मचर्योपपन्नं च द्विजं मेधाविनं तथा ।
न [1]द्रुह्य द् यश्च ते [2]तस्मै ब्रूहि त्वं निधिपाय माम् ॥५७३॥
निहिता यत्र वै विद्या निधिस्सोऽत्र गुरुस्स्मृतः ।
निहिता[3] ह्यथवा यस्मिन् कल्याणातममतिस्तथा ॥५७४॥
निधिशब्दस्य[4] वाच्योऽर्थ उक्तश्शेवधिरित्यपि ।
सुशेवं कल्पयामीति सुखं शेवं प्रचक्षते[5] ॥५७५॥

॥ इति पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके
द्वितीयाध्यायस्य प्रथमः पादः ॥

---

१. कोशे 'द्रुह्याद्' इत्यपपाठः ।
२. कोशे 'तन्मे' इत्यपपाठः ।
३. कोशे 'निहितान्यथवा' इति पाठः ।
४. निधिः शेवधिरिति । निरु० २।४॥
५. निघ० ३।६॥

# द्वितीयः पादः

साभिधेयं ससम्बन्धं निरुक्तं सप्रयोजनम् ।
सव्याख्योपायमाख्यातम् अवशिष्टं न किञ्चन ॥१॥
व्याख्यानव्यतिरेकेण व्याख्यानं यद् भविष्यति ।
अथातोऽनुक्रमिष्यामि[1] समाम्नायं विभागशः ॥२॥
गौरित्येतत् पदं नाम पृथिव्या[2] वाचकं गमेः[3] ।
डो-प्रत्यये टिलोपे च वृद्धौ साविष्यते बुधैः ॥३॥
दूरंगतत्वमप्यस्या[4] नैरन्तर्यव्यवस्थितिः ।
पूर्वं स्थानं परित्यज्य न हि स्थानान्तरं गता[5] ॥४॥
अथवाऽवगता[6] दूरं [7]गमेर्ज्ञानार्थवाचिनः ।
अन्तो न दृश्यते ह्यस्या अन्यत्रोपरिदेशतः ॥५॥
यद्वा गच्छन्ति भूतानि स्थितान्यस्यां हि जन्तवः ।
गौरित्यतो विनिर्दिष्टा [8]गातेर्वा स्तुतिकर्मणः[9] ॥६॥
ओकारः प्रत्ययस्त्वस्य [10]स्योनेति स्तूयते हि सा ।
गायन्ति[11] देवता यद्वा स्थिता त्वस्यां द्विजोत्तमाः ॥७॥

---

१. अथातोऽनुक्रमिष्यामः । गौरिति पृथिव्या नामधेयम् । यद् दूरं गता भवति । यच्चास्यां भूतानि गच्छन्ति । गातेर्वौकारो नामकरणः । निरु० २।५॥

२. कोशे 'पृथिव्यां' इत्यपपाठः । ३. धा० १।१०३१॥

४. कोशे '०प्यस्यान्नैर०' इति पाठः ।

५. कोशे 'गतः' इत्यपपाठः ।

६. कोशे 'अथवा च गता' इति पाठः ।

७. कोशे 'न मे ज्ञाना०' इत्यपपाठः ।

८. कोशे 'गतेर्वा' इत्यपपाठः । धा० ३।२५॥

९. गाङ् गताविति दुर्गः । गीयते स्तूयते गायन्ति वाऽस्यां स्थिता इति गौरिति स्कन्दः ।

१०. तथा च मन्त्रवर्णः—स्योना पृथिवि भवानृक्षरा निवेशिनी । ऋ० १।२२।१५॥

११. कोशे 'गयन्ति' इत्यपपाठः ।

अथवाप्येतत्[1] पशोर्नाम [2]गमेर्गातेश्च गौरिति ।
गच्छति स्तूयते चैव सा[3] [4]रुद्रेति संस्फुटम् ॥८॥
निवृत्तिरन्यतो मास्य विज्ञायीत्येतदब्रवोत्[5] ।
[6]पशुगव्याम् [7]अथाप्यस्यां प्रवृत्तस्यास्य गौरिति ॥९॥
कृत्स्नवन्निगमास्सन्ति ताद्धितेन समन्विनाः[8] ।
ताद्धितस्तद्धितस्यार्थो विकारः पयआदिकः[9] ॥१०॥
प्रकृतिः कृत्स्नशब्दोक्ता [10]गौरेवाधिकृता त्विह ।
मुख्यार्थासम्भवे लोके गौणोऽप्यर्थस्तमाश्रितः ॥११॥
अङ्गीकर्तुमिमं न्यायम् अथापीत्यब्रवीदृषिः ।
शब्दादाकर्णितादर्थो योऽव्यवायेन गम्यते ॥१२॥
स मुख्य इति निर्दिष्टो गौणोऽन्यो गुणयोगनः ।
सुहस्तश्शोभनो[11] हस्तः कर्मण्युत्साहवत्त्वतः ॥१३॥
अथवाशुजवित्वेन[12] यद्वा काञ्चनभूषणात्[13] ।
ईकारश्छान्दसस्तस्मान्मतुबर्थे बुधैः स्मृतः[14] ॥१४॥

---

१. अथापि पशुनामेह भवत्येतस्मादेव । निरु० २।५॥

२. कोशे 'गमे गातेश्च' इत्यपपाठः । ३. अत्र कोशे 'ना' पाठः ।

४. तथा च गोदेवताके सूक्ते 'पद्वते रुद्र मृळ' (ऋ० १०।१६९।१) इत्येवं गवां स्तुतिर्दृश्यते । ५. कोशे '०यीत्यतद०' इत्यपपाठः ।

६. कोशे 'पशुगम्याम्' इत्यपपाठः ।

७. अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति । गोभिः श्रीणीत मत्सरम् (ऋ० ९।४६।४) इति पयसः निरु० २।५॥

८. कोशे 'समन्वितम्' इत्यपपाठः ।

९. कोशे '०आदिकम्' इत्यपपाठः । १०. कोशे 'गौरवा०' इत्यपपाठः ।

११. निरुक्त उद्ध्रियमाणस्य मन्त्रैकदेशव्याख्यानाय कृत्स्नं मन्त्रं व्याख्याति । तथा च इन्त्रवर्णः—आधावत सुहस्त्यः शुक्रा गृम्णीत मन्थिना । गोभिः श्रीणीत मत्सरम् ॥ ऋ० ९।४६।४॥

१२. कोशे '०क्रुजवित्वेन' इत्यपपाठः ।

१३. कोशे '०भूषणः' इति पाठः ।

१४. छन्दसीवनिपौ च वक्तव्यौ । अ० ५।२।१०९ वा० ।

सुहस्त्य इतिरूपं स्यात् प्रथमाया[1] बहोर्वचः ।
अध्वर्यवस्सुहस्त्यास्स्युस्तानाहाधावतेत्यपि[2] ॥१५॥
शीघ्रमेत्य हविर्धानं [3]शुक्रं मन्थिनमेव च ।
ग्रहौ[4] गृह्णीत किञ्चान्यद् गोभिः श्रीणीत[5] मत्सरम् ॥१६॥
मत्सरश्चेह सोमस्स्याद् गोभिस्तस्य च मिश्रणम् ।
सम्भवेन्मुख्यरूपाभिर्न च वाच्यान्तरैस्तथा ॥१७॥
पयसा विहितं तच्च तथा दध्ना घृतेन च ।
गोभिरित्यस्य तेनार्थो गव्यैरित्यवसीयते ॥१८॥
येन गव्येन यस्योक्तं [6]ग्रहस्य श्रपणं क्रतौ ।
तेनैव तस्य कर्तव्यमित्यर्थः[7] स्मर्यतेऽनया ॥१९॥
सम्भवेदयमेवार्थ इत्याह पयसस्त्विति ।
मत्सरस्त्विह[8] सोमस्स्यान्मन्देस्तृप्तिकर्मणः[9] ॥२०॥
मन्दन्ते[10] देवतास्तेन तृप्यन्तीति प्रचक्षते ।
अथवाऽसौ क्रियायोगात् सोमो मत्सर ईरितः ॥२१॥
लोभस्तु[11] लोकसिद्धो यो [12]मदेरित्युच्यतेऽधुना ।
प्रत्ययस्तु सरोऽस्येष्टो यद्वाऽयं[13] स्याद्द्विधातुजः ॥२२॥
परद्रव्याभिलाषश्च स्वस्याप्यप्रतिपादनम् ।
लोभ इत्युच्यते लोके.................तद्वा ॥२३॥
.........................नरस्सत्येतेन वा धनम् ।
[14]पयस्स्यात् [15]पिबतेर्धातोः पीयते तद् बुभुक्षितैः ॥२४॥

---

१. कोशे 'प्रथमायो' इत्यपपाठः । २. कोशे 'अध्वर्यपसहस्ता०' इत्यपपाठः ।
३. कोशे 'शुक्लमस्थिनमेव' इत्यपपाठः ।
४. कोशे 'गृही' इत्यपपाठः । ५. कोशे 'गोभि श्रीणित' इत्यपपाठः ।
६. कोशे 'गृह्स्य श्रयणं' इत्यपपाठः । ७. कोशे '०मित्यर्थं' इत्यपपाठः ।
८. मत्सरः सोमः । मन्दतेस्तृप्तिकर्मणः । निरु० २।५॥
९. धा० १।१३॥ १०. कोशे 'मन्दन्ति' इत्यपपाठः ।
११. मत्सर इति लोभनाम । अभिमत एनेन धनं भवति । निरु० २।५॥
१२. धा० ४।९९॥ १३. कोशे 'द्वा यत्स्या०' इत्यपपाठः ।
१४. पयः पिबतेर्वा प्यायतेर्वा । निरु० २।५॥ १५. धा० १।९७२॥

आकारे[1] ह्रस्वमापन्ने प्रत्ययेऽसि युडागमे ।
यद्वाऽसिप्रत्यये धातोः[2]प्यायतेर्वृद्धिकर्मणः ॥२५॥
पकारात् परभूतस्य यस्य लोते तु पूर्ववत् ।
प्यायते[3] वर्धते तद्धि दधितक्रादिभावतः ॥२६॥
वर्धयत्यपि पातारं गोमन्तं विक्रयादिना ।
क्षीरं[4] तु [5]क्षरतेरिष्टः क्षरति ह्यूधस[:] स्फुटम् ॥२७॥
[6]अप्रत्ययोपधत्वेन [7]घसेर्वेरकि सिध्यति[8] ।
अदनार्थो घसिश्चेष्टः क्षुन्निवृत्त्यर्थमद्यते ॥२८॥
उशीरं क्षोरसिध्यर्थं [9]वशेरीरक्युदाहृतम्[10] ।
सुगन्धित्वेन तत्कान्तं [11]प्रसङ्गेनैव निर्वचः ॥२९॥
पयस्वानग्न[12] इत्यादौ निरुक्ते स्यात् प्रयोजनम् ।
ते[13] सोमाद इत्यस्यां सोमाभिषवचर्मणः ॥३०॥
अभिधानं गवीत्येतद् गव्यस्यैवोपपद्यते ।
तच्चाप्यानुडुहं चर्म विहितं यज्ञकर्मणि ॥३१॥
दुहन्तः क्षारयन्तोंऽशुं सोमं सोमाद एव ये ।
सोमस्यात्तार इत्यर्थो ग्रावाणोऽध्यासते[14] गवि ॥३२॥

---

१. कोशे 'आकारे प्रासमापन्ने प्रत्यये सीयुडगमे' इत्यपपाठः ।

२. धा० १।५१७॥

३. कोशे 'प्यायतेर्वर्वते' इति पाठः ।

४. क्षीरं क्षरतेः, घसेर्वेरो नामकरणः । उशीरमिति यथा । निरु० २।५॥

५. धा० २।६०४॥

६. अप्रत्ययशब्देनेह पूर्ववैयाकरणप्रसिध्या लोप उच्यते । घस् ईर अवस्थायामुपधालोपे चर्त्वे षत्वे च क्षीरं सिद्धयति ।

७. कोशे '०ररि' इति पाठः । घसेः किच्च (उ० ४।३५) इत्यादिना ईरन् प्रत्ययः किच्च भवति । कित्त्वादुपधालोपः ।

८. कोशे 'सीध्यति' इत्यपपाठः ।

९. धा० २।७०॥

१०. कोशे '०रीरत्युदा०' इति पाठः ।

११. कोशे 'प्रसङ्गेनैष्टु निर्वचः' इत्यपपाठः ।

१२. ऋ० १।२३।२३॥ कोशे 'पयस्थानग्न' इत्यपपाठः ।

१३. तथा च मन्त्रवर्णः—ते स मादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि । तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते ॥ ऋ० १०।९४।९॥

१४. कोशे 'ऽस्यासते' इत्यपपाठः ।

निंसते निंसयन्त्यश्वावृजीषं[1] चुम्बयन्ति ते ।
[2]........................................................ ॥३३॥
तैदुंग्धं[3] पपिवानिन्द्रो मधु सोममयं हविः ।
[प्रथते] वर्धते तद्वा वोर्येणाथ वृषायते ॥३४॥
वृषवन्मत्तमात्मानम् आचरन् योद्धमिच्छति ।
अशेर्मध्यमनुप्राप्य[4] मकारस्तु यदाशमः[5] ॥३५॥
अनुस्वारीकृतस्तिष्ठेद् उकारे प्रत्यये तदा ।
अंशुः[6] शमष्टमात्रः स्याद् इति निर्वचनं भवेत् ॥३६॥
अनुस्वार्यानितेरन्तं[7] शकारश्च शमो यदा ।
स्थाप्यते प्रत्यये तस्मिन् अंशु[:] स्यादननाय शम् ॥३७॥
लतांशौ[8] प्राप्तमात्रे हि विधिना यज्ञकर्मणि ।
सुखमुत्पद्यते यष्टुः कृतकृत्योऽस्म्यहं त्विति[9] ॥३८॥
रसायनप्रयागे वा जोवनाय सुखं भवेत् ।
देवताभावमापन्नो जीवेद्वा सुखमेव सः ॥३९॥
अपाम[10] सोममित्यादिर्मन्त्रवर्णश्च दृश्यते ।
चर्म[11] स्याच्चरतेर्धातोर्मनिनि प्रत्यये कृते ॥४०॥
स[12] सोमोऽस्मिंश्चरत्येव वर्त्मवाच्यं चरेरित ।[13]

---

१. कोशे 'यन्त्याश्च तृजीषं' इत्यपपाठः ।

२. कोशेऽत्रपाठो नष्टः ।    ३ कोशे 'ते दुग्धं' इत्यपपाठः ।

४. कोशे 'अरेमध्ये०' इत्यपपाठः । अंशुः शमष्टमात्रो भवति' अननाय शं भवतीति वा । चर्म चरतेर्वा, उच्चृतं भवतीति वा । निरु० २।५।

५. द्र०—पृ० २३० श्लो० ११४—११६॥

६. कोशे 'आंशुमष्टमात्र' इत्यपपाठः ।    ७. कोशे '०र्यार्शिं तरणं' इत्यपपाठः ।

८. कोशे 'लतांगौ प्राप्तमात्रे हि विधानं' इत्यपपाठः ।

९. द्र०—पृ० २३१ श्लोक १२४–१२६।

१०. अपाम सोममममृता अभूम । ऋ० ८।४८।३॥    ११. धा० १।५६१॥

१२. कोशे 'ते' इत्यपपाठः ।

१३. अयं श्लोकार्द्धः कोशे ऽस्थाने ६६तमे श्लोके लिखितः । तत्रान्वयाभावात् तत उद्धृत्यात्रानीतः ।

उत्पूर्वस्याथवेष्टं स्याद् उच्चृत्तं[1] त्वित्युदाहृतम् ॥४१॥
[2]चृतेश्चृत्यत इत्येवं [3]चृत्तमुत्पाटितं भवेत् ।
गोभिः[4] सन्नद्ध इत्यत्र [5]श्लेष्मचर्माण्युदाहरत्[6] ॥४२॥[7]
श्लेषणाच्चर्मणा[8] चैव श्लेषितो ग्रथितो रथः ।
गोभिः सन्नद्ध इत्युक्तो व्याख्यानं नवमेऽस्य[9] तु ।
नियोजनं [10]बलीवर्दैर्नास्य सन्नहनं भवेत् ॥४३॥
दृढाङ्गता रथस्योक्ता सन्नद्धोऽसीति हेतुभिः ।
संश्लेषणार्थता चापि प्रसिद्धा [12]श्लेष्मकर्तृका ॥४४॥
पिच्छिलावयवः कश्चित् [13]गव्यः श्लेष्माभिधीयते ।
प्रसिद्धश्चर्मकाराणां[14] [15]श्लिषेर्मन्प्रत्यये च मः ॥४५॥
रथाङ्गश्लेषणार्थत्वं[16] वक्तुमुक्ता रथस्तुतिः ।
स्नावश्लेष्मा[17] च निर्दिष्टो गोशब्देनेषुसंस्तुतौ[18] ॥४६॥

---

१. कोशे 'चृतं' इत्यपपाठः । २. धा० ६।३५॥

३. कोशे 'चतुमुत्पादितं' इत्यपपाठः ।

४. कोशे 'गोभिरसम्बन्ध' इत्यपपाठः । ऋ० ६।४५।२६॥

५. अथापि चर्म च श्लेष्मा च । गोभिसन्नद्धो असि वीळयस्व (ऋ० ६।४५।२६) इति रथ स्तुतौ । निरु० २।५॥ ६. कोशे '०दाहर' इत्यपपाठः ।

७. अयं श्लोकः ६६-६७ संख्यायाम् अस्थाने लिखितः कोशे । तत्रान्वयाभा तत उद्धृत्या यथास्थानं स्थापितः ।

८. कोशे 'श्लेषणाञ्चर्मणां शेषि···तो रथः' इति त्रुटितः पाठः ।

९. कोशे 'नवमस्य' इत्यपपाठः । निरुक्त ६।१२॥ तथा तु ग्रन्थ कृदन्यत्र निघण्ट्वध्याय संख्यां संयोज्य निरुक्त स्थलानि निर्दिशति तथाऽत्र 'चतुर्दशे' इति वक्तव्यम् ।

१०. कोशे '०वर्दैनास्य सन्नविनं' इत्यपपाठः ।

११. कोशेऽत्र पाठः खण्डितो भ्रष्टश्च—'दृढागा · सनस्योक्तेः' ।

१२. कोशे 'श्लेषकर्तृका' इत्यपपाठः । १३. कोशे 'गव्य' इति विसर्गरहितः पाठः ।

१४. कोशे '०श्च मका०' इत्यपपाठः ।

१५. कोशे '०मप्रत्यये' इत्यपपाठः । धा० ४।७७॥

१६. कोशे '०श्लेष्मणा०' इति पाठः ।

१७. अथापि स्नाव च श्लेष्मा च गोभिः सन्नद्धा पतति प्रसूता (ऋ० ६।७५।११) इतीषुस्तुतौ । निरु० २।५॥ १८. कोशे 'गोशब्देनेम संस्कृतौ' इत्यपपाठः ।

स्नावभिश्श्लेष्मणा[1] चैव सन्नद्धत्वमिषो[:] स्फुटम् ।
न गोभिर्मुख्यरूपाभिरिति संस्तुतिरीरिता ॥४७॥
[2]स्नावनिर्वर्तिता [3]ज्यापि गव्या[4] गौरुच्यते क्वचित् ।
ताद्धितं[5] न्यायमास्थाय न चेद् गव्या भवेदसौ ॥४८॥
अश्नीयाऽप्यथवा [6]मौर्वी गमयेत् सा शरानिति ।
वृक्षे[7] वृक्ष इति त्वस्यां धनुर्वृक्षोऽभिधीयते ॥४९॥
न्यायेन [8]ताद्धितेनैव वृक्षार्थासम्भवत्वतः[9] ।
ऋग्व्याख्यानेन वक्ष्यामो मुख्यार्थासम्भवे त्विह ॥५०॥
वार्क्षेष्वैन्द्रेषु सर्वेषु धनुष्षु नियता हि गौः ।
निबद्धारोहिताकृष्टा [10]मीमयन् मिमयत्यसौ ॥५१॥
ज्याततः[11] धनुषो मुक्ताः प्रततन्ति वयः[12] शराः ।
अत्तारः पुरुषाणां ते यदा यान्त्यनिवारिता[:] ॥५२॥
अथेदं भुवनं सर्वं बिभेति शरपातनात् ।
बिभ्यत् सुनोति चेन्द्राय[13] शिक्षेदप्यृषये[14] धनम् ॥५३॥
विशब्देनेषुनिर्देशाद् [15]गौर्ज्या वृक्षो धनुस्तथा ।
गौर्गौर्वनस्पतिर्वृक्षः पक्षिणश्च वयो यदि ॥५४॥

---

१. कोशे 'स्नावभिश्लेषणा' इत्यपपाठः । २. कोशे 'स्नावभिर्वर्णिता' इत्यपपाठः ।

३. ज्यापि गौरुच्यते । गव्याचेत् ताद्धितम् । अथ चेन्न गव्या, गमयतीषूनिति । निरु० २।५॥ ४. कोशे 'गव्ये' इति पाठः ।

५. कोशे 'ताद्धिकं' इत्यपपाठः ।

६. शुद्धः पाठोऽत्रोहनीयः । 'मौञ्जी' इति स्कन्दः ।

७. तथा च मन्त्रवर्णः—वृक्षेवृक्षे नियता मीमयद् गौस्ततो वयः प्रपतान् पूरुषादः । अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥ ऋ० १०.२७।२२॥

८. कोशे 'तावुभौ नैव' इत्यपपाठः ।

९. कोशे '०सम्भवे त्वतः' इत्यपपाठः । १०. कोशे 'मिमयम्' इत्यपपाठः ।

११. कोशे 'ततो ज्या धनुषो' इति विपर्यस्तः पाठः ।

१२. कोशे 'मुक्ता प्रचेतन्तीवयं' इत्यपपाठः ।

१३. कोशे 'चन्द्राय' इत्यपपाठः । १४. कोशे '०प्यृषयो' इत्यपपाठः ।

१५. कोशे 'गोज्या वृक्षः धनस्तथा' इत्यपपाठः ।

कस्माद् बिभेति लोकोऽयमिन्द्रं वा यजतेऽथ किम् ।
किं केन संगतं त्वेवं तस्मादर्थः पुरेरितः ॥५५॥
युक्तिमानिति संचिन्त्य भाष्यकारोऽब्रवीत्तथा ।
वेतेर्डि[1] प्रत्यये पक्षी विरित्युक्तस्तथा शरः[2] ॥५६॥
आदित्योऽप्युच्यतेऽनेन[3] गौरित्येव यथा पशुः ।
आदित्य [उच्यते चेह] मण्डलं तदधिष्ठितम् ॥५७॥
[4]सूराधारतयोक्तत्वाद् उतादः परुषे गवि[5] ।
मत्वर्थेऽप्रत्यये रूपं [6]परुष्मान् परुषो भवेत् ॥५८॥
पर्वाण्येव परूंष्याहुर् अमुष्मिन् सन्ति तान्यपि ।
द्रव्याणां तैजसानां च सन्धि[:] पर्वाभ्यमन्यत[7] ॥५९॥
पक्षयोरेव वा पर्व तत्कार्यत्वेन विद्यते ।
तस्मिंस्तस्येति वा पर्व परुषं[8] मुख्यवृत्तितः ॥६०॥
परुषं[9] भास्वदित्युक्तम् उपमन्युसुतेन तु ।
वर्णव्यापत्तिक्लृप्त्या तु तथा वर्णागमेन च ॥६१॥
प्रत्ययेन पुरोक्तेन[10] भास्वतीत्यभिधानतः ।
यथोक्तलक्षणेऽमुष्मिन् गवि गन्तरि मण्डले ॥६२॥
स्थितो यो भगवान् सूरः सर्त्ता सारयिताऽपि वा ।
तस्यैव[11] जगतो वापि सतश्चक्रं हिरण्मयम् ॥६३॥

---

१. कोशे 'वेतेर्विप्रत्यये' इत्यपपाठः । धा० २।३९ । डित्त्वाट्टिलोपे दीर्घेकारस्य लोपः ।

२. विरिति शकुनिनाम । वेतेर्गतिकर्मणः । अथापीषुनामेह भवत्येतस्मादेव । निरु० २।६॥

३. आदित्योऽपि गौरुच्यते । निरु० २।६॥

४. कोशे 'सुराधार०' इत्यपपाठः ।

५. तथा च मन्त्रवर्णः—उतादः परुषे गवि सूरश्चक्रं हिरण्ययम् । न्यैरयद् रथीतमः ॥ ऋ० ६।५६।३॥

६. कोशे 'पुरुषं पुरुषो' इत्यपपाठः ।

७. कोशे 'पर्वण्य' इत्यपपाठः ।

८. कोशे 'पर्वं पर्वं' इत्यपपाठः

९. पर्ववति भास्वतीत्यौपमन्यवः । निरु० २।६॥

१०. मत्वर्थीयेऽकारप्रत्यय इत्यर्थः ।

११. कोशे 'तस्यै' इत्यपपाठः ।

चकनं[1] चरणं वापि हिरण्यसंदृशं तथा ।
न्यैरयद्दुदयादस्तं[2] नियतं चोदयं[3] ततः ॥६४॥
रथी[4] त्वतिशयेनैव गमयेत् सर्वतोऽथवा ।
हिरण्ययपदेनोक्तं हिरण्यमयमेव तु ॥६५॥
उदकं च हिरण्यं स्यात् समूहश्चक्रमस्य तु ।
मण्डलं त्वे[व] वा चक्रं[5] चक्राकारं चरं[6] भवेत् ॥६६॥[7]
[8]रश्मिश्चास्य [9]सुषुम्नाख्य एको गौरुच्यते बुधैः[10] ।
दीप्यते[11] सुमुखं कान्तो यस्स चन्द्रमसं प्रति ।
अम्मये मण्डले चान्द्रे दीप्तिर्नास्ति स्वभावतः ॥६७॥
तेजोमयस्य दूरस्य दीप्तिरग्नेश्च दृश्यते ।
सूर्यरश्मिप्रवेशात्तु दीप्तिरप्स्वपि दृश्यते ॥६८॥
तस्मादेतेन[12] चन्द्रस्य सुषुम्नाख्येन रश्मिना ।
आदित्यान्निर्गतेनैव दीप्तिस्स्यादिति गम्यताम् ॥६९॥
यावद् यावत्[13] सुषुम्नेन व्याप्यते मण्डलस्य हि ।
तत्सर्वं दृश्यते भास्वत् निष्प्रभं[14]शिष्टमप्ययदः ॥७०॥

---

१. चकिर्गत्यर्थः, तस्मात् चकनं चरणमुक्तम् ।

२. कोशे 'तरये दुदया दस्ते' इत्यपपाठः ।

३. कोशे 'चोदये तत्' इति पाठः ।

४. कोशे 'रति त्राति' इत्यपपाठः ।

५. कोशे 'वाचकं' इति पाठः ।

६. कोशे 'चरो' इति पाठः । चरं चरणः चक्रमित्यर्थः ।

७. अतोऽग्रेऽध्यर्द्धश्लोकोऽस्थाने लिखितः काशे, स यथास्थानं नीतः । द्र०—पृष्ठ २८६, टि० १३, पृष्ठ २८७, टि० ७ ।

८. कोशे 'रिवश्चास्य' इत्यपपाठः ।

९. अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते । तदेतेनोपेक्षितव्यम् । आदित्यतोऽस्य दीप्तिर्भवति । निरु० २।६॥

१०. कोशे 'रवैः' इति पाठः ।

११. कोशे 'दीप्यन्ते' इत्यपपाठः ।

१२. कोशे 'तदस्मा०' इत्यपपाठः ।

१३. कोशे 'सुषुम्ने व्यप्यते' इत्यपपाठः ।

१४. कोशे 'त्विष्टमपुदः' इत्यपपाठः ।

प्रत्यहं पूर्यते चन्द्रः पूर्वपक्षे[1] हि रश्मिना ।
हीयते चापरे पक्षे यत्तत्सूर्यविजृम्भितम् ॥७१॥
उक्तार्थप्रतिपत्त्यर्थं [2]सुषुम्न [3]इत्युदाहृतम् ।
[सुषुम्नः] सूर्यरश्मिस्तु[4] चन्द्रमास्तन्मयत्वतः ॥७२॥
भेदाभेदौ तयोर्दृष्टौ शुक्लकृष्णप्रदेशतः[5] ।
अतश्च युज्यते वक्तुं चन्द्रमा[ः] स इतीदृशम् ॥७३॥
गन्धर्व इव भोगित्वाद् गन्धर्वश्चेत्युदाहृतः ।
गन्धर्वेषु [6]स्थितत्वाद्वा तत्समाख्योपपद्यते ॥७४॥
सोमो वा इत्युपक्रम्य गन्धर्वेष्वित्युहृदातम् ।
गमेर्डोप्रत्यये[7] यद्वा सुषुम्नो [8]गौर्भवेदिह ॥७५॥
तां च धारयंश्चन्द्रो[9] गन्धर्व इति कीर्तितः ।
नक्षत्राणि प्रसिद्धानि कृत्तिकादीन्यमूनि वै ॥७६॥
तस्याप्सरस एव स्युस्तानि तस्योपभोग्यतः ।
अप्सु ता[10] मण्डलस्थासु सरन्तीत्येवमुच्यते ॥७७॥
भापदे[11] भस्य बत्वेन [12]तत्परस्यैत्त्वतस्तथा ।
बे इत्येवं भवेद् रूपं तत्पूर्वस्य कृञः पुनः ॥७८॥

---

१. शुक्लपक्ष इत्यर्थः । दक्षिणदेशेषु अमान्तो मासो भवति । प्राचीनकालेऽमान्त एव मासः सर्वसम्मत आसात् । अत एवामावस्यायाः संकेतः पञ्चाङ्गेषु ३० संख्याया सर्वत्र क्रियते ।

२. सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा । मा० सं० १८।४०॥ तु०—तै० सं० ३।४।७।१॥ [तैत्तिरीयादिकृष्णयाजुषसंहितासु 'बेकुरयो' इति पाठः]

३. कोशे 'सुषुम्नन्त्युदाहृतम्' इत्यपपाठः ।

४. कोशे '०रश्मि सुचन्द्रमास्तमयत्वतः' इत्यपपाठः ।

५. कोशे '०प्रदेशक.' इत्यपपाठः ।

६. कोशे 'वितत्वाद्वा' इत्यपपाठः ।

७. कोशे 'गमेर्डप्रत्यये' इत्यपपाठः ।

८. कोशे 'गौ भवेद्' इत्यपपाठः ।

९. कोशे 'तद्धारयंश्चन्द्रो न गन्धव' इत्यपपाठः ।

१०. कोशे 'वा मण्डलस्थासु सरतीत्ये०' इति पाठः ।

११. कोशे 'भासते भस्य भत्वेन तपरस्येत्वत०' इत्यपपाठः ।

१२. कोशे 'तपरस्यैत्वत०' इत्यपपाठः ।

प्रत्ययो डुरिरिष्टस्स्याद् एवं बेकुरयः स्मृताः ।
बेकुरय[1] इत्युक्तः स्यात् क्वचिद् [2]भेकुरयस्त्विति[3] ॥७९॥
पठ्यतेऽर्थस्समानस्स्यात् नामेत्याह प्रसिद्धताम् ।
ब्राह्मणान् क्षत्रियांश्चेमान् [4]रक्षन्त्यप्सरसश्च ताः ॥८०॥
स [5]चन्द्रमाश्च नः पातु तस्मै स्वाहुतमस्त्वदः ।
ताभ्यश्च स्वाहुतं भूयाद् [6]अप्सरोभ्यो हुतं हविः ॥८१॥
अत्राहेति[7] मन्त्रेण गौ[ः] सुषुम्नोऽभिधास्यते[8] ।
सर्वेऽपि[9] रश्मयो गाव उच्यन्ते ह्यसंशयम्[10] ॥८२॥
अथाप्यस्येत्यवाच्यं[11] स्यात् सर्वेषामविशेषतः ।
संहतेष्वेव[12] गोशब्दो नैकैकस्मिन् प्रवर्तते ॥८३॥
एकस्मिन्नपि पूर्वोक्ते तदुक्तं गोरमन्वत[13] ।
एवमर्थमिदं प्रोक्तं भाष्यकारेण भेदतः ॥८४॥
ता तान्युश्मसि[14] वास्तूनि गमध्यै गमनाय वा ।

---

१. कोशे 'बाकुर्य इति युक्तः' इत्यपपाठः । २. कोशे 'बेकुरय०' इत्यपपाठः ।

३. अत्र नीलकण्ठः पूर्वं 'बेकुरि' पदं व्युत्पाद्य क्वाचित्कं 'भेकुरि' पदं निरदेशि । स्कन्दानुवादित्वात्तु पूर्वं 'भेकुरय' इति व्युत्पाद्य 'बेकुरय' इति क्वचित्कं प्रदर्शनीयमासीत् । तदत्र कश्चित् पाठविपर्यासः समजनीत्यनुमीयते । यद्वा स्वशाखानुरोधात् पूर्वं 'बेकुरि' पदं व्युत्पादितं स्यात् । ४. कोशे 'रक्षत्यत्सरस०' इत्यपपाठः ।

५. कोशे 'चन्द्रमा पातु त⋯ तस्मै' इति पाठः ।

६. कोशे 'अप्सरेभ्यो' इत्यपपाठः ।

७. अत्र मन्त्रवर्णः—अत्राह गोरमन्वत । ऋ० १।८४।१५॥

८. कोशे 'सुषम्नोपधास्यते' इत्यपपाठः । सोऽपि गौरुच्यते । अत्राह गोरमन्वत (ऋ० १।८४।१५) इति । तदुपरिष्टाद् (निरु० ४।२५) व्याख्यास्यामः । निरु० २।६॥

९. सर्वेऽपि रश्मयो गाव उच्यन्ते । निरु० २।६॥

१०. कोशे 'ह्यसंशयः' इति पाठः । ११. कोशे 'सहतेष्वेव' इत्यपपाठः ।

१२. अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते । निरुक्तमत्रैव ।

१३. कोशे 'गौरमन्यत' इत्यपपाठः ।

१४. 'ता' पदस्य 'तानि' अर्थनिर्देशः । मन्त्रवर्णस्तु—

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ ऋ० १।१५४।६॥

दम्पत्योर्युवयोरेवमात्मार्थं[1] कामयामहे ॥८५॥
सुपां[2] स्वित्यथ वा सूत्रात् त्वामर्थे वामितीष्यते ।
आत्मनो गमनायैव त्वां विष्णुं प्रार्थयामहे ॥८६॥
यत्र येषु निवासेषु रश्मयो बहुदीप्तयः ।
गुणायादेशयो[3] रूपं [4]वृषेस्सेचनकर्मणः ॥८७॥
वृष्णो[5] वर्षणशीलस्य विष्णोर्यत् परमं पदम् ।
प्रकृष्टमुरुगायस्य[6] स्थानं तेष्वेव वास्तुषु ॥८८॥
बहु प्रकाशते[7] यस्मात् तत्तस्मात् प्रार्थयामहे ।
मण्डलं पदमित्युक्तं तत्र विष्णुस्सनातनः ॥८९॥
सामीप्यं तस्य तेषु स्याद् इति तत्प्रार्थना भवेत् ।
समीपे गमनं विष्णोः प्रार्थना त्वनया गिरा ।९०॥
सामीप्यं केन निर्दिष्टं मप्तम्येत्यवधार्यताम् ।
भूरीति[8] बहुनो नाम [9]भवतेस्तु [10]क्रिनीष्यते ॥९१॥
भूरि प्रभवतीत्यर्थ[:] पर्याप्नोतीष्टसिद्धये ।
श्रयते[11] [:] [12]शृङ्गमित्येतत् प्रत्यये गे नुमागमे ॥९२॥

---

१. कोशे 'दत्वव्यो युव०' इत्यपपाठः ।

२. कोशे 'सुखां स्त्वित्यथवा' इत्यपपाठः । सुपां सुलुक्० (अ० ७।१।३९) इत्यादिनेह विभक्तिव्यत्ययेन त्वामर्थे वां द्रष्टव्यः ।

३. अयासः—इण् गतौ अच् = गुणे ऐ अ, अयादेशे 'अय', तस्य प्रथमा बहुवचने छान्दसेऽसुकि रूपम् ।

४. धा० १।७३८॥

५. कोशे 'वृष्णोर्वर्षण०' इत्यपपाठः ।

६. कोशे 'प्रकृष्टमत्र गायस्य' इत्यपपाठः ।

७. कोशे 'प्रकाशके' इत्यपपाठः ।

८. भूरीति बहुनो नामधेयम्, प्रभवतीति सतः । निरु० २।७॥

९. धा० १।१॥

१०. कोशे 'रितीष्यते' इत्यपपाठः । द्र० उणा० ४।६५॥

११. धा० १।९४५॥

१२. शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वा । निरु० २।७॥

ऋकारत्वे[1] तथा रस्य तेजस्तन्मण्डले श्रितम् ।
[2]शृणातेरथवैतस्मिन् तथैवास्य[3] नुमागमे ॥९३॥
तमो[4] हिनस्ति तत्तेजो रसं लोकं च तापयेत् ।
[5]शम्नाते[:] प्रत्यये [6]तस्मिन् अकारस्य त्वृकारतः ॥९४॥
मकारस्याप्यनुस्वारे हिंसार्थस्येष्यतेऽथवा ।
यद्वा श्रयति पूर्वस्य [7]गमेर्डप्रत्यये तथा ॥९५॥
स्याद्वा शृणातिपूर्वस्य [8]शरणायोद्गतं हि तत् ।
सेवार्थमुद्गतं तद्धि हिंसार्थं वोद्गतं तथा ॥९६॥
शिरसो निर्गतत्वाद्वा शिरः पूर्वस्य पूर्ववत् ।
[9]शृशब्द[:] शिरसस्त्विष्टो गोशृङ्गेऽपि समं त्विदम् ॥९७॥
तेजः पक्षेऽपि सूर्यस्य [10]शिरस्त्वादुपपद्यते ।
यदनुशेत इत्येवं शिरस्त्वं तस्य [11]वक्ष्यति ॥९८॥[12]
[अयासस्त्वयना उक्ता] अय[13] एतेः पचाद्यचि ।
असुक्ययास[14] इत्येते तल्ल्युटि स्यादयना इति ॥९९॥

---

१. कोशे 'ऋकरत्वे तथा रे स्यात्' इत्यपपाठः । २. धा० ६।१८॥

३. कोशे 'तथैवस्या' इत्यपपाठः ।

४. कोशे 'नमो' इत्यपपाठः ।

५. 'शम्नातेः' क्रैयादिके रूपम् । न च पाणिनीये धातुपाठे क्र्यादिगणे पठ्यते । तस्मान्नैरुक्तोऽयं धातुर्ज्ञेयः । ६. तस्मिन् 'ग' प्रत्यय इत्यर्थः ।

७. धा० १।१०३१।

८. कोशे 'सृणातिपूर्वस्य शृणायोवगतं' इत्यपपाठः ।

९. कोशे 'तृ शब्द' इत्यपपाठः ।

१०. तथा चोद्धरति स्कन्दः—प्रसावादित्यः शिरः प्रजानाम् (तै० ब्रा० १।२।३।३) ।

११. अपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि । निरु० ४।१३॥

१२. अतोऽग्रे कोशे 'अयास ··कृते' इति श्लोकयुगलं १०७, १०८ संख्यायां 'अबाधो··· रेव सः इत्यध्यर्धश्लोकश्च १०३, १०४ संख्यायां लिखितः । पूर्वापरक्रमानुरोधात् ते सप्त-श्लोकार्द्धा यथास्थानमत्रानीताः ।

१३. कोशे 'अया' इति पाठः । अयासोऽयनाः । तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि । निरु० २।७॥

१४. कोशे 'असुकाया···इत्येल्ल्युटस्यादयना' इत्यपपाठः ।

प्रार्थनाहेतुरत्रेति तत्रेत्यर्थेन कथ्यते ।
अत्र[1] ङिप्रत्यये रूपं [ततस्त्रल् प्रत्य]ये कृते ॥१००॥
[2]अबाधोमुखमित्येते: पार्थोप: पूर्वमीरित: ।
उत्पूर्वस्य [3]गाते[:] स्याद् घञि [4]तस्य युगागमे ॥१०१॥
उरुगायो महाविष्णुर्विस्तीर्णगतिरेव सः ।
पराध्यस्थमिति[5] त्वेतत् [6]परशब्दार्थवर्णनम् ।
[6]परं प्रकृष्टमित्यर्थ: सन्निकृष्टाद् विलक्षण: ॥१०२॥
दूरस्थत्वात् प्रकृष्टं तत् [7]पराध्यस्थं त्वतश्च तत् ।
पर ऋद्ध[:] समृद्ध[:] स्यात् [8]सर्वर्द्धिगुणसम्पदा ॥१०३॥
दिव एवैकदेशेऽसौ [9]पराध्यं इति वर्णित: ।
दिव आहुः परे अर्धे[10] इति मन्त्रान्तरेरित: ॥१०४॥[11]
पदं[12] निर्वक्तुकामस्तु पादशब्दं निरब्रवीत् ॥१०५॥
पादं तु [13]पद्यतेर्धातोर्गत्यर्थस्य घञि स्मृत: ।
स पादो धीयते यस्मिन् [14]आदित्यमण्डलं पदम्[15] ॥१०६॥

---

१. कोशे 'अन' इत्यपपाठ: ।

२. दु:शोध्योऽयं पाठ: । कदाचिदिदमत्राकूतं स्यात्—अत्र=तेषु एव स्थानेषु यत्र रश्मय: आगच्छन्ति तत्र । अहशब्दो विनिग्रहार्थीय: पूर्वमीरित: ।

३. धा० १।९९८।

४. कोशे 'घणस्तस्य' इत्यपपाठ: ।

५. कोशे 'परर्धत्वमिति' इत्यपपाठ: ।

६. 'परम' शब्दोऽभिप्रेत: ।

७. कोशे 'परार्थं' इत्यपपाठ: ।

८. कोशे 'सर्वर्द्धि०' इत्यपपाठ: ।

९. कोशे 'परार्ध०' इत्यपपाठ: ।

१०. ऋ० १।१६४।१२॥

११. कोशेऽतोऽग्रे 'उरुपूर्वस्य…गतिरेव स:' 'अबाधो…पूर्वमीरित' इति व्यत्यासेनाध्यर्द्ध-श्लोको अस्थाने लिखितो दृश्यते । स यथास्थानं नीत: । द्र०—पूर्वपृष्ठ २६४ टि० १२ ।

१२. पाद: पद्यते:, तन्निधानात् पदम् । पशुपादप्रकृति: प्रभागपाद: । प्रभागपादसामान्यद् इतराणि पदानि । निरु० २।७॥

१३. धा० ४।६०॥

१४. कोशे 'अस्मिस्तं मण्डलं' इति पाठ: ।

१५. तन्निधानात् पदमिति निरुक्तस्यायं भाव:—पादो यत्र पांस्वादिषु निधीयते तत्पदमित्युच्यते । यथा—सोमक्रयण्या: सप्तमे पदे जुहोति (द्र० तै० सं० ६।१।८) ।

पाद इत्यपि निर्देशो रश्मीनां गत्यपेक्षया[1] ।
पदं च पद्यतेरेव [2]भवत्यच्प्रत्य[ये कृते] ॥१०७॥[3]
पद्यते रश्मिभिस्तद्धि[4] ज्ञायते च मुमुक्षुभिः ।
प्रसिद्धस्यापि पादस्य प्रतिबिम्बं पदं विदुः ॥१०८॥
पद्यते ज्ञायते तच्च तेन वा ज्ञायते गतः ।
प्रभागलक्षणे पादे पादशब्दस्य वर्तने ॥१०९॥
चतुष्ट्वात्[5] पशुपादानां [6]प्रकृतिः प्राह भाष्यकृत् ।
अनेकार्थत्वमेकस्य शक्त्यनेकत्वकल्पितः ॥११०॥
साधारणस्य तच्च स्यात् प्रसिद्धोऽसौ विपश्चिताम् ।
प्रभागपादवाचित्वं पादशब्दस्य गौणतः ॥१११॥
मुख्यतो[7] नेति यास्कस्य मतं व्याचक्षते बुधाः ।
प्रभागपादसामान्याद् इतराणि पदान्यपि ॥११२॥
ऋक्पादा[ः] श्लोकपादाश्च काणिका[8] पादसाम्यतः ।
पादान्येवपदान्याह श्लोकादीनामृषिस्त्विह ॥११३॥
पदपूरणशब्देन यथा पादान्[9] प्रवक्ष्यति ।
पदशब्दोऽन्य एवायं पादशब्दादसंशयम् ॥११४॥
पादशब्दस्य गौणत्वे पदशब्दस्य किं भवेत् ।
अतश्च पादशब्देन पाद एवाभिधित्सितः ॥११५॥
पदशब्देन पादानां ग्रहणे किं प्रयोजनम् ।
पदेषु ग्रन्थरूढेषु पदशब्दप्रवर्तने ॥११६॥

---

१. कोशे 'जात्यपेक्षया' इति पाठः । २. कोशे 'भवत्य प्रत्य' इत्यपपाठः ।

३. अतोऽग्रे कोशे [अयास]...ये कृते' इति द्वौ श्लोकावत्रास्थाने लिखितौ दृश्येते । तौ यथास्थानं नीतौ । द्र०—पृष्ठ २९५ टि० ११ ।

४. आदित्यमण्डलम् उद्दिश्य 'पद्यते' इत्युक्तिः, तत्स्थं पुरुषमभिप्रेत्य 'ज्ञायते' इति वचनम् । योऽसावादित्ये पुरुषः सोऽसावहम् (वा० सं० ४०।१७) इति पुरुषस्यादित्यस्थत्वं श्रूयते ।

५. कोशे 'चतुष्ट्वा' इत्यपपाठः ।

६. इतीतिशेषः ।

७. कोशे 'मुख्यते' इत्यपपाठः ।

८. 'काणिका' पदस्यार्थो मृग्यः । कदाचिदत्र 'काकिणी' (कार्षापणचतुर्थभागः) इति पाठः स्यात् ?

९. कोशे 'पादात्' इत्यपपाठः ।

निमित्तस्याभिधानार्थं [1]भागसामान्य एव तत् ।
पद्यते ज्ञायतेऽनेन तेन चेदं पदं स्मृतम् ॥११७॥
एवमित्यादिनेदानीं[2] व्याख्यान्यायोऽतिदिश्यते ।
अन्येषामपि सत्त्वानां ग्मादीनां[3] सत्त्ववाचिनाम् ॥११८॥
व्याख्या[4] गोशब्दवत् कार्या लघ्वर्थमतिदिश्यते ।
सन्देहा अपि विद्यन्ते तेषु गोशब्दवत् तथा ॥११९॥
निवर्त्यास्ते तथैव स्युर्मुख्यलाक्षणिकोद्भवाः[5] ।
तथा [6]समानकर्माणि भिन्नकर्माणि कानिचित् ॥१२०॥
समानकर्मणामेषामेकधातूद्भवत्वतः[7] ।
भिन्नधातूद्भवत्वेऽपि भवेदेकैककर्मतः[8] ॥१२१॥[9]
भिन्ननिर्वचनान्येव भिन्नकर्माण्यसंशयम् ।
यथार्थं तानि नामानि निर्वक्तव्यानि युक्तितः १२२॥
यथा निरुच्यमानेषु वाक्यार्थो न विरुध्यते ।
निर्वाच्यानि तथैव स्युरर्थं प्रत्यङ्गभावतः ॥१२३॥
गमेर्ड्मप्रत्यये[10] ग्मा स्यात् तथा ज्मा गस्य जत्वतः ।

---

१. कोशे 'भाग्यसामान्य एव तम्' इति पाठः ।

२. एवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते । तानि चेत् समानकर्माणि समाननिर्वचनानि, नानाकर्माणि चेन्नानानिर्वचनानि । यथार्थं निर्वक्तव्यानि । निरु० २।७॥

३. कोशे 'सत्वानामादिना' इत्यपपाठः ।

४. कोशे 'व्याख्यानो शब्दवत्' इत्यपपाठः ।

५. कोशे 'मुख्यलक्षणिकोद्भवा' इत्यपपाठः ।

६. कोशे 'समानिकर्मा०' इत्यपपाठः ।

७. कोशे '०धातूद्भवेत्वतः' इति पाठः ।

८. कोशे '०देकैव कर्मतः' इत्यपपाठः ।

९. कोशेऽत्रैकः श्लोकस्त्रुटितः प्रतीयते, प्रथमश्लोकार्द्धस्य साकाङ्क्षत्वाद्, इतोऽग्रिमे श्लोके च संख्याधिक्यनिर्देशात् ।

१०. कोशे 'गमेर्ध्मप्रत्यये' इत्यपपाठः । धा० १।१०३१। गम् + ड्म = गम् + अ = टिलोपे ग्म, टापि ग्मा रूपम् ।

[1]क्षमेरप्रत्यये [2]क्ष्मा स्याद् उपधालोपक्लृप्तितः ॥१२४॥
क्षमते हि मही सर्वं [3]क्षियतेः क्षा भवेच्च डे ।[4]
क्षियन्त्यस्यां[5] हि भूतानि [6]क्षयत्यपि तथा स्वयम् ॥१२५॥
क्षमा च क्षमतेरिष्टा वाच्यान्येवं पराण्यपि ।
गोशब्देनेव[7] चान्येषां ग्मादिवाच्यत्वसंशयाः[8] ॥१२६॥
विद्यन्ते सत्त्ववाच्यानम् अर्थानामित्यभाषत ।
तानि ग्मादिनामानि तुल्यकर्माणि चेदिह ॥१२७॥
तुल्यं[9] निर्वचनं तेषां नो चेदिष्टं विलक्षणम् ।
उपदेशातिदेशाभ्याम् [10]इतीमान्येकविंशतिः ।१२८॥
पृथिवीनामधेयानि व्याख्यातानि यथाक्रमम् ।
एतावन्ति समाम्नाये समाम्नातानि नाधिकम्[11] ॥१२९॥
इत्यर्थं कीर्तिता संख्या [12]नान्यनाम्नां निवृत्तये ।
नामान्तराणि सन्त्येव धरणी मेदिनी धरा ॥१३०॥

---

१. धा० १।४६६॥

२. कोशे 'क्षा'पाठः । 'क्ष्मा'पदे 'ग्मा'पदवत् 'ड्म' प्रत्ययः कथं न ? अचि कृते उपधालोपकल्पनस्य काऽवश्यकतेति न ज्ञायते । निघण्टौ 'क्ष्मा क्षा क्षमा' त्रीणि पदानि पठचन्ते, तत्र क्षाशब्दे डप्रत्ययो ज्ञेयः, क्ष्माशब्दे ग्मावत् ड्मप्रत्ययः, क्षमाशब्देऽच् प्रत्ययः । सम्भाव्यते क्ष्माक्षमाशब्दयोरेकेनैवाच्प्रत्ययेन सिद्धिमिच्छता क्ष्माशब्द उपधालोपः कल्पितः ।

३. कोशे 'क्षीयते' इत्यपपाठः । धा० ६।११४॥

४. कोशे 'घे' इत्यपपाठः । क्षिधातोर्घेप्रत्यये क्षारूपं नोपपद्यते । तस्मात् 'डे' इत्येव पाठः शोधितः ।

५. कोशे 'क्षीय०' इत्यपपाठः ।

६. कोशे 'क्षीय' इत्यपपाठः । क्षि क्षये (धा० १।२५५) इत्यस्येदं रूपम् ।

७. कोशे 'गोशब्देनैव नान्येषां, इत्यपपाठः ।

८. कोशे '०संशयः' इत्यपपाठः ।

९. कोशे 'तुल्यनि०' इत्यपपाठः ।

१०. इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि । निरु० २।७॥

११. कोशे 'नधिकम्' इत्यपपाठः ।

१२. कोशे 'नान्यना च' इत्यपपाठः ।

उर्वरा[1] पृथिवी पद्मा[2] रसा विश्वम्भरा [3]क्षमा ।
माधवी जगती कुश्च तथान्यान्यपि कानिचित् ॥१३१॥
नानाकर्मावबोधार्थं [4]निर्ऋतिस्तु निरुच्यते ।
[5]निपूर्वस्य [6]रमेर्धातोः [7]क्तिनि रस्य त्वृकारतः ॥१३२॥
अनुनासिकलोपे च निर्ऋतिः पृथिवीष्यते ।
रमते निश्चलैवेयं स्वस्थाने[8] नान्यतो व्रजेत् ॥१३३॥
भूतानि वा रमन्तेऽस्यामाप ओषधयस्तथा ।
पृथिव्यायतना चैव देवा अग्न्यादयस्त्विति ॥१३४॥
[9]इन्द्रियप्रलयार्थस्य [10]त्वृच्छतेरितरेरिता ।
कृच्छ्र[11] दुःखमिति प्राहुस्तच्चेह[12] मरणात्मकम् ॥१३५॥
तस्यैवापादिका[13] कर्त्री निर्ऋतिर्मृत्युदेवता ।
[14]कल्प्यश्छकारलोपस्तु [15]यद्वाऽर्तेरुक्तकर्मणः[16] ॥१३६॥
निष्कृष्य देहिनं देहाद् ऋच्छयत्यवशं भृशम् ।
सन्दिह्यते पृथिव्या सा क्व सा वाच्या क्व वा मही ॥१३७॥
इत्येवं संशये ज्ञेयो विभागस्त्वनयोरिह ।
संशये निर्णये चैव तस्या एषा निरुच्यते ॥१३८॥

---

१. कोशे 'मबिसं' इति पाठः । २. कोशे 'पद्मं' इति पाठः ।
३. अन्येन केनचित् पदेनात्र भाव्यम्, क्षमपदस्य पूर्वत्र निर्दिष्टत्वात् ।
४. कोशे 'निभृतिस्तु' इत्यपपाठः ।
५. तत्र निर्ऋतिर्निरमणात्, ऋच्छतेः कृच्छ्रापत्तिरितरा । सा पृथिव्या संदिह्यते । तयोर्विभागः । तस्य एषा भवति । निरु० २।७॥
६. धा० १।९०६॥ ७. कोशे 'कनि' इत्यपपाठः ।
८. कोशे 'स्वस्था ते' इत्यपपाठः । स्वस्थातः=स्वस्थानतः इत्यर्थः ।
९. कोशे 'इन्द्रियप्रतयार्थस्य' इत्यपपाठः ।
१०. धा० ६।१५॥ ११. कोशे 'चरन्' इत्यपपाठः ।
१२. कोशे 'चेनु' इत्यपपाठः ।
१३. कोशे 'तस्यैव पादिकाकत्री' इत्यपपाठः ।
१४. कोशे 'कल्प्यय्यकार०' इत्यपपाठः ।
१५. कोशे 'यद्वाक्तेरुक्त०' इत्यपपाठः । १६. धा० ३।१६॥

यश्चकार[1] न वेदाऽसौ किं चकार न वेदितम्[2] ।
अस्येति तस्य निर्देशो द्रष्टा कः किं ददर्श सः ॥१३९॥
मातुर्योनेति निर्देशाद् बह्वपत्यश्रुतेरपि ।
करोतेः कर्म गर्भः स्याद् अस्य तत्त्वं विदेरपि ॥१४०॥
द्वितीयार्थेऽथवा षष्ठी गर्भमेतं न वेद सः ।
आत्मानमप्ययं [3]सम्यग् [4]अज्ञानात् काममोहितः ॥१४१॥
देहमात्रात्मविज्ञानो गर्भं यः कुरुते नरः ।
गर्भतत्त्वं न वेदाऽसौ [5]किमर्थोऽयं किमात्मकः ॥१४२॥
किं कारणं [6]कथं वेति ब्रह्मज्ञानविवर्जितः ।
अन्तःपुरोपभोगेषु[7] वर्तते काममोहितः ॥१४३॥
अकुर्वन्नपि यः पश्येद् [8]देहमात्रात्मभावनः ।
जातं वाऽप्युदरस्थं वा प्रत्यक्षेणानुमानतः ॥१४४॥
हिरुगन्तर्हितस्तस्मात् सोऽपि गर्भं न बुध्यते ।
गर्भतत्त्वापरिज्ञानमात्मतत्त्वाविवेकतः[9] ॥१४५॥
आत्मतत्त्वाविवेके[10] च धर्माधर्मौ निषेव्यः सः ।
मृतस्तत्फलभोगार्थं मातुर्योनौ प्रवेशितः ॥१४६॥
कललादिक्रमेणैव गर्भत्वं प्रतिपादितः ।
सर्वतो वेष्टितो मूढ उल्बेन स जरायुणा ॥१४७॥
गर्भवासकृतेनापि दुःखेनान्तरभिप्लुतः ।
बहुशा[11] जायमानश्च कृच्छ्रापत्तिं प्रपद्यते ॥१४८॥

---

१. तथा च मन्त्रवर्णः—य ईं चकार न सो अस्य वेद यः ईं ददर्श हिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमाविवेश ॥ ऋ० १।१६४।३२॥
२. कोशे 'वेदिकम्' इत्यपपाठः । ३. न वेदेत्यन्वयः पूर्वेण ।
४. कोशे 'अजानात्' इत्यपपाठः । ५. कोशे 'किमर्थेयं' इत्यपपाठः ।
६. कोशे 'वा किमन्येति' पाठः ।
७. कोशे 'अन्नः॰॰॰न॰॰॰रोपभोगेषु' इति त्रुटितः पाठः ।
८. कोशे 'देहमातात्म॰' इत्यपपाठः । ९. कोशे ॰ज्ञानामात्मतत्वा॰ इत्यपपाठः ।
१०. कोशे 'आधारत्वाविवेके' इत्यपपाठः । ११. कोशे 'बहुगो' इत्यपपाठः ।

तस्मादसौ विरक्तस्सन् आत्मज्ञानपरायणः ।
जितेन्द्रियो जितक्रोधस्त्यक्त्वा सर्वपरिग्रहान् ॥१४९॥
विचरेन्निस्पृहस्सम्यग् आशरीरविमोक्षणात् ।
इति ब्रह्मविदां दृष्ट्या मन्त्रार्थोऽयमुदाहृतः ॥१५०॥
नैरुक्तानां तु पक्षेण त्वृगर्थो योज्यतेऽन्यथा ।
रश्मिभिस्सहितो वायू [1]रसानाकृष्य भूमितः ॥१५१॥
यः करोति घनीभूतमस्य तत्त्वं न वेद सः ।
भूतवायोरचैतन्यात् कर्मात्मा मध्यमो हि सः ॥१५२॥
हिरुगन्तर्हितं चैतत् स्थगितं मेघरूपतः ।
यः पश्येन्मध्यमस्त्वेव वायोरन्तरपूरुषः ॥१५३॥
स एवं वेद मेघस्य तत्त्वं सर्वार्थवित् प्रभुः ।
पञ्चमी प्रथमार्थेयं तस्मादित्यपि योजिता ॥१५४॥
[2]मातृशब्दाभिधेयस्य [3]योनावयवे च सः ।
परिवीतोऽन्तरिक्षस्य मध्ये वातेन वेष्टितः ॥१५५॥
मेघो [4]बहुप्रजो भूमिं बहुधारः प्रपद्यते ।
परिव्राट्मतमेतत्तु[5] कृच्छ्रमापद्यते त्विति ॥१५६॥
वर्षकर्मेति नैरुक्ता बहुवृष्टिक्रियेत्यतः[6] ।
करोतेः किरतेश्चैव लिटि[रूपं चकार तु] ॥१५७॥
करोतिः किरतिश्चैव सन्दिग्धौ वृष्टिकर्मणा ।
इत्थं भूते तृतीयेयं[7] इत्थं संशयिताविमौ ॥१५८॥

---

१. कोशे 'रसानां कृष्य' इत्यपपाठः । २. कोशे 'मात्रशब्दा०' इत्यपपाठः ।
३. कोशे 'योनावयवे' इत्यपपाठः । ४. कोशे 'बहुव्रजो' इत्यपपाठः ।
५. बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः । वर्षकर्मेति नैरुक्ताः । ईं चकरेति करोतिकिरती सन्दिग्धौ वर्षकर्मणा । न सो अस्य वेद मध्यमः । स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम् । स मातुर्योनौ, मातान्तरिक्षम्, निर्मीयन्तेऽस्मिन् भूतानि । योनिरन्तरिक्षम् महानवयवः । परिवीतो वायुना । अयमपीतरो योनिरेतस्मादेव, परियुतो भवति । बहुप्रजा भूमिमापद्यते वर्षकर्मणा । निरु० २।८॥ ६. कोशे 'क्रियमतः' इति पाठः ।
७. वृष्टिकर्मणेत्यत्र इत्थंभूतलक्षणे (अष्टा० २।३।२१) इति तृतीयेत्यर्थः ।

किं कुर्याद् वृष्टिकर्माऽयं[1] मेघः किं वा किरेदिति ।
अविरुद्धं द्विधाप्येतद् [2]इत्येतावद्विवक्षितम् ॥१५९॥
रश्मिर्हि भूमितो भूत.......................... ।
न[3] माता जननी त्वत्र वृष्टिकर्माभिधानतः ॥१६०॥
वृष्टिकर्माभिधानं[4] वृष्टिलिङ्गोपलब्धितः ।
पश्यामो वृष्टिलिङ्गानि सूक्तेऽस्मिन्[5] सुबहून्यपि ॥१६१॥
अपश्यमिति पूर्वस्यां[6] मध्यमो वायुरीरितः ।
अन्तरिक्षं[7] ततः प्रोक्तं भूतनिर्माणहेतुतः ॥१६२॥
उदकानीह भूतानि यद्वा स्थावरजङ्गमम् ।
अवकाशप्रदानेन भूतनिर्माणहेतुना ॥१६३॥
एकदेशोऽन्तरिक्षस्य[8] सामर्थ्याद् योनिरत्र तु ।
महानवयवः प्रोक्तो वायुना परिवेष्टितः ॥१६४॥
जलदा यत्र तिष्ठन्ति स देशो योनिरिष्यते ।
वेतेर्योनिरिति[9] प्राह परिवीत[10] इति ब्रुवन् ॥१६५॥
ईकारात् परतो [11]वृत्तात् प्रत्यये निरितीदृशे ।
ईकारस्य यणादेशो [12]वकारस्य प्रसारणम् ॥१६६॥

---

१. कोशे 'वृष्टिकर्माणं' मेवं' इति पाठः ।
२. कोशे 'इत्यतावद्विपक्षितम्' इति पाठः ।
३. कोशे 'नामता' इत्यपपाठः ।
४. कोशे '०भिधानश्च' इत्यपपाठः ।
५. ऋ० १।१६४॥
६. ऋ० १।१६४।३१॥
७. कोशे 'अन्तरिक्षस्तत प्रोक्तो' इत्यपपाठः ।
८. कोशे '०ऽन्तरीक्षस्य' इत्यपपाठः ।
९. धा० २।३९॥
१०. कोशे 'परिपीत' इत्यपपाठः ।
११. आद्यन्तविपर्ययेण परभूतस्य वकारस्येत्यर्थः । वी = ईव् । ईव् + नि = ई उ नि = युनि = योनिः ।
१२. कोशे 'पकारस्य' इत्यपपाठः ।

उकारस्य गुणो योनिरुक्तार्थ उपपद्यते ।
तस्मिन्नेव गुणे [1]योनियौतेरिष्टस्तथेतरः[2] ॥१६७॥
एतस्मादिति नानेन वेतिर्धातुर्विवक्षितः ।
कुतः [3]परियुतोक्तित्वाल्लिङ्गान्नासौ विवक्षितः ॥१६८॥
एतस्मादिति तेनेह योनिशब्दप्रसङ्गतः ।
इत्यर्थो गद्यतेऽस्यार्थो [4]यौतिना वक्ष्यते स तु ॥१६९॥
स्त्रीयोनिरित्युपक्रम्य [5]यौतेरतियुतस्त्वचि ।
स्त्रिलिङ्गो योनिशब्दोऽसौ पुंलिङ्गोऽत्र निरुच्यते ॥१७०॥
का पुनर्देवताऽस्यां स्यात् किं भूमिरथ चेतरा ।
न शक्याध्यवसातुं सा निश्चये हेत्वभावतः ॥१७१॥
हेतुश्चेद् वृष्टिलिङ्गं स्यान्न विजानाति लिङ्गतः ।
आत्मज्ञानस्य [6]सूक्तेऽस्मिन् मद्भावात् समतानयोः ॥१७२॥
दुर्ज्ञेया देवतेत्यर्थमितिहासोऽभिधीयते ।
शाकपूणिरिति[7] ख्यातो नैरुक्तो वेदवित्तमः ॥१७३॥
मन्त्रार्थज्ञानदर्पेण संकल्पमकरोत् किल ।
जानामि देवताः सर्वा इति [8]निश्चितवांस्ततः ॥१७४॥
अपनेतुं [9]मदं तस्य देवता काचिदक्षमा ।
प्रादुर्बभूव[10] तस्याग्रे मध्यमोत्तमलिङ्गधृक् ॥१७५॥

---

१. कोशे 'योनियौवतेरि०' इत्यपपाठः । २. धा० २।२३॥
३. कोशे 'पर्युकोक्तित्वाल्लिङ्गेनासौ' इत्यपपाठः ।
४. कोशे 'योनिर्नवक्ष्यते न तु इत्यपपाठः ।
५. कोशे 'यौवते रतियुतस्त्वयि' इत्यपपाठः ।
६. सूक्तमस्यवामीयमात्मदैवत्यमिति ब्रह्मविदो वदन्ति अतोऽयमाह—आत्मज्ञानस्य सूक्तेऽस्मिन् ।
७. शाकपूणिः संकल्पयाञ्चक्रे—सर्वा देवता जानामीति । तस्य देवतोभयलिङ्गा प्रादुर्बभूव । तां न जज्ञे । तां पप्रच्छ—विविदिषाणि त्वेति । सास्मा एतामृचमादिदेश—एषा मद्देवतेति । निरु० २।८॥
८. कोशे 'निश्चिवांस्ततः' इत्यपपाठः ।
९. कोशे 'पदं' इत्यपपाठः ।
१०, कोशे 'प्रादुबभूव' इत्यपपाठः ।

स्त्रीपुंसलक्षणेत्यन्ये सार्धनारी नरात्मिका ।
न जज्ञे तां तथाभूतां देवतां तत्त्वतोमुनिः ॥१७६॥
मध्यमोत्तमा वेति स्त्री पुमान् इति वा तथा ।
मानुषी[1] देवता वेति प्रत्यक्षेणापरेण[2] वा ॥१७७॥
अजानन्नपि तां बोद्धुं पप्रच्छ विमदस्तथा ।
इच्छामि वेदितुं [3]त्वेति भक्त्या च श्रद्धया तथा ॥१७८॥
अयं[4] स शिङ्क्त इत्येतामस्मै सा शाकपूणये ।
मद्देवतेयमित्येवमादिदेश दयान्विता ॥१७९॥
ऋचा [5]मामनया विद्धि शक्तिर्यद्यस्ति ते मुने ।
देवतातत्त्वबोधस्य मन्त्रब्राह्मणवाक्यतः[6] ॥१८०॥
प्रमाणं नापरं किञ्चिद् असीत्यत्र विवक्षितम्[7] ।
अयं[8] स मध्यमो मेघः शिङ्क्ते शब्दायतेऽम्बरे ॥१८१॥
गौर्वागभिवृता येन मध्यस्थाना परिप्लुता ।
निमाति कुरुते मायुं प्रतिशब्दं दिगन्तरे ॥१८२॥
अथवा मायुशब्देन [9]मा तादित्योऽभिधीयते ।
उक्तं[10] मायुमिवेत्येवमादित्यमिति वेत्यपि ॥१८३॥

---

१. कोशे मानुषीं देवतां' इत्यपपाठः । २. अपरेणानुमानादिनेत्यर्थः ।

३. कोशे 'वेदितुञ्चेति' इत्यपपाठः ।

४. अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥ ऋ० १।१६४।२९॥

५. कोशे 'ममनया' इत्यपपाठः ६. कोशे '०वाक्यता' इत्यपपाठः ।

७. कोबे 'विवक्षितः' इति पाठः ।

८. अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति मायुं शब्दं करोति । मायुमिवादित्यमिति वा । वागेषा माध्यमिका, ध्वंसने मेघेऽधिश्रिता । सा चित्तिभिः [कर्मभिर्नीचैः] निकरोति मर्त्यम् । विद्युद् भवन्ती प्रत्यूहते वव्रिरिति रूप नाम, वृणोतीति सतः । वर्षेण प्रच्छाद्य पृथिवीं तत्पुनरादत्ते । निरु० २।९॥

९. कोशे 'मारादित्यो०' इत्यपपाठः ।

१०. कोशे 'उत्तमायुवेत्योजमादित्य०' इत्यपपाठः । अयं श्लोकार्द्धः कोशे 'वाचा… रिष्यते' इत्यग्रिमश्लोकार्द्धेन विपर्यस्यते ।

वाचा तस्याप्यकार्यत्वात् तत्तुल्यं ज्योतिरिष्यते ।
प्रक्षिपेन्मायुतुल्यं[1] सा ज्योतिः सूर्योपमं स्वकम् ॥१८४॥
ध्वसनौ[2] ध्वंसने मेघे स्वैश्वर्येण व्यवस्थिता ।
किं च सा [3]चित्तिभिर्मर्त्यं कर्मभिर्मरणात्मकम् ॥१८५॥
स्थावरं जङ्गमं चैव नियमेन करोति हि ।
वृष्टयादिहेतुभिस्सर्वैर्भवन्ती [4]विद्युदात्मिका ॥१८६॥
लिङ्ग[5] तूत्तमस्यैतदुक्तमस्य परत्वतः ।
वर्ग्नि प्रत्यूहते रूपं मध्यमस्योत्तमस्तथा ॥१८७॥
मध्यमेन कृतं रूपं पृथिव्यां रसलक्षणम् ।
तत्सर्वं रश्मिभिस्सूर्य आत्मानं प्रति वाहयेत् ॥१८८॥
देवतोभयलिङ्गेयं कैश्चिद् व्याख्यायते बुधैः ।
स्त्रीपुंसलक्षणैर्वाऽन्यैरुभयोर्लिङ्गयोश्श्रुतैः ॥१८९॥
अयं स येन शब्दानां पुंल्लिङ्गानामितः श्रुतिः ।
लिङ्गं तेनोत्तमस्यास्ति मध्यमस्यैव तु स्वयम् ॥१९०॥
लिङ्गद्वयेन निर्देश[:] कथमेकस्य युज्यते ।
लिङ्गस्य व्यत्ययेनेति केचिदाहुर्विचक्षणाः[6] ॥१९१॥
वाग्देवत्येयमृक्प्रोक्ता वाक्च माध्यमिकेष्यते ।
देवता च द्विरूपैव सर्वैर्वेष्टेति वक्ष्यति[7] ॥१९२॥
अपि[7] वेति पुरस्कृत्य कर्मात्मान[इति] त्वृषिः ।
शब्दात्मिकेह[8] वागेका श्रूयते कर्मलक्षणा ॥१९३॥

---

१. कोशे 'प्रक्षीपे मायुतुल्यत्वं सा ज्योत्ति सूर्यो०' इत्यपपाठः ।
२. कोशे 'ध्वसनो' इत्यपपाठः । ३. कोशे 'सामित्तिभि०' इत्यपपाठः ।
४. कोशे 'विद्युतात्मिका' इत्यपपाठः ।
५. कोशे 'लिङ्गं तु तस्यैत०' त्यपपाठः ।
६. द्र०—स्कन्दभाष्यद्वितीयभागः पृ० ६६ ।
७. अपि वोभयविधाः स्युः । अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः । निरु० ७।७॥ ८. कोशे 'शब्दात्मित्तेह' इत्यपपाठः ।

अधिष्ठात्री परा तस्या देवतेष्टा प्रयोजिका ।
अधिष्ठात्री त्वियं साऽस्याः शिङ्क्तेऽयं [1]स इतीरिता ॥१९४॥
येनेत्यपि ययेत्यर्थो गौरित्यादि समं परम् ।
प्रच्छाद्य पृथिवीं सर्वां वृष्टया प्रत्यूहते स्वकम् ॥१९५॥
वव्रिं[2] जलात्मकं चैव निर्मलं कुरुते नभः ।
व्यत्ययेन विनैवायम् उक्तोऽर्थं उपपद्यते ॥१९६॥
अयं स इति शब्दाभ्यामधिष्ठाताभिधीयते ।
येनेत्यपि स [3]एवोक्तो वाच इन्द्रस्स ईश्वरः ॥१९७॥
व्यत्यये च द्विलिङ्गत्वं व्यत्ययेन विनोदितम् ।
ध्वंसेरनौ[4] भवेद् रूपं [5]ध्वसनाविति वैदिकम् ॥१९८॥
वृणोतेर्वव्रिरित्येतत्[6] तथा [7]किप्रत्यये भवेत् ।
भाष्यं तिरोहितार्थं तु नान्यदस्तीति किञ्चन ॥१९९॥
देवतातत्त्वविज्ञानं मुनीनामपि दुर्लभम् ।
किं पुनर्भावदुष्टानां शुष्कतर्कनिषेविणाम्[8] ॥२००॥
आगमेनाभियोगेन देवताराधनेन च ।
श्रद्धया तपसा भक्त्या प्राप्यते पुण्यकर्मणाम् ॥२०१॥

**॥ इति [9]पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके द्वितीयाध्यायस्य द्वितीयः पादः ॥**

---

१. कोशे 'से' इत्यपपाठः । २. कोशे 'वव्रिजला०' इति पाठः ।
३. कोशे 'एवोक्ता' इत्यपपाठः ।
४. कोशे 'ध्वसेमुनौ' इत्यपपाठः । धा० १।७६१॥
५. कोशे 'ध्वंसनाविति वैदिकः' इत्यपपाठः । वेदे 'ध्वसनावधि' दर्शनात् ।
६. धा० ५।८॥
७. कोशे 'किं०' इत्यपपाठः । वृधातोः किप्रत्यये लिड्वदतिदेशे द्विर्वचने गुणाभावे यणादेशे च वव्रिरूपम् । द्र० अष्टा० ३।२।१७१॥ ८. कोशे 'निषेधिनाम्' इत्यपपाठः ।
९. कोशे 'इति भगवत्प्रणीते निरुक्तवार्त्तिके०' इति पाठः ।

## तृतीयः पादः

सर्वस्याधारभूतत्वात् प्रत्यासत्तेः प्रधानतः ।
पृथिवीनामधेयानाम् [1]आम्नानं युक्तमादितः ॥१॥
पृथिवीप्रभवत्वेन तयोस्संबन्धभावतः ।
हिरण्यस्योत्तराणि[2] स्युर्नामानि दश पञ्च च ॥२॥
हेमेत्यादीनि नामानि संख्येयं नान्यवारिणी ।
हाटकं[3] शातकुम्भं च तथा चामीकरं त्विति ॥३॥
विद्यन्ते हेमनामानि तन्निवृत्तिर्न युज्यते ।
कृष्णलोहेऽप्ययश्शब्दो [4]लोहशब्दश्च वर्तते ॥४॥
तथा हिरण्यशब्दोऽपि रजते दृश्यते क्वचित्[5] ।
हरतेरन्य[6] इत्यस्मिन् प्रत्यये कर्मवर्तिनि ॥५॥
इकारे रपरे रूपं [7]हिरण्यमिति सिध्यति ।
यत्नेनायम्यमानं तत् बध्यमानं [8]सुगुप्तये ॥६॥
ह्रियते तस्करैस्तेन हिरण्यमभिधीयते ।
संस्कारवचनो यद्वा यमिरत्रार्थसम्भवात् ॥७॥
सम्यक् संस्क्रियमाणं तत् दाहच्छेदादिकर्मणा ।
ह्रियते शिल्पिभिः प्रायः कटिसूत्रादिभेदतः ॥८॥

---

१. कोशे 'आत्मानं' इत्यपपाठः ।

२. हिरण्यनामान्युत्तराणि पञ्चदश । निरु० २।१०॥

३. कोशे 'ताटकं' इत्यपपाठः । ४. कोशे 'लोभ०' इत्यपपाठः ।

५. तु०—स्कन्दभाष्यद्वितीयभागः पृ० ६६ ।

६. हरतेर् (धा० १।६४७) अन्यः प्रत्ययः । उणादौ तु 'हरतेः कन्यन् हिर च' (५।४४) इति हिरादेशेन व्युत्पादितः ।

७. हिरण्यं कस्मात् ? ह्रियत आयम्यमानमिति वा । ह्रियते जनाज्जनमिति वा । हितरमणं भवतीति वा [हृदयरमणं भवतीति वा] । हर्यतेर्वा स्यात् प्रेप्साकर्मणः । निरु० २।१०॥

८. कोशे 'स गुप्तये' इत्यपपाठः ।

व्यवहारप्रसिद्ध्यर्थं [1]ह्रियते वा जनाज्जनम् ।
दधाते[2] [र्]हितमित्यस्य हिशब्दात् परतो रमेः[3] ॥९॥
यप्रत्यये हिरण्यं स्यान्मकारस्यापि णत्वतः ।
हितं तद्रमणं प्रायः [4]स्वामिनस्तद्वतो भवेत् ॥१०॥
हर्यतेर्वा[5] यकारस्य कृतेऽत्वे ह्रस्य हित्वतः ।
न्यप्रत्यये हिरण्यं स्यात् प्रेप्सार्थस्यार्थसम्भवात्[6] ॥११॥
प्राप्तु[7] तदिष्यते प्रायः सर्वेण श्रियमिच्छता ।
अथान्तरिक्षनामानि[8] पृथिवीनामधेयतः ॥१२॥
लोकक्रमानुरोधेन दश षड् [9]वापराण्यपि ।
खं नभो देवमार्गश्च विहायो [10]गगनं तथा ॥१३॥
एवंविधानि सन्तीति संख्या नान्यनिवृत्तये[11] ।
वस्त्रेऽप्यम्बरशब्दस्याद् [12]बर्हिर्दर्भेष्वपीष्यते ॥१४॥
अन्तराऽन्तरिक्लृप्त्या[13] च तथा क्षान्तान्तलोपतः[14] ।
क्षमेर्डप्रत्यये[15] यद्वा निष्ठार्थे त्वन्तरोत्तरात् ॥१५॥
अन्तरिक्षमिति प्रोक्तं क्षान्तं शान्तं प्रतिष्ठितम् ।
अन्तरा सर्वभूतानां [16]निष्क्रियत्वात् क्षमान्वितम् ॥१६॥

---

१. कोशे 'क्रियते' इत्यपपाठः । २. धा० ३।१०॥ ३. धा० १।९०६॥
४. कोशे 'स्थापितस्त०' इत्यपपाठः । ५. धा० १।५४७॥
६. हर्यं गतिकान्त्योः (१.५४७) इति पाणिनीयधातुपाठे प्रेप्सार्थो न निर्दिश्यते ।
७. कोशे 'प्राप्तं' इत्यपपाठः ।
८. अन्तरिक्षनामानि षोडश । अन्तरिक्षं कस्मात् ? अन्तरा क्षान्तं भवति । अन्तरेमे इति वा । शरीरेष्वन्तरक्षयमिति वा । निरु० २।१०॥
९. वाशब्दोऽत्र समुच्चये, तेन दश च षट् च षोडशेत्यर्थः ।
१०. कोशे 'गगनस्तथा' इति पाठः । ११. कोशे 'नान्यविपत्तये' इत्यपपाठः ।
१२. कोशे 'बर्हिदर्भे०' इत्यपपाठः । १३. कोशे 'अन्तरान्तरेव क्लृ०' इत्यपपाठः ।
१४. क्षान्तपदस्थस्य 'आन्त्'इत्यंशस्य लोपेनेत्यर्थः ।
१५. कोशे 'क्षमे डप्रत्यये' इत्यपपाठः । धा० १।४६६॥
१६. कोशे 'निषीयत्वात्' इत्यपपाठः ।

इमे वाऽप्यन्तरा यस्मात् क्षियत्येतद्धि[1] रोदसी ।
क्षियतेरन्तरिक्षं[2] स्यात् [3]तस्मात्तस्मिंस्तु कर्तरि ॥१७॥
अक्षयस्य [4]यलोपेन तथाऽऽदेरित्वक्लृप्तितः ।
अन्तःपूर्वस्य[5] वा ज्ञेयं यथा भाष्यकृतेरितम् ॥१८॥
सर्वेष्वेव[6] शरीरेषु विनश्यत्स्वविनाशिकम्[7] ।
समुद्र[8] इति तत्रेदं पार्थिवेऽपीष्यतेऽर्णवे ॥१९॥
अन्तरिक्षेऽर्णवे चैव तुल्यकर्माविसीयते ।
द्रवतेस्तु[9] समुत्पूर्वादपादाने च कर्मणि ॥२०॥
डप्रत्यये समुद्रस्स्याद् अन्तरिक्षं तथेतरः[10] ।
संहता[11] हि द्रवन्त्यूर्ध्वम् आपो रश्मिप्रचोदिताः ॥२१॥
अन्तरिक्षात् तथा भौमान्मारुतेन समीरिताः ।
अभिद्रवन्ति वाप्येनं संहतास्सूर्यमण्डलात् ॥२२॥
पार्थिवं वापि[12] नादेया उदभ्यर्थोऽत्र संश्रितः ।
समस्सकारपूर्वाद्वा [13]मुदेराधारवर्तिनि ॥२३॥
रप्रत्यये समुद्रस्स्याद् मोदन्ते प्राणिनोऽनयोः ।
सम्पूर्वादुदकस्योदो मत्वर्थो रो यदा भवेत् ॥२४॥

---

१. कोशे 'क्षीय०' इत्यपपाठः ।

२. कोशे 'क्षीयतेरन्तरिक्ष' इत्यपपाठः । धा० ५।३०॥

३. अन्तरोपपदात् क्षियतेर्डप्रत्यये कर्त्तरीत्यर्थः ।

४. कोशे 'सलोपेन' इत्यपपाठः । अन्तर्+अक्षय=यलोपे—अन्तर् अक्ष=आदेरित्वे—अन्तर् इक्ष=अन्तरिक्षम् ।

५. कोशे 'अतः०' इत्यपपाठः । ६. कोशे 'सर्वेष्वव' इत्यपपाठः ।

७. अविनाशीत्यर्थः स्वार्थे कन्प्रत्ययः ।

८. तत्र समुद्र इत्येतत् पार्थिवेन समुद्रेण संदिह्यते । समुद्रः कस्मात् ? समुद्द्रवन्त्यस्मादापः । समभिद्रवन्त्येनमापः । सम्मोदन्तेऽस्मिन् भूतानि । समुदको भवति । समुनत्तीति वा । तयोर्विभागः । निरु० २।१०॥ ९. धा० १।६९२॥

१०. कोशे 'तथैतरः' इत्यपपाठः ।

११. कोशे 'संहताभिद्रव०' इत्यपपाठः ।

१२. कोशे 'पार्थं वाऽपि नादेयं' इत्यपपाठः । १३. धा० ३।१६॥

तथाऽप्येवंविधं रूपम् उदकं संहृतं समुत् ।
संपूर्वादथवाप्युन्दे:[1] क्लेदनार्थात्तु[2] कर्तरि ॥२५॥
[3]प्रत्ययेऽथवा रूपमुभयत्राविशेषतः ।
समुनत्ति [3]त्विमां भूमिं स [4]वृष्टया वेलयापि वा ॥२६॥
विभागस्तु तयोर्यस्यामृचि स्पष्टोऽवगम्यते ।
तदर्थसुखबोधार्थमितिहासोऽभिधीयते[5] ॥२७॥
देवापि[ः] शन्तनुश्चैव कुरुवंशसमुद्भवौ ।
ऋष्टिषेणसुतस्यास्तां[6] प्रतीपस्य सुतावुभौ ॥२८॥
त्वग्दोषाद् दूषितं ज्येष्ठं देवापिं शान्तमानसम् ।
अनादृत्य बलेनैव कनीयानपि शन्तनुः ॥२९॥
अभ्यषेचयदात्मानं प्रजाभिः पैतृके पदे ।
देवापिः [7]क्षमया युक्तः प्रतिपेदे तपः परम् ॥३०॥
च्यवनस्यार्ष्टिषेणस्य[8] शिष्योऽभूच्च महात्मनः ।
निहत्य[9] तपसा पापम् अकल्याणीं त्वचं तथा ॥३१॥
ब्राह्मणत्वं समासाद्य [10]निस्स्पृहस्समजायत ।
शन्तनोस्तु तदा राज्ये ज्येष्ठातिक्रमदोषतः ॥३२॥

---

१. कोशे '०प्युन्द्धेः' इत्यपपाठः । धा० ७।२०॥

२. कोशे '०नार्थन्तु' इत्यपपाठः ।

३. कोशे 'हिमु' इत्यपपाठः ।

४. कोशे 'वृष्ट्यभावे लयापि' इत्यपपाठः ।

५. तत्रेतिहासमाचक्षते । देवापिश्चार्ष्टिषेणः । शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शन्तनुः कनीयानभिषेचयांचक्रे । देवापिस्तपः प्रतिपेदे । ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणाः—अधर्मस्त्वया चरितः । ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम् । तस्मात् ते देवो न वर्षतीति । स शन्तनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः—पुरोहितस्तेऽसानि याजयानि च त्वेति । तस्यैतद् वर्षकामसूक्तम् । तस्यैषा भवति । निरु० २।१०॥

६. कोशे 'आर्ष्टीषेण०' इत्यपपाठः ।     ७. कोशे 'क्षेमया' इत्यपपाठः ।

८. कोशे '०स्यार्ष्टिशेषेणशिष्यो' इत्यपपाठः ।

९. कोशे 'हिनत्य' इत्यपपाठः । यद्वाऽत्र 'प्रहित्य' इति पाठः कल्पनीयः ।

१०. कोशे 'निस्पृह०' इत्यपपाठः ।

समा द्वादश देवेन्द्रो वृष्टिं नैवाभ्यवर्तयत्[1] ।
दुर्भिक्षोपहते देशे [2]मौद्गल्यप्रमुखा द्विजाः ॥३३॥
राज्यस्थाः शन्तनुं प्रापुरधर्मो यस्त्वया कृतः ।
यत्त्वया[3] कारितं राजन् अभिषेचनमात्मात्मनः ॥३४॥
अनादृत्यैव[4] देवापिं तस्मादिन्द्रो न वर्षति ।
ब्राह्मणानां वचः श्रुत्वा स्वदेशं च क्षुधाहतम् ॥३५॥
शन्तनुर्ज्येष्ठमासाद्य राज्येनैव शिशिक्ष[5] ह ।
शिक्षतिः प्रार्थनार्थोऽत्र दानार्थोऽन्यत्र[6] पठ्यते ॥३६॥
प्रार्थयामास राज्येन प्रजानां वृष्टिसंभवम् ।
[शर्म कामयमानः स देवापिं तमुवाच ह ] ॥३७॥[7]
प्रशाधि राज्यमेतत्ते क्षमस्वातिक्रमं मम ।
तमुवाचाथ देवापिर्ब्राह्मण्यस्यानुरूपतः ॥३८॥
अहं परोहितस्ते स्यां शाधि त्वं राज्यमात्मनः ।
शान्तिकं पौष्टिकं चैव कर्माहं करवाणि ते ।३९॥
वृष्टयर्थं[8] याजयानि त्वां भव त्वं विगतज्वरः ।
आर्त्विज्यं[9] कुर्वतस्तस्य वृष्टिकामस्य धीमतः ॥४०॥

---

१. कोशे 'वृष्टिर्नैवा प्रव०' इत्यपपाठः ।

२. कोशे 'मोद्गल्येव०' इत्यपपाठः ।

३. कोशे 'यत्वया' इत्यपपाठ ।

४. कोशे 'अनादृत्येव' इति पाठः ।

५. कोशे 'शिशिक्षि' इत्यपपाठः ।

६. अन्यत्र—निघण्टौ ३।२०; 'शिक्षा स्तोतृभ्यः' (ऋ० २।११।२१) इत्यस्य व्याख्याने 'देहि स्तोतृभ्यः कामान्' इत्युक्तं (निरुक्ते १।७) यास्केन ।

७. पूर्वश्लोकार्द्धः साकाङ्क्ष इत्यभिसमीक्ष्य पाठभ्रंशमनुमायायं श्लोकार्द्धपाठः कल्पितः । कोशे '०क्रमं मम' इत्यतोऽनन्तरं संख्याया अनिर्देशः, '०नुरूपतः' इत्यतोऽनन्तरं च तस्या निर्देशः पाठभ्रंशमुपोद्बलयति । संख्यानिर्देशेऽपि व्यतिकरः संजातः । ३८ स्थाने ३७ इति निर्दिष्टा, अग्रे च 'शान्तिकं पौष्टिकं' इति श्लोकार्द्धं द्विर्विलिख्य संख्या पूरिता ।

८. कोशे 'वृष्टचर्था या च यानि त्वा' इत्यपपाठः ।

९. कोशे 'आर्तिज्यं' इत्यपपाठः ।

एतत्प्राहुर्बभौ सूक्तं [1]बृहस्पतेपदादिकम् ।
तत्रेयमृक्समाम्नाता[2] त्वार्ष्टिषेणपदादिका[3] ।
च्यवनस्यार्ष्टिषेणस्य[4] देवापिः पुत्रतां गतः[5] ॥४१॥
ऋषिर्द्रष्टाऽस्य[6] सूक्तस्य निषीदन्[7] होत्रकर्मणे ।
कर्तुं वा होत्रमित्येवं वाक्यशेषः प्रकल्प्यते ॥४२॥
देवानां सुमतिं विद्वान् असृजद् वृष्टिजास्त्वपः ।
समुद्रादुत्तरस्मात्तु समुद्रमधरं प्रति ॥४३॥
उत्तरस्य समुद्रत्वमधरग्रहणान्मतम् ।
ऋष्टिषेणस्य[8] पुत्रत्वं देवापेः शिष्यवृत्तितः ॥४४॥
रेषणात्[9] ऋष्टिरित्युक्ता शक्तिस्सेना नु तद्वती ।
यस्यासावृष्टिषेणस्स्यात् सुकन्यासेनया[10] तु तत् ॥४५॥
च्यवनस्य तु भार्यासीत् सुकन्या राजपुत्रिका ।
इषिता प्रेषिता वापि सेनाऽरीन् प्रति सर्वदा ॥४६॥
सुकन्योद्वाहकाले वा या गता[11] प्रेषितैव सा ।
रिष्टिरेर्ष्टिरित्युक्ता त्वादिव्यापत्तिक्लृप्तितः ॥४७॥

---

१. कोशे 'बृहस्पति पदा०' इत्यपपाठः । २. कोशे '०साम्नाता' इत्यपपाठः ।

३. कोशे 'त्वर्ष्टिषेण पदादिकम्' इत्यपपाठः । ऋचो विशेषणमेतत् ।

४. कोशे '०षेसोन' इत्यपपाठः ।

५. अत्र ३१,४१ संख्यकयोः श्लोकयोः समानो निर्देशः, परन्तु २८ संख्यकस्य श्लोकस्योत्तरार्धो न संगच्छते । तत्र पाठभ्रंशः समजायत ।

६. आर्ष्टिषेणो होत्रमृषिर्नि षीदन् देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद् वर्ष्या अभि ॥ ऋ० १०।९८।५॥

७. कोशे 'निषीदन्होत्र०' इत्यपपाठः ।

८. आर्ष्टिषेण ऋष्टिषेणस्य पुत्रः । इषितसेनस्येति वा । सेना सेश्वरा, समानगतिर्वा । पुत्रः पुरु त्रायते, निपरणाद् वा । पुन्नरकं ततस्त्रायत इति वा । निरु० २।११॥

९. कोशे 'रेषणादृषिरि०' इत्यपपाठः ।

१०. सुकन्या च्यवनस्य भार्या सा च राज्ञः पुत्री । एतत्सम्बन्धेन पितुः सेनया सुकन्यापि तद्वतीति मत्वाह—सुकन्यासेनया । यद्वा सुकन्यैव सेना सहगमना यस्य इत्यर्थोऽत्र व्याख्येयः ।

११. कोशे 'यागतान्' इत्यपपाठः ।

ऋषेरेवाऽथवा[1] रूपं भूते क्तिन् कर्मणीष्यते ।
कामक्रोधादिरूपाणामरीणां रेषणात्मिका ॥४८॥
प्रत्याहारादिरूपा वा सेना स्यादृषिसंगतेः ।
यद्वा कामादिरूपैत्र प्रेषितानाश्रिता सदा ॥४९॥
इनेन सहिता सेना सेश्वरेति प्रकीर्तिता ।
यद्वा समानशब्दस्य सशब्दादुत्तरादिणः[2] ॥५०॥
इना गतिर्विनिर्दिष्टा भावे ने[3] प्रत्यये स्त्रियाम् ।
दृष्टानुश्रविकाद्[4] दुःखात् पुरुणस्त्रायते पितॄन् ॥५१॥
तस्मात् पुत्र इति प्रोक्तः पुरुत्रस्सन्[5] परोक्षतः ।
पुदादेशः [6]पृणातेस्स्यात् क्विपि लुप्ते[7] च सिध्यति ॥५२॥
पिण्डस्यैव निधानं तत्[8] तेन वा त्रायते पितॄन् ।
नरकं वा पुदित्युक्तं [9]पुनातेर्ह्रस्वतः क्विपि[10] ॥५३॥
तेनापि शोध्यते पापमुपभुक्तेन देहिनाम् ।
स्वधर्ममनुतिष्ठद्भिः पिण्डदानादिपूर्वकम् ॥५४॥
नरकात्[11] त्रायते पुत्रः पितॄनित्यागमोदितम्[12] ।
ऋषित्यस्य[13] [14]त्विकोष्टस्स्याद् [15]ऋषिर्दर्शनवाचिनः ॥५५॥
दर्शनं त्विह विज्ञेयं मन्त्रब्राह्मणगोचरम् ।
अविशेषेण पुत्रत्वमृषित्वं तपसो बलात् ॥५६॥

---

१. धा० ६।७॥ २. धा० ३।३६॥
३. कोशे 'णि' इत्यपपाठः। ४. कोशे '०नुश्रविका दुःखा द्रुरुण०' इत्यपपाठः ।
५. कोशे '०त्रस्सत्' इत्यपपाठः । ६. धा० ९।१९॥
७. कोशे 'लुप्तेनधिस्यति' इत्यपपाठः । ८. तत्=पुत् ।
९. धा० ९।१२॥ १०. पुनातेः क्विपि ह्रस्वे कृते तुकि चागमे रूपम् ।
११. कोशे 'नरकान्' इत्यपपाठः ।
१२. तथा चाह मनुः—पुन्नाम्नो नरकादस्मात् पितरं त्रायते सुतः । मनु० ९।१३८॥
१३. कोशे 'ऋक्षेत्वस्य' इत्यपपाठः । १४. इगुपधात् कित् । उणा० ४।१२१॥
१५. ऋषिर्दर्शनात्, स्तोमान् ददर्शेत्यौपमन्यवः । तद् यदेनांस्तपस्यमानान् ब्रह्म स्वयंम्भ्वभ्यानर्षत् [त ऋषयोऽभवन्] तद् ऋषीणाम् ऋषित्वम् (तै० आ० २।९) इति विज्ञायते । निरु० २।११॥

ऋग्यजुःसामरूपोऽत्र वेदो ब्रह्मेत्युदाहृतः ।
स्वयंभूतस्य नित्यत्वात् कर्त्ता नास्यास्ति कश्च[न] ॥५७॥
मधुच्छन्दः पुरोगाणां तपसा भावितात्मनाम् ।
आनर्षत् समनुप्राप्तं [1]पूर्वाधीतं मनश्शुभम् ॥५८॥
यद्वाऽदर्शयद्[2] आत्मानमित्यर्थोऽत्र विवक्षितः ।
तदृषीणामृषित्वं स्याद् एतत्पूर्वं प्रपञ्चितम् ॥५९॥
आपेश्च[3] देवपूर्वस्य कर्तरि प्रत्यये त्वृषौ ।
देवापिरिति[4] निर्दिष्ट [5]आप्त्या स्तुत्या दिवौकसाम् ॥६०॥
देवानां सुमतिस्सैव या भक्तानुग्रहे स्थितिः[6] ।
स्तुतिर्वा सुमतिः प्रोक्ता[7] चिकित्वान् स त्विवेद ताम् ॥६१॥
चेतनावान्[8] वचो नात्र क्वस्वर्थस्य निरुक्तये ।
मत्वर्थे हि क्वसुर्नास्ति यद्यपि स्यान्न संगतिः ॥६२॥
सुमतिं त्वित्यनेनास्य सुमताविति वा भवेत् ।
मुख्यार्थासम्भवे त्वेव लक्षणा सम्भवेच्च सा ॥६३॥
चेतनावानिति त्वेतद् उक्तं हेतुविवक्षया ।
विवेद सुमतिं तस्माच्चेतनावानसौ यतः ॥६४॥
चेतना देवताज्ञानं मन्त्रदृष्टिपुरस्सरम् ।
उद्धोऽन्तर्णीतधात्वर्थात्[9] तरबित्यभिधीयते ॥६५॥

१. पूर्वकल्पेऽधीतमित्यर्थः । पूर्वाधीतमिवेति स्कन्दः । अनधीतमेव तत्त्वतो ददृशुरिति दुर्गः । २. कोशे 'यद्वादश मदात्मानं' इत्यपपाठः । ३. धा० ५।१४॥

४. देवापिर्देवानामाप्त्या स्तुत्या च प्रदानेन च देवसुमतिं देवानां कल्याणीं मतिं चिकित्वांश्चेतनावान् । स उत्तरस्मादधरं समुद्रम् । उत्तर उद्धततरो भवति । अधरोऽधोरः । अधो न धावतीत्यूर्ध्वंगतिः प्रतिषिद्धा । तस्योत्तरा भूयसे निर्वचनाय । निरु० २।११॥

५. कोशे 'आप्तस्तुत्या' इति पाठः ।

६. कोशे 'स्थिता' इति पाठः ।

७. कोशे 'प्रोक्ता विचिकित्वात्स' इत्यपपाठः ।

८. कोशे 'चेतनावान्त्वचो०' इत्यपपाठः ।

९. कोशे '०णीतसाध्वर्थात्' इति पाठः ।

उत्तरेति पदस्यार्थमाहोद्धत[त]रस्त्विति ।
ऊर्ध्वं गततरः प्रोक्तो [1]हन्तिर्गत्यर्थ इष्यते ॥६६॥
अधरोऽधोर इत्युक्तो रो मत्वर्थे समाश्रितः ।
अधोमान् इति तस्यार्थस्त्वधरो [2]वर्णलोपतः ॥६७॥
अधोऽस्तीत्यथवार्त्तेः[3] स्यादधःपूर्वात् पचाद्यचि[4] ।
अधो[5] न धावतीत्युक्तं [6]धावतेर्डे नञुत्तरात् ॥६८॥
अधो न गच्छतीत्यर्थो गतिरूर्ध्वा[7] निवारिता ।
पौरोहित्यं तथार्त्विज्यं[8] वाग्वादो वृष्टिकर्मणि ॥६९॥
भूयस्त्वमुत्तरस्यां हि दृश्यतेऽर्थात् पुरोदितात् ।
यद्[9] यदैव तु देवापिश्शन्तन्वर्थं पुरोहितः ॥७०॥
हौत्रं कर्तुं वृतोऽदीधेद्[10] वृष्टिं लोकानुकम्पया ।
तदा बृहस्पतिस्तस्मै प्रादाद्[11] वृष्टिप्रदां गिरम् ॥७१॥
स्तुत्वा देवान्[12] यया वाचा लेभे वृष्टिं सुखावहाम् ।
चतुर्थ्यर्थे द्वितीये द्वे देवापेस्ते विशेषणे ॥७२॥
देवैः श्रुताय भक्तोऽयमिति ज्ञाताय सूरये ।
वृष्टिं याचित्र इत्यर्थं उक्तो वृष्टिवनिं त्विति ॥७३॥

---

१. कोशे 'हन्तिः शत्यर्थ' इत्यपपाठः । धा० २।२॥
२. अधसः सकारस्य लोपादित्यर्थः ।
३. कोशे 'अथोत्तीत्यथवा दर्ते स्याद०' इति पाठः । धा० १।९८३॥
४. कोशे 'पचाद्यपि' इत्यपपाठः । महाभाष्य व्रा० ३।१।१३४ ॥
५. कोशे 'आधान' इत्यपपाठः ।
६. कोशे 'धावते धे...नञत्तरात्' इति पाठः । धा० १।६३२॥
७. कोशे '०रूर्धन्निवा०' इत्यपपाठः ।
८. कोशे 'तथार्तिज्यं' इत्यपपाठः ।
९. यद् देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥ ऋ० १०।९८।७॥
१०. कोशे 'वृतो धीतेत्' इत्यपपाठः ।
११. कोशे 'वृष्टिपदां' इति पाठः ।
१२. कोशे 'देवान्युदा' इत्यपपाठः ।

वृष्टियाचिनमित्येतत्[1] [2]प्रकृत्याद्यर्थवर्णनम् ।
शं[3] तनोऽस्तु सुखं तुभ्यं हे[4] कृशेति भणत्यसौ ॥७४॥
दयालुर्दुर्बलं[5] दृष्ट्वा सुखं [6]तस्यापि जायते ।
अस्यै[7] तन्वै शरीराय सुखमस्त्विति वा ब्रुवन् ॥७५॥
शन्तनुस्सुखदेहो वा शान्तदेहोऽथवा स्मृतः[8] ।
पुरःपूर्वस्य [9]धाञस्स्यान्निष्ठायां हि पुरोहितः ॥७६॥
पुरो यतो[10] दधत्येनं राजानस्सर्वकर्मणाम् ।
कृपाशब्दात् करोत्यर्थे णिचि[11] स्यात् कृपयन्निति ॥७७॥
कृपायमाण इत्येतत् तदर्थप्रतिपादनम् ।
तस्याऽप्यर्थोऽयमिष्टस्स्यात् कृपावांस्तु भवन्निति ॥७८॥
अदीधेदिति[12] चास्यार्थस्त्वन्वध्याय[दि]तीरितः ।
ध्यातवान्[13] वृष्टिमित्यर्थो देवाः[14] शृण्वन्ति तं यतः ॥७९॥
ब्राह्मणत्वमृषित्वं च प्राप्तवांस्तपसो बलात् ।
इत्येवं श्रूयते देवैरित्यर्थोऽत्र विवक्षितः ॥८०॥

---

१. कोशे 'वृष्टियातन०' इत्यपपाठः ।

२. कोशे 'प्रकृताद्यर्थ०' इत्यपपाठः ।

३. शन्तनुः शं तनोऽस्त्विति वा । शमस्मै तन्वा अस्त्विति वा । पुरोहितः पुर एनं दधति । होत्राय वृतः कृपायमाणोऽन्वध्यायत् । निरु० २।१२॥

४. कोशे 'हेतुशेति भवत्यसौ' इत्यपपाठः ।

५. कोशे 'यदालुर्दु०' इत्यपपाठः । ६. तस्य=दुर्बलस्य ।

७. कोशे 'अस्यैं तद्वे शरीराया' इत्यपपाठः । आकरे 'अस्मै' इति पाठः ।

८. कोशे 'स्मृतेः' इत्यपपाठः ।

९. कोशे 'धाडुस्या०' इत्यपपाठः । धा० ३।१०॥

१०. कोशे 'गतो' इत्यपपाठः ।

११. तत्करोति तदाचष्टे (महाभाष्य वा० ३।१।२६) ।

१२. कोशे 'अधीते दिति चास्यार्थस्त्वमन्ध्यायतीरितम्' इत्यपपाठः ।

१३. कोशे 'ध्यानवान्' इत्यपपाठः ।

१४. देवश्रुतं देवा एनं शृण्वन्ति । [वृष्टिवनि] वृष्टियाचिनम् । रराणो रातिरभ्यस्तः । बृहस्पतिर्ब्रह्मासीत् । सोऽस्मै वाचमयच्छत् । बृहदुपव्याख्यातम् । निरु० २।१२॥

वनोतेर्वृष्टिपूर्वस्य[1] [2]ताच्छील्ये त्वित[3] याचने ।
इष्टो वृष्टिवनिश्चेति [4]रातेर्दानार्थवाचिनः ॥८१॥
रराणः[5] श्लौ शपो वेदे ददद् वृष्टिमितीप्सितम् ।
मध्यमस्त्वृष्टिषेणस्स्यान्मरुद्भिर्भनित्यवादिनः[6] ॥८२॥
वैद्युतस्त्वार्ष्टिषेणोऽपि[7] तस्य स्यात् पार्थिवात्मना ।
होतृत्वे वर्तमानस्य देवापित्वमसंशयम् ॥८३॥
शन्तनुर्यजमानः स्याद् वाग्दानं गर्जितश्रुतिः ।
नित्यपक्षे दिगेषा स्यात् सर्वमन्त्रेषु कल्पिता ॥८४॥

॥ [8]इति पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके द्वितीयाध्यायस्य तृतीयः पादः ॥

---

१. धा० ८।८॥ २. कोशे 'ताच्छिल्ये' इत्यपपाठः ।

३. खनिकष्यज्यसिवनि० (उणा० ४।१४१) इति 'इ' प्रत्ययः ।

४. धा० २।४८॥

५. कोशे विसर्गरहितः पाठः । छान्दसः शानच् श्लुश्च ।

६. मरुत ऋष्टिमन्तः (ऋ० ३।५४।१३) इति मन्त्रवर्णात् । द्र०—स्कन्दभाष्यद्वितीय-भागः पृ० ७७ ।

७. कोशे '०स्त्वृष्टिषेणो०' इत्यपपाठः । विद्युत ऋष्टिषेणत्वस्योक्तत्वादिह वैद्युतेन आर्ष्टि-षेणेन भाव्यम् ।

८. कोशे 'निरुक्तवार्त्तिके द्वितीयस्याध्यायस्य तृतीयः पादः' इति पाठः ।

## चतुर्थः पादः

आदित्यस्य[1] दिवश्चैव स्वरित्यादीन्यतः परम् ।
समाम्नातानि नामानि लोके क्रमवशेन षट् ॥१॥
एकोऽनेकेषु[2] वाच्येषु शब्दो योऽर्थेषु वर्तते ।
असौ साधारणो नाम समं सोऽर्थेषु धार्यते ॥२॥
अर्थभेदान्न भेदः स्यात् प्रत्यभिज्ञाविरोधतः[3] ।
भिन्नेष्वप्यभिधेयेषु शब्द एकः प्रतीयते ॥३॥
शब्दभेदोऽनुमानेन[4] प्रत्यक्षेण तदेकता ।
प्रत्यक्षेण विरुद्धत्वाद् अनुमाभास[5] एव सः ॥४॥
क्रियाभेदान्न[6] भेदः स्याद् धातुभेदपुरस्सरात् ।
प्रत्यभिज्ञायमानस्य संस्कारत्वे तदिष्यताम्[7] ॥५॥
शक्तिमद्भेदक्लृप्तेश्च शक्तिभेदप्रकल्पना ।
लघ्वी स्याच्छक्तिमद्भेदे शक्त्यनेकत्वकल्पना ॥६॥
संशयश्च न जायेत शब्द[भे]देऽर्थगोचरः ।
शब्दैक्ये संशयोत्पत्तौ निर्णयः[8] प्रक्रमादिभिः ॥७॥

---

१. साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च । यानि त्वस्य प्राधान्येनोपरिष्टात् तानि व्याख्यास्यामः । निरु० २।१३॥ २. कोशे 'एकोनकेषु' इत्यपपाठः ।

३. स एवायं गोशब्दो यः पशुपृथिवीरश्मिषु दृष्ट इत्येवंरूपा प्रत्यभिज्ञा न प्रकल्पेतेत्यभिप्रायः ।

४. अर्थभेदात् शब्दभेदः, प्रत्यर्थं शब्दस्य नियतत्वात् ।

५. कोशे 'अनुभास' इत्यपपाठः । अनुमानाभास इति भावः ।

६. ननु ऋच्छिरसिधातुभेदनिर्देशात् (निरु० २।७) क्रियाभेदः, ततश्च निऋतिशब्दो देवतापृथिव्योः प्रत्यर्थं भिन्न इति शङ्कामपाकरोति क्रियेति ।

७. शब्दसंस्कारार्थं धातुभेदः कल्प्यत इत्यर्थः ।

८. कोशे 'निर्णयः' इति पाठः । अनेकार्थत्वे प्रक्रमाद्युपायैरर्थो निर्णेयः । अत्रास्यानेकार्थस्य कोऽर्थ इति ।

स्ववाच्यव्यतिरिक्तेऽर्थे [1]साधारण्यं न विद्यते[2] ।
गौणमुख्यविभागोक्तेः सा च भेदे न[3] सिध्यति ॥८॥
प्रतीतेर्विप्रकृष्टत्वात् शब्दस्तत्र[4] न वर्तते ।
स्वार्थे[5] वृत्ते ततश्शब्दे सादृश्यादितरार्थधीः ॥९॥
तस्मादेकस्य शब्दस्य यस्यानेकार्थवाचिता ।
तस्यैव युज्यते वक्तुं साधारण्यमसंशयम् ॥१०॥
अस्यादित्यस्य नामानि सवितेत्यादिकानि[6] तु ।
सूक्तभाक्त्वाद्[7] धविर्भाक्त्वादेषां प्राधान्यमब्रवीत् ॥११॥
ततो नैघण्टुके नैषां वृत्तेरवसरो भवेत् ।
आदित्यस्य हि नामानि षडेवेति [वि]बुद्धये ॥१२॥
तथा [8]नैघण्टुकार्थत्वं षण्णामेतदभाषत ।
आङ्यादित्यो[9] [10]ददातेस्स्याद् अन्तेत्वे त्यचि[11] कर्तरि ॥१३॥
दीपेराङ्यथवाऽऽदित्यो[12] भासा दीप्तो हि दृश्यते ।
ण्यप्रत्ययेऽदितेर्यद्वा[13] पुत्र आदित्य उच्यते ॥१४॥
आदितेयपदं चैव तत्पुत्रत्वेऽस्य कारणम् ।
यदेदेनमिति[14] ह्यस्यां सूर्यस्यैतद्विशेषणम् ॥१५॥

---

१. कोशे 'सारण्यं' इत्यपपाठः ।
२. अग्निर्माणवक इत्यादाविति शेषः ।
३. कोशे 'नु' इत्यपपाठः ।
४. गौणार्थे इति भावः ।
५. कोशे 'स्वार्थवृत्ते' इति पाठः ।
६. कोशे '०त्यानिकानि' इत्यपपाठः ।
७. कोशे 'सूक्तवभाक्त्वाद्' इत्यपपाठः ।
८. कोशे 'नैघण्डुकार्थं' इत्यपपाठः ।
९. आदित्यः कस्मात् ? आदत्ते रसान् । आदत्ते भासं ज्योतिषाम् । आदीप्तो भासेनेति वा । अदितेः पुत्र इति वा । निरु० २।१३॥
१०. धा० ३।९॥ ११. कोशे 'त्यपि' इति पाठः । १२. धा० ४।४२॥
१३. कोशे 'णप्रत्ययो०' इत्यपपाठः । दित्यदित्या० (अष्टा० ४।१।८५) इति ण्यप्रत्ययः ।
१४. ऋ० १०।८८।११ इत्यत्र 'सूर्यमादितेयम्' इति पठ्यते ।

सूर्यश्चादित्य एवेष्टः स्त्रीभ्यो [1]ढक्यादितेयता ।
ढक्प्रत्ययस्य [2]बाधेष्टा [3]दित्यदित्येति यद्यपि ॥१६॥
तथाप्युत्सर्गबाध्यत्वमपवादस्य दृश्यते ।
तथा[4] दाशरथायेति वाल्मीकीयेऽपि दृश्यते ॥१७॥
[5]संबन्धो [6]नानयोरन्यः पितापुत्रत्वलक्षणात् ।
अदितिः [7]पुत्रकामेति प्रकृत्य [8]ब्राह्मणे तथा ॥१८॥
तस्यै चत्वार इत्येवं [9]तस्यास्तत्पुत्रतोदिता ।
आङ्पूर्वत्वमभिप्रेत्य [10]गार्ग्येणावग्रहः कृतः ॥१९॥
तत्पुत्रत्वम्[11] अभिप्रेत्य न शाकल्यादिभिः कृतः ।
अल्पप्रयोगनिर्देशस्तुशब्देन[12] विशेषितः ॥२०॥
अर्थं हि गमयेत् [13]कञ्चित् कोऽसावयमुदीर्यते ।
अन्वयव्यतिरेकाभ्यां शब्दस्यार्थोऽवधार्यते ॥२१॥
प्रयुक्ते बहुशब्दे [हि] न चैवाल्पप्रयोगतः[14] ।
गृह्यते[15] तेन नास्यार्थः पुत्र एवेति निश्चयः ॥२२॥

---

१. स्त्रीभ्यो ढक् । अष्टा० ४।१।१२०॥ कोशे 'ढक्योदितेयता' इत्यपपाठः ।

२. कोशे 'बोवेष्टा' इत्यपपाठः । ३. द्र०—अष्टा० ४।१।८५ सूत्रम् ।

४. कोशे 'तदा' इति पाठः । तथा—उत्सर्गेणापवादे बाधिते 'प्रदीयतां दाशरथाय मैथिली' (रामायण ६।१४।३) इति वाल्मीकेर्वचनमुपपद्यते ।

५. कोशे 'संबन्धान्ना०' इति पाठः ।

६. तनु सम्बन्धसामान्ये तस्येदम् (अष्टा० ४।३।१२०) इत्यणि दाशरथपदं सिध्येदित्यत आह सम्बन्धेति । अनयोः=दशरथ-दाशरथयोः । ७. कोशे 'पुत्रतामेति' इत्यपपाठः ।

८. अदितिः पुत्रकामा……तस्यै चत्वार आदित्या अजायन्त ‥ततो विवस्वानादित्यो ऽजायत । तै० सं० ६।५।६॥ ९. तस्याः=आदितेः, तत्पुत्रता=आदित्यपुत्रता ।

१०. कोशे 'गार्गेण' इत्यपपाठः । गार्ग्य आदित्यशब्दमाङ्पूर्वाद् दितेः क्यबन्तं मत्वाऽवगृह्णाति । ११. तत्पुत्रत्वम्—अदितिपुत्रत्वमादित्यस्य मत्वा शाकल्यो नावगृह्णाति ।

१२. अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् । सूर्यमादितेयम् (ऋ० १०।८८।११) [अदितेः पुत्रम्] । निरु० २।१३॥

१३. कोशे 'किञ्चित्' इति पाठः ।

१४. कोशे 'तेनैवाल्प०' इति पाठः । १५. कोशे 'गृह्यते' इति पाठः ।

अर्थान्तरेऽपि वाच्ये स्यात् प्रयोगोऽयमितीप्सितः[1] ।
सूक्तभाक्त्वं तु निर्दिष्टं[2] हविर्भाक्त्वनिवृत्तये ॥२३॥
हविर्भाक्त्वनिवृत्त्या च गुणभावो विवक्षितः ।
गुणभावोपपत्तौ च [3]यथान्यायाविरोधिता ॥२४॥
योजनीयं तथा तत्स्यात् प्रधानानुगुणो गुणः ।
नित्यत्वस्याविरोधेन वैदिकानि पदान्यतः ॥२५॥
व्याख्येयानीति संचिन्त्य भाष्यकारोऽब्रवीदिदम् ।
आर्चभ्याम्नायशब्दोऽयमृग्वेदस्याभिधायकः[4] ॥२६॥
ऋचां समूह आर्चस्स्यात् तदाधारस्तु तत्परः[5] ।
आम्नायन्ते त्वृचो यस्मिन् आभिमुख्येन संगता[:] ॥२७॥
अभ्याम्नायस्स निर्दिष्ट[6] आम्नायो वेद एव सः ।
ऋचाभ्याम्नाय इत्येवं [7]पाठोऽन्येषां प्रदर्श्यते[8] ॥२८॥
अल्पप्रयोगहेतुत्वमृचेत्येतेन कथ्यते ।
मध्यस्थानत्वमप्यस्ति मित्रादीनां यतस्ततः ॥२९॥
अन्यासामपि[9] निर्देशो भाक्ते भेदेऽथवा भवेत् ।
आदित्यशब्दवाचित्वं मित्रादीनामिमा गिरः[10] ।३०॥

---

१. कोशे '०यमीप्सितम्' इत्यपपाठः । २. कोशे '०भाक्त्वन्त्वनिवृ' इत्यपपाठः ।

३. कोशे '०न्यायविरो०' इत्यपपाठः ।

४. ऋचाभो नाम वैशम्पायनान्तेवासी(द्र०—काशिका ४।३।१०४)। तेन प्रोक्तां संहितामधीयते आर्चाभिनः (णिनिः) । आर्चाभिनामाम्नायः आर्चाभ्याम्नायः, तस्मिन् । आर्चाभिनां संहितायामित्यर्थः । ऋचाभस्य वैशम्पायनशिष्यत्वाद् आर्चाभ्याम्नायः कृष्णयजुर्वेदस्य शाखा चरणं वा स्यात् । अयमर्थोऽञ्जसोपपद्यते । निरुक्तटीकाकाराणां व्याख्या तु क्लिष्टा प्रतीयते । अस्मिन् पक्षे सूक्तशब्दः स्तुतिपर्यायो न तु विभागविशेषपरः ।

५. कोशे 'तत्परम्' इत्यपपाठः । ६. कोशे 'निदिष्ट' इत्यपपाठः ।

७. कोशे 'पाठे' इत्यपपाठः ।

८. स्कन्देनेति शेषः ? द्र०—स्कन्दभाष्यद्वितीयभागः पृ० ८२ ।

९. कोशे 'अन्येषामपि' इत्यपपाठः । एवमन्यासामपि देवतानामादित्यप्रवादाः स्तुतयो भवन्ति । तद् यथैतन्मित्रस्य वरुणस्यार्यमणो दक्षस्य भगस्यांशस्येति । निरु० २।१३॥

१०. ऋ० २।२७।१॥ निरु० १२।३६॥

इत्यस्यां दृश्यते षण्णाम्[1] आदित्येभ्य इति स्फुटम् ।
आदित्येभ्य इति त्वेष प्रवादो [2]वचनं त्विह ॥३१॥
स्तुतयस्तेन[3] संबद्धाः तस्य व्याख्या[4] तु पूर्ववत् ।
समस्तव्यस्तयोश्चापि[5] मित्रस्य वरुणस्य च ॥३२॥
आदित्यशब्दसंयुक्ता स्तुतिर्मन्त्रेषु दृश्यते ।
सन्दीप्तावीश्वरौ[6] चापि तौ मित्रावरुणावुभौ ॥३३॥
घृतास्रवौ घृताहारौ प्रेरकावुदकस्य[7] वा ।
आदित्यावदितेः पुत्रौ दानस्याथ पती तथा ॥३४॥
सेवेतां यज्ञमस्माकमस्मान् वाऽप्यनवह्वरम् ।
ह्वरतेर्भक्षणार्थस्य[8] यद्वा कौटिल्यवाचिनः ॥३५॥
अच्प्रत्ययेऽवपूर्वस्य[9] चैवावह्वर इष्यते ।
ह्वरस्तु भक्षणं हिंसा [10]यस्मिन्नैवास्ति केनचित् ॥३६॥
उक्तोऽनवह्वरः[11] सोऽत्र यज्ञो दुष्टैरहिंसितः ।
कौटिल्यार्थविवक्षायां क्रियायास्तद्विशेषणम् ॥३७॥
वाञ्छितार्थप्रदानेन[12] सेवेतां नोऽनवह्वरम् ।
हे[13] मित्रादित्य स प्रास्तु प्रयस्वानन्नवान् सदा ॥३८॥

---

१. मित्रोऽर्यमा भगो वरुणो दक्षोंऽश इत्येतेषाम् ।

२. कोशे 'वचनस्त्विह' इति पाठः । ३. कोशे 'स्तुतये स्तेन सम्बन्धाः' इत्यपपाठः ।

४. कोशे 'व्याख्यात पूर्ववत्' इति पाठः । कदाचिदत्र 'व्याख्या विधास्यते' इति पाठः स्यात् । द्र०—निरु० १२।३६॥

५. अथापि मित्रावरुणयोः । आदित्या दानुनस्पती (ऋ० २।४१।६) । दानपती । निरु० २।१३॥

६. ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम् ॥ ऋ० २।४१।६॥

७. कोशे '०वुभकस्य' इत्यपपाठः । ८. निघ० २।८॥ धा० १।६७८॥

९. कोशे '…भवपूर्वस्य ह्वर इष्यते' इति भ्रष्टः पाठः ।

१०. कोशे 'यस्मिनि नेवा०' इत्यपपाठः । ११. कोशे '०नपह्वरेः पोत्र' इत्यपपाठः ।

१२. कोशे '०प्रधानेन' इत्यपपाठः ।

१३. अथापि मित्रस्यैकस्य । प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन । [न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥] (ऋ० ३।५९।२) इत्यपि निगमो भवति । निरु० २।१३॥

व्रतेन कर्मणा यस्ते हविश्शिक्षति मानवः ।
हन्यते केनचिन्नैव[1] न चासौ जीयते क्वचित् ॥३९॥
त्वदन्यस्य[2] त्वभावेन त्वोतस्त्वत्परिपालितः[3] ।
एनं त्वत्पालितं मर्त्यमंहः[4] पापं न चाश्नुते ॥४०॥
अन्तितो[5] दूरतो वाऽथ तदा कालान्तरेऽपि वा ।
यूपे[6] बद्धः शुनश्शेपो[7] वरुणं प्राह मुक्तये ॥४१॥
भगवन्[8] वरुणास्मत्तः पाशमुच्छ्रथयोत्तमम् ।
अधममप्यथैवाऽधो[9] मध्यमं चापि मध्यतः ॥४२॥
पुरुषस्य पशोर्बन्धः [10]कण्ठे मध्येऽथ पादयोः ।
इष्यते किल तेनैवमुत्तमेत्यादि युज्यते ॥४३॥
उत्तमो मध्यमश्चैव कर्मपाशोऽधमोऽपि वा ।
विमोकानन्तरं[11] चैव कर्मण्यादित्य ते वयम् ॥४४॥
अदित्यै[12] च तथा मात्रे स्यामैवानागसः[13] स्फुटम् ।
वागेव [14]वादितिः प्रोक्ता सा चेह स्तुतिलक्षणा ॥४५॥
यागं स्तुतिं च कुर्वन्तो नापराध्येम नित्यशः ।
अक्रियां विहितस्याहुरपराधं मनीषिणः ॥४६॥
अक्रियाप्रतिबन्धेन तस्मात् प्रार्थ्यते क्षयः ।
उत्तमः सात्त्विकः पाशः पुण्यकर्मफलान्वितः ॥४७॥

---

१. कोशे '०चिन्नैवं' इति पाठः । २. कोशे 'त्वदन्यस्यात्वभावेन' इत्यपपाठः ।
३. कोशे '०त्वं परि०' इत्यपपाठः ।
४. कोशे 'मत्यंमहः' इत्यपपाठः । ५. कोशे 'अतीतो' इत्यपपाठः ।
६. अथापि वरुणस्यैकस्य । अथा वयमादित्य व्रते तव(ऋ० १।२४।१५)निरु० २।१३॥
७. कोशे '०शेफो' इति पाठः ।
८. उदुत्तमं वरुण पाशमस्मदवाधमं मध्यमं श्रथाय ! अथा वयमादित्य व्रते तवानगसो अदितये स्याम ॥ ऋ० १।२४।१५॥
९. कोशे 'आपञ्चमाप्यथै०' इत्यपपाठः । १०. कोशे 'काले' इत्यपपाठः ।
११. कोशे 'विमेकान०' इत्यपपाठः । १२ कोशे 'आदित्यै च' इत्यपपाठः ।
१३. कोशे 'सा मैव नागसा' इत्यपपाठः । १४. कोशे 'वादिभिः' इत्यपपाठः ।

मध्यमो राजसः प्रोक्तः पुण्यपापफलाश्रयः ।
अधमस्तामसो ज्ञेयः पापकर्मफलात्मकः ॥४८॥
देवत्वं मानुषत्वं च तिर्यक्त्वं चेति स त्रिधा[1] ।
पाशैस्सांसारिकै[र्] बद्धो वरुणं कश्चिदब्रवीत् ॥४९॥
उदित्यघानि[2] मुञ्चेति [3]मुक्तपाशा वयं ततः ।
व्रते ज्ञानात्मके शुद्धे त्वत्स तत्त्वावलम्बिनि ॥५०॥
अपराधविनिर्मुक्ता[:] स्यामादीनत्वसिद्धये ।
प्रथमे मध्यमे चैव वयस्यन्तेऽधमे[4] कृतम् ॥५१॥
पाशशब्देन[5] निर्दिष्टं [6]पापमन्ये प्रचक्षते ।
वृणोतीति[7] व्रतं [8]कर्म निबध्नात्यात्मकारिणम्[9] ॥५२॥
उपभुज्य फलं तस्य कर्ता तेन विमुच्यते ।
प्रवृत्तिलक्षणं त्वेतद् इष्टानिष्टफलप्रदम् ॥५३॥
निवृत्तिलक्षणं [10]वापि मानसं व्रतमुच्यते ।
आदित्यः[11] स्वरिति[12] प्रोक्तः स्वरण[:]स्वीरणोऽपि सन् ॥५४॥
अरणं[13] शोभनं तस्य तमसामीरणं तथा ।
लोकानुग्रहहेतुत्वात् स्वृतो[14] वा पार्थिवान् रसान् ॥५५॥

---

१. कोशे 'त्रिधः' इत्यपपाठः । २. कोशे 'उदित्यघोविमुञ्चेति' इति पाठः ।
३. कोशे '०पाशो' इत्यपपाठः । ४. कोशे 'यस्यन्तेधमे' इत्यपपाठः ।
५. कोशे '०शब्दे निर्दिष्टं' इत्यपपाठः ।
६. कोशे 'पाशमन्ये' इति पाठः । तु० - स्कन्दभाष्यद्वितीयभागः पृ० ८४।
७. धा० ५।८॥
८. व्रतमिति कर्मनाम । निवृत्तिकर्म वारयतीति सतः । इदमपीतरद् व्रतमेतस्मादेव, वृणोतीति सतः । अन्नमपि व्रतमुच्यते, यदावृणोति शरीरम् । निरु० २।१३। । व्याख्यातॄणां पाठे 'निवृत्तिकर्म वारयतीति सतः' 'वृणोतीति सतः' इत्यनयोः वाक्ययोः परस्परं विपर्यासो दृश्यते । ९. कोशे '०त्यामकारिणम्'इत्यपपाठः । १०. कोशे 'त्वापि' इत्यपपाठः ।
११. स्वरादित्यो भवति । सु अरणः, सु ईरणः । स्वृतो रसान्, स्वृतो भासं ज्योतिषां, स्वृतो भासेति वा । एतेन द्यौर्व्याख्याता । निरु० २।१४॥
१२. कोशे 'स्वरितः' इत्यपपाठः । १३. कोशे 'आरणं' इत्यपपाठः ।
१४. कोशे 'सितो वा पार्थिवाद्रसात्' इत्यपपाठः ।

भासं[1] वा ज्योतिषां हृतु[०] व्याप्तो [१]भासा स्वृतोऽथवा ।
स्वरित्येतत् सुपूर्वस्य [२]विच्यर्तेः कर्तृ[०]कर्मणोः ॥५६॥
यणादेशे गुणे रत्वे द्यौरेतेनोपवर्णिता ।
एभिर्न[३] इति मन्त्रे हि स्वरादित्योऽभिधीयते ॥५७॥
हविर्भिरेक[४] इत्यस्यां द्यौरेव प्रतिपादिता[५] ।
निप्रत्यये[६] प्रपूर्वस्य [७]पृश्नि[:]कर्तर्यशेरपि[८] ॥५८॥
उपधायाश्च लोपेन [९]प्ररेफस्य प्रसारणे ।
स्पृशेर्वा[१०] प्रत्यये [११]तस्मिन् सकारस्यैव लोपतः ॥५९॥
एनो वर्णास्त्वशेः कर्म शुक्ल एनोऽभिधीयते[१२] ।
रसादयः स्पृशेः कर्म स्पृष्टो[१३] भासाथवाप्यसौ ॥६०॥
द्यौस्सा चैव[१४] स्पृशे[:] कर्म प्रत्ययः कर्मणीष्यते ।
अयं[१५] वेन इति त्वस्यां पृश्नि[:]सूर्योऽभिधीयते ॥६१॥
अरा[१६] इवेदिति त्वस्यां पृश्निर्द्यौरुपपद्यते ।

---

१. कोशे उभयत्र 'भा' स्थाने 'हा' इत्यपपाठः ।

२. विचि प्रत्ययेऽर्त्तेर्धातोरित्यर्थः । धा० ३।१६॥

३. ऋ० ४।१०।३॥

४. कोशे 'हविर्भिरेत' इत्यपपाठः । द्र०—ऋ० खिल १०।१०६।१॥

५. द्र०—निरुक्त १।११ व्याख्याने ।

६. कोशे 'निर् प्रत्यये' इत्यपपाठः ।

७. पृश्निरादित्यो भवति । प्राश्नुत एनं वर्ण इति नैरुक्ताः । संस्प्रष्टा रसान् । संस्प्रष्टा भासं ज्योतिषाम् । संस्पृष्टो भासेति वा । अथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च । निरु० २।१४॥ ८. धा० ५।१८॥

९. कोशे 'प्ररेभस्य प्रसारेण' इत्यपपाठः ।

१०. धा० ६।१२८॥ ११. निप्रत्यय इत्यर्थः ।

१२. अपव्याख्यानमेतत् ? स्कन्दपाठस्य दुरध्ययनाद् भ्रान्तोऽयं व्याख्याकार इति प्रतीयते । १३. कोशे 'दृष्टो' इत्यपपाठः ।

१४. कोशे 'द्यौस्मस्पृशे०' इत्यपपाठः ।

१५. ऋ० १०।१२३।१॥ निरु १०।३९॥

१६. कोशे 'आरं इवे०' इत्यपपाठः । ऋ० ५।५८।५॥

प्रणये[1] [2]नयतेर्धातोर् [3]नाकस्सूर्योऽभिधीयते ॥६२॥
द्यौर्नाकः सुखरूपत्वात्[कमिति सुखमुच्यते] ।
अकं दुःखमिति प्रोक्तं नञि तस्य निषेधतः ॥६३॥
नाकं तु सुखमेव स्यान्नेत्यकस्य निषेधतः ।
आदित्येऽप्येतदस्त्येव[4] तस्यानन्दात्मकत्वतः ॥६४॥
दिवो[5] नाक इति त्वस्यां सूर्यो [6]नाकोऽभिधीयते ।
[निदधे नाकम्][7] इत्यत्र नाको द्यौरुच्यते बुधैः ॥६५॥
गच्छन्[8] वा गमयन् वापि गौरादित्यो [9]रसान् स्मृतः ।
द्यौर्गता दूरमित्युक्ता गच्छन्त्यस्यां हि यद् ग्रहाः ॥६६॥
परुषे[10] गविर्यस्याविष्टन्नित्येत्तेपो स्यात् कर्तृकर्मणोः ।
षत्वे [11]टत्वेऽथ भत्वे च नयतेर्नभ इष्यते ॥६७॥
विपूर्वस्य[12] तपेरिष्टं [13]विऽटपन्तु सडागमे ।

---

१. कोशे 'त्रीनत्ये' इत्यपपाठः । २. धा० १।६५०॥

३. नाक आदित्यो भवति । [नेता रसानाम्] नेता भासाम् । ज्योतिषां प्रणयः । अथ द्यौः, कमिति सुखनाम । तत्प्रतिषिद्धं प्रतिषिध्येत । न वा अमुं लोकं जग्मुषे किं च नाकम् । न वा अमुं लोकं जग्मुषे किं च नासुखम् । पुण्यकृतो ह्येव तत्र गच्छन्ति । निरु० २।१४॥

४. कोशे '०त्येत्येतद०' इत्यपपाठः । ५. कोशे 'दिवि' इत्यपपाठः । ऋ० ६।८५।१०॥

६. कोशे 'नातो' इत्यपपाठः । ७. वा० सं० १५।४६॥

८. गौरादित्यो भवति । गमयति रसान् । गच्छत्यन्तरिक्षे । अथ द्यौः, यत् पृथिव्या अधिदूरं गता भवति । यच्चास्यां ज्योतींषि गच्छन्ति । निरु० २।१४॥

९. कोशे 'रसा स्मृता' इत्यपपाठः ।

१०. ऋ० ६।५६।३॥ इत आरभ्य त्रयाणां श्लोकानां पाठोऽत्यन्तं भ्रष्टः । नभविष्टपपयोर्निर्वचनयोः पूर्वापरसम्मिश्रणं दृश्यते । कदाचिदत्रैवं पाठः स्यात्—परुषे गव्यृचि त्वस्यां सूर्यो गौरभिधीयते । गवामसीति मन्त्रे च दिव्यपि गौः प्रयुज्यते ॥ आदित्यो त्रिष्टबित्युक्तो विशेः स्यात् कर्तृकर्मणोः । ११. कोशे 'गत्वेध भस्ये च' इत्यपपाठः ।

१२. विष्टबादित्यो भवति । आविष्टो रसान् । आविष्टो भासं ज्योतिषाम् । आविष्टो भासेति वा । अथ द्यौः, आविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च । नभ आदित्यो भवति । [नेता रसानाम्] नेता भासाम् । ज्योतिषां प्रणयः । अपि वा भन एव स्याद विपरीतः । न न भातीति वा । एतेन द्यौर्व्याख्याता । निरु० २।१४॥

१३. कोशे 'विष्पन्तु सुधा०' इत्यपपाठः ।

अप्रत्ययस्तु [1]भावे स्यात् संतापो विगत[स्ततः] ॥६८॥
..............................डप्रत्यये द्वयोः ।
अध्यात्मपटले सूर्यः समोदेनेत्युदाहृतः[2] ॥६९॥
विष्टपं हि[3] द्युलोकस्य यत्र[4] ब्रध्नस्य विष्टपम् ।
ह्रस्वत्वेन[5] सलोपेन तथा वर्णविपर्ययात् ॥७०॥
हन्ति त्रिभासा..........................लोपतः ।
डप्रत्ययेऽथवा [6]भातेर्नञ एकस्य लोपतः ॥७१॥
न न भो नभ इत्युक्तं [7]भात्येवेति विवक्षितम् ।
नभसा[8] ज्योतिषेत्यत्र द्यौरित्येवं प्रचक्षते
मुञ्चते[9] नभ इत्यत्र द्यौरित्येवं प्रचक्षते । ॥७२॥

**[ ॥ इति पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके द्वितीयाध्यायस्य [10]चतुर्थः पादः ॥ ]**

---

१. कोशे 'भाव' इत्यपपाठः । २. यथाकोशं पाठः ।

३. कोशे 'त्रिविष्टपद्यु०' इति पाठः ।

४. कोशे 'रोहो' इति पाठः । 'गोदो' इति स्कन्दपाठः । 'यत्र ब्रध्नस्य विष्टपम्' । ऋ० ९।११३।१०॥

५. कोशे 'ह्रस्वतेन सहत्वेन' इत्यपपाठः । भासन एव ह्रस्वत्वे सकारलोपे=भन=वर्णविपर्यये च नभ इति संपद्यते । ६. धा० २।४२॥

७. कोशे 'भात्येवेत्र' इत्यपपाठः ।

८. अनुपलब्धमूलम् । चतुर्थचरणपाठः सन्दिग्धः, षष्ठचरणेऽपि तादृक्पाठस्योपलम्भात् । अत्र 'सूर्य इत्यभिधीयते' इति युक्तः पाठः स्यात् ?

९. मुञ्चते नभः । तै० सं० ४।३।११।३॥

१०. कोशे चतुर्थपञ्चमपादौ संयुज्य चतुर्थपादत्वेन निर्दिश्येते, श्लोकसंख्यापि संयुज्यैव लिख्यते । अग्रे च षष्ठसप्तमयोः पादयोः स्थाने क्रमशः पञ्चम-षष्ठपादनिर्देश उपलभ्यते । अस्माभिरत्र यथाकरं पादविवेकोऽकारि, यथापादं च श्लोकसंख्या निरदेशि ।

# पञ्चमः पादः

साधारणप्रसङ्गेन [1]रश्मिनामान्यतः परम् ।
दश पञ्च च तानि स्युः खेदयः किरणा इति ॥१॥
रशेस्तु बन्धनार्थस्य रश्मिर्मिन्प्रत्यये भवेत् ।
स[2] यमेरर्थ एवोक्तो यमनादिति भाष्यतः ॥२॥
तेषां साधारणान्यादौ पञ्चोक्तान्यश्वरश्मिभिः ।
सूर्यरश्मिप्रसङ्गेन[3] नामान्यष्टौ [4]दिशामतः ॥३॥
सूर्येणादिश्यमानत्वाद्[5] [6]दिशतेस्स्युर्दिशस्त्वति ।
सदेर्वा व्यत्यये[7] त्वाभ्यामुक्तं ह्यासदनादिति ॥४॥
अशेर्वाभ्यशनोक्तेस्स्याद्[8] अकारस्य तु दत्वतः ।
सदिना[9] सर्वगत्वोक्तिरशिना व्याप्यतेरिता ॥५॥
उक्तार्थत्रयवाचित्वं दिशतेरपरे विदुः ।
दिक्षूपदिक्षु सूर्ये च तथाऽऽज्यन्तेऽप्सु चेष्यते ॥६॥
काष्ठा[10] इति तथैवेष्टमयनाभावविस्फुटम् ।

---

१. रश्मिनामान्युत्तराणि पञ्चदश । रश्मिर्यमनात् । तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः । निरु० २।१५॥

२. कोशे 'गायमेरर्थं' इत्यपपाठः । रशिः पाणिनीयधातुपाठे न संगृह्यते ।

३. दिङ्नामान्युत्तराण्यष्ट । दिशः कस्मात् ? दिशतेः । आसदनात् । अपि वाभ्यशनात् । निरु० २।१५॥ ४. कोशे 'दशामतः' इत्यपपाठः ।

५. कोशे 'सूर्येणादित्यमानत्वात् दिशंत स्यु०' इत्यपपाठः ।

६. धा० ६।३॥ ७ कोशे 'दशेर्वा व्यत्येद्याद्यामुक्तं ह्यादननादिति' इत्यपपाठः ।

८. कोशे 'अदेर्वा ह्यशनोक्ते स्याद्' इत्यपपाठः ।

९. कोशे 'दशिना' इत्यपपाठः ।

१०. तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य [नाम] भवति । काष्ठा दिशो भवन्ति, क्रान्त्वा स्थिता भवन्ति । काष्ठा उपदिशो भवन्ति, इतरेतरं क्रान्त्वा स्थिता भवन्ति । आदित्योऽपि काष्ठोच्यते, क्रान्त्वा स्थितो भवति । आज्यन्तोऽपि काष्ठोच्यते, क्रान्त्वा स्थितो भवति । आपोऽपि काष्ठा उच्यन्ते, क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् । निरु० २।१५॥

क्रमेः[1] क[ान्त्वेति शब्दस्य कादेशे]तिष्ठतेः[2] [परे] ॥७॥
कप्रत्यये[3] सषत्वे[च]ष्टुत्वे काष्ठा प्रसिध्यति ।
स्थावराणामपामेतद् अन्यासामन्यथोच्यते ॥८॥
केवति[4] किमिः कस्यात् स्थानं क्वचित् स्थिताः ।
अतिष्ठन्त्यश्चरत्वेन[5] [6]बहुत्वादनिवेशनाः ॥९॥
आपः काष्ठा इति प्रोक्ताः क्वचिद् या न व्यवस्थिताः ।
मध्येऽन्तरिक्ष इत्यर्थो न त्वपां मध्य ईप्सितम् ॥१०॥
नापां मध्ये शरीरस्य निहितत्वं घटिष्यते ।
यतोऽपो वेष्टयित्वा तद् बहिस्तासां व्यवस्थितम्[7] ॥११॥
अन्तरिक्षे चरन्तीनां निरोधार्थमपां बहिः ।
वृत्रस्य[8] निहितो देहो मेघो वृत्र इहोच्यते ॥१२॥
अधिष्ठाता तु मेघस्य वृत्रोऽत्र परिकीर्तितः ।
शरीरं मेघ एव स्याद् यस्त्वसौ दृश्यतेऽम्बरे ॥१३॥
अवयव्यथवा[9] वृत्रो देहश्चावयवात्मकः ।
इन्द्रेत्यस्याद्युदात्तत्वात् प्रकृतिस्वरभावतः ॥१४॥
बहुव्रीहेर्बहुव्रीहिर्भाष्यकारेण[10] दर्शितः[11] ।
शमेस्त्रुप्रत्यये[12] शत्रुः [13]शातेरुप्रत्ययेऽथवा ॥१५॥

---

१. धा० १।५०२॥ २. धा० १।९७५॥
३. कोशे 'कः प्रत्यये सक्षत्वे कुत्वे काष्ठा' इत्यपपाठः ।
४. अत्र पाठो भ्रष्टः । 'क्वपूर्वात् तिष्ठतेः कः स्यात् क्वेवस्था न क्वचित् स्थिताः' इति पाठोऽत्र स्यात् ।
५. अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥ ऋ० १।३।२१०॥
६. कोशे 'अतिष्ठन्त्यश्वरत्वेन ब्रह्मत्वदत्रवेशताः' इत्यपपाठः ।
७. कोशे 'व्यवस्थितः' इति पाठः ।
८. कोशे 'भृतस्य' इत्यपपाठः । ९. कोशे '०थमा' इत्यपपाठः ।
१०. बहुव्रीहौ प्रकृत्या पूर्वपदम् (अष्टा० ६।२।१) इत्यनेनेति शेषः ।
११. इन्द्रशत्रुरित्यत्र—इन्द्रोऽस्य शमयिता वा शातयिता वा (निरु० २।१६) ।
१२. कोशे 'शमस्तु०' इत्यपपाठः । धा० ४।९२॥
१३. कोशे 'शतेरु०' इत्यपपाठः । धा० १।९७८॥

तम आपाद्य यश्शेते छादयित्वाऽऽत्मना नभः ।
तस्य वृत्रस्य जानन्ति [1]निण्यमापो हि वेष्टिताः ॥१६॥
निर्णामो निण्यमित्युक्तो नीचैर्येन[2] नमत्यसौ ।
निर्गत्यापोऽथवा येन [3]नमन्ति पृथिवीं प्रति ॥१७॥
शृणास्तेस्तु[4] शरीरं स्यात् प्रत्ययस्त्वीर[5] इष्यते ।
रीरो[6] मकारलोपश्च [7]शम्नातेरपि गम्यते ॥१८॥
भावार्थप्रत्यये[8] दीर्घं [9]द्राघतेर्वृद्धिकर्मणः ।
रेफाकारविपर्यासे तदादेरोत्वतः पनः ॥१९॥
तनोतेर्नस्य[10] मत्वेन तथैवाःप्रत्यये[11] तमः ।
त्वाष्ट्रः पौराणिकैरिष्टो वृत्रोऽसावसुरः स्मृतः ॥२०॥
मेघस्त्वेवेति[12] नैरुक्ता[13] युद्धमौपमिकं तथा ।
नह्यर्थवादतो [14]मूलमन्यत्त्वस्यास्ति किं चन । ।२१॥
विधेश्शेषोऽर्थवादोऽपि[15] निषेधस्याथ[16] वा भवेत् ।
वृत्तान्तज्ञापनार्थत्वमतस्तस्य न विद्यते[17] ॥२२॥

---

१. कोशे 'नित्यमा०' इत्यपपाठः । २. कोशे 'नीचैर्ये' इत्यपपाठः ।
३. कोशे 'नमन्त्री' इत्यपपाठः ।
४. शीरं शृणातेः शम्नातेर्वा । निरु० २।१६ । धा० ६।१८॥
५. कोशे 'प्रत्ययस्त्विर' इत्यपपाठः । ६. कोशे 'रिरो' इत्यपपाठः ।
७. निघ० २।१९। ८. दीर्घं द्राघतेः । निरु० २।१६॥
९. धा० ११११७॥
१०. कोशे '०र्णस्य०' इत्यपपाठः । धा० ८।१॥
११. कोशे 'तथैवाप्रत्यये' इति पाठः ।
१२. तत् को वृत्रः ? मेघ इति नैरुक्ताः । [त्वाष्ट्रोऽसुर इत्यैतिहासिकाः] अपां च ज्योतिश्च मिश्रीभावकर्मणो वर्षकर्म जायते । निरु २।१६॥
१३. कोशे 'मेघस्त्वैव तु नैरुक्ते' इत्यपपाठः ।
१४. कोशे '०मन्यत्वस्यास्ति कं चन' इत्यपपाठः ।
१५. कोशे 'विदेश्शेषार्थ०' इत्यपपाठः ।
१६. कोशे '०स्यार्थवान्' इति पाठः ।
१७. कोशे 'विद्युते' इत्यपपाठः ।

तात्पर्ये चादिमत्त्वं स्याद् वेदस्येति[1] पुनर्मतम् ।
अपां[2] घनत्वभूतानां स्तब्धानां वायुनाम्बरे ॥२३॥
अन्योऽन्यं हन्यमानानां जायतेऽग्निर्यथाश्मनाम्[3] ।
ततो विलयनं तासाम् अग्निना मिश्रितत्वतः ॥२४॥
मिश्रीभवनमेवेह कर्मशब्देन भाषितम् ।
ततो विलयनात्तासां कर्म[तु] वार्षिकं भवेत् ॥२५॥
अभिघातेन[4] मेघानां विद्युत्सम्पातगर्जितैः ।
युद्धवर्णाः[5] प्रवर्तन्ते गौणा लोके यथा क्वचित् ॥२६॥
अहन्नहिमिति[6] त्वेवं मेघस्यैवोच्यते वधः ।
वृत्राणीत्यसुरस्योक्तिरेकत्वान्नैव[7] युज्यते ॥२७॥
मायेत्सेत्यपि[8] चैतेन युद्धाभावः[9] प्रकीर्तितः ।
स्वशरीरप्रवृद्ध्यैव[10] स्रोतांस्यात्मविकासतः[11] ॥२८॥
यदा निवारयामास घनत्वेन घनस्तदा ।
इन्द्रेण निहते तस्मिन्नापस्तस्मात् प्रसुस्रुवुः ॥२९॥

---

१. कोशे 'वेदस्येत्रि' इत्यपपाठः । अर्थवादानां स्वार्थे प्रामाण्ये सति वेदस्यादिमत्त्वं प्रसज्येत । द्रष्टव्यमत्र पूर्वमीमांसाशाबरभाष्यम् (१।२।१०)–'वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्येत' । २. कोशे 'अगाद्यनत्व०' इत्यपपाठः ।

३. कोशे 'जायते न्निर्येथात्मनाम्' इत्यपपाठः ।

४. कोशे 'अभिघात मेघानां' इति पाठः ।

५. तत्रोपमार्थेन युद्धवर्णा भवन्ति । अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च । निरु० २।१६॥ ६. ऋ० १।३२।२॥ कोशे '०मित्रि त्वेवं' इत्यपपाठः ।

७. वेदे 'वृत्राणि' इत्येवं बहुवचनान्तानि पदानि बहुधा (ऋ० ६।१६।३४, दृश्यन्ते । वृत्रश्चैक एवासुरः, तस्य बहुवचनेन निर्देशो नोपपद्यत ऐतिहासिकपक्षे इति ग्रन्थकर्त्तुर्भावः । स्कन्दमूलेयं युक्तिः (द्र०—स्कन्दभाष्यद्वितीयभागः पृ० ९४) ।

८. ऋ० १०।५४।२॥ कोशे 'माये सत्य०' इत्यपपाठः ।

९. कोशे 'युद्धो भावः' इत्यपपाठः ।

१०. विवृद्ध्या शरीरस्य स्रोतांसि निवारयांचकार । तस्मिन् हते प्रसस्यन्दिर आपः । तदभिवादिन्येषर्ग्भवति । निरु० २।१६॥

११. कोशे 'विक्रात्र सः' इत्यपपाठः ।

यत्तद् युद्धमिति प्राहुस्तदर्थे चेयमृक्तथा[1] ।
दासः[2] कर्मकरो यद्वा मेघ[:]स्याद्वाभिधीयते[3] ॥३०॥
पालनात्तु तयोरासां[4] दासपत्न्यः प्रकीर्तिताः ।
छिन्नाः[5] कर्मकरं पान्ति संहताश्च बलाहकम् ॥३१॥
अहिर्गोपायिता[6] तासां पणिनेवासन्निरोधितः[7] ।
गावो[8] विक्रयसिद्ध्यर्थं यत्तासां संवृतं बिलम् ॥३२॥
विवृणोत्येव तद् वृत्रम् इन्द्रो घ्नन् निस्सृतं[9] [जलम्] ।
इणो[10] [11]हिप्रत्ययेऽस्त्वं स्यादहिर्मेघस्थेतरः ॥३३॥
ह्रसिते[12] वाङि हन्तेः[13] स्यादहिर्डिप्रत्यये[14] त्वपि ।
वनेर्वकारपूर्वस्य[15] निजेः[16] क्विपि नणत्वतः[17] ॥३४॥

---

१. कोशे '०मृत्तथा' इत्यपपाठः । सा चेयमृक्—
दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद् वृत्रं जघन्वां अप तद् ववार । ऋ० १।३२।११॥
२. कोशे 'सः कर्म०' इत्यपपाठः ।
३. कोशे 'मेघ स्याद्वा दिधीयते' इत्यपपाठः ।
४. तयोर्मेघकर्मकरयोः कर्मभूतयोरासामपां कर्तृभूतानामित्यर्थः । उभयप्राप्तौ कर्मणि (अष्टा० २।३।६६) इति नियमस्तु विकल्पेन प्रवर्त्तत इति महाभाष्यकारः ।
५. कोशे 'छिता' इत्यपपाठः ।
६. कोशे 'अहिर्नोपा०' इत्यपपाठः ।
७. कोशे 'बलिना सन्निरोघ' इत्यपपाठः ।
८. कोशे 'बोऽपि०' इत्यपपाठः ।
९. कोशे 'निस्सृत' इति पाठः ।
१०. धा० २।३६॥ अहिरयनाद् एत्यन्तरिक्षे । अयमपीतरोऽहिरेतस्मादेव । निर्ह्रसितोपसर्गः, आहन्तीति । निरु० २।१७॥
११. कोशे 'पि०' इत्यपपाठः ।
१२. कोशे 'प्रसिते वान्निहन्ते' इत्यपपाठः ।
१३. धा० २।२॥
१४. कोशे 'स्यादहिर्धि०' इत्यपपाठः ।
१५. धा० ८।८॥ पणिर्वणिग् भवति । पणिः पणनात् । वणिक् पण्यं नेनेक्ति । निरु० २।१७॥
१६. धा० ३।११॥
१७. कोशे 'नगत्वतः' इत्यपपाठः ।

वणिक् [1]पण्यं हि नेनेक्ति [2]महार्घत्वप्रसिद्धये ।
वृणोतेर्वर्ततेर्वा स्याद्[3] वृत्रो यद्वाथ वर्धतेः ॥३५॥
त्रप्रत्ययस्तु[4] [5]पूर्वस्माद् द्वाभ्यां रप्रत्ययस्तथा ।
वृत्रशब्दप्रसिद्ध्यर्थं ब्राह्मणान्यप्युदाहरत् ॥३६॥

॥ इति [पद्मभगवत्प्रणीते] निरुक्त-श्लोकवार्तिके
पञ्चमः पादः ॥

---

१. कोशे 'पुण्यं' इत्यपपाठः ।

२. कोशे 'महर्घत्व प्रसिद्धर्णं विकारतः' इति भ्रष्टः पाठः । बिलपदनिर्वचनमत्र नष्टम् ।

३. वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा । यदवृणोत्तद् वृत्रस्य वृत्रत्वम् इति विज्ञायते । यदवर्तत तद् वृत्रस्य वृत्रत्वम् इति विज्ञायते । यदवर्धत तद् वृत्रस्य वृत्रत्वम् इति विज्ञायते । निरु० २।१७॥ धा० ५।८॥ १।७९५।७९६॥

४. कोशे 'रुप्रत्यय०' इत्यपपाठः ।

५. कोशे 'पूर्वस्याभ्यां सिध्यर्थं ब्राह्मणानप्युदाहरेत् ॥११०॥' इति भ्रष्टः पाठः ।

## षष्ठः पादः

[सूर्यः[1] सम्बध्यते दिग्भिरिति पूर्वं प्रदर्शितम् । ]
दिशां [रात्र्या च सम्बन्धस्तमोलाभत्व] हेतुकः ॥१॥
दिग्नामानन्तरं[2] तस्माद् रात्रिनाम्नां समागमः ।
त्रिंशतिश्च तथा त्रीणि श्यावीत्यादीनि तान्य[पि] ॥२॥
[रमतेश्चैव[3] क्रीडार्था]द्धातो रात्रिः प्रसिध्यति ।
भूतानि[4] रमयत्येषा नक्तंचारीणि कानिचित् ॥३॥
दिवाचारीणि[5] चान्यानि सैवोपरमयत्यपि ।
[अर्थपौष्कल्यसिद्ध्यर्थं] [6]रात्रिरेवं समाश्रितः ॥४॥
अवश्यायाः[7] प्रदीयन्ते तथास्यां मध्यवर्त्तिना ।
यो[8] अस्मै घ्रंस इत्यादावहर्वापि पदश्रुतौ ॥५॥
रात्रि[9] [रित्युच्यते ह्यूधः स्नेहप्रदानसाम्यतः] ।
[पयसोधर्यथेत्यादौ[10] ] गोरूधोऽप्युच्यते क्वचित् ॥६॥
सन्दिग्धानि पदान्येवं [11]निर्णेतव्यानि युक्तितः ।
रात्रिनामोत्तराणि[12] स्युरुषोनामानि षोडश ॥७॥

---

१. कोशेऽग्रिमश्लोकानां पाठो बहुधा नष्टः, कथमपि प्रपूर्य संयोजितः ।

२. रात्रिनामान्युत्तराणि त्रयोविंशतिः । रात्रिः कस्मात् ? प्ररमयति भूतानि नक्तंचारीणि । उपरमयतीतराणि ध्रुवीकरोति । रातेर्वा स्यात् दानकर्मणः । प्रदीयन्तेऽस्यामवश्यायाः । निरु० २।१८॥

३. धा० १।६०६॥

४. कोशे 'दूतात्र' इत्यपपाठः ।

५. कोशे 'दिवाचान्नि पात्यानि' इत्यपपाठः ।

६. कोशे 'भिरेव समाश्रिताः' इत्यपपाठः । धा० २।४८॥

७. कोशे 'अपत्यायाः' इत्यपपाठः ।

८. ऋ० ५।३४।३॥ निरु० ६।१६॥

९. कोशे 'रात्री' इति पाठः ।

१०. ऋ० २।१४।१०॥

११. कोशे 'निर्णीतव्यान्नियुक्तितः' इत्यपपाठः ।

१२. उषोनामान्युत्तराणि षोडश । उषाः कस्मात् ? उच्छतीति सत्याः । रात्रेरपरः कालः । निरु० २।१८॥

उच्छे[1] [रस्प्रत्यये षत्वे] धात्वन्तस्य भवेदुषाः ।
उच्छतीत्यब्रवीद् यास्कस्तमोरूपविवासनात् ॥८॥
रात्रेरह्नश्च [2]रिक्तोऽसौ कालः कैश्चित् समाश्रितः ।
अह[3] [र्भागस्तथा कैश्चिद्] अहोरात्रात्मकः परैः ॥९॥
रात्रेरेवापरं भागं कालं भाष्यकृदब्रवीत् ।
इष्टः पञ्चदशश्चासौ मुहूर्तः [4]काल[कोविदैः] ॥१०॥
[यागादीनां प्रसि]द्ध्यै[5] च कर्म यच्चोद्यतेऽहनि[6] ।
न तत् प्रागुदयात् कार्यमित्यस्यैतत् प्रयोजनम् ॥११॥
रात्रिभागत्वसिद्ध्यर्थम्[7] [8]इदमित्याद्यभाषत ।
इदं श्रेष्ठमुषोरूपं ज्योतिषां ज्योतिरागमत् ॥१२॥
सुप्तप्रबुद्धिहेतुत्वात्[तथा मृदुप्रकाशतः] ।
प्रशस्यतममेवेदं सर्वेषां ज्योतिषां स्फुटम् ॥१३॥
चित्रः प्रकेत इत्येते ज्योतिषोऽस्य विशेषणे[9] ।
चित्रं[10] विचित्ररूपत्वात् चायनीयत्वतोऽथवा ॥१४॥
यस्मात्[प्रकृष्टज्ञानं स्यात् प्रकाशाख्यं प्रके]तनम् ।
प्रज्ञाततममित्युक्तं[11] प्रज्ञप्तौ साधनत्वतः ॥१५॥

---

१. कोशे 'ऊचे' इत्यपपाठः । धा० १।२३१॥
२. कोशे 'हित्तो सौ' इत्यपपाठः ।
३. कोशे 'अहः......अहोरलकः परैः' इत्यपपाठः ।
४. कोशे 'कोल' इत्यपपाठः ।
५. कोशे '...द्यौ च' इति भ्रष्टः पाठः ।
६. कोशे '० चोद्यु ते हनि' इत्यपपाठः ।
७. कोशे 'रात्रीभागत्वसिद्ध...भाषत' इति भ्रष्टः पाठः ।
८. इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवाय एवा रात्र्युषसे योनिमारैक् ॥ ऋ० १।११३।१॥
९. कोशे 'ज्योतिषोस्य भाष्यकारेण योजिते' इति पाठः ।
१०. चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमम् । निरु० २।१९॥
११. कोशे 'प्रज्ञानं तममित्युक्तं प्रज्ञप्ते स्वाधनत्वतः' इत्यपपाठः ।

उषःकालोऽपि[1] लोकस्य [जायते] श्रेयः साधनम् ।
तमबर्थेऽयमाकारो[2] विम्वेत्यस्य तु नैगमः ॥१६॥
विभूततममि[3] [त्येवमाहास्यातिमहत्त्वतः] ।
[सर्वमश्नुत एत]द्धि सर्वदेशेषु दृष्टितः[4] ॥१७॥
यथास्तं [5]गच्छतो रात्रिः प्रसूता [6]सवितुस्तथा ।
सवायेति तु निर्देशात् जन्मेत्येवमपेक्षणात्[7] ॥१८॥
उषसे [8]त्विति षष्ठयर्थे जन्मार्थमुषसो निशा ।
योनिं[9] स्थानमरैगन्ते स्वैकदेशमरेचयत्[10] ॥१९॥
अस्तं[11] गच्छन् यथादित्यो रात्रेर्योनिं प्रकल्पयेत् ।
ईषदात्मोपसंहराद् उषसोऽपि निशा तथा ॥२०॥
उषसो जन्मसिद्ध्यर्थं यथा[12] रात्रिरजायत ।
तथा [13]ऽरेचयत्स्थानमात्मांशमुषसः परा ॥२१॥
निप्रत्यये तु निष्ठार्थे [14]यौतेर्योनिर्गुणे भवेत् ।
स्थानादिमिश्रितत्वेन[15] स्थानं योनिरिहोच्यते ॥२२॥
उक्तनिर्वचनस्येह योनिशब्दस्य निर्वचः ।
स्त्रीलिङ्गत्वप्रसिद्ध्यर्थं पुंलिङ्गत्वं पुरोदितम्[16] ॥२३॥

---

१. कोशे 'उषः काले विलोमस्य श्रेयः सात्रनम्' इत्यपपाठ ।

२. कोशे 'तरत्वर्थेयमाकारो विद्येत्यस्य' इत्यपपाठः ।

३. कोशे 'विद्युत०' इत्यपपाठः । ४. कोशे '० देशेष्ट दृष्टितः' इत्यपपाठः ।

५. कोशे 'गमतो रात्रिम्' इत्यपपाठः । ६. कोशे 'सवितस्तथा' इत्यपपाठः ।

७. कोशे 'कन्येत्येवमपेक्षतात्' इत्यपपाठः । जन्मेत्यपेक्षया 'उषसे' इति षष्ठयर्थे वर्तत इत्ययमेव सम्बन्धः । ८. कोशे 'त्वनिषव्यर्थे' इत्यपपाठः ।

९. कोशे 'योनिस्थान०' इत्यपपाठः । १०. कोशे '०मरेचयन्' इत्यपपाठः ।

११. यथा प्रसूता सवितुः सवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत् स्थानम् । स्त्रीयोनिरभियुत एनां गर्भः । निरु० २।१९॥

१२. कोशे 'तथा' इति पाठः । १३. कोशे 'सारेचय स्थान०' इत्यपपाठः ।

१४. कोशे 'योते य्योनि गुणे' इत्यपपाठः । धा० २।२३॥

१५. कोशे 'स्थानादिर्निश्रितः०' इत्यपपाठः ।

१६. निरु० २।८॥ द्र०—निरुक्तश्लोकवार्त्तिक २।२।१६७-१७२॥

एनां योनिमतिक्रम्य युतो गर्भो जरायुणा ।
स्त्रीयोनेर्मिश्रितत्वं च पुरस्तात् प्रतिपादितम् ॥२४॥
रुशद्वत्सेति[1] दाढ्यर्थम् उक्तार्थस्योपवर्ण्यते ।
तद्योगादुच्यते[2] सूर्यो [3]रोचतेर्दीप्तिवाचिनः[4] ॥२५॥
रुशद्वत्सा[5] बहुव्रीहिः [6]सूर्ये वत्सोपमा ततः ।
मात्रा सह चरेद् वत्सः सूर्यश्चाप्युषसा सह ॥२६॥
मातुः पयोरसान्[7] वत्सः पिबन्नपहरेद्यथा ।
अवश्यायरसान्[7] सूर्यः शोषयन्नु[ष]सस्तथा ॥२७॥
रुशती[8] दीप्यमाना सा श्वेत्योषाः[9] श्वेतलक्षणा ।
ऋहलोर्ण्यति[10] सा श्वेत्या [11]श्वेततेर्वर्णवाचिनः ॥२८॥
आगतास्य[स्ततः] कृष्णा रात्रिः[12] स्थानान्यरेचयत् ।
अर्धर्चस्तु द्वितीयोऽयम् एते रात्र्यु[ष]सावथ ॥२९॥
समानबन्धुताऽमत्यादनयोस्त्वमृते[13] उभे ।
जन्यत्वाज्जनकत्वाच्च सूर्यो बन्धुस्समोऽनयोः ॥३०॥
अथवा [14]बन्धनं बन्धुर्बद्धे सूर्येण संगते ।
अमृतत्वमनुच्छेदाद् [15]दृश्येते हि पुनः पुनः ॥३१॥

---

१. कोशे 'रुशब्दर्थे नि०' इत्यपपाठः । तथा च मन्त्रः—
रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ ऋ० १।११३।२॥
२. कोशे 'तद्योगाद्युच्यते' इत्यपपाठः । ३. धा० १।७८१॥
४. कोशे '०त्राचिनम्' इत्यपपाठः । ५. कोशे 'रुशब्दत्सा' इत्यपपाठः ।
६. रुशद्वत्सा सूर्यवत्सा । रुशदिति वर्णनाम । रोचतेर्ज्वलतिकर्मणः । सूर्यमस्या वत्समाह, साहचर्याद् रसहरणाद् वा । निरु० २।२०॥
७ कोशे '०रसा' इत्यपपाठः । ८. कोशे 'रुशतीर्दीप्य०' इत्यपपाठः ।
९. कोशे 'श्वेत्योषा' इति विसर्गरहितः पाठः । श्वेत्या श्वेततेः । निरु० २।२०॥
१०. अष्टा० ३।१।१२४॥ ११. धा० १।७७८॥ १२. कोशे 'रात्री' इत्यपपाठः ।
१३. कोशे '०पत्यावहस्व्योस्त्वमृते' इत्यपपाठः ।
१४. समानबन्धू समानबन्धने । अमृते अमरणधर्माणौ । अनूची [अनूच्याविति] इतरेतमभिप्रेत्य । निरु० २।२०॥ १५. कोशे 'दृश्यते' इत्यपपाठः ।

अन्योऽन्यवशवर्त्तित्वात् सूर्येण संगते[1] मिथः ।
डोप्रत्यये[2] द्युतेर्द्यावौ[3] द्योतिते ते स्ववर्चसा[4] ॥३२॥
द्यावेत्येषा तृतीया वा [5]तयेति प्रतिपादनात् ।
णिद्वत्कार्ये भवेद् वृद्धिश्छान्दसत्वादसुटचपि[6] ॥३३॥
द्यावेति[7] [8]भाषिकन्यायाद् द्योशब्दस्यावगम्यते ।
द्युलोकसंहिते नित्यं वर्णं[9] ते चरतः सुखम् ॥३४॥
कृष्णं शुक्लं च ते वर्णं प्राप्नुतस्सहिते तया ।
आङ्व्यर्थे[10] मिनोतिस्तु करोत्यर्थे समाश्रितः[11] ॥३५॥
अन्योऽन्यस्येति वाक्येन तदेव[12] प्रतिपादितम् ।
कृष्यतेर्न्नङि[13] कृष्णः स्यात् निकृष्टो वर्ण उच्यते ॥३६॥
वस्तोरित्यादिनामानि[14] द्वादशाह्नस्त्वनन्तरम् ।
ह्रसिताङ्पूर्वकस्यैव [15]ह्याधारे हरतेर्डनुः ॥३७॥

१. कोशे 'सूर्यो संगच्छते' इत्यपपाठः ।

२. कोशे 'डा प्रत्यये द्युते द्यावौ' इत्यपपाठः । धा० १।७७७॥

३. द्यावा वर्णं चरतः । ते एव द्यावौ । द्योतनात् । अपि वा द्यावा चरतस्तथा [सह] चरत इति स्यात् । निरु० २।२०॥

४. कोशे 'सवर्चसा' इति पाठः ।

५. कोशे 'तये त्रि' इत्यपपाठः ।

६. कोशे 'भवेमृद्धिः छान्दसत्वादसुग्यपि' इत्यपपाठः । गोतो णित् (अष्टा० ७।१।९०) इत्यत्र सर्वनामस्थाने (=सुटि) इत्यनुवर्त्तमानमपि छान्दसत्वान्नाश्रीयत इत्यभिप्रायः । सूत्रे 'गोत' इति तपरनिर्देशाद् ओकारान्तमङ्गम् उपलक्ष्यते । द्र०—काशिकावृत्तिः ।

७. कोशे 'वेति भाषिकन्यायाद्यौ शब्द०' इत्यपपाठः ।

८. निरु० २।२॥

९. कोशे 'पूर्णन्ते' इत्यपपाठः ।

१०. कोशे 'आङ्व्यर्थे' इत्यपपाठः । आमिनाने [आमिन्वाने] । अन्योऽन्यस्याध्यात्मं कुर्वाणे । निरु० २।२०॥

११. कोशे 'स्वाश्रितः' इत्यपपाठः ।

१२. कोशे 'तदेतं' इत्यपपाठः ।

१३. कोशे 'कृष्णतेर्न्नङि कृष्ण स्यात्' इत्यपपाठः । । उणादिकोषे तु कृषेर्वर्णे (उ० ३।४) इति नक् प्रत्ययः । कृषधातुर्निरुक्ते श्यना निर्दिश्यते,पाणिनीयधातुपाठे तु शपा (१।१०३९) शेन (६।६) चेति विशेषः ।

१४. अहर्नामान्युत्तराणि द्वादश । अहः कस्मात् ? उपाहरन्त्यस्मिन् कर्माणि । तस्यैष निपातो भवति वैश्वानरीयायामृचि । निरु० २।२०॥

१५. कोशे 'ह्वाधारेहरतेर्णनु' इत्यपपाठः ।

कर्माण्युपाहरन्त्यस्मिन्नित्यहः[1] परिकीर्तितम् ।
ऋचि[2] वैश्वानरीयायां निपातोऽह्नः प्रदृश्यते ॥३८॥
अहःशब्दोऽत्र[3] रात्रेश्च दिवसस्य च वाचकः ।
कृष्णार्जुनविशिष्टत्वाद् [4]अर्जुनं शुक्लमुच्यते ॥३९॥
विवर्तेते विभागेन[5] सह नैव कदाचन ।
रजसी रञ्जके चैव [6]सर्वस्वत्वेन वर्चसा ॥४०॥
वेद्याभिर्वेदितव्याभिः[7] सहिते ये प्रवृत्तिभिः ।
वैश्वानरस्तयोरग्निः ज्योतिषा स्वेन तेजसा ॥४१॥
अवाहन्[8] नाशयेदेव तमांस्युद्यन्नहो रविः ।
त्रिंशन्नामानि[9] मेघानां अहोरात्रोपवर्तिनाम् ॥४२॥
मेहतीति तु [10]मेघः स्यात् परिषिञ्चत्यसौ भृशम् ।
पचाद्यचि[11] गुणे घत्वे हस्य मेघो मिहेः[12] स्मृतः ॥४३॥

---

१. कोशे 'कर्माण्युपहर०' इत्यपपाठः ।

२. कोशे 'ऋषिवैश्वानरीयाया' इत्यपपाठः ।

३. अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥ ऋ० ६।९।१।

४. अहश्च कृष्णं रात्रिः । शुक्लं चाहरर्जुनम् । विवर्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः । वैश्वानरो जायमान इव । उद्यन्नादित्यः, सर्वेषां ज्योतिषां राजा । अवाहन्नग्निर्ज्योतिषा तमांसि । निरु० २।२१॥

५. कोशे 'विगाहेन सहतैव' इत्यपपाठः ।

६. कोशे 'सर्वस्यत्वेन' इत्यपपाठः ।

७. कोशे 'वेद्याहि वैदितव्याहिः सहितैते प्रवृत्तिहिः' इत्यपपाठः ।

८. कोशे 'आवाडूं' इत्यपपाठः ।

९. मेघनामान्युत्तराणि त्रिंशत् । मेघः कस्मात् ? मेहतीति सतः । आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः । उपर उपलो मेघो भवति । उपरमन्तेऽस्मिन्नभ्राणि । उपरता आप इति वा । तेषामेषा भवति । निरु० २।२१॥

१०. कोशे 'मेघ स्यात् अपरिसंचन्त्यसौ भृशा' इत्यपपाठः ।

११. कोशे 'पचाद्यपि' इत्यपपाठः । अष्टा० ३।१।१३४॥

१२. कोशे 'मिहे' इति विसर्गरहितः पाठः । धा० १।१०४१॥

मर्यादायां[1] किमाङिष्टः [2]किं वेष्टोऽभिविधात्रयम् ।
साधारणत्वमर्वाचामुपरोपलशब्दतः[3] ॥४४॥
मर्य्यादावचनत्वे स्यात् सह ताभ्यां विपर्यये ।
मर्य्यादावचनत्वे तु [4]लिङ्गं मेघग्रहं विदुः[5] ॥४५॥
पर्वते सुप्रसिद्धत्वाद् [6]उपरोपलशब्दयोः ।
मेघवाचित्वसिद्ध्यर्थं युज्यतेऽभिविधौ[7] ग्रहः ॥४६॥
तुल्यवाचित्वसिद्ध्यर्थं रलयोश्च द्वयोर्ग्रहः ।
तुल्यनिर्वचनं चेति नो चेदन्त्ये न सिध्यति ॥४७॥
मर्य्यादावचनत्वे तु पारार्थ्यं स्याद् द्वयोरपि ।
विवक्षिताभिधेयत्वं भवेदभिविधौ पुनः ॥४८॥
उपरोपलशब्दौ[6] च शिलायां लोकवेदयोः ।
प्रसिद्धावेव दृश्येते पर्वतश्च तदात्मकः ॥४९॥
अभ्राण्युपरमन्तेऽस्मिन्[8] इति चाभिविधौ भवेत् ।
मेघा [9]एवाभ्रशब्दोक्ता रमन्ते पर्वते च ते ॥५०॥
आपश्चैव तथा मेघे तेन [10]चाभिविधिः स्फुटम् ।
यस्यामुपरशब्देन मेघानां दृश्यतेऽभिधा[11] ॥५१॥

---

१. स्कन्दग्रन्थस्य पद्यानुवाद एष प्रसङ्गः । द्र०—स्कन्दभाष्यद्वितीयभागे पृ० १०३-१०४॥
२. कोशे 'किंचिष्टो हि हघावयम्' इत्यपपाठः ।
३. कोशे '०मुखरोपल०' इत्यपपाठः ।
४. कोशे 'लिङ्गमेघ०' इत्यपपाठः ।
५. स्कन्दादय इति शेषः ।
६. कोशे 'उपरोवल०' इत्यपपाठः ।
७. कोशे 'युज्यते हि विधोग्रहः' इत्यपपाठः ।
८. कोशे 'अहाण्युपरमन्तेऽस्मिन् इति वाहिवधो हमेत्' इत्यपपाठः ।
९. कोशे 'एवोत्र शब्दो०' इत्यपपाठः ।
१०. कोशे 'चाहिविधिः' इत्यपपाठः ।
११. कोशे 'दृश्यते विधा' इत्यपपाठः ।

व्याचष्टे [1]तामृचं त्वत्र [2]देवानामिति भाष्यकृत्[3] ।
मानं विमानमित्युक्तं निर्माणं वृष्टिरेव तु ॥५२॥
देवानां प्रथमाः सृष्टावुपराः प्रत्युपस्थिताः ।
देवेभ्यः प्रथमं मेघा विसृष्टाः स्थितिहेतवः ॥५३॥
स्थितिहेतुमनुत्पाद्य विसृष्टाः नाशमाप्नुयुः ।
तस्मात्ते प्रथमं सृष्टा देवाः पश्चात्ततः जगत् ॥५४॥
उक्ता माध्यमिका मेघास्तथा देवगणा इति ।
ते हि[4] मध्ये भवन्त्येव द्योतन्ते [5]प्रददत्यपः ॥५५॥
ततो देवगणास्ते स्युस्तथा माध्यमिका अपि ।
एषां प्रथमजातानाम् उपराणां विकर्तनात् ॥५६॥
उदायन्नुदगच्छन्[6] हि सामर्थ्यादाप एव च ।
ताभिस्तत्प्रभवैश्चैव [7]जगतो वै स्थितिर्भवेत् ॥५७॥
निर्धारणेऽथवा षष्ठी[8] देवानामिति[9] गृह्यते ।
निर्माणं चाप्यपामिष्टं व्यापारे [10]तिष्ठतिस्तथा ॥५८॥
देवानां किल सर्वेषां प्रकृष्टतमतैव सा ।
अपां विसर्जने तेषां प्राधान्यमनयोदितम् ॥५९॥
देवानां प्रथमा देवा [11]वृष्टिसृष्टौ व्यवस्थिताः ।
व्यापृताः वृष्टिसिद्ध्यर्थम् इत्यत्रार्थो विवक्षितः ॥६०॥

---

१. कोशे 'तावृचन्वत्र' इत्यपपाठः ।
२. देवानां माने प्रथमा अतिष्ठन् कृन्तत्रादपामुपरा उदायन् ।
अयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥ ऋ० १०।२७।२३॥
३. कोशे 'भाष्यकृत' इत्यपपाठः ।
४. कोशे 'तेभि मध्ये' इत्यपपाठः । ५. कोशे 'पदद०' इत्यपपाठः ।
६. कोशे 'उदायन्नुत् गमिष्यन्ति' इति पाठः ।
७. कोशे 'जगतोन्नैस्थिति भवेत्' इत्यपपाठः ।
८. अष्टा० २।३।४१॥ ९. कोशे 'देवानामि निगृह्यते' इत्यपपाठः ।
१०. कोशे 'स्तिष्ठति०' इत्यपपाठः ।
११. कोशे 'व्रिष्टि सृष्टो' इत्यपपाठः ।

कृद्योगलक्षणा[1] षष्ठी तथैषामिति कर्तरि ।
कत्रेति[2] प्रत्ययस्त्विष्टः [3]कृतेनु[4] चागमस्तथा ॥६१॥
अन्तर्णीतणिजर्थात्तद्[4] उदायन्निति यत् पदम् ।
कृन्तत्रात्[5] कर्तनादेषाम् उपरा देवकर्तृकात्[6] ॥६२॥
अप उद्गमयन्तीह [7]तपन्ति पृथिवीं त्रयः ।
अन्तर्णीतणिजर्थस्य[8] पचेरर्थे तपिस्त्विह[9] ॥६३॥
पृथिवीमिति[10] चानेन [11]ताद्धितन्यायवृत्तितः ।
पृथिवीप्रभवा[12] उक्ता ओषध्यो बहुलक्षणा ॥६४॥
पर्जन्यो वायुरादित्यः [13]पाचयन्त्योषधीस्त्रयः ।
वायुश्शीतेन पर्जन्यो वृष्ट्योष्णेन दिवाकरः ॥६५॥
पक्वास्त्वोषधीष्वेवं वाय्वादित्यावुभावपि[14] ।
बृबूकमुदकं[15] तस्मात् पुरीषं वहतो दिवम् ॥६६॥
प्रशब्दात्[16] तमबर्थेऽयं[17] थमोऽन्तर्भावितक्रियात् ।
प्रतमस्त्विति[18] निर्दिष्टः प्रकृष्टतम एव सः ॥६७॥

---

१. कोशे '०लक्षणं' इत्यपपाठः । कर्तृकर्मणोः कृति (अष्टा० २।३।६५) ।
२. कोशे 'सत्रेति एत्यय०' इत्यपपाठः ।
३. कोशे 'कृतेतन्जागमं तथा' इत्यपपाठः । धा० ६।१४१॥ कृतेनु च (उणा० ३।१०६)॥
४. कोशे '०णिजार्थत्ताल्' इत्यपपाठः ।
५. कोशे 'कृदन्तात्' इत्यपपाठः ।
६. एषां देवानां कर्तृभूतानां कर्तनाद्धेतोरुपरा मेघा अप उद्गमयन्तीति भावः ।
७. कोशे 'तपन्ती पृथिवी०' इत्यपपाठः ।
८. कोशे '०णिजथस्य' इत्यपपाठः ।
९. कोशे 'तपस्त्विह' इत्यपपाठः ।
१०. कोशे 'पृथिवीभत्ति' इत्यपपाठः ।
११. कोशे 'ताद्धिकन्याय०' इत्यपपाठः ।
१२. कोशे 'पृथिवीप्रवहा' इत्यपपाठः ।
१३. कोशे 'पावय०' इत्यपपाठः ।
१४. कोशे '० दित्यावृदावपि' इत्यपपाठः ।
१५. कोशे 'बृबुक०' इत्यपपाठः ।
१६. प्रथम इति मुख्यनाम । प्रतमो भवति । निरु० २।२२॥
१७. कोशे '०बर्थे यस्थमो०' इति पाठः ।
१८. कोशे 'प्रतमत्स्विति' इत्यपपाठः ।

कृन्तत्रशब्दवाच्यत्वम्[1] अन्तरिक्षस्य यत्त्विह ।
प्रसङ्गेनैव तत् प्रोक्तं कर्तनं हि विकर्तनम् ॥६८॥
कप्रत्ययेऽनुपूर्वस्य[2] [3]वपेः स्यात् संप्रसारणे ।
अनूपा[4] इति निर्देशः त्रयः स्युर्मरुदादयः[5] ॥६९॥
वपन्त्येवानुपूर्व्येण[6] शीतादीन्योषधीष्वपि[7] ।
अहेर्वात्रानुपूर्वस्य[8] वपिरर्थे प्रवर्तते ॥७०॥
लोकाननुवपन्त्येते[9] स्वेन स्वेनैव कर्मणा ।
अनुगृह्णन्ति रक्षन्ति यथान्यायमतन्द्रिताः[10] ॥७१॥
नद्यादीनामनूपोऽपि यथोक्तादेव लक्षणात् ।
आप्नोतेरनुपूर्वस्य[11] क्विप्यन्वाबिति[12] सिध्यति ॥७२॥
आदेरुत्वेऽधिकेऽकारे[13] तस्यैवानूप[14] इष्यते ।
यद्वा तस्येति निर्देशो [15]ह्यन्वाबित्यस्य गृह्यते ॥७३॥

---

१ कन्तत्रमन्तरिक्षम् । विकर्तनं मेघानाम् । निरु० २।२२॥

२. कोशे 'कः प्रत्यये०' इत्यपपाठः । त्रयस्तपन्ति पृथिवीमनूपाः । पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्ति । अनूपा अनुवपन्ति लोकान् स्वेन स्वेन कर्मणा । अयमपीतरोऽनूप एतस्मादेव । अनूप्यत उदकेन । अपि वान्वाबिति स्याद् यथा प्रागिति । तस्यानूप इति स्याद् यथा प्राचीनमिति । निरु० २।२२॥

३. कोशे 'वचे स्यात्' इत्यपपाठः । धा० १।१०५२॥

४. कोशे 'अन्तपा' इत्यपपाठः ।

५. कोशे 'स्यान्मरुतादयः' इत्यपपाठः ।

६. कोशे 'पवन्त्येतेनु पू०' इत्यपपाठ. । वपन्ति प्रकिरन्तीत्यर्थः ।

७. कोशे '०दीनोष०' इत्यपपाठः ।

८. कोशे 'ग्रहर्वात्रानुपूर्वस्य वहरर्थे' इत्यपपाठः ।

९. कोशे '०नुपवन्त्येते' इत्यपपाठः ।

१०. कोशे '०तन्त्रिताः' इत्यपपाठः ।

११. कोशे 'आप्नोतैरनु० इत्यपपाठः । धा० ५।१४॥

१२. कोशे '०न्वान्विति' इत्यपपाठः ।

१३. वपेरादिभूतस्य वकारस्योत्वे समासान्तरूपेऽकारोपजने सति तस्यैवानुपूर्वस्य वपेरित्यभिप्रायः ।

१४. कोशे '०वान्तप' इत्यपपाठः ।

१५. कोशे 'नह्याबित्यस्य' इत्यपपाठः ।

अन्वापः[१] प्रत्ययोऽकारस्तथानूपस्तु[२] पूर्ववत् ।
यथा प्रागिति रूपं स्यात् प्रपूर्वस्याञ्चतेः क्विनि[३] ॥७४॥
ततः खप्रत्यये[४] रूपं प्राचीनमिति सिध्यति ।
क्विबन्तस्य तथान्वापेरन्वाबित्यवतिष्ठते[५] ॥७५॥
तथैवानूप इत्येतद् [६]अन्वाप इति गम्यताम् ।
ऊदनोर्देशे[७] इत्येवमनूपः[८] पाणिनेर्मते[९] ॥७६॥
ब्रवीतेः[१०] प्रत्यये बूके बृबूकं संप्रसारणे ।
पुरीषं त्वीषकीष्टं[११] स्यात् [१२]पृणातेरुत्वक्लृप्तितः ।
यद्वा पूरयतेरिष्टम् इष्यते तत्तु[१३] कर्तरि ॥७७॥

॥ इति [१४]पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके
द्वितीयाध्यायस्य षष्ठः पादः ॥

---

१. कोशे 'अन्वापेः' इति पाठः ।

२. कोशे 'तथानूपन्तु'इत्यपपाठः ।

३. कोशे 'क्विति' इत्यपपाठः । अष्टा० ३।२।५९॥

४. कोशे 'खः प्रत्यये' इत्यपपाठः । अष्टा० ५।४।८॥

५. कोशे 'रन्वन्वित्य०' इत्यपपाठः ।

६. कोशे 'अन्वापेरिति' इति पाठः ।

७. अष्टा० ६।३।९८॥ ८. कोशे '०मनुप' इत्यपपाठः ।

९. कोशेऽयंश्लोकार्द्धः पादान्तेऽस्थाने लिखितः, यथास्थानमानीतः । अनूपपदव्याख्याने ऽत्राग्रेऽपि केचन पाठा व्यस्ताः प्रतीयन्ते ।

१०. बृबूकमित्युदकनाम ब्रवीते [र्वा] शब्दकर्मणः, भ्रंशतेर्वा । पुरीषं पृणातेः पूरयतेर्वा । निरु० २।२२॥ धा० २।३५॥

११. कोशे 'त्विषिकीष्टं' इत्यपपाठः । उणा० ४।२८॥

१२. कोशे 'वृणाते०' इत्यपपाठः । धा० ९।१९॥

१३. कोशे 'इष्यतेऽत्रतु' इति पाठः ।

१४. कोशे 'इति निरुक्तवार्त्तिके द्वितीयस्य पञ्चमः पादः' इति पाठः ।

# सप्तमः पादः

सप्ताधिकानि[1] पञ्चाशत् वाङ्नामान्युत्तराण्यतः ।
वाग्वचेः[2] क्विपि[3] विज्ञेया दीर्घे चैवाप्रसारणे ॥१॥
इन्द्रियं वागिति प्रोक्तं शब्दस्तेनोच्यते यतः ।
उच्यतेऽर्थो ह्यनेनेति[4] शब्दो वागुच्यते तथा ॥२॥
मेघेऽप्युच्यमानत्वाद्[5] अधिष्ठात्री तथास्य च ।
कर्मात्मव्यतिरेकेण देवता पारमार्थिकी[6] ॥३॥
नदीवद् देवतावच्च निगमा इत्यतोऽब्रवीत् ।
अपि वेत्यादिवाक्येन [7]सप्तमे वक्ष्यते तथा ॥४॥
अर्हार्थे[8] वोपमार्थे[9] वा वतिरत्र समाश्रितः ।
प्रतिपादनयोग्यत्वं वतिना सर्वथेरितम् ॥५॥
नद्या इव क्वचिल्लिङ्गं नदीत्वेऽस्याः[10] प्रदृश्यते ।
इयं[11] सरस्वती[12] शुष्मैस्तविषैर्ऊर्मिभिर्नदी ॥६॥
गिरीणामरुजत्सानु पर्वतानां यथा बिसम् ।
अवनायाविवासेम[13] धीतिभिस्तां सुवृक्तिभिः[14] ॥७॥

---

१. वाङ्नामान्युत्तराणि सप्तपञ्चाशत् । वाक् कस्मात् ? वचेः । तत्र सरस्वतीत्येतस्य नदीवद् देवतावच्च निगमा भवन्ति । तद् यद् देवतावत् तदुपरिष्टाद् व्याख्यास्यामः । अथैतन्नदीवत् । निरु० २।२३॥ २. धा० २।५४॥ वचिप्रच्छ्य०ा० (महाभाष्य वा० ३।२।७८) ।

३. कोशे 'क्विह' इत्यपपाठः । ४. कोशे 'पच्यतेर्थोत्यनेनेति' इत्यपपाठः ।

५. कोशे 'मेघ त्युच्य०' इत्यपपाठः । मेघस्यस्तनयित्नुलक्षणेत्यर्थः ।

६. कोशे 'वारमा०' इत्यपपाठः ।

७. अपि वोभयविधाः स्युः । अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्य । निरु० ७ ३॥ ८. तदर्हम् । अष्टा० ५।१।११६ ॥

९. तत्र तस्येव । अष्टा० ५।१।११५॥ १०. सरस्वत्या इत्यर्थः ।

११. इयं शुष्मेभिर्बिसखा इवारुजत् सानु गिरीणां तविषेभिर्ऊर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥ ऋ० ६।६१।२॥

१२. कोशे 'सरस्वति' इत्यपपाठः । १३. कोशे '०वियासेम' इत्यपपाठः ।

१४. कोशे 'सुवृत्तिभिः' इत्यपपाठः ।

शुषेर्म्मन्प्रत्यये[1] शुष्मं[2] बलमूर्मिविशेषणम् ।
तदन्तर्णीतमत्वर्थं[3] बलवद्भिरितीप्सितम् ॥८॥
खनतेर्बिसपूर्वस्य[4] विटि[5] स्याद् बिसखा इति ।
विड्वनोरिति[6] सूत्रेण यात्यात्वमनुनासिकः ॥९॥
बिस्यतेर्बिसमित्युक्तं[7] भेदवृद्ध्यर्थवाचिनः ।
मृदुत्वाद् भिद्यतेऽक्लेशं वर्धते च तथा जले ॥१०॥
वर्धयेद्[8] भक्षितं यद्वा सानु शृङ्गं समुच्छ्रितम्[9] ।
अन्तर्णीतक्रियाभ्यां तु समुद्भ्यां सानु कल्पितम्[10] ॥११॥
ममो मस्य भवेदात्वदश्च व्यत्मुयये तथा ।
दकारस्य[11] नकारत्वम् अन्तर्णीता श्रिता क्रिया ॥१२॥
समुदोः सेति[12] वा ज्ञेयं तत्पूर्वस्य नुदेस्तु डौ[13] ।
संहृत्योर्ध्वं श्रितं चैतत् सम्यङ्नुन्नं तथोपरि ॥१३॥

---

१. कोशे '०मत्प्रत्यये' इत्यपपाठः । धा० ४।७४।। द्र०—उणा० १।१४४।। शुष्ममिति वलनाम शोषयतीति सतः । निरु० २।२४।।

२. कोशे 'शुष्म' इत्यनुस्वाररहितः पाठः । निघ० २।९।।

३. कोशे '०दत्वर्थं' इत्यपपाठः ।

४. कोशे 'वनते०' इत्यपपाठः । धा० १।९२७।। जनसनखन० (अष्टा० ३।२।६७) इति विट् ।

५. कोशे 'लिटि स्यास्मि सखा' इत्यपपाठः ।

६. कोशे 'विद्वनो०' इत्यपपाठः । विड्वनोरनुनासिकस्यात् (अष्टा० ६।४।४१) इत्याकारः ।

७. कोशे 'बिस्यतेबिस०' इत्यपपाठः । धा० ४।१०८ प्रेरणार्थे पठ्यते ।। बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा । निरु० २।२४।।

८. कोशे 'वर्धयत् भक्तितं' इत्यपपाठः ।

९. कोशे 'समुच्छ्रुतः' इत्यपपाठः ।। सानु समुच्छ्रितं भवति समुन्नुन्नमिति वा । निरु० २।२४।।

१०. कोशे 'कल्पितः' इत्यपपाठः ।

११. कोशे 'भकारस्य मकारत्वं' इत्यपपाठः ।

१२. कोशे 'सेत्रि साज्ञेयं' इत्यपपाठः ।

१३. कोशे 'द्यौ' इत्यपपाठः । समुत्पूर्वस्य नुदतेः (धा० ६।१) डुप्रत्यये, समुदोः सादेशे टिलोपे च 'सानु' पदं सिध्यतीति भावः ।

महद्भिररिति[1] शब्देन व्याख्यातं तविषैरिति ।
इषे तु प्रत्यये रूपं गुणावादेशयोस्तुवः[2] ॥१४॥
नदी पारावतघ्नी स्यात् सा पारावारघातिनो[3] ।
रेफस्येह तभावेन निर्दिष्टमवरं[4] त्विह ॥१५॥
पारावारौ तटौ नद्याः परं कूलं [5]ततोऽवरम् ।
स्तुतयो[6] धीतयः प्रोक्ता धीयन्ते [7]ता हि कर्मसु ॥१६॥
सुष्ठु ता वर्जिता [8]दोषैस्तेनोक्तास्सुप्रवृत्तयः ।
सरितो वाप्यधिष्ठात्री देवताधाररूपतः ॥१७॥
अध्यस्य स्तूयते[9] यष्टु वाग्वा माध्यमिका स्वयम् ।
नद्यस्तु[10] गिरयो[11] मेघा ऊर्मयः[12] स्तनयित्नवः ॥१८॥
पारावतपदेनोक्ते[13] रोदसी हन्तिना गतिः ।
एकोत्तरशतं[14] नाम्नामुदकस्याप्यतः परम् ॥१९॥
उन्देः [15]क्वुन्युदकं विद्याद् [16]उनत्तीत्यब्रवीद् ऋषि ।
सप्ताधिकानि[17] नामानि नद्यास्त्रिंशदतः परम् ॥२०॥

---

१. महद्भिरूर्मिभिः । निरु० २।२४॥

२. धा० २।२५॥ अपि वा सौत्रोऽयं धातुः (अष्टा० ७।३।९५) ।

३. पारावतघ्नीं पारावारघातिनीम् । पारं परं भवति, अवारमवरम् । निरु० २।२४॥

४. कोशे '०मपर त्विह' इत्यपपाठः ।

५. कोशे 'ततः परम्' इत्यपपाठः ।

६. अत्नाय सुवृत्ताभिः [शोभनाभिः] स्तुतिभिः सरस्वतीं [नदीं] कर्मभिः परिचरेम । निरु० २।२४॥

७. कोशे 'तानि कर्मसु' इत्यपपाठः ।

८. कोशे 'दोषैः तेनाक्ता०' इत्यपपाठः ।

९. कोशे 'स्तेयते' इत्यपपाठः ।

१०. कोशे 'नद्यासु' इत्यपपाठः । 'वाग्वा माध्यमिका नदी (सरस्वती) अस्तु' इत्यन्वयः ।

११. कोशे 'शिरयो' इत्यपपाठः ।

१२. कोशे विसर्गरहितः पाठः ।

१३. कोशे '०वदेनोक्ते रोदपीहतिना' इत्यपपाठः ।

१४. उदकनामान्युत्तराण्येकशतम् । उदकं कस्मात् ? उनत्तीति सतः । निरु० २।२४॥

१५. कोशे 'उन्दर्वत्युदकं' इत्यपपाठः । धा० ७।२०॥ उणा० २।४०॥

१६. कोशे 'युनक्तीत्यब्र०' इत्यपपाठः ।

१७. नदीनामान्युत्तराणि सप्तत्रिंशत् । नद्यः कस्मात् ? नदना [इमा] भवन्ति, शब्दवत्यः । बहुलमासां नैघण्टुकं वृत्तम्, आश्चर्यमिव प्राधान्येन । निरु० २।२४॥

नदेष्टप्रत्यये[1] नद्यो [2]नदश्चैवं प्रसिध्यति ।
अव्यक्तशब्दवाचित्वाद् नदना इत्यभाषत ॥२१॥
प्रायो नैघण्टुकस्त्वासां [3]प्रयोगोऽन्यपरत्वतः ।
क्वचित् प्राधान्यतश्चैव [4]तत्राख्यानमिदं विदुः ॥२२॥
ऋषौ[5] वाच्ये स्मृतं दैर्घ्यं मित्रे विश्वपदस्य वै ।
स सर्वमित्र इत्युक्तो मित्रं तस्य जगत्त्रयम्[6] ॥२३॥
विश्वं मित्रमिति प्रोक्तं[7] तथा तस्यैतरेयके[8] ।
सर्तेर्वप्रत्यये[9] सर्वं सर्वगं तत् परस्परम् ॥२४॥
अप्रत्यये[10] सुपूर्वस्य [11]ददातेः स्यात् सुदा इति ।
देशे[12] काले च पात्रे च दानं सम्यक् करोति सः ॥२५॥
बाधित्वेञमणोवेष्टः[13] तेन पैजवनः[14] स्मृतः ।
स्पर्धेडिप्रत्यये[15] रूपमादिलोपे[16] च पि स्मृतम् ॥२६॥

---

१. धा० १।५५॥ पाणिनेस्तु पचादिषु (अष्टा० ३।१।१३४) नदट् पाठादच् प्रत्ययः ।

२. कोशे 'नदेश्चैवं' इत्यपपाठः ।

३. कोशे 'प्रयोन्यपरं ततः' इत्यपपाठः ।

४. तत्रेतिहासमाचक्षते । विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव । विश्वामित्रः सर्वमित्रः । सर्वं संसृतम् । सुदाः कल्याणदानः । पिजवनस्य पुत्रः । पिजवनः पुनः स्पर्धनीयजवो वा, अमिश्रीभावगतिर्वा । निरु० २।१४॥

५. मित्रे चर्षौ । अष्टा० ६।३।१२९॥

६. कोशे 'जगत्रहम्' इत्यपपाठः ।

७. कोशे 'प्रोक्तः' इत्यपपाठः ।

८. ऐ० आ० २।२।१॥

९. कोशे 'सतेर्व०' इत्यपपाठः । धा० १।९८२॥

१०. विचीत्यर्थः । अष्टा० ३।२।७४॥

११. कोशे विसर्गरहितः पाठः । धा० ३।९॥ १२. कोशे 'देशकाले' इत्यपपाठः ।

१३. कोशे 'बाधित्वेवमणोवेष्टः' इत्यपपाठः । अत इञ्(अष्टा० ४।१।९५) इति प्राप्तमिञमपवादं बाधित्वौत्सर्गिकोऽण् (अष्टा० ४।१।९२) एवेष्ट इत्यभिप्रायः ।

१४. कोशे 'वै जवनः' इत्यपपाठः ।

१५. कोशे 'स्पृशेर्धिप्रत्यये' इत्यपपाठः । धा० १।३॥

१६. कोशे '०मानिलोपे च विस्मृतम्' इत्यपपाठः ।

तत्पूर्वस्य [1]जवेरिष्टं तथा पिजवनो[2] नृपः ।
संपदा हि जवस्यासौ स्पर्धनीयजवो भवेत् ॥२७॥
पृचेः[3] संपर्चनार्थस्य पूर्वभागस्तथाऽथवा ।
मिश्रीभावः [4]पिशब्दोक्तो जवनं गतिरुच्यते ॥२८॥
अस्वस्वीकरणे शक्तिस्तस्य न्यायेन विद्यते ।
पौरोहित्ये[5] वृतं[6] राजा विश्वामित्रं[7] ससैनिकः ॥२९॥
आदाय तु ययौ नद्याः संगमं तारणाय सः ।
पौरोहित्यार्जितं यद्वा धनमादाय कौशिकः ॥३०॥
प्रययौ संगमं तीर्त्वा[8] यष्टुं तामिः स वारितः ।
तुष्टावाथ नदीर्गन्तुं [9]पारं साश्वरथानुगः ॥३१॥
द्विवच्च[10] बहुवच्चेति स्वभावोपप्रदर्शनम् ।
हे[11] विपाशादयो नद्यः ऋतवत्यो बहूदकाः ॥३२॥
भवतोपरता [12]वेगान् मूहूर्त्तं वचसे मम ।
मदीयं हि वचः सौम्यं सोमं संपादयिष्यति ॥३३॥
युष्मासूपरतास्वेव [13]तीर्त्वाहं करवाणि तम् ।
सोमसंपादि तेनेदं[14] भवतोपरता इति ॥३४॥

---

१. सौत्रोऽयं धातुः । अष्टा० ३।२।१७७॥ २. कोशे 'विजवतो' इत्यपपाठः ।

३. कोशे 'वृचेः' इत्यपपाठः । धा० ७।२५॥

४. कोशे 'विशब्दोक्तः' इत्यपपाठः ।

५. स वित्तं गृहीत्वा विपाट्छुतुद्र्योः संभेदमाययौ, अनुययुरितरे । स विश्वामित्रो नदीस्तुष्टाव—गाधा भवतेति । अपि द्विवदपि बहुवत् । तद् यद् द्विवद् उपरिष्टात्तद् व्याख्यास्यामः । अथैतद् बहुवत् । निरु० २।२४॥ ६. कोशे 'मृतं' इत्यपपाठः ।

७. कोशे '०मित्रमसैनिकः' इत्यपपाठः । ८. कोशे 'तीर्थ्वा यष्टुं ते स' इत्यपपाठः ।

९. कोशे 'पारा' इत्यपपाठः । १०. कोशे 'द्विर्वच्च' इत्यपपाठः ।

११. कोशे 'हेपि पाशा०' इत्यपपाठः । तथा च मन्त्रः—

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मूहूर्त्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥ ऋ० ३।३३।५॥

१२. कोशे 'वेगा' इत्यपपाठः । १३. कोशे 'तीर्था' इत्यपपाठः ।

१४. वच इति शेषः ।

सरित्सु शृण्वतीष्वेतत्[1] प्राधान्यात् सिन्धुमब्रोत् ।
स्तुत्या वा प्रज्ञया वापि सिन्धुं प्राभिह्वयाम्यहम् ॥३५॥
सरिद्भिस्सहितां[2] सिन्धो गाथा मे भव[3] गुप्तये ।
पिता मे कुशिको राजा भगिनी कौशिकी[4] नदी ॥३६॥
तस्माद् [5]ह्वानं तवाप्यस्ति सर्वासां सरितां तथा ।
रेफभावस्तकारस्य [6] [7]मतोर्दैर्घ्यमृतस्य च ॥३७॥
आमन्त्रिते द्वितीया च भवेन्नैगमवृत्तितः ।
ऋतमित्युदकं प्रोक्तं [8]प्रत्यृतं नभसो भुवम् ॥३८॥
निम्नं एत्यथवा देशं गतं देशात् समुन्नतात्[9] ।
अर्त्तेस्तुप्रत्यये[10] काले तथादेरुत्वभावतः ॥३९॥
मुहुःशब्दान्तलोपे च मुहूर्तं[11] इति सिध्यति ।
अविकारे ह्यलोपे च भवेन्मुहुर्ऋतुस्त्विति[12] ॥४०॥
अभीक्ष्णमिति[13] चास्यार्थमाहाभिक्षणमित्यृषिः[14] ।
हिंसार्थस्य [15]क्षिणोतेः स्यात् कर्मण्यस्प्रत्यये क्षणः ॥४१॥

---

१. कोशे '०तीष्येतत्' इत्यपपाठः ।

२. कोशे '०सहिताः' इत्यपपाठः । सरिद्भिस्सहितां सिन्धुं प्राभिह्वयाम्यहम् इत्यन्वयः ।

३. कोशे 'मे हृच' इत्यपपाठः ।

४. कोशे 'कोशिकी' इत्यपपाठः । ५. कोशे 'प्रातं' इत्यपपाठः ।

६. ऋतावरी ऋतवत्यः । ऋतमित्युदकनाम । प्रत्यृतं भवति । निरु० २।२५।

७. कोशे 'पतो दैर्घ्य०' इत्यपपाठः ।

८. कोशे 'प्रत्युतन्नभसो' इत्यपपाठः ।

९. कोशे 'सगुन्नतात्' इत्यपपाठः ।

१०. कोशे 'अत्तेस्त०' इत्यपपाठः ।। धा० ३।१६।। उणा० १।७२।। मुहूर्तो मुहुर्ऋतुः । ऋतुरर्त्तेर्गतिकर्मणः । मुहुर्मूढ इव कालः । यावदभीक्ष्णं चेति । अभीक्ष्णमभिक्षणं भवति । क्षणः क्षणोतेः प्रक्ष्णुतः कालः । कालः कालयतेर्गतिकर्मणः । निरु० २।२५।

११. कोशे 'महूर्त्त' इत्यपपाठः । १२ कोशे '०महुऋतु०' इत्यपपाठः ।

१३. कोशे 'अभीष्णमिति' इत्यपपाठः ।

१४. कोशे '०भीक्षणमित्युषिः' इत्यपपाठः ।

१५. धा० ८।२।। मूले 'क्षणोतेः' इति पाठः,दुर्गपाठश्च स एव । 'क्षिणोतेः'इति स्कन्द-पाठः । तस्यैवानुकरोति नीलकण्ठः ।

अभिदैर्ध्योपधालोपे[1] तस्यैवाभीक्ष्णमित्यपि[2] ।
अभिक्षणं[3] व्यापी कालः कालः कालयतेः[4] स्मृतः ॥४२॥
काल्यन्तेऽनेन भूतानि नाश्यन्ते नश्वराणि हि ।
क्रोशतेः[5] कुशिको राजा रेफलोपे[6] तथेकनि ॥४३॥
विहितं कु[रु]तेत्येवं सदा शब्दं करोत्यसौ ।
तस्मिन्नेवाथवा[7] क्रंशेः[8] प्रकाशार्थाभिधायिनः ॥४४॥
उत्वे रेफस्य [9]रूपं स्यात् नलोपे च तथाविधम् ।
यद्वा कुशेर्ण्णिनेरर्थे [10]कुशिकस्त्विकनि स्मृतः ॥४५॥
विकोशी[11] साधु[12] सोऽर्थानां विक्षेप्तार्थान् यथाविधि ।
दातार्थान् [13]देशकालादौ पात्रेभ्यो धर्ममानसः ॥४६॥
प्रत्यूचुस्तमथो[14] नद्य [15]इन्द्रोऽस्मानिति ताः स्तुताः ।
इन्द्रोऽस्मानखनद् देवो यस्मात् वृत्रमथावधीत् ॥४७॥

---

१. कोशे 'अतिदैर्ध्यो' इत्यपपाठः ।
२. कोशे '०वाभीक्ष्ण्यमित्यपि' इत्यपपाठः ।
३. कोशे 'अभिक्षण व्यापिकालः' इति पाठः ।
४. कोशे विसर्गरहितः पाठः । धा० १०।३३४॥
५. कोशे 'कोशत्वे' इत्यपपाठः ॥ धा० १।६०६॥ कुशिको राजा बभूव क्रोशतेः शब्दकमणः । क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः । साधुविक्रोशयितार्थानामिति वा । निरु० २।२५॥
६. कोशे 'रेफले तथेकति' इत्यपपाठः ।
७. इकन्प्रत्यय एवेत्यर्थः ।
८. कोशे 'क्रंशेः प्रकाशार्थ्याभि०' इत्यपपाठः । क्रंशधातुः पाणिनीयधातुपाठे न संगृह्यते ।
९. कोशे 'रूपास्यात्' इत्यपपाठः ।
१०. कोशे 'कुशिकस्त्वकत्ति' इत्यपपाठः ।
११. 'साधु विकोशयिता'इत्याकरपाठमाधृत्येयं व्याख्या स्कन्दीयव्याख्यामनुसरति ।
१२. कोशे 'साधुकोर्थानां विक्षेप्तन्धथा०' इत्यपपाठः ।
१३. कोशे 'तेशकासादो' इत्यपपाठः ।
१४. नद्यः प्रत्यूचुः । निरु० २।२५॥
१५. इन्द्रो अस्माँ अरदद्वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम् ।
देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥ ऋ० ३।३३।६॥

नदीनां [1]परिधिं मेघं निहितं सर्वतोऽम्भसाम् ।
पतिताभिर्हते[2] तस्माददद्भिः खाता वयं ततः ॥४८॥
निहतादनयन्[3] मेघाद् वज्रबाहुरपस्तु याः[4] ।
पृथिवीं[5] नीयमानाभिस्ताभिः खाता वयं मुने ॥४९॥
प्रसवे प्रेरणे तस्य तेनैव प्रेरिता वयम् ।
गच्छामः [6]सरितां नाथमुर्व्यस्तस्य वशे स्थिताः ॥५०॥
वृद्धाविप्रत्यये[7] पाणिः[8] पूजार्थस्य पणायतेः[9] ।
ऊर्णोतेरीकि[10] रूपं स्यादुकारस्य वकारतः ॥५१॥
ऊकारस्य[11] तथा ह्रस्व[12]उर्व्यो णस्यापि लोपतः ।
तस्मिन्नेव[13] वृणोतेर्वा विपर्यासे तथोत्वतः ॥५२॥
प्रत्याख्यायान्ततो[14] नद्य[15]ओ ष्वित्यभ्यर्थिता भृशम् ।
आशुश्रुवुः[16] पुनस्तस्य स्नेहकारुण्यभाषितम् ॥५३॥

---

१. कोशे 'परिधिर्मेधा निहतं सर्वतोम्हसाम्' इत्यपपाठः । निहितम् = निधानम् ।

२. कोशे '०ताभिर्हता तस्मादभि.' इत्यपपाठः ।

३. कोशे 'निहितादनयन् मेघं' इति पाठः ।

४. कोशे 'वज्रप्रमुखस्तुयाः' इत्यपपाठः ।

५. कोशे 'पृथिवी नियमा०' इत्यपपाठः ।

६. कोशे 'सरितानाथम्मुष्टचो तस्य वशे त्सिताः' इत्यपपाठः ।

७. कोशे 'वृद्धं विप्रत्यये' इत्यपपाठः ।

८. पाणिः पणायतेः पूजाकर्मणः । प्रगृह्य पाणी देवान् पूजयन्ति । निरु० २।२६॥

९. धा० ११४६६॥ तु०—उणा० ४।१३४॥

१०. कोशे 'ऊर्णोतेरितिरूपं स्यादक्कारस्य' इत्यपपाठः । धा० २।३०॥ उर्व्य ऊर्णोतेः, वृणोतेरित्यौर्णवाभः । निरु० २।२६॥

११. कोशे 'उकारस्य' इत्यपपाठः । तु०—उणा० १।३१॥

१२. कोशे 'उर्व्यणस्याविलोपतः' इत्यपपाठः ।

१३. ईकीत्यर्थः । वृणोतेः (धा० ५।८) ईकि —वृ+ई, विपर्यासे, ऋव् + ई, उत्वे रपरत्वे च उर् ई, बहुत्वेव् उर्व्य इति रूपम् ।

१४. कोशे '०ख्यायानुता नद्य ओचित्यभ्यर्थिता' इत्यपपाठः ।

१५. ऋ० ३।३३।९॥

१६. प्रत्याख्यायान्तत आशुश्रुवुः । निरु० २।२६॥

आभिमुख्येन[1] ते कारो शृणवाम वचांसि वै ।
त्वदुक्तं[2] कुर्म[3] इत्यर्थो [4]ययाथेत्यपि लोटि लिट् ॥५४॥
आगतस्त्वं[5] यतो दूरात् [6]श्रुतस्तेऽतः स्वरः प्रियः ।
निनंसै[7] इति चानेन दूरादित्यस्य संगतिः ॥५५॥
अवियुक्तेन[8] पूर्णेन शकटेन रथेन च ।
याहि त्वं यज्ञसिद्ध्यर्थं [9]निनंसै दूरमेव ते ॥५६॥
निनंसै लेटि[10] रूपं स्यात् लोटि वा बहुलात्सिपः ।
आटि[11] वृद्धौ मिपोऽभावे [12]निनमै तु द्वयोर्भवेत् ॥५७॥
उत्तमैकवचोरूपं बह्वर्थं चार्थसंभवात् ।
निनमामेति[13] तस्यार्थस्त्वदर्थं निनमामहै ॥५८॥
पिबतेर्णिचि[14] पुक्येव तथेत्वे शानचीष्यते ।
शपश्चैव[15] तथा लोपे [16]पीप्यानेत्यपि वैदिकम् ॥५९॥

---

१. आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥ ऋ० ३।३३।१०॥

२. कोशे 'यदुक्तं' इति पाठः । ३. कोशे 'कर्म' इत्यपपाठः ।

४. कोशे 'यथाथेत्यपि' इत्यपपाठः । ५. कोशे 'आगतस्त्वायतो' इत्यपपाठः ।

६. कोशे 'श्रुतस्तोतः ध्वरप्रियम्' इति पाठः ।

७. कोशे 'निनासै' इत्यपपाठः ।

८. कोशे 'अविमुक्तेन पूर्वेण' इत्यपपाठः । द्रष्टव्यमत्रैव स्कन्दव्याख्यानम् ।

९. कोशे 'निनासैदूर०' इत्यपपाठः ।

१०. कोशे 'लोटि' इत्यपपाठः । ११. कोशे 'आदिवृद्धौ' इत्यपपाठः ।

१२. कोशे 'ननमै तु द्वयो भवेत्' इत्यपपाठः । द्वयोर्लेटलोटोर्यथासंख्यं लेटोऽडाटौ (अष्टा० ३।४।९४) आडुत्तमस्यपिच्च (अष्टा० ३।४।९२) इत्याटि, आटश्च (अष्टा० ६।१।८७) इति वृद्धिरेकादेशः ।

१३. कोशे 'विननमा०' इत्यपपाठः ।

१४. कोशे 'पिबतोर्णिचिमुत्येव' इत्यपपाठः ।

१५. कोशे 'शपत्वैव' इत्यपपाठः ।

१६ कोशे 'पिप्याने०' इत्यपपाठः । पा णिच्=पाप् इ=पाप् इ आन=पाप् इ अ आन=पीप् इ आन=पीप्यान=पीप्याना ।

पाययन्ती स्तनं पुत्रं नारी प्रह्वीभवेद्यथा ।
मनुष्यस्येव[1] वा कन्या परिष्वङ्गायते तथा ॥६०॥
तवैव हि वयं सर्वं कुर्मो नान्यस्य कस्यचित् ।
इत्यर्थं [2]त इति प्रोक्तम् आदरार्थं पुनः पुनः[3] ॥६१॥
उक्तस्यार्थस्य [4]दाढर्च्यार्थं तथैतद्भाषितं पदम् ।
स्वजेरप्रत्यये[5] भावे द्विरुक्तौ छान्दसत्वतः[6] ॥६२॥
सकारस्य शकारत्वे शश्वचै वैदिकं पदम् ।
कुशिको[7] यजमानो वा तत्पुत्रोऽग्निस्तु पार्थिवः ॥६३॥
स सर्वमित्र इत्युक्तः[8] प्रवृद्धाः[9] सोऽब्रवीन्नदीः ।
यज्ञकर्मप्रसिद्ध्यर्थं भवतोपरता इति ॥६४॥
प्रावृष्यतिप्रवृद्धत्वादिन्द्र[10] इत्यब्रुवन्निव ।
आशुश्रुवुरिवाप्यन्ते [11]शरत्क्षीणाबहूदकाः ॥६५॥
अश्वस्याप्सु[12] प्रसूतत्वात् अप्सुयोनिरिति श्रुतेः[13] ।
अश्वनामानि[14] षट् चैव विंशतिश्चाप्यतः[15] परम् ॥६६॥

---

१. कोशे 'मनुष्यस्यैव' इति पाठः ।

२. कोशे 'तत' इत्यपपाठः ।

३. प्रकृतमन्त्रे (ऋ० ३।३३।१०) 'ते' इति पदं त्रिः प्रयुज्यते ।

४. कोशे 'दाढर्यार्थं तथैव द्वेष्टिं पदम्' इति पाठः ।

५. कोशे 'स्वजैर०' इत्यपपाठः । धा० १।१०२५ । 'ष्वञ्ज्' इति धातुः । स्कन्दोऽपि 'स्वजेरेतद् रूपम्' इत्यवोचत् ।

६. कोशे 'जन्यवत्वतः' इति पाठः ।

७. स्कन्दस्तु 'औषसः प्रकाशः कुशिकः, तस्य सूनुरादित्यः' इत्यादित्यं विश्वामित्रमास्थाय नित्यपक्षं प्रदर्शयामास । तस्यैव स्वल्पभेदेनानुकृतिरेषा ।

८. कोशे 'इत्युक्ताः' इत्यपपाठः ।

९. नदीविशेषणमेतत् ।

१०. इन्द्रो अस्मां (ऋ० ३।३३।१०)इति वचनमित्यर्थः ।

११. कोशे 'शरक्षीणा०' इत्यपपाठः ।

१२. कोशे 'अश्वस्याध्वः' इत्यपपाठः ।

१३. तै० सं० २।३।१२।२॥

१४. अश्वनामानि षड्विंशतिः । तेषामष्टा उत्तराणि बहुवत् । अश्वः कस्मात् ? अश्नुतेऽध्वानम्, महाशनो भवतीति वा । निरु० २।२७॥

१५. कोशे 'विंशतिश्वाप्यतः' इत्यपपाठः ।

तेषामष्टावितीदं तु तत्त्वस्यैवोपवर्णनम् ।
अश्नुतेऽध्वानमित्यश्वो बह्वश्नातीति वा भवेत् ॥६७॥
अश्नोतेरथवाश्नातेरश्वो[1] वप्रत्यये मतः ।
दधातेः[2] किकिनोरिष्टं[3] [4]दधि तत्पूर्वतः क्रमेः[5] ॥६८॥
दधिक्रा[6] विटि रूपं स्यात् [7]क्रन्देर्वाप्यन्तलोपतः ।
नकारस्य तथैवात्वे [8]करोतेराति वा भवेत् ॥६९॥
यणादेशे[9] कृदन्तोऽपि तद्धितार्थे समाश्रितः ।
दधदर्थे दधीत्येतद् भाष्यकारेण कल्पितम् ॥७०॥
सादिनं[10] धारयन्नश्वः क्रामति प्रक्षिपन् पदम् ।
हीहीहीत्युन्मुखश्चासौ[11] तथैव क्रन्दति स्फुटम् ॥७१॥
आकारी[12] शोभनाकारः [13]सादिनाधिष्ठितो भृशम् ।
आ[14] दधिक्रा इति त्वस्यां देवतावत्तु वक्ष्यते[15] ॥७२॥
उतेत्ययमपीत्यर्थे[16] पूर्वेणास्य समुच्चयः ।

---

१. कोशे '०रश्वारव प्रत्यये' इत्यपपाठः । धा० ५।१८॥ ९।५१॥ उणा० १।१५१॥

२. धा० ३।१०॥ तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा, दधत् क्रन्दतीति वा, दधदाकारी भवतीति वा । तस्याश्ववद् देवतावच्च निगमा भवन्ति । तद् यद् देवतावद् उपरिष्टात् तद् व्याख्यास्यामः । अथैतदश्ववत् । निरु० २ २७॥ ३. द्र०—अष्टा० ३।२।१७१॥

४. कोशे 'दधितः पूर्वतः' इत्यपपाठः । ५. धा० १।५०२॥

६. कोशे 'दधिकापि टिरूपास्थात्' इत्यपपाठः । जनसनखनक्रम० (अष्टा० ३।२।६७) इति विटि, विड्वनो० (अष्टा० ६।४।४१) इत्यनुनासिकस्यात्वम् ।

७. धा० १।७१॥ ८. धा० ८।१०॥

९. कोशे 'यणादेने' इत्यपपाठः । १०. कोशे 'साधितं' इत्यपपाठः ।

११. कोशे '०मुखश्वासौ' इत्यपपाठः ।

१२. भूमनिन्दाप्रशंसासु० (महा० ५।२।९४) इति प्रशंसायामिनिरित्याशयः ।

१३. कोशे 'साधिनाधिष्टितो' इत्यपपाठः ।

१४. ऋ० ४।३८।१०॥ १५. निरु० १०।३१॥

१६. कोशे 'तेत्ययम०' इत्यपपाठः । तथा च मन्त्रः—

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि ।
क्रतुं दधिक्रा अनु संतवीत्वत् पथामङ्कांस्यन्वापनीफणत् ॥ ऋ० ४।४०।४॥

यदुक्तं तत्तथैव स्याद् अप्येतदपरं[1] त्विति ॥७३॥
सोऽश्वः प्रस्तुतो वाजी वाजं [2]वेजनमुच्यते ।
कम्पनं चलनं [3]तद्वांश्चलश्चालयिताथवा ॥७४॥
क्षिपणि[4] क्षेपणीं घातमन्वसौ त्वरते भृशम् ।
उरोवध्रेण[5] बद्धश्च कक्ष्यया खलिनेन च ॥७५॥
ग्रीवायां चैव कक्षे[6] च तथैवास्ये यथाविधि ।
क्रतु[7] कर्म तथात्मीयं [8]स शीघ्रगतिलक्षणः ॥७६॥
अश्वारोहस्य वा प्रज्ञां सन्तनोति[9] सुशिक्षितः ।
वर्धयत्यथवा[10] तस्य वर्तमानो वशेऽवशः ॥७७॥
शालिहोत्रप्रसिद्धानां[11] [12]पथामङ्कांसि यानि च ।
आपनोफणादत्यर्थं[13] स्थानानि [14]कुटिलान्यसौ ॥७८॥
गच्छन्नजवदित्यर्थो विषमाण्यपि सत्वरम् ।
क्षिपतेः[15] प्रेरणार्थस्य [16]क्षिपणिः स्यात् करणौ[17] कृते ॥७९॥
त्वरतेर्ल्युटि[18] रूपं स्यात् तुरणं संप्रसारणे ।
ततः क्यचि[19] भवेद्रूपं यत्तदेतत्तुरण्यति ॥८०॥

---

१. कोशे '०दपत्त्विति' इत्यपपाठः ।
२. कोशे 'वेजेन०' इत्यपपाठः । ३. वाजी वेजनवाम् । निरु० २।२८॥
४. कोशे 'क्षिपर्णीं क्षेपणीं घातमन्वसो त्वरते' इत्यपपाठः ।
५. कोशे 'उरोवर्ष्येण बन्धश्च कक्ष्यया खलिवेन च' इत्यपपाठः । वध्रः=चर्मपट्टः ।
६ कोशे 'कक्षेप तथैदस्य यथा०' इत्यपपाठः ।
७. क्रतुं दधिक्राः । कर्म वा प्रज्ञां वा । निरु० २।२८॥
८. सः=क्रतुः ९. कोशे 'सन्ततोति' इत्यपपाठः ।
१०. कोशे 'वर्वयत्यथा' इत्यपपाठः ।
११. कोशे 'शालीहोत्र०' इति पाठः । १२. कोशे 'पथामङ्कासि' इत्यपपाठः ।
१३. कोशे 'आपनीहणाद०' इत्यपपाठः ।
१४. पथामङ्कांसि पथां कुटिलानि । निरु० २।२८॥
१५. धा० ६।५॥ क्षेपणमनु तूर्णमश्नुतेऽध्वानम् । निरु० २।२८॥
१६. कोशे 'क्षपणि स्यात्' इत्यपपाठः । १७. क्षिपेःकिच्च (उणा० २।१०६) ।
१८. कोशे 'त्वरतेर्लटि' इत्यपपाठः । धा० १।८१२॥ १९. अष्टा० ३।१।८॥

गिरतेर्वा[1] गृणातेर्वा ग्रीवा ड्रीवे प्रसिध्यति ।
ग्रहेर्डीवे[2] तथैव स्यात् सर्वेषामर्थसंभवात् ॥८१॥
आसन्नित्ययमादेश[3] आस्यशब्दस्य संश्रितः ।
तवतेर्यङ्लुकीष्टं[4] स्याद् ईकि चैव गुणे तथा ॥८२॥
लेटस्तिपि गुणाभावे[5] संतवीत्वत्तु नैगमः ।
पूर्वा प्रकृतिरभ्यासः पूर्वोऽभ्यास[6] इति स्मृतेः ॥८३॥
धातोः प्रकृतिरित्याख्या प्रयोगो निगमस्त्विह[7] ।
पततेः[8] [9]पद्यतेश्चैव [10]ह्यु भयोः स्यादिनिर्यदा ॥८४॥
पन्था इति तदा रूपं [11]पन्थतेश्च नलोपतः ।
[फणतेश्चर्करीतत्वे[12] नीकि चैव निपातनात्[13] ]॥८५॥
शपो[14] लुकि नुमोऽभावे शत्रन्तस्यापनीफणत् ।
अङ्कांस्यत्यर्थमागच्छन् क्रतुमश्वोऽभिवर्धयेत् ॥८६॥
सन्तवीत्वत्पदं[15] कैश्चित् तनोतेः[16] परिकल्पितम् ।
तस्मिन्नेव[17] तु वीकि स्यात् [18]फणादेरविशेषतः ॥८७॥

---

१. ग्रीवा गिरतेर्वा गृणातेर्वा गृह्णातेर्वा । निरु० २।२८॥ धा० ६।११७॥६।२७॥

२. कोशे 'ग्रहेर्धिवे' इत्यपपाठः। धा० ९।६१। ३. कोशे '०देशे आध्यशब्दस्य' इत्यपपाठः ।

४ कोशे '०यङ्लुकिष्टं स्यात् इति चैव' इत्यपपाठः । धा० २।२५॥ सौत्रो वायं धातुः (अष्टा० ७।३।९५) । तनोतेः पूर्वया प्रकृत्या निगमः निरु० २।२८) । 'तनोतेः' इति तु पाठे बहूत्प्रेक्ष्यम् इति हेतुं समाश्रित्य स्कन्दः 'तवतेः' इत्याकरपाठमूरीचकार । नीलकण्ठस्तु पूर्वं स्कन्दानुमोदितं पाठं व्याख्याय दुर्गस्वीकृतपाठमपि व्याचख्यौ (द्र० श्लोक० ८७, ८८) ।

५. कोशे 'लेटस्तिविगुणोभावे सतवीयत्तु नैगमे' इत्यपपाठः । ६. अष्टा० ६।१।४॥

७. कोशे 'नियमत्विह' इत्यपपाठः ।

८. धा० १ ८९८॥ पन्थाः पततेर्वा पद्यतेर्वा पन्थतेर्वा । निरु० २।२८॥

९. धा० ४ ६०॥ तु०—उणा० ४।१२॥

१०. कोशे 'पद्यते त्वैं ह्वाभयो स्यादिनी यदा' इत्यपपाठः ।

११. धा० १०।३९॥ इदित्त्वादस्य णिज्विकल्पत्वमनुमीयते । द्र० धातुवृत्तिः ।

१२. अङ्कोऽञ्चतेः । आपनीफणदिति फणतेश्चर्करीतवृत्तम् । निरु० २।२८॥ धा० १।८७३॥ चर्करीतम्=यङ्लुक् ।

१३. दाधर्त्ति० (अष्टा० ७।४।६५) इति निपातनाद् अभ्यासस्य नीगागमः ।

१४. कोशे 'शपे क्लि' इत्यपपाठः । अदादिषु चर्करीतपाठाच्छपो लुक् (अष्टा० २।४।७२) । १५. कोशे 'सन्नपीतु पदं' इत्यपपाठः । १६. धा० ८।१॥ १७. यङ्लुकीत्यर्थः ।

१८. कोशे 'फलादे०' इति पाठः । यथापनीफणदित्यत्राभ्यासस्य नीगागमो निपात्यते,

परस्यापि नकारस्य [1]वत्वेऽकारस्य लोपतः ।
लेटि स्यात् पूर्ववत् सर्वं [2]सन्तनोतेर्यथोदितम् ॥८८॥
दशोत्तराणि[3] नामानि हरी इत्यादिकानि तु ।
इन्द्रस्येत्यादिरादिष्ट इन्द्रादिरुपयोजनम् ॥८९॥
येषामिति बहुव्रीहौ हर्याद्यन्यपदार्थता ।
इन्द्रादावुपयुज्यन्ते हरी इत्यादयो यतः ॥९०॥
तस्मादिन्द्रादिरेव स्यात् तेषामत्रोपयोजनम् ।
इन्द्रादिसाहचर्यन्तु हर्यादीनां विवक्षितम् ॥९१॥
अव्यक्तदेवताकेषु[4] हर्यादीन्द्रादिलिङ्गतः ।
देवताप्रतिपत्त्यर्थं साहचर्यमभीप्सितम् ॥९२॥
धातवोऽत्र [5]ज्वलत्यर्था [6]दशैकश्चोत्तरे त्वतः ।
आख्यातान्यब्रवीदत्र[7] धातुशब्देन भाष्यकृत् ।
ज्वलतश्चापि[8] नामानि [9]तावन्त्येवोत्तराण्यतः ॥९३॥

[ ॥ इति पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके द्वितीयाध्यायस्य सप्तमः पादः ॥ ]

॥ इति[10] पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके द्वितीयोऽध्यायः समाप्तः ॥

---

तथैव सामान्यतोऽत्रापि वीगागमो निपात्यत इत्यर्थोऽभिप्रेतः स्यात् । तथा च काशिकाकारः दाधर्त्ति० (अष्टा० ७।४।३५) सूत्र आह इतिकरणमेवंविधानामन्येषामप्युपसंग्रहार्थम् इति ।

१. कोशे 'पत्वेकारस्य' इत्यपपाठः । २. कोशे 'सन्तनोति यथो०' इति पाठः ।
३. दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय । निरु० २।२८॥
४. कोशे '०देवताकेष्ट' इत्यपपाठः ।
५. ज्वलतिकर्माण उत्तरे धातव एकादश । निरु० २।२८॥
६. कोशे 'देशैकत्वोत्तरत्वतः' इत्यपपाठः ।
७. कोशे 'आख्यातानब्रवीदत्र' इति पाठः ।
८. तावन्त्येवोत्तराणि ज्वलतो नामधेयानि । निरु० २।२८॥
९. कोशे 'दशपञ्चोत्तरा०' इत्यपपाठः ।
१०. कोशे 'इति भगवत्प्रणीते निरुक्तवार्त्तिकश्लोके०' इति पाठः

# तृतीयोऽध्यायः

षड्विंशतिस्तु[1] नामानि [2]कर्मण उत्तराण्यतः ।
मन्प्रत्यये[3] करोतेः स्यात् कर्म कर्मणि कारके ॥१॥
क्रिया कर्मेति निर्दिष्टा परिस्पन्दादिलक्षणा ।
साध्याऽऽख्यताभिधेयेष्टा सिद्धरूपकृतामपि ॥२॥
फलस्योत्पादिका[4] सास्ति वस्तुरूपेति साधितम्[5] ।
अनेकधा प्रभिन्नापि [6]वाच्यैषामविशेषतः ॥३॥
अपत्यस्यापि[7] नामानि दशपञ्चोत्तराण्यतः ।
प्रजैवापत्यशब्दोक्ता कस्मात्त्वापत्यमुच्यते ॥४॥
डचप्रत्यये[8] तनोतेः स्याद् अपपूर्वस्य कर्तरि ।
अपत्यमिति निर्दिष्टम् अपेत्य[9] ततमात्मनः ॥५॥
पितुः[10] सर्वांशतोऽपेत्य कर्मणा [11]गर्भतां गतम् ।
शुक्रं जातमपत्यं स्यात् तच्च स्त्रीपुंमलक्षणम् ॥६॥
नानेन पततीत्येवमथवापत्यमुच्यते ।
पतेर्य्यप्रत्ययो[12] [13]धातोर्नञ्पूर्वस्य प्रकल्पितः ॥७॥

---

१. कर्मनामान्युत्तराणि षड्विंशतिः । कर्म कस्मात् ? क्रियत इति सतः । निरु० ३।१॥
२. कोशे 'दशपंचोत्तरा०' इत्यपपाठः ।
३. कोशे 'मत्प्रत्यये करोते स्यात्' इत्यपपाठः । धा० ५।७॥ उणा० ४।१४६॥
४. कोशे '०स्योत्वादिका स्यास्ति' इत्यपपाठः ।
५. कोशे 'साधितः' इति पाठः । प्रथमाध्यायस्य प्रथमपादे क्रियास्वरूपं प्रदर्शितम् ।
६. कोशे 'बाच्येषा०' इत्यपपाठः । एषाम्=अपं आदीनां निघण्टौ पठितानाम् ।
७. अपत्यनामान्युत्तराणि पञ्चदश । अपत्यं कस्मात् ? अपततं भवति, नानेन पततीति वा । निरु० ३।१॥ ८. कोशे 'त्यप्रत्यये तेनोते स्यात्' इत्यपपाठः । धा० ८।१॥
९. कोशे 'अपेत्यतममा०' इत्यपपाठः । आत्मनः शरीराद् अपेत्य पृथग् गत्वा ततं भवतीत्यर्थः । १०. कोशे 'पित्व' इत्यपपाठः । ११. कोशे 'गहतांगतः' इत्यपपाठः ।
१२. धा० १।८६८॥ १३. कोशे 'हेतो नञ्' इत्यपपाठः ।

प्रजाभिरग्न[1] इत्येवममृतत्वाप्तिहेतुता ।
प्रजानामत्र निर्दिष्टा नानेनेत्यतोऽब्रवोत् ॥८॥
अपेत्य[2] ततमित्येतत् परपक्षे न युज्यते ।
नानेन पततीत्येतत् सन्दिग्धं च [3]द्विभेदतः ॥६॥
क्रीतकृत्रिमकानीनसहोढाद्यपि[4] किं मतम् ।
अथवौरसमेवेष्टं नानेनेति[5] विवक्षितम् ॥१०॥
यथा तु[6] जनकस्यैव[7] प्रजा नान्यस्य[8] कस्यचित् ।
इत्यर्थीये ऋचावाह संशयस्यापनुत्तये ॥११॥
वसिष्ठो हतपुत्रोऽग्निं प्रार्थयन् सुतमात्मनः ।
कृत्वा क्रीत्वाऽथवा [9]कंचिद् गृहाणेत्यग्निनोदितः ॥१२॥
औरसं त्वेव देहीति मन्त्राभ्यामग्निमब्रवीत्[10] ।
पुत्रत्वमौरसस्यैव नान्यस्येति मुनेर्मतम् ॥१३॥
परिपूर्वात्[11] सदेर्धातोः[12] परिहारार्थवाचिनः ।
यत्प्रत्यये कृते रूपं परिषद्यं हि कर्मणि ॥१४॥
उपसर्गनिमित्तस्य षत्वस्येहोपलक्षणात्[13] ।
न परिवर्जनार्थोऽत्र सर्वतोभावमाह सः ॥१५॥

---

१. ऋ० ५।४।१०॥ २. कोशे 'अगत्ये नत०' इत्यपपाठः ।
३. कोशे 'त्रिभेदतः' इति पाठः ।
४. कोशे '०द्यसि किम्मतः' इत्यपपाठः । मनु० ६।१६६–१७८॥
५. कोशे 'नानेनत्ति विवक्षितः' इत्यपपाठः । ६. कोशे 'यथाज्ञ' इत्यपपाठः ।
७. तद् यथा जनयितुः प्रजा, एवमर्थीये ऋचा उदाहरिष्यामः । निरु० ३।१॥ तु०—मनु० ६।३२॥ ८. कोशे 'नानस्य' इत्यपपाठः ।
६. कोशे 'किंचित्' इत्यपपाठः ।
१०. कोशे '०ग्निरब्रवीत्' इत्यपपाठः ।
११. परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥ ऋ० ७।४।७॥
१२. कोशे 'सदेधातो' इत्यपपाठः । धा० १।६०७॥
१३. कोशे '०पलक्षितः' इत्यपपठः । अष्टा० ८।३।६६॥

कर्मप्रवचनीयत्वं [१]परेर्वर्जनवाचिनः ।
स्मर्यते[२] च परिस्तत्र[३] सदेरुक्तार्थता[४] ततः ॥१६॥
परितः सर्वतः साध्यं परिहर्तव्यमेव हि ।
रेक्णो धन[म]पत्याख्यमरणस्यारणः[५] परः ॥१७॥
रिचेर्णप्रत्यये[६] कुत्वे गुणे रेक्णो धनं स्मृतम्[७] ।
उपसर्गादृतीत्येवं[८] वृद्धयापार्णः [९]प्रसिध्यति ॥१८॥
प्रयतो म्रियमाणस्य [१०]तदत्रैव हि रिच्यते ।
न गच्छेत् सह तेनैव पुत्रोऽप्यत्रैव रिच्यते ॥१९॥
कथं[११] पुनरपत्याख्यं धनं[१२] रेक्णोऽत्र गम्यते ।
न शेष इति निर्देशाद् अन्यजातश्रुतेरपि ॥२०॥
परिहर्तव्यमित्येतद्[१३] नोपेत्यादिविशेषितम् ।
आत्मीयापत्यभावेन नोपसर्तव्यमेव तत् ॥२१॥
नित्यस्यैवोचितस्यातो धनस्यापत्यरूपिणः ।
पतयस्स्याम[१४] भूयास्म प्रसादादौरसस्य ते ॥२२॥
शेषो नापत्यमस्त्यग्ने न [१५]भवत्यन्यसंभवम् ।
अतस्तत् परिहर्तव्यम् इति हेतुस्समर्थितः ॥२३॥

---

१. कोशे 'परेवर्जन०' इत्यपपाठः । २ अपपरी वर्जने । अष्टा० १।४।८७॥

३. कोशे 'परीस्तत्रे' इत्यपपाठः ।

४. इति कर्मप्रवचनीयत्व उपसर्गत्वं बाध्येत, एकसंज्ञाधिकाराच्च न समावेशः । अनुपसर्गत्वे षत्वाभावान्न रूपनिष्पत्तिः स्यादिति सदेरेव परिहारोऽर्थः कल्प्यत इति भावः ।

५. कोशे 'ख्यममरस्यारणः' इत्यपपाठः ।

६. धा० ७।४॥ ७. निघ० २ १०॥

८. कोशे 'उपसर्गार्ददित्येवं वृद्धवेर्ण्णः' इत्यपपाठः ।

९. उपसर्गादृति (अष्टा० ६।१।८८) इत्येवं योगविभागाद् वृद्धया—अप ऋण = अपार्ण—इति प्रसिध्यतीति भावः ।

१०. तद्=धनम् । ११. कोशे 'कथा' इत्यपपाठः ।

१२. कोशे 'कधं' इत्यपपाठः ।

१३. कोशे '०तत् नोपत्या०' इत्यपपाठः । परिहर्त्तव्यं हि नोपसर्त्तव्यम् । निरु० ३।२॥

१४. कोशे 'पतयस्सम' इत्यपपाठः । १५. कोशे 'वहत्यन्यसंभवे' इत्यपपाठः ।

शुश्रूषादिकृतेनैव[1] सुखेनोन्मूढचेतसः ।
अनपत्यस्य तत् प्रेप्सोः प्रमत्तस्य भवत्यपि ॥२४॥
तृष्णार्त्तस्य[2] जलं प्रेप्सोर्मृगयतोऽम्बुधीर्यथा ।
तथैवापत्यबुद्धिः[3] स्याद् अन्योत्पन्ने सुखप्रदे ॥२५॥
ज्ञात्वैतद् भगवन्नग्ने पथो नो मा विदूदुषः ।
आस्थितान्[4] पूर्वजैर्म्मार्गानस्माकं मा विनीनशः ॥२६॥
आश्रिताः पूर्वजैर्मार्गा औरसोत्पादनादिकाः[5] ।
न त्वया दूषणीयास्ते वेदार्थमवगच्छता ॥२७॥
अरणोऽपार्णो[6] इत्येवमपार्णोऽपगतस्त्वृणात्[7] ।
ब्रह्मचर्यं प्रजा यज्ञ[8] ऋणमित्युच्यते बुधैः ॥२८॥
ऋणैरेतैस्त्रिभिर्युक्तो ब्राह्मणो ब्राह्मणोदितः ।
ऋणत्रयमपाकृत्यं[9] ब्राह्मणेनाधिकारिणा ॥२९॥
ऋणत्रयमिदं पित्रा पुत्रे संक्राम्यते यतः ।
पुत्रो[10] नापगतस्तस्माद् अन्यजोऽपगतस्त्वृणात्[11] ॥३०॥
जायमानादिवाक्येन[12] तथैतत् प्रतिपादितम् ।
हरिश्चन्द्रे तथा स्पष्टम्[13] ऋणमस्मिन्नितीरितम् ॥३१॥

---

१. कोशे 'शुश्रूषाविकृते०' इत्यपपाठः ।
२. कोशे 'तृणार्थस्यजलप्रेप्सोः मृगतोयाम्बुधिर्यथा' इत्यपपाठः ।
३. कोशे '०बुर्द्धिस्यात्' इत्यपपाठः ।
४. कोशे 'अस्थिता पूर्वजैम्भर्गानास्माकं मा विनीनिशः' इत्यपपाठः ।
५. कोशे '०पादनादकाः' इत्यपपाठः ।     ६. अरणोऽपार्णो भवति । निरु० ३।२।
७. कोशे '०पार्णोखिगसत्तृणाम्' इत्यपपाठः ।
८. तै० सं० ६।३।१०॥ बौ० स्मृ० २।६।३६॥ मनु० ४।२५७॥
९. कोशे '०मपाकृत्य' इत्यपपाठः ।     १०. कोशे 'पुत्राना०' इत्यपपाठः ।
११. कोशे '०पगतत्वृणात्' इत्यपपाठः ।
१२. जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी । तै० सं० ६।६।१०॥
१३. ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ ऐ० ब्रा० ७।१३॥

पितुर्यत् करणीयं स्यात् पुत्रस्य[1] विहितं तथा ।
आत्मा[2] वै पुत्रनामेति पितुरात्मत्वकीर्त्तनात् ॥३२॥
शेषत्वमौरसस्यैव पितुरङ्गत्वतः स्फुटम् ।
शिष्यते[3] शेष[4] इत्येवम् अत एवौप[प]द्यते ॥३३॥
उक्तस्यार्थस्य दाढर्यार्थं[5]न हीत्येषोपवर्ण्यते ।
अधा चिदोक[6] इत्येवं हेतुना दाढर्यमुच्यते ॥३४॥
अहेरायस्तु[7] कृत्यार्थे कर्मण्यव्ययकृत्[8] स्मृतः ।
न ग्रहीतव्य[9] इत्यर्थः सुशेवोऽप्यरणः स्मृतः ॥३५॥
सुखयन्नपि न ग्राह्यः परः पुत्रतयात्मनः ।
अप्यर्थे स्यादुकारोऽत्र कृत्यार्थे च तवै तथा ॥३६॥
मनसापि न मन्तव्यः पुत्रत्वेनान्यबीजजः ।
अन्यस्य बीजमेवाहुरन्योदरपदेरितम् ॥३७॥
अर्त्तेस्स्यादुदरं[10] रूपमुत्पूर्वस्याचि कर्तरि ।
उदृतं[11] ह्युद्गतं बीजं तेनेहोदरमीरितम् ॥३८॥
अन्योदर्य्योऽन्यरेतोजस्तेनेह[12] प्रतिपादितः ।
सहोढः क्षेत्रजश्चैव कानीनो विनिवारितः ॥३९॥

---

१. कोशे 'पुत्रस्याविहितं' इत्यपपाठः ।
२. कौषी० आ० ४।११॥
३. कोशे 'शिष्यतेश्शिष' इत्यपपाठः । धा० ७।१४॥
४. शेष इत्यपत्यनाम । शिष्यते प्रयतः । निरु० ३।२॥
५. कोशे 'नहीत्यषो०' इत्यपपाठः । तथा च मन्त्रः—
न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित् स एत्या नो वाज्यभीषाडेतु नव्यः ॥ ऋ० ७।४।८॥
६. कोशे 'असापिदोक' इत्यपपाठः ।
७. धा० ६।६१॥
८. कोशे 'कर्मण्यव्यकृत्' इत्यपपाठः ।
९. कोशे 'गृही०' इत्यपपाठः ।
१०. कोशे 'अर्त्तेस्या०' इत्यपपाठः । धा० ३।१६॥
११. कोशे 'उदतं' इत्यपपाठः ।
१२. कोशे 'अन्योदय्योन्यरेतोजं' इत्यपपाठः ।

परक्षेत्राद् भवः पूर्वं सुशेवोऽपि ह्यसंशयम्[१] ।
अन्यस्याग्राह्यताहेतुरधा[२] चिदिति कथ्यते ॥४०॥
अधशब्दोऽत्र[३] हेत्वर्थश्चिदित्येषोऽप्यनर्थकः ।
पश्चाद्भावे पुनश्शब्द[४] इदित्येषोऽवधारणे ॥४१॥
पुनरेव तदेत्योकः[५] पुत्रत्वेनापि कल्पितः ।
यतोऽसावागतः पूर्वं [६]स्वगोत्राख्यमनुस्मरन् ॥४२॥
विक्रीतोऽपि शुनश्शेपः पित्रालब्धो जिघांसितः[७] ।
असन्त्यज्य कुलं[८] पूर्वं वैश्वामित्रो बभूव ह ॥४३॥
किं पुनः स्नेहसंयुक्तः पुनर्गच्छेत् पितॄन् इति ।
अतोऽस्मानेतु[९] वाज्येव नव्यो वेजनवान् नवः[१०] ॥४४॥
बाल्याद्वेजनवान् क्रीडन्[११] नव्यो नवसमुद्भवः ।
अन्यजोऽन्यस्य पुत्रस्सन् अनव्यो जायते पुनः ॥४५॥
उचेरोको[१२] भवेदोत्वे [१३]चस्य चान्त्यस्य कुत्वतः ।
ण्विप्रत्यये[१४] सहेर्वृद्धौ भवेद् दैर्घ्ये हढत्वतः[१५] ॥५६॥

---

१. कोशे '०वोपित्यसंशयम्' इत्यपपाठः ।

२. कोशे '०ग्रह्यताहेतुः अथाचि०' इत्यपपाठः ।

३. कोशे 'अथशब्दोत्र' इत्यपपाठः ।

४. कोशे 'इतीत्येषावधा०' इत्यपपाठः ।

५. कोशे 'तदेत्याक्तः' इत्यपपाठः ।

६. ओकसो विशेषणमेतत् ।

७. कोशे 'जिघंसितः' इत्यपपाठः ।

८. कोशे 'कूलं' इत्यपपाठः ।

९. कोशे '०ःमान्तुबाज्येन' इत्यपपाठः ।

१०. कोशे 'नमः' इत्यपपाठः ।

११. कोशे 'क्रीत' इत्यपपाठः ।

१२. कोशे 'पचेरेको' इत्यपपाठः । ओक इति निवासनामोच्यते । निरु० ३।३।। धा० ४।११४।। उच्यतेः घनर्थे कप्रत्यये (महाभाष्य ३।३।५८), ओक उचः के (अष्टा० ७।३।६४) इति गुणकुत्वे निपात्येते । असुनि पुनर्बाहुलकात् कुत्वम् ।

१३. कोशे 'वस्यास्यंत्यस्य तत्वतः' इत्यपपाठः ।

१४. कोशे 'टिप्रये' इत्यपपाठः ।

१५. कोशे 'हनत्वतः' इत्यपपाठः ।

जश्त्वे[1] चर्त्वे तथा [2]रूपमभीषाडिति वैदिकम्[3] ।
सपत्नानिति[4] सामर्थ्याद् भाष्यकारेण कल्पितम् ॥४७॥
सपत्नाभिभवे शक्तः पुत्रो मे जायतामिति ।
मन्त्राभ्यामौरसस्त्वेव पुत्र इत्युपपादितम् ॥४८॥
क्षेत्रजादिषु[5] पुत्रत्वम् उपचारात् प्रकल्पितम् ।
स्वगोत्रोच्छेदसंप्राप्ता[6] अनुज्ञातमथापि वा ॥४९॥
तच्चोदकेषु[7] मन्त्राख्या प्रामाण्यं तेषु[8] विद्यते ।
तस्मादुक्तार्थता नैषां भवेदन्यपरत्वतः ॥५०॥
प्रार्थना चाप्यचैतन्याद् अग्नेर्नैवोपपद्यते ।
चैतन्यं च प्रसज्येत प्रामाण्यं यदि कल्प्यते ॥५१॥
अर्थवत्त्वं तु मन्त्राणां युक्त्या सम्यगवस्थितम्[9] ।
अर्थोऽपि द्विविधस्तेषां सिद्धोऽसिद्धश्च गम्यते ॥५२॥
सिद्धेऽनुवादतैतेषाम् असिद्धे स्यात् प्रमाणता ।
ब्राह्मणस्यापि मार्गोऽयं न सर्वस्य[10] प्रमाणता ॥५३॥
असिद्धे श्रूयमाणेऽर्थे प्रामाण्यं स्याद् [11]द्वयोरपि ।

---

१. कोशे 'जस्त्वे' इत्यपपाठः ।

२. कोशे 'रूपं महिषा०' इत्यपपाठः ।

३. सहधातोः (धा० १।९०५) छन्दसि सह (अष्टा० ३।२।६३) इति ण्विप्रत्यये, अत उपधायाः (अष्टा० ७।२।११६) इति वृद्धौ, अन्येषामपि० (अष्टा० ६।३।१३६) इति दीर्घत्वे, हो ढः (अष्टा० ८।२।३१) इति ढत्वे. झलां जशोऽन्ते (अष्टा० ८।२।३९) इति जश्त्वे अभीषाडिति रूपं वैदिकं साधु । ग्रन्थकारोक्तं चर्त्वं तु प्रकृते न प्रवर्त्तते, संहितयावसानस्य बाधितत्वात् ।

४. अभिषहमाणः सपत्नान् । निरु० ३।३॥

५. कोशे '०दिष्ट वृत्रत्वं उपचारान्' इत्यपपाठः ।

६. कोशे '०संप्राप्तो अनु०' इत्यपपाठः । संप्राप्तौ अनु० = संप्राप्ता अनु० ।

७. कोशे '०दकेष्ट' इत्यपपाठः । पू० मी० २।१ ३२॥

८. कोशे 'तेष्ट' इत्यपपाठः ।

९. प्रथमाध्यायस्य प्रथमपादे ।

१०. कोशे 'सर्वास्य' इत्यपपाठः ।

११. कोशे 'स्याद्वयो०' इत्यपपाठः ।

ब्राह्मणत्वं न हेतुः[1] स्यात् प्रामाण्यस्य विजानताम् ॥५४॥
नन्वौरसस्य[2] पुत्रत्वं सिद्धं लोकप्रसिद्धितः ।
नियमस्य[3] प्रसिद्धत्वात् तत्र मन्त्रप्रमाणता ॥५५॥
क्षेत्रजादिनिवृत्तिश्च नियमस्य फलं भवेत् ।
ब्राह्मणस्य नियुक्तस्य ब्रह्मयज्ञे यथा तव ॥५६॥
प्रामाण्यमप्रसिद्धेऽर्थे मन्त्रस्यापि तथैव[4] नः ।
निश्चितं हि यथा ज्ञानं ब्राह्मणादुपजायते ॥५७॥
मन्त्रादपि तथैवेति प्रामाण्यमुभयोस्समम् ।
चैतन्यस्य प्रसङ्गोऽस्तु [5]चेतना देवतास्ति हि ॥५८॥
कर्मात्मव्यतिरेकेण सप्तमे तच्च वक्ष्यते[6] ।
यद्यप्यन्यपरो मन्त्रः सार्थवादस्तथापि तु ॥५९॥
तन्मूलस्य प्रमाणत्वं विज्ञानस्येह संश्रितम् ।
घटायोन्मीलितान् नेत्रात्[7] पटे जाता यथा मतिः ॥६०॥
प्रमाणं तद्वदेव स्यात् मन्त्रादुक्तार्थगोचरात् ।
नानेन [8]पततीत्येतद् अपेत्य ततमित्यपि ॥६१॥
आत्मजे[9] युज्यतेऽपत्ये नान्यजे त्विति सावितम् ।
स्त्रीपुंसलक्षणं तच्च तथैव स्यान्नपुंसकम् ॥६२॥
तृतीयं[10] धर्मबाह्यत्वाद्[11] औरसत्वेऽप्युपेक्षितम् ।
स्त्रीपुंसयोरपत्यत्वम् अविशेषेण किं मतम् ॥६३॥
पुंस[4] एवाथवात्रेष्टं[12] संशयो मतिभेदतः ।

---

१. कोशे विसर्गरहितः पाठः । २. कोशे 'न त्वौरसस्य' इत्यपपाठः ।
३. चोद्यमपाकरोति—नियमस्येति ।
४. कोशे 'तथैवतः' इत्यपपाठः । ५. कोशे 'चेता' इत्यपपाठः ।
६. अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः । निरु० ७।७॥
७. कोशे 'नेत्रान् पदे जाता' इत्यपपाठः ।
८. कोशे 'वततीत्येतत् अपेत्यतममि०' इत्यपपाठः ।
९. कोशे 'आत्मज्ञे' इत्यपपाठः । १०. नपुंसकमित्यर्थः ।
११. कोशे 'धर्मबाहुत्वात्' इत्यपपाठः । १२. कोशे '०वा श्रेष्ठं साशयो' इत्यपपाठः ।

संशये[1] वक्ष्यमाणाभिर्युक्तिभिर्निर्णयस्तथा ॥६४॥
उच्यते भाष्यकारेण पक्षद्वयपुरस्सरः ।
अथैनामित्युपक्रम्य[2] पक्षद्वयनिरूपणम् ॥६५॥
मन्त्रैः स्मृत्यार्थवादैश्च भाष्यकारः करोत्यतः ।
स्त्रीपुंसयोरपत्यत्वं द्वयोरप्यविशेषतः ॥६६॥
इष्यते कैश्चिदन्यैस्तु[3] पुंस एव विशेषतः ।
औरसत्वाविशेषेण द्वयोरप्यविशिष्टता ॥६७॥
अपत्यत्वस्य वै हेतोर्वाच्ये[4] यद् दुहितुर्मुनिः ।
दायाद्ये कारणं प्राह न तत् प्रस्तुतसाधनम् ॥६८॥
ऋचा दायादता नापि दुहितुः स्पष्टमीरिता ।
पर्यायत्वान्न दोष[5] स्याद् दायादापत्यशब्दयोः ॥६९॥
अपत्यमौरसं प्रोक्तं दायादोऽप्यौरसः [6]सुतः ।
दायमादत्त इत्येवं दायः[7] स्यात् पैतृकं धनम् ॥७०॥
अपैतृके धने गौणं दायशब्दस्य वर्तनम् ।
सुताभावे सपिण्डोऽपि दायादो गौणवृत्तितः ॥७१॥
दायादा यदि सर्वे स्युः सपिण्डा[8] मुख्यवृत्तितः ।
औरसेन सपिण्डोऽपि समभागः प्रसज्यते ॥७२॥
न चैतदिष्यते लोके शास्त्रे वापि [9]प्रकृष्टतः ।
अतो दायादशब्देन स्वापत्यमभिधीयते[10] ॥७३॥

---

१. कोशे 'संशयो' इत्यपपाठः ।
२. अथैतां दुहितृदायाद्य उदाहरन्ति । पुत्रदायद्य इत्येके । निरु० ३।३॥ अथैनामिति स्कन्दपाठः ।
३. कोशे '०दन्यस्तु' इत्यपपाठः ।
४. कोशे 'यदुहितु०' इत्यपपाठः ।
५. कोशे विसर्गरहितः पाठः ।
६. कोशे '०रसः स्सुतः' इत्यपपाठः ।
७. कोशे 'दायाध्यात् पैतुकं' इत्यपपाठः ।
८. कोशे 'सपिण्डं' इत्यपपाठः ।
९. कोशे 'प्रकष्टतः' इत्यपपाठः ।
१० कोशे '०त्यमदिधीयते' इत्यपपाठः ।

आत्मनस्सन्निकृष्टत्वादात्मैवापत्यमिष्यते ।
दायाद्यापत्यतासिद्धचा[1] ऋचं [2]शासदितीदृशीम् ॥७४॥
उदाहरन्ति विद्वांसो दुहितुस्त्वपरे[3] पुनः ।
पुत्रदायाद्य इत्येवं तथैवार्थोपपत्तितः ॥७५॥
पुत्रवद् दुहितापत्यमित्यर्द्धर्चेन[4] वर्ण्यते ।
शासत् प्रशास्ति पुत्रत्वम् आचष्टे दुहितुः पिता[5] ॥७६॥
पितैव[6] वह्निरित्युक्तो दुहितुर्वोढृभावतः ।
प्रयान् प्रायस्सुतामङ्के वहति स्नेहतः पिता ॥७७॥
वहन् वा प्रापयन् वह्निः पिता जामातरं प्रति ।
प्रशास्ति [7]दुहितुर्नप्त्यमिति संबन्धसंभवे ॥७८॥
पुत्रभावमिति त्वेतत्[8] किमर्थं परिकल्पितम् ।
गादित्यस्यैव[9] कर्मत्वं नप्त्यमित्यस्य भाष्यकृत् ॥७९॥
युक्तमित्येव संचिन्त्य पुत्रभावमकल्पयत्[10] ।
विद्वानित्यस्य कर्मत्वं [11]गतं दीधितिमित्यपि ॥८०॥
पुत्रभावपदाक्लृप्तौ [12]गादिति स्यादकर्मकम् ।
दौहित्रं च परित्यज्य दुहितुः पौत्रसंग्रहः ॥८१॥
प्रसज्येतान्यथा नैव तस्मात्तत् परिकल्पनम् ।
सकाशाद् दुहितुर्नप्त्यम् आशास्त इति चेन्मतम् ॥८२॥

---

१. कोशे 'दायाद्यपत्यता सिद्धा पृचं' इत्यपपाठः । ०सिद्धयै ऋचं=०सिद्धया ऋचं ।
२. शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् ।
पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥ ऋ० ३।३१।१॥
३. कोशे '०त्वपरै' इत्यपपाठः । ४. कोशे '०मित्यर्द्धच्चेन' इत्यपपाठः ।
५. कोशे 'पित:' इत्यपपाठः । ६. कोशे 'पितेवन्निरित्तुक्ते' इत्यपपाठः ।
७. कोशे 'दुहितापत्यमिति' इत्यपपाठः ।
८. प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम् । निरु० ३।४॥
९. कोशे 'शादित्य०' इत्यपपाठः ।
१०. कोशे '०कल्पयन्' इत्यपपाठः ।
११. कोशे 'गतङ्गीधिति०' इत्यपपाठः । १२. कोशे 'शादित्यस्याद०' इत्यपपाठः ।

दुहितुः पुत्रभावो नस्तथापीष्टः प्रसिध्यति ।
नापुत्रस्य सुतः पौत्रः पौत्रश्चेद् दुहितुस्सुतः ॥८३॥
दुहितुः पुत्रता सिद्धा सर्वथैतद् विवक्षितम् ।
नप्तैव[1] नप्त्यशब्दोक्तो [2]नप्तृशब्दान्त्ययत्वतः ॥८४॥
दौहित्रं[3] पौत्रमित्येवमुपागान्मनसा यतः ।
ततस्सन्तानधर्मार्थं तस्याश्शास्ति स पुत्रताम् ॥८५॥
इयं[4] मे दुहिता पुत्र इत्यर्थोऽत्र विवक्षितः ।
सन्तानकर्म चापीष्टं[5] पिण्डदानादिलक्षणम् ॥८६॥
दौहित्रश्चैव पौत्रश्च नप्ता[6] यद्यपि भण्यते ।
तथापीह भवेन्नप्ता दौहित्रो दुहितुः श्रुतौ ॥८७॥
अवगच्छति पौत्रत्वं दौहित्रस्य यतः पिता ।
पुत्रभावमतः शास्ति तन्मातुरिति योजनम् ॥८८॥
ऋतमित्युच्यते[7] यज्ञः[8] सोऽपत्यजननात्मकः[9] ।
रेतो वा स्वाङ्गसंभूतं स्त्रीयोनि [10]प्रत्यृतत्वतः ॥८९॥
विजानन्[11] दीधितिं तस्य व्यापारं पूजयन्नपि ।
दौहित्रं पौत्र इत्येव हृदयेनावगच्छति ॥९०॥
गर्भाधानपरिज्ञानं दीधितिज्ञानमत्र तु ।
तस्याप्याचरणं पूजा यद्वा [12]गार्हस्थ्यपालनम् ॥९१॥

---

१. कोशे 'नप्त्यैव' इत्यपपाठः । २. कोशे नप्तुशब्दन्त्य०' इत्यपपाठः ।
३. नप्तारमुपागमत्, दौहित्रं पौत्रमिति । निरु० ३.४।
४. कोशे 'इयम्म दुहिता' इत्यपपाठः ।
५. कोशे 'चापिष्टं' इत्यपपाठः ।
६. कोशे 'नप्त्या' इत्यपपाठः । ७. कोशे 'ऋतमिच्युते' इत्यपपाठः ।
८. विद्वान् प्रजननयज्ञस्य, रेतसो वा । अङ्गादङ्गात् संभूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य । विज्ञानं पूजयन् । निरु० ३.४।
९. कोशे '०जनकात्मकः' इत्यपपाठः । १०. कोशे 'प्रत्युतत्वतः' इत्यपपाठः ।
११. कोशे 'विजातङ्घीधितन्तस्य' इत्यपपाठः ।
१२. कोशे 'गर्हस्यपा०' इत्यपपाठः ।

स्त्रीपुंसयोरिहोत्पादे विशेषो यद्यपि स्मृतः ।
तथापि नादृतो लोके व्यभिचारी च दृश्यते ॥६२॥
अविशेषेण[1] विज्ञेया इति युक्त्या प्रतीयते ।
स्त्रीपुंसलक्षणा पुत्रा दायादा मिथुनास्ततः ॥६३॥
अविशेषेण निर्देशः तेन भाष्यकृता कृतः ।
दुहिता[2] [3]दुर्हितेत्युक्ता दुःखेन निहिता गृहे ॥६४॥
दूरक्ष्यता[4] निरुक्तैवं दुरन्त्यस्य विलोपतः ।
दूरे सत्यपि यद्वा सा हिता स्यात् पुत्रभावतः ॥६५॥
इते[5] कर्तरि [6]दोग्धेर्वा दुहिता प्रत्यये स्मृता ।
पुत्रत्वाद् दोग्धि रिक्थं[7] सा पैतृकं पितरं[8] सदा ॥६६॥
दत्तापि वहते रिक्थं[9] पितुः पुत्रवदेव सा ।
ऋक्श्लोकाभ्यामपि[10] त्वेतत् स्पष्टमेवोपपादितम् ॥६७॥
भुक्तमन्नं [11]त्रिधा तावत्[12] पच्यते जाठराग्निना ।
तत्रैकं जायते किट्टं श्ले[ष्म]मूत्रपुरीषकम् ॥६८॥
सारस्तु यो रसस्तत्र स्वच्छो हृद्गोचरं गतः ।
शोणितं जायते तस्मात् ततो मांसं प्रजायते ॥६९॥

---

१. अविशेषेण मिथुनाः पुत्रा दायादा इति । निरु० ३।४॥
२. दुहिता दुर्हिता, दूरे हिता, दोग्धेर्वा । निरु० ३।४॥
३. कोशे 'दुहितेत्युक्ता' इत्यपपाठः ।
४. कोशे 'दुरक्ष्यत्वं निरुक्तैव दुरन्तस्य' इत्यपपाठः ।
५. कोशे 'उते' इत्यपपाठः । ६. धा० २।४॥
७. कोशे 'रित्थं' इत्यपपाठः ।
८. अकथितं च (अष्टा० १।४।५१) 'इति कर्मत्वम् ।
९. कोशे 'रित्थं' इत्यपपाठः ।
१०. तदेतदृक्श्लोकाभ्यामभ्युक्तम् । निरु० ३।४॥
११. स्कन्दः सारकिट्टरूपेण द्वेधा पाकमभिमेने । अयं व्याख्याकारस्तु किट्ट-हृदयस्थ-सारबीजस्थसाररूपेण त्रिधा पाकं प्रदर्शयति ।
१२. कोशे 'तद्वत्' इति पाठः ।

मांसात् प्रजायते मेदो मेदसोऽस्थीन्यपि स्फुटम् ।
अस्थिभ्यो जायते मज्जा ततः [1]शुक्रं प्रवर्तते ॥१००॥
निषिक्तं तदिदं योनावार्तवेनापि संगतः ।
कललादिक्रमेणैव शरीरत्वं प्रपद्यते ॥१०१॥
रसः सारस्ततश्चापि[2] बीजस्थो द्योतनात्मकः ।
चक्षुरादीन्द्रियत्वेन परिणामं प्रपद्यते ॥१०२॥
सर्वेभ्योऽङ्गेभ्य[3] एव त्वं [4]हृदयादधिजायसे ।
पुत्रनामाहमेव[5] त्वं स जीव शरदां शतम् ॥१०३॥
उभयोरपि जन्मैवं सममाशासनं तथा ।
स्त्रीपुंसलक्षणाः[6] पुत्राः मिथुना [7]मनुनोदिताः ॥१०४॥
सृष्टयादावविशेषेण[8] दायश्चैषां प्रकल्पितः ।
पुत्रदायाद[9] इत्येतद् यदुक्तं तत् समर्थयन् ॥१०५॥
नैव[10] दुहितरो दायं लभन्ते त्वित्यथाब्रवीत् ।
तस्मादित्यादिवाक्येन[11] पुमान्दायाद ईरितः ॥१०६॥
अदायादा[12] तथैव स्त्री [13]श्रुत्यैवान्यविधित्सया ।

---

१. कोशे 'शुक्लं' इति पाठः । २. कोशे '०ततत्वापि' इत्यपपाठः ।
३. कोशे 'ङ्गेद्य' इत्यपपाठः । भवति चात्र—
अङ्गादङ्गात् संभवसि हृदयादधिजायसे ।
आत्मा वै पुत्र-नामासि स जीव शरदः शतम् ॥ शत० ब्रा० १४।९।४।८॥
४. कोशे '०दभिजायसे' इति पाठः । ५. कोशे '०नामानमेव' इत्यपपाठः ।
६. अविशेषेण पुत्राणां दायो भवति धर्मतः ।
मिथुनानां विसर्गादौ मनुः स्वायंभुवोऽब्रवीत् ॥ तु०—मनु० ९।१३०, १३३, १३९॥
७. कोशे 'मनुनादिताः' इति पाठः ।
८. कोशे 'सृष्टयभावविशेषेण' इत्यपपाठः ।
९. कोशे '०दाय इत्ये०' इत्यपपाठः ।
१०. कोशे 'नैववन्दुहितरो' इत्यपपाठः । न दुहितर इत्येके । निरु० ३।४॥
११. तस्मात् पुमान् दायादोऽदायादा स्त्री, इति विज्ञायते । तस्मात् स्त्रियं जातां परास्यन्ति न पुमांसम्, इति च । निरु० ३।४॥
१२. कोशे 'आदायादा' इत्यपपाठः । १३. कोशे 'श्रुत्येवान्य०' इत्यपपाठः ।

स्थालीनां रेचनं चैव दारवारेचनं तथा ॥१०७॥
श्रुत्या[1] विधित्सितं यत्र तत्रैतदुभयं[2] श्रुतम् ।
स्थालीनिरसना यत्र दारवोद्धरणं[3] तथा ॥१०८॥
स्त्रियः [4]परासनं तत्र न पुंसश्श्रूयते[5] तथा ।
स्त्रियं जातां परास्यन्ति न [6]पुमांसमिति श्रुतिः ॥१०९॥
स्त्रीणां[7] दानादिभावाच्च पुत्रत्वं नैव विद्यते ।
दानं ब्राह्मे विवाहे [8]स्यात् तथा शुल्केन विक्रयः[9] ॥११०॥
अल्पोऽथवा[10] बहुर्वा हि विक्रयस्तावदेव सः ।
इत्युक्तं धर्मशास्त्रज्ञैः पत्युः क्रीतेति च श्रुतिः[11] ॥१११॥
स्वयंवरेऽतिसर्गोऽपि गान्धर्वे चापि विद्यते ।
उक्तस्य व्यभिचारार्थं [12]पुंसोऽपीत्यब्रवीत् परः ॥११२॥
पुंसोऽपि दृश्यते दानम् [13]अनेन त्वा यजा इति ।
तेनात्मानमिति [14]प्रोक्तं निष्क्रीणा इति विक्रयः ॥११३॥

१. अथ यत् स्थाली रिञ्चन्ति न दारुमयं तस्मात् पुमान् दायादः स्त्र्यदायादा । अथ यत् स्थालीः परास्यन्ति न दारुमयं तस्मात् स्त्रियं जातां परास्यन्ति न पुमांसम् । मै० सं० ४।६।४॥

२. कोशे 'तत्रैतदुदयं' इत्यपपाठः ।

३. अवभृथार्थं गमिष्यन्तो मृन्मयीं स्थालीं वेद्यां परास्यन्ति (त्यजन्ति), दारुमयानि पात्राणि चोद्धरन्ति (अवभृथस्थलं नयन्ति) सोमयागे ।

४. कोशे 'मारासनं' इत्यपपाठः ।

५. कोशे 'पुंसश्श्रयते' इत्यपपाठः ।

६. कोशे 'पुमोसमिति' इत्यपपाठः ।

७. स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः । नि०रु ३।४॥

८. कोशे 'न्यात्' इत्यपपाठः ।

९. तु०—गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी । मनु० ३ ५१॥

१०. तु०—स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेवः सः । महाभारत । १।१७।५(=१।२४५।५) ॥

११. अनृतं वा एषा करोति या पत्युः क्रीता सत्यन्यथान्यैश्चरति । मै० सं० १।१०।११॥

१२. पुंसोऽपीत्येके, शौनःशेपे दर्शनात् । निरु० ३।४॥

१३. स पितरमेत्योवाच तत हन्ताहमनेनात्मानं निष्क्रीणा इति । त वरुणं राजानमुपससारानेन त्वा यजा इति । ऐ० ब्रा० ७।१५॥

१४. कोशे 'प्रोक्ता' इत्यपपाठः ।

ज्यायसामतिसर्गोऽपि पुत्राणां श्रूयते[1] तथा ।
विश्वामित्रकृतस्तद्वद् ज्येष्ठस्य सगरेण[2] च ॥११४॥
मन्त्रार्थवादवाक्यानां [3]दृष्टायां बहुधा गतौ ।
संशये तन्निवृत्त्यर्थं न्यायमाहात्र भाष्यकृत् ॥११५॥
दायादाभ्रातृकैवेष्टा[4] न [5]सर्वेति मुनेर्मतम् ।
यथा तथेह वक्ष्यामो मन्त्रश्चाथर्वणस्तथा ॥११६॥
अमूर्या[6] यन्ति जामयः [7]सर्वा लोहितवाससः ।
अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः[8] ॥११७॥
आर्तवस्यातिसंवाहे[9] स्त्रीणां तद्विनिवृत्तये ।
विहिते विनियुक्तोऽयं [10]कर्मण्यास्थापनात्मके ॥११८॥
तिष्ठावरे[11] इति त्वस्यां परस्यां [12]धमनिश्रुतेः ।
नाड्य[13] एव विनिर्दिष्टाः स्त्रीलिङ्गेन ह्यमूरिति ॥११९॥
तिष्ठावरे[14] तिष्ठ पर उत त्वं तिष्ठ मध्यमे ।
कनिष्ठिका च तिष्ठति तिष्ठादिद् धमनिर्मही ॥१२०॥

---

१. ऐ० ब्रा० ७।१८॥

२. द्र०—रामा० १।३८॥ महाभारत वन० १०५–१०७॥

३. कोशे 'दष्टायां' इत्यपपाठः ।

४. अभ्रातृमतीवाद इत्यपरम् । निरु० ३।४॥

५. कोशे 'सर्वेत्रि' इत्यपपाठः ।

६. अमूर्या यन्ति जामयः सर्वा लोहितवाससः ।
अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः ॥ तु०— अथर्व (शौ०) १।१७।१॥

७. कोशे 'सर्वलोहित०' इति पाठः ।

८. कोशे 'हतपर्क्षसः' इत्यपपाठः । 'हतवर्चसः' इत्याथर्वणः पाठः ।

९. कोशे 'आर्तव्यस्या०' इति पाठः ।

१०. कोशे '०स्थायकात्मके' इति पाठः ।

११. अथर्व० (शौ०) १।१७।२॥

१२. कोशे 'धतत्रिश्रुतेः' इत्यपपाठः ।

१३. कोशे 'नाढ्य एवे विनिर्दिष्टा स्त्रीलिङ्गन' इत्यपपाठः ।

१४. अथर्व० (शौ०) १।१७।२॥ मन्त्रपाठोऽपपाठबहुलः कोशे ।

नाड्यो[1] लोहितवाहिन्यो या अमूर्यन्ति जामयः ।
तिष्ठन्ति [2]हतवर्त्मानस्तास्तत्राभ्रातृका यथा ॥१२१॥
एकयोन्यभिसंबद्धा [3]जामयो जामितुल्यतः ।
लोहितस्यातिरिक्तस्य वहनाद्वातिरेकतः[4] ॥१२२॥
वसाना[5] लोहितं वर्णमुक्ता लोहितवाससः ।
कुर्वन्त्यो लोहितं वापि वासो [6]लोहितवाससः ॥१२३॥
अभ्रातृका यथा नार्यः पितुः सन्तानकर्मणे ।
पत्युरर्थादुपावृत्तास्तिष्ठन्त्येव गता अपि ॥१२४॥
तथा नाड्योऽपि तास्सर्वा [7]विनिवृत्ताः प्रवाहतः ।
स्थेयासुः[8] कर्मणानेन तत्रैव विनिवारिताः[9] ॥१२५॥
बहिरर्थ[10] नि[रि]त्येष गमनं वाह उच्यते ।
उपमानेन सिद्धोऽयम् अनिर्वाहो यथोदितः ।१२६॥
दत्ताप्यभ्रातृका[11] नारी पुत्रसंतानसिद्धये ।
निवर्ततेति[12] निर्दिष्टं मन्त्रेणान्यपरेण वै ॥१२७॥
उक्तस्यार्थस्य दाढर्यार्थम् [13]अभ्रातेवेति वर्ण्यते ।
पुंस[14] एति प्रतीचीति दाढर्यमस्यां हि दृश्यते ॥१२८॥

---

१. कोशे 'नाढयो' इत्यपपाठः ।
२. कोशे '०वत्र्मानि तास्तत्राभातृका' इत्यपपाठः ।
३. कोशे 'ज्यामयो' इत्यपपाठः ।
४. कोशे '०द्वात्रिरेकतः' इत्यपपाठः ।
५. कोशे 'वधाना' इत्यपपाठः । ६. कोशे 'लोहत०' इत्यपपाठः ।
७. कोशे 'विनिवृत्ता' इत्यपपाठः ।
८. कोशे 'स्थेयोस्य' इत्यपपाठः । ९. कोशे '०वारितः' इत्यपपाठः ।
१०. इत्यभ्रातृकाया अनिर्वाह औपमिकः । तस्योतरा भूयसे निर्वचनाय । निरु० ३।४॥
११. कोशे 'वृत्ताप्यनादृता' इत्यपपाठः ।
१२. कोशे 'नवर्त्ततेति' इत्यपपाठः । १३. कोशे 'अभ्रात्रेति' इत्यपपाठः ।
१४. अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥ ऋ० १।१२४।७॥

द्वितीया पञ्चमी चापि पुंस इत्येतदत्र तु ।
द्वितीयात्वेऽस्य वाच्यं स्यात् पितृनित्युदितं[1] स्फुटम् । १२९॥
सकाशात् [2]पत्युरित्यर्थः पञ्चमी यदि सम्मता ।
अध्याहार्यं[3] द्वितीयान्तं प्रथमे पत्युरित्यपि ॥१३०॥
दत्ताप्यभ्रातृका[4] पुंसः प्रतीच्येति पितॄन् प्रति ।
पत्युः कार्यमकृत्वैव[5] पितृकार्यप्रसिद्धये ॥१३१॥
अभ्रातृका[6] यतो जाता तमेवैति यथा तथा ।
उषा अपि यतो जाता तमेवादित्यमृच्छति[7] ॥१३२॥
आदित्योदयवेलायाम् [8]अदृश्यत्वात् तथोच्यते ।
गर्तारुगिव[9] जायेव हस्रेवासा उषाः स्वकम् ॥१३३॥
रूपं निर्गमयत्येषा निस्सृता सूर्यमण्डलात् ।
गर्तापूर्वाद्रुहेर्धातोः[10] क्विपि ताच्छीलिके कृते ॥१३४॥
गर्तारुगिति रूपं स्यात् साग र्तारोहिणीरिता[11] ।
सापत्यं दक्षिणाजानां[12] [13]दाक्षिणाजीत्युदाहृता ॥१३५॥

---

१. कोशे '०दितस्फुटम्' इत्यपपाठः ।

२. कोशे 'वेत्युशीत्यर्थः' इत्यपपाठः

३. कोशेऽनुस्वाररहितः पाठः ।

४. कोशे 'दत्ताप्यभ्रातृकाः पूंसां' इत्यपपाठः । अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिम् । निरु० ३।५॥

५. कोशे '०मवृत्वेव' इत्यपपाठः ।

६. कोशे 'अभ्रातृक' इत्यपपाठः ।

७. कोशे '०दित्यमिच्छति' इत्यपपाठः ।

८. कोशे 'आदृश्य' इत्यपपाठः ।

९. कोशे '०रुजिव जायेव हस्वेवास उषास्वकम्' इत्यपपाठः ।

१०. कोशे '०र्धातो क्विहिताच्छीलके' इत्यपपाठः । धा० १।६१२॥ अष्टा० ३।२।१७८॥

११. कोशे '०णीरितम्' इत्यपपाठः । गर्तारोहिणीव धनलाभाय दक्षिणाजी । निरु० ३।५॥

१२. कोशे 'दक्षिणाज्ञानात् दक्षिणाजित्युदा०' इत्यपपाठः ।

१३. दक्षिणात्या इति दुर्गः; दक्षिणाजा इति यास्कोऽन्यत्र (निरु० ६।६); दक्षिणाजी इति स्कन्दः ।

कितवा दक्षिणाजास्स्युस्तामजन्ति[1] क्षिपन्ति ते ।
दक्षिणेति[2] धनं प्रोक्तं निर्जिताः प्रक्षिपन्ति तत् ॥१३६॥
आक्षिपन्त्यथवा जित्वा दक्षिणाजास्ततः स्मृताः ।
गर्तशब्दाभिधेयस्तु[3] सभास्थाणुरितीरितः ॥१३७॥
अक्षावपनपीठं तु [4]सभास्थाणुः प्रचक्षते ।
तस्या आरोहणार्थं तु क्लृप्तं स्थाणुं परे विदुः ॥१३८॥
सभास्थानमिति[5] त्वन्ये कितवस्थानमेव तत् ।
तप्रत्यये गुणे चैव गिरतेर्गर्त[6] उच्यते ॥१३९॥
सत्यं [7]संगिरतीत्येव गर्तोऽसौ सत्यसंगरः ।
सत्यं भक्षयतीत्यर्थो भक्षणं त्याग एव तु ॥१४०॥
सत्यं सन्त्यज्यते तत्र प्रायेण कितवैर्यतः ।
सत्यसंगर इत्येवं ततो भाष्यकृदब्रवीत् ॥१४१॥
शपथं खादयित्वा ते पक्षिणा लिखितेन तु ।
पुनर्द्यूते प्रवर्तन्ते व्यसनाकृष्टचेतसः ॥१४२॥
दुहिता कितवानां हि यापुत्रापतिकाधना ।
सारोहत्यर्थलाभाय तं[8] गर्तं कितवान्तिके ॥१४३॥
अक्षेण तामथाघ्नन्ति कितवा भृशदुःखिताः ।
गच्छ गच्छ [5]सभास्थाणोरित्युक्त्वा लज्जयान्विताः ॥१४४॥

---

१. कोशे '०तामजन्ती क्षिपन्त्रि' इत्यपपाठः । ताम्=दक्षिणाम् ।

२. कोशे 'दक्षिणेनि' इत्यपपाठः ।

३. कोशे '०शब्दोभि०' 'सहास्थाणु०' '०तीरिताः' इत्यपपाठः । गर्तः सभास्थाणुः, गृणातेः । तं तत्र यापुत्रा यापतिका सारोहति । तां तत्राक्षेणाघ्नन्ति । सा रिक्थं लभते । निरु० ३।५॥

४. कोशे 'सहास्थाणुः' इत्यपपाठः ।

५. कोशे 'सहास्था०' इत्यपपाठः ।

६. कोशे 'गिरतर्ज्जर्तं' इत्यपपाठः । धा० ६।११७॥ उणा० ३।८६॥ आकरे तु गृणातिः (धा० ९।२८) निर्दिश्यते ।

७. कोशे 'सागिरती०' इति पाठः ।

८. कोशे 'नतं' इत्यपपाठः ।

ततः सा लभते रिक्थं[1] कितवेभ्यस्समीहितम्[2] ।
कितवानामयं धर्मः क्वचिद् देशे किलेष्यते ॥१४५॥
अन्येषां[3] दक्षिणाजास्स्युर्दक्षिणापथवासिनः ।
दुहिता [4]दाक्षिणात्यानां सा गर्तारोहिणीरिता ॥१४६॥
आचारः किल पूर्वोक्तः क्वचित्स्याद् दक्षिणापथे ।
श्मशानसंचयोऽप्येवं[5] [6]गुरतेर्गर्त उच्यते ॥१४७॥
अन्तर्णीतापपूर्वस्य तशब्दे प्रत्यये कृते ।
उपधाया अकारत्वे सोऽपगूर्णोऽपवर्जितः ॥१४८॥
भीरुभिर्भयहेतुत्वाद् [7]अप्राशस्त्यात् तथेतरैः ।
अपेत्य ग्रामतो वापि भीषयत्युद्यतो जनम् ॥१४९॥
यकारस्य[8] तु लोपेन सवर्णस्यापि दैर्घ्यतः ।
इह श्मशयनं[9] चैव श्मशानं परिकीर्त्यते ॥१५०॥
ड्मनुप्रत्यये[10] श्म विज्ञेयं [11]शृणातेर्वा [12]शमोऽथवा ।
शरीरं तु श्मशब्दोक्तं [13]तस्यासौ शयनं भवेत् ॥१५१॥
गर्ते शेते शरीरं हि गतमस्थिप्रकारताम्[14] ।
श्रयतेस्तु[15] श्मपूर्वस्य श्मश्रु डौ[16] कर्तरि स्मृतम् ॥१५२॥

---

१. कोशे 'रित्थं' इत्यपपाठः । २. कोशे '०समीहितः' इत्यपपाठः ।
३. दुर्गस्कन्दप्रभृतीनामित्यर्थः ।
४. कोशे 'दक्षिणात्याना स गर्ता०' इत्यपपाठः ।
५. श्मशानसंचयोऽपि गर्त उच्यते । गुरतेः, अपगूर्णो भवति । निरु० ३।५॥
६. धा० ६।१०३॥ ७. कोशे 'अप्रशस्त्यान्तथे०' इत्यपपाठः ।
८. श्मशानं श्मशयनम् । श्म शरीरम् । शरीरं शृणातेः शम्नातेर्वा । श्मश्रु लोम । श्मनि श्रितं भवति । लोम लुनातेर्वा लीयतेर्वा । निरु० ३।५॥
९. कोशे 'श्मशयन्तञ्चैव' इत्यपपाठः । १०. कोशे 'ध्मतुप्रत्यये' इत्यपपाठः ।
११. कोशे 'शृणोते०' इत्यपपाठः । धा० ९।१८॥
१२. धा० ४।१२॥ मूले नवमगणीयस्य निर्देशः ।
१३. तस्य=शरीरस्य, असौ=गर्तः । १४. कोशे '०प्रकारता' इत्यपपाठः ।
१५. कोशे 'श्रूयतेस्तु' इत्यपपाठः । धा० १।९४५॥
१६. कोशे 'पौ' इत्यपपाठः । श्मनि श्रयतेर्डुन् । उणा० ५।२८॥

मन्प्रत्यये [1]लुनातेस्तु लोमोक्तं [2]लूयते हि तत् ।
लीयतेर्डोमनीष्टं[3] वा लीनं श्लिष्टं शरीरके ॥१५३॥
गर्तशब्दाभिधेयत्वं श्मशानस्योपलक्ष्यते ।
नोपरस्याविरित्यादावुपरोऽतष्ट[4] उच्यते ॥१५४॥
आद्यो यूपस्य भागोऽसौ तक्षणोपरमत्वतः ।
डप्रत्यये[5] रमेः सिद्ध उपपूर्वस्य कर्तरि ॥१५५॥
तस्याविष्करणे [6]दोषाच्छादनं त्विह चोद्यते ।
अवटस्थस्य[7] यूपस्य छादयेदुपरं[8] मृदा ॥१५६॥
गर्तस्थो[9] यजमानः स्याद् उपरं चेत् प्रकाशयेत् ।
ध्रुवं प्रमायुकस्त्वेव [10]म्रियेतैवायुषः पुरा ॥१५७॥
रथोऽपि[11] गर्त इत्युक्तो [12]गृणातेः स्तुतिकर्मणः ।
स्तुतो ह्यतिशयेनासौ यानानामुत्तमत्वतः ॥१५८॥
वनस्पते[13] इति त्वस्यां [14]स्तुतिस्त्वस्योपलभ्यते ।
गर्तशब्दाभिधेयत्वं रथस्याप्युपलभ्यते ॥१५९॥

---

१. धा० ९।१३॥ २. कोशे 'पूयते' इत्यपपाठः ।

३. कोशे 'लीयते ढोमनोष्ठं' इत्यपपाठः । धा० ४।३१॥

४. कोशे 'तोपरस्यापिरित्योदावुपरोनष्ट' इत्यपपाठः । नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद् गर्तेष्ठाः स्यात् प्रमायुको यजमानः । निरु० ३।५॥ नोपरस्याविः कर्तवै,यदुपरस्याविःकुर्याद् रथेष्ठाः (?) स्यात् प्रमायुको यजमानः । मै० सं० ३।९।४॥

५. कोशे 'उप्रत्यये रमे' इत्यपपाठः । धा० १।९०६॥

६. कोशे 'दोषाछादन' इत्यपपाठः ।

७. कोशे 'आपदस्थस्य' इत्यपपाठः । ८. कोशे '०दुपरम्मदः' इत्यपपाठः ।

९. कोशे 'गर्तस्था यजमान स्यात् उपरण्वेत्' इत्यपपाठः ।

१०. कोशे 'मृयतैवायुबः' इत्यपपाठः ।

११. रथोऽपि गर्त उच्यते । गृणातेः स्तुतिकर्मणः । स्तुततमं यानम् । आ रोहथो मित्र वरुण गर्तम् इत्यपि निगमो भवति । निरु० ३।५॥

१२. कोशे विसर्गरहितः पाठः । धा० ९।२८॥

१३. ऋ० ६।४७।२६॥ निरु० ९।१२॥

१४. कोशे 'स्तुतित्वास्यो०' इत्यपपाठः ।

आरोहथो[1] युवां गर्तं हिरण्यसदृशं रथम् ।
हे मित्र[2] वरुणापि त्वमयःस्थूणामुषोगतौ ॥१६०॥
स्थूणामयोमयीं [3]प्राहुरुद्धिमेके तुलां परे ।
तुलोद्धिशब्दवाच्यौ[4] च रथस्यावयवावुभौ ॥१६१॥
भावे निष्ठोदितेत्यत्र सप्तम्या डा[5] सुपां स्विति ।
अदितिं चैव दितिं चैव चक्षाथे पश्यथस्त्वतः[6] ॥१६२॥
अदितिस्त्विति[7] निर्दिष्टो योऽक्षीणोऽत्र[8] स्वधर्मतः ।
क्षीणश्च [9]दितिरित्युक्तस्तावुभौ पश्यथो युवाम् ॥१६३॥
अदाता[10] चैव दाता च यद्वोक्तौ हविषामिह ।
रथमारुह्य तौ देवौ लोकपालौ दिने दिने ॥१६४॥
चरन्तौ पश्यतो [11]लोकं निग्रहानुग्रहे रतौ ।
तस्मात् स्वधर्मनिष्ठः स्यादित्यर्थः स्मार्यतेऽनया ॥१६५॥
मातरावेव वा प्रोक्ते अदितिर्दितिरित्यपि ।
दितिश्चापि [12]तयोर्माता मातुस्सा भगिनी यतः ॥१६६॥
उषःकाले समारुह्य रथं हेमपरिष्कृतम् ।
मातरौ [13]पश्यथौ नित्यं युवां धर्मपरायणौ ॥१६७॥

---

१. हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥ ऋ० ५।६२।८॥
२. कोशे 'मित्रा वरुणोपि' इत्यपपाठः ।
३. कोशे 'प्राहुः रुद्धिमोके' इत्यपपाठः ।
४. कोशे 'तुलोन्धिशब्द०' इत्यपपाठः ।
५. कोशे 'मा' इत्यपपाठः । अष्टा० ७।१।३९॥
६. अनन्तरमिति शेषः । ७. कोशे 'आदिति०' इत्यपपाठः ।
८. दीङ् क्षये (धा० ४।२६) इत्यस्य क्तिचि(अष्टा० ३।३।१७४) प्रत्यये दितिरित्यर्थः ।
९. कोशे 'द्युतिरित्युक्तः' इत्यपपाठः ।
१०. डुदाञ् दाने (धा० ३।९) इत्यस्य रूपं दितिरिति ।
११. कोशेऽनुस्वाररहितः पाठः ।
१२. मित्रावरुणयोरित्यर्थः । १३. कोशे 'पश्यतो' इत्यपपाठः ।

अथवा गर्तशब्दोक्तो[1] रथस्सूर्यस्य मण्डलम् ।
वरुणो रात्रिरत्र [2]स्यादहर्मित्रस्तथेष्यते ॥१६८॥
मण्डलाश्रयणं त्वेव रथारोहणमेतया ।
उदितेति द्वितीयार्थे मण्डलस्य विशेषणम् ॥१६९॥
उदितं[3] मण्डलं सौर्यमारोहेदहराश्रयेत्[4] ।
तथैवास्तमितं रात्रिरुदितेत्युपलक्षणम् ॥१७०॥
आत्मलाभस्तयोरेवमित्युक्तमुपपद्यते ।
अदितिर्धर्मतोऽक्षीणः[5] क्षीणश्च दितिरुच्यते ॥१७१॥
अयःस्थूणमहःस्थानं[6] रात्रिस्थानं भविष्यति ।
चतस्र[7] उपमाः प्रोक्ता [अभ्रातेवादिवाक्यतः] ॥१७२॥
चतस्र[8] उपमास्त्वेता [9]उषसःस्तोतुमोरिताः ।
तासामप्याद्ययेष्टोऽर्थः[10] स्पष्टमत्रोपपादितः ॥१७३॥
अभ्रातृकैव दायादा[11] पितुः सन्तानहेतुतः ।
नैव सभ्रातृकापत्यं दायाद्यं[12] लभते पितुः ॥१७४॥
अभ्रातृकाविवाहस्य[13] प्रतिषेधोऽनुमानतः ।
उक्तः पूर्वमिदानीं तु प्रत्यक्षो वाक्यगोचरः ॥१७५॥
नाभ्रात्रीमिति[14] वाक्येन साक्षादेवोपलभ्यते ।
प्रतिषेधस्य हेतुश्च तोकं ह्यस्येत्युदाहृतः ॥१७६॥

---

१. कोशे '०शब्दोक्तै' इत्यपपाठः । २. कोशे 'स्यादहर्म्मतिस्तथे०' इत्यपपाठः ।
३. कोशे 'उद्रितं' इत्यपपाठः । ४. कोशे '०मारुहेद्दहरा०' इत्यपपाठः ।
५. कोशे 'अदितिद्धा तो क्षीणः' इति भ्रष्टः पाठः ।
६. कोशे 'अयस्थूणमयस्थानं रमिस्थानं' इत्यपपाठः ।
७. कोशे 'प्रोक्तं चतस्र उपमा...' इति व्यस्तो भ्रष्टश्च पाठः ।
८. चतस्र उपमाः । निरु० ३।५॥ ९. कोशे 'उषसस्तोतुमीरितः' इत्यपपाठः ।
१०. कोशे '०ध्याद्ययष्टो०' इत्यपपाठः ! ११. कोशे सविसर्गः पाठः ।
१२. कोशे 'दायावा' इत्यपपाठः । १३. कोशे '०विवाहस्तु' इति पाठः ।
१४. कोशे 'नाभ्रात्रिमिति' इत्यपपाठः । नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद् भवति, इत्यभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षः पितुश्च पुत्रभावः । निरु० ३।५॥

तोकं सा पितुरेव स्यात् पुत्रकार्यप्रसाधनात् ।
योऽस्यामुत्पद्यते पुत्रः स मे पुत्रो भवेदिति ॥१७७॥
उक्त्वा या दीयते[1] तस्या विवाहः प्रतिषिध्यते ।
अभ्रातृकाप्यनुक्त्वैवं यदि दीयेत कर्हिचित् ॥१७८॥
निषेधो न प्रवर्तेत पत्युः पुत्रप्रसाधनात् ।
अतश्च [2]शासदित्येषा भवेदभ्रातृकाश्रया ॥१७९॥
अविशेषेण पुत्रत्वं सर्वस्या[3] दुहितुर्यदि ।
पुत्रत्वसाधनं तस्याः पुत्रवन्निजसिद्धितः ॥१८०॥
कदा पुनरसौ शास्ति पुत्रत्वं दुहितुः पिता ।
दौहित्रस्य च पौत्रत्वं [4]कदासाववगच्छति ॥१८१॥
यत्र[5] यस्मिन् पिता काले दुहितुः सेकमार्जयेत्[6] ।
संधत्ते मनसात्मानं तदा शान्तिपरोदितम्[7] ॥१८२॥
अपुत्रत्वेन यद् दुःखं तन्मे नैवाद्य विद्यते ।
दुहितैव यतः पुत्र इति सन्धानमीप्सितम् ॥१८३॥
सेक्ता तु रेतसस्सेको जामातैवाभिधित्सितः ।
ऋञ्जनित्येतदज्जेः[8] स्याद् वर्णलोपविकारतः[9] ॥१८४॥
ऋञ्जतेरेव[10] वा रूपं तस्याप्यर्थः प्रसाधनम् ।
ऋञ्जन्[11] प्रसाधयन् सेकमित्यस्यार्थो भविष्यति ॥१८५॥

---

१. कोशे 'दीयतस्य विवाहः' इत्यपपाठः ।
२. ऋ० ३।३१।३॥ ३. कोशे 'सर्वस्याड्डुहितृ०' इत्यपपाठः ।
४. कोशे 'तदासा०' इत्यपपाठः ।
५. पिता यत्र दुहितुरप्रत्ताया रेतः सेकं प्रार्जयति, संदधात्यात्मानं संगमेन मनसेति । निरु० ३।५॥ ६. कोशे 'सेकमार्जयत्' इति पाठः ।
७. कोशे 'शान्तिपुरोदितम्' इत्यपपाठः ।
८. कोशे 'ऋञ्जनीत्येत तञ्जे' इत्यपपाठः । धा० १।२४२॥
९. अकारलोपे रेफस्य सम्प्रसारणे नुमागमे चेत्यभिप्रायः ।
१०. धा० १।१९०॥ ११. कोशे 'ऋञ्जत् प्रसाधयत्' इत्यपपाठः ।

गमेर्य्यर्थप्रत्यये[1] रूपम् उपधालोपहेतुके[2] ।
शंपूर्वस्येष्यते शग्म्यं[3] गम्यते तेन शं सुखम् ॥१८६॥
संदधे[4] इति रूपं तु [5]दधातेरात्मनेपदे ।
दधन्वे इति तस्यैव [6]नुशब्दोपजने भवेत् ॥१८७॥
लडर्थे[7] प्रथमे पुंसि [8]लेडितिच्छान्दसं विदुः ।
अभ्रातृकामिमां तुभ्यं [9]पुत्रिकेति ददाम्यहम् ॥१८८॥
उत्पत्स्यते सुतो योऽस्यां स मे पुत्रो भवेदिति ।
जामात्रे [10]संप्रधार्य्यैवं पित्रा या दीयते सुता ॥१८९॥
तस्या एव तु पुत्रत्वं प्रशास्तीत्युपपद्यते ।
यथैवात्मा[11] तथा पुत्रः पुत्रेण दुहिता समा ॥१९०॥
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ।
पुत्रेण साम्यनिर्देशः पुत्रत्वेनोपपद्यते ॥१९१॥
अतश्च दुहिता[12] सर्वा न रिक्थं लभते पितुः ।
ऋक्श्लोकाभ्यामपि[13] प्रोक्तं पुत्रिकाविषयं ततः ॥१९२॥
पुत्रवत् [14]पुत्रिकामेतदृचा मूर्द्धनि जिघ्रति ।
आवृतैव [15]कुमार्य्यैं तु जिघ्रत्यस्यामिति स्मृतेः[16] ॥१९३॥

---

१. धा० १।१०३१॥ २. किति ङिति वेत्यर्थः ।
३. कोशे 'संपूर्वस्येष्यते शम्यं' इत्यपपाठः ।
४. लोपस्त आत्मनेपदेषु (अष्टा० ७।१।४१) इति तलोपे छन्दसि रूपम् ।
५. धा० ३।१०॥ ६. कोशे 'नृत्रशब्दोपजनो' इत्यपपाठः ।
७. कोशे 'खढर्थे' इत्यपपाठः । ८. कोशे ''लढित्यच्छा०' इत्यपपाठः ।
९. कोशे 'पुत्रीकेति' इत्यपपाठः । तु०—मनु ९।१२७॥
१०. कोशे 'स प्रधा०' इत्यपपाठः । ११. मनु० ९।१३०॥
१२. कोशे 'दुहितास्सर्वा नरिकल्पं लभते' इत्यपपाठः ।
१३. कोशे 'ऋक्श्लोकाद्यामपि' इत्यपपाठः ।
१४. कोशे '०कामेवस्वृचामत्यपजिघ्रति' इति पाठः ।
१५. कोशे 'कुमारीन्तु जिघ्रत्यस्यामिति' इति पाठः ।
१६. प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति—अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति मूर्द्धनि त्रिरवघ्राय । आवृतैव कुमार्यै । आश्व० गृह्य० १।१५।११,१२॥

पुत्रिकाकरणाद् ऊर्ध्वं [1]जाते तु श्लोकचोदितम्[2] ।
पुत्रिकायां[3] कृतायां तु यदि पुत्रोऽनुजायते ॥१९४॥
समस्तत्र[4] विभागः स्याद् ज्येष्ठता नास्ति हि स्त्रियाः ।
भ्रातृमत्या[5] निषेधे च रिक्थस्येमामृचं विदुः ॥१९५॥
ज्येष्ठं[6] पश्चात्सुते जाते पुत्रिकाया[7] निषेधति ।
इत्येके तामृचं प्राहुर्द्विधाप्येषोपवर्ण्यते ॥१९६॥
तान्वो[8] न जामये [9]रिक्थमारिचत् पैतृकं धनम् ।
आत्मजस्तान्व[10] इत्युक्तः पुत्र औरस एव सः ॥१९७॥
भगिनी जामिरित्युक्ता भ्रातुश्च भगिनी मता ।
भगिन्यै पैतृकं द्रव्यं भ्राता नैव प्रयच्छति ॥१९८॥
इत्यर्थः कथितोऽनेन पादेनाद्येन निश्चितः ।
द्वितीया [11]गर्भमित्येषा षष्ठीस्थाने [12]सुपां स्विति ॥१९९॥
सनितुर्भर्तु रेवैनां[13] कुर्याद् [14]गर्भस्य वै निधिम् ।
गर्भो निधीयते यस्यां निधानं निधिरप्यसौ ॥२००॥
एकशेषे पितुः प्राप्ते [15]पिता मात्रेति वाक्यतः ।
छान्दसो मातुरत्र स्यात् [16]जसश्च वचनं द्वयोः ॥२०१॥

---

१. कोशे 'जातेष्ठ' इत्यपपाठः । २. विधीयत इति शेषः ।
३. मनु० ९।१३४॥
४. कोशे 'समन्धत्र विभाग स्यात्' इत्यपपाठः ।
५. अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति । ज्येष्ठं पुत्रिकाया इत्येके । निरु० ३।५॥
६. कोशे 'ज्यैष्ठं' इत्यपपाठः । ७. कोशे '०कायान्निषेधति' इत्यपपाठः ।
८. न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम् ।
यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धम् ॥ ऋ० ३।३१।२॥
९. कोशे 'रित्थं मितिचेत्' इत्यपपाठः ।
१०. कोशे '०तात्व' इत्यपपाठः । ११. कोशे 'गर्हमित्येषा' इत्यपपाठः ।
१२. कोशे 'सुपां स्थितिः' इत्यपपाठः । अष्टा० ७।१।३९॥
१३. कोशे 'सहितु०' इत्यपपाठः । १४. कोशे 'गर्हस्य' इत्यपपाठः ।
१५. अष्टा० १।२।७०॥ १६. द्विवचनस्थाने बहुवचनमपि छान्दसमित्यर्थः ।

अन्योऽन्य इति निर्देशाद् अवह्निं चेत्यभाषत[1] ।
पुमान् वह्निरिति प्रोक्तः स्त्री चैत्रावह्निरुच्यते ॥२०२॥
पुत्रस्तु वह्निरित्युक्तो [2]वोढृत्वात् पितृकर्मणाम् ।
अवोढृत्वादवह्निश्च दुहितैव विवक्षिता ॥२०३॥
पुत्रं दुहितरं चैत्र यद्यपि त्वविशेषतः ।
सुवाते पितरौ तावत् तथाप्यस्त्यनयोः[3] स्फुटम् ॥२०४॥
विशेषस्सुकृतोस्सोऽयं[4] पादेनान्त्येन कथ्यते ।
कर्तारौ[5] शोभनानां तौ स्त्रीपुंसौ कर्मणामिह ॥२०५॥
पैतृकं कर्म कुर्वाणः सुकृत् पुत्रोऽभिधीयते ।
भर्तृकर्मरता[6] चैव सुकृत् स्याद् दुहिता तथा ॥२०६॥
सन्तानकर्मणः[7] कर्ता तयोरन्यः पुमान् भवेत् ।
अतश्च पुत्र [8]एवेष्टो दायादो धर्मसंगतः ॥२०७॥
अन्यस्तु जामिरूपो यः [9]सोऽर्द्धयित्वा प्रदीयते ।
जनेर्म्मिक्प्रत्यये[10] नात्वे[11] जामिराधारवाचिनि ॥२०८॥
यतोऽन्ये [12]जनयन्त्यस्यां [13]जोनं क्षीणं कुतः पितुः ।
ततस्सा जामिरित्युक्ता क्षीणत्वं चानपत्यतः ॥२०९॥

---

१. वह्निं पुत्रम्, अवह्निं च स्त्रियम् । निरु० ३।६॥

२. कोशे 'वेढृत्वात्' इत्यपपाठः । ३. कोशे 'तथाप्यस्त्यन्वयः' इत्यपपाठः ।

४. कोशे '०सुकृतस्सोयं पादेनान्येन' इत्यपपाठः ।

५. कोशे 'कर्तरौ शोभननान्दौ' इत्यपपाठः ।

६. कोशे '०रताश्चैव सुकृत्स्या दुहिता' इत्यपपाठः ।

७. कोशे 'सन्तानः कर्मणः' इत्यपपाठः ।

८. कोशे 'एवेष्ठो' इत्यपपाठः । ९. कोशे 'सोद्धयित्वा' इत्यपपाठः ।

१०. कोशे 'जनेर्म्मित्प्रत्यये' इति पाठः । धा० ४।४१॥

११. नकारस्याकारादेशे कृत इत्यर्थः ।

१२. कोशे 'जनयन्त्यस्या' इत्यपपाठः । जामिरन्येऽस्यां जनयन्ति जामपत्यम् । जमतेर्वा स्याद् गतिकर्मणः । निर्गमनप्राया भवति । निरु० ३।६॥

१३. कोशे 'ज्ञीतं' इत्यपपाठः । ज्याधातोः (धा० ९।२९) मिप्रत्यये यकारलोपे जामिरिति निरुक्त्यन्तरं निर्दिष्टम् । स्कन्दोऽत्रानुसृतः ।

जमतेरुपधादैर्घ्यं[1] भवेदिक्प्रत्ययेऽथवा ।
पितृगेहाज्जमत्येषा गच्छेत् प्रायः कुलान्तरम् ॥२१०॥
गतिप्रायत्वमप्यस्या भ्रातृमत्त्वे त्रिवक्षितम् ।
पुत्रिकात्वप्रक्लृप्ता[2] तु भ्रात्रभावान्न गच्छति ॥२११॥
स्वकुले तिष्ठतीत्यर्थः [3]पत्युर्वापत्यसंभवे ।
पुत्रिकात्वप्रक्लृप्तायै[4] भगिन्यै न प्रयच्छति ॥२१२॥
ज्येष्ठांशलक्षणं रिक्थम् इति केचित् प्रचक्षते ।
तान्वेऽपि[5] पुनरुत्पन्ने समं भागं तयोर्विदुः ॥२१३॥
ज्यैष्ठ्यदाने[6] चकारेति ह्यतिक्लेशेन योजितः ।
यतो गर्भनिधानी सा परस्य परिकल्पिता ॥२१४॥
न प्रयच्छत्यतो [7]भ्राता ज्येष्ठांशमिति कल्पना ।
अदाने [8]वचनं त्वेतद् इति चापि वदन्ति ते ॥२१५॥
दीयते इति वाक्यं तु व्याख्याने प्रथमे भवेत् ।
वर्ध्यते[9] पुनरप्येषा स्नेहेनाभूषणादिभिः ॥२१६॥
पक्षयोरुभयोश्चेदमृन्धन्नित्यपि कर्मणि ।
आश्रितः छान्दसत्वेन तथैवार्थोपपत्तितः ॥२१७॥
पुत्र एव ततोऽपत्यं दायादोऽपीति साधितम् ।
क्षेत्रजादिषु[10] पुत्रोक्तिर्वृक्षादाविव[11] गौणतः ॥२१८॥

॥ इति [पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके]
तृतीय[ाध्याय]स्य प्रथमः पादः ॥

---

१ पाणिनीयधातुपाठे (१।४६९) जमतिरदनार्थः। निघण्टौ (२·१४) तु गतिकर्मसु पठितः।

२. कोशे 'पुत्रीकाश्च प्रक्लृप्तो तु भ्रातृभावान्न' इत्यपपाठः ।

३. कोशे 'पत्युर्नापत्य०' इत्यपपाठः।

४. कोशे 'पुत्रीका०' इत्यपपाठः ।

५. कोशे 'तान्वोपि पुनरुत्पन्नः' इति पाठः ।

६. कोशे 'ज्यैष्ठ्यादने चकारेति हृतक्लेशेन' इति पाठः।

७. कोशे 'भूता' इत्यपपाठः ।

८. कोशे 'नच्च नन्वेतत्' इत्यपपाठः।

९. कोशे 'वध्यते पुनरप्येषां स्नेहता भूषणा०' इत्यपपाठः ।

१०. कोशे 'क्षेत्रजादिष्ठ' इत्यपपाठः ।

११. तथा ह्युक्तम्—अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन । रघु० २।३६॥

# द्वितीयः पादः

अनन्तरं मनुष्याणाम्[1] नाम्नां स्युः पञ्चविंशतिः ।
मनुष्या इति कस्मात्ते भण्यन्त इत्यचोदयत् ॥१॥
धातुजान्येव सर्वाणि जातिवाचीन्यपि स्फुटम् ।
इति संचिन्त्य[2] पप्रच्छ शब्दवृत्ते निबन्धनम् ॥२॥
मत्वा कर्माणि [3]सीव्यन्ति ज्ञात्वा कुर्वन्ति तत्त्वतः ।
मनिपूर्वात्सिवेर्धातोर्मनुष्य[4] इत्यतोऽब्रवीत् ॥३॥
मत्वेत्यर्थे [5]मनेरुः स्यात् सिवेड्यः[6] कर्तरीष्यते ।
ततः षत्वे कृते रूपं मनुष्य इति सिध्यति ॥४॥
अनेनेदं[7] कृतं तु स्याद् अपि कालान्तरोद्भवम् ।
इति मत्वानुतिष्ठन्ति मनुष्या एव नेतरे ॥५॥
यद्वा मनस्यमानेन सृष्टास्ते कार्यसिद्धये ।
मनस्यतिः[8] पुनर्धातुर्मनस्वित्वे प्रवर्तते ॥६॥
प्रशस्तोत्साहसंयुक्तं[9] मनो यस्येह विद्यते ।
मनस्वी[10] स तु विज्ञेयः स चेह स्यात् प्रजापतिः ॥७॥

---

१. मनुष्यनामान्युत्तराणि पञ्चविंशतिः । मनुष्याः कस्मात् ? मत्वा कर्माणि सीव्यन्ति । मनस्यमानेन सृष्टाः । मनस्यतिः पुनर्मनस्वीभावे । मनोरपत्यं मनुषो वा । निरु० ३।७॥ २. कोशे 'संचित्य प्रप्रच्छ' इत्यपपाठः ।

३. कोशे 'कर्मणि सिध्यन्ति' इत्यपपाठः ।

४. कोशे 'मनित्पूर्वात्सिवेधातोर्मनुष्य' इत्यपपाठः । धा० ८।६॥४।२॥

५. कोशे विसर्गरहितः पाठः ।

६. कोशे 'सिपेध्यः कर्तरिष्यते' इत्यपपाठः ।

७. कोशे 'अनेदाहलं तस्यात्' इति पाठः । तु०—ज्ञात्वा अनेनेदमिति साध्यसाधन-भावम्—इति स्कन्दव्याख्यानम् । ८. कोशे 'मनस्यत्रिःपुनर्धातुः मनसमत्वे' इत्यपपाठः ।

९. कोशे 'प्रशस्तो साह०' इत्यपपाठः ।

१०. भूमनिन्दाप्रशंसासु० (महा० ५।२।९४) इति प्रशंसायां विनिरित्यर्थः ।

ब्राह्मणं च तथैवाह [1]पितॄन्सृष्ट्वामनस्यत ।
प्रशस्तोत्साहसंयुक्तं मनोऽसावकरोदिति ॥८॥
ईदृशं च मनः कृत्वा मनुष्यानसृजत् किल ।
नित्यपक्षे पितैव स्यात् मनस्वी तत्पिताथवा ॥९॥
मनोर्जातावपत्ये[2] तु [3]यति षुक्यपि सिध्यति ।
अणेवापत्यमात्रे[4] स्याद् मानवा इत्यतो भवेत् ॥१०॥
मनुषो वा[5] षकारान्तं यत् [6]प्रातिपदिकान्तरम् ।
तत एवाण्यतौ स्यातां न षुगागमकल्पनम् ॥११॥
समिद्धो अद्य मन्त्रे[7] च [8]मनुषस्त्विवति दृश्यते ।
मानुषा इति तस्यापि रूपमण्युपपद्यते ॥१२॥
संदिग्धमस्ति[9] किंचित्तु [10]तत्र पञ्चजना इति ।
अर्थान्तरेऽपि [11]दृष्टत्वाद् निगमास्संशयच्छिदः ॥१३॥
पञ्चसंख्याविशिष्टानां जनानामविशेषतः ।
इष्यते वाचकं कैश्चिद् एतत् पञ्चजना इति ॥१४॥
गन्धर्वाः पितरो देवा असुरा राक्षसा अपि ।
इष्टाः पञ्चजनाः कैश्चिद् मनुष्यानपरे विदुः ॥१५॥
मनुष्यमात्रवाचित्वे संख्यावाचि[12] तु यत्पदम् ।
समुदायप्रसिद्ध्यैव[13] तस्य वचो[14] न दुष्यति ॥१६॥

---

१. पितॄन् सृष्ट्वामनस्यत् तदनु मनुष्यानसृजत । तै० ब्रा० २।३।८।३॥ तु०—मै० सं० ४।२।१॥ २. मनोर्जातावञ्यतौ षुक् च । अष्टा० ४।१।१६१॥
३. कोशे 'यत्रिष्ठक्यपि' इत्यपपाठः ।
४. कोशे 'अणो वापत्यमादे' इत्यपपाठः । ५. 'मनुषो वा' इति निरुक्तप्रतीकम् ।
६. कोशे 'प्रदिपदि०' इत्यपपाठः । ७. ऋ० १०।११०।१॥ निरु० ८।५॥
८. कोशे 'मनुषं िववति' इत्यपपाठः । ९. कोशे 'संदिग्यम०' इत्यपपाठः ।
१०. तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ! निरु० ३।७॥
११. कोशे 'दृष्टत्वात्' इत्यपपाठः । १२. कोशे 'संख्यापिचि' इत्यपपाठः ।
१३. अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति न्यायादित्याशयः ।
१४. कोशे 'वाचो' इति पाठः ।

एवं विप्रतिपत्तौ हि संशये तन्निवृत्तये ।
तदद्य वाच[1] इत्येषा भाष्यकारेण वर्णिता[2] ॥१७॥
वाचो हौत्राङ्गभूताया अद्यास्मिन् हौत्रकर्मणि[3] ।
प्रथमं परमं रूपं यत्तन्मंसीय[4] तत्त्वतः ॥१८॥
रूपं तु ब्राह्मणार्षेयच्छन्दोदैवतलक्षणम् ।
स्वरवर्णाक्षराख्यं च शिक्षयोच्चारणं तथा ॥१९॥
अथवा प्रथमं रूपं वाचः प्राणोऽभिधीयते ।
[रूपं वाचोऽ]थवा ब्रह्म तत्र वाक् सकला स्थिता[5] ॥२०॥
विश्वे देवा विजानीयां[6] प्रसादाद् भवतामहम् ।
येनाभ्यसाम[7] ज्ञानेन द्विषतोऽभिभवेम[8] वै ॥२१॥
मसीयेत्यभ्यसामेति[9] बहुत्वैकत्ववाचिनोः[10] ।
[व्यत्ययोऽ]न्यतरस्यैष्टो विरोधादिति[11] गम्यते ॥२२॥
ऊर्जादो यज्ञियाश्चैव तथा पञ्चजना अपि ।
मम होत्रं जुषध्वं वै सेवध्वमनुरूपतः ॥२३॥
ऊर्ज्जस्य हविषोऽन्नस्य दे[वा अत्ता]र ईप्सिताः[12] ।
संपादयन्ति[13] ते यज्ञं संप्रदानादिभावतः ॥२४॥
गन्धर्वाद्यात्मना चैव जनाः पञ्च भवन्ति ते ।
नागयक्षपिशाचानां तेष्वेवान्तर्गतिं विदुः ॥२५॥

---

१. तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम ।
ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् ॥ ऋ० १०।५३।४॥
२. कोशे 'वर्णितम्' इत्यपपाठः ।
३. कोशे 'हौमकर्म०' इत्यपपाठः ।
४. कोशे '०मंसिय' इत्यपपाठः ।
५. कोशे 'स्थितम्' इत्यपपाठः ।
६. कोशे 'विनानीयात्' इत्यपपाठः ।
७. कोशे 'येनाह्यसाम' इत्यपपाठः ।
८. कोशे '०भवेय' इत्यपपाठः ।
९. कोशे 'मंसीयेत्यस्य सामेत्रि' इत्यपपाठः ।
१०. कोशे '०वाचिना' इत्यपपाठः ।
११. कोशे '०रोधादि निग०' इत्यपपाठः ।
१२. कोशे 'ईप्सितः' इत्यपपाठः ।
१३. देवेभ्यो हवींषि सम्प्रदीयन्त इति ते यज्ञक्रियां सम्प्रदानभावेन सम्पादयन्तीति भावः । तथा चाह कात्यायनः—यज्ञं व्याख्यास्यामः । द्रव्यं देवता त्यागः । का० श्रौ० १।२।१-२ ॥

गन्धर्वेषु[च नागाः]स्युरसु[रे]षु[1] तु गुह्यकाः ।
राक्षसेषु पिशाचाः[2] स्युरष्टत्वं न विरुध्यते ॥२६॥
अष्टौ देवनिकाया हि पुराणे[3] यद्यपि स्मृताः ।
विवक्षा पञ्चधैवैषां[4] तथापीति न दुष्यति ॥२७॥
देव[भावे]ऽपि सर्वेषां केचिद् देवा विवक्षिताः ।
मन्वादयस्ततश्चैवं विरोधो नैव कश्चन ॥२८॥
ऋगेषा[5] वैश्वदेव्येवं विश्वदेवा इमे यतः ।
एवं च वैश्वदेवत्वं [6]मन्त्रस्यास्य समर्[थितम्] ॥२९॥
मनुष्यमात्रवाचित्वमेवं नो न प्रसिध्यति ।
न दोष इदमेवेह वक्तुं नैव समीहितम् ॥३०॥
पदद्वयमिदं[7] रूपं [8]गन्धर्वादिषु पञ्चसु ।
तथर्त्विग्यजमानेषु[9] पञ्चस्वित्यपरे विदुः ॥३१॥

---

१. कोशे 'गन्धर्वेष्ठ स्युरस्य···ष्ठ तु' इति भ्रष्टः पाठः ।
२. कोशे विसर्गरहितः पाठः । ३. मूलं मृग्यम् !
४. कोशे 'पंचधेवेषां' इत्यपपाठः । ५. कोशे 'ऋग्रेषो' इत्यपपाठः ।
६. कोशे 'स्तत्रस्यास्य सम' इति भ्रष्टः पाठः । ७. पञ्चजनाः इत्यर्थः ।
८. गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः । निरु० ३।८॥ शौनकस्तु व्यत्यासेन यास्कादिमतानि प्रदर्शयति—

मनुष्याः पितरो देवा गन्धर्वोरगराक्षसाः ।
गन्धर्वाः पितरो देवा असुरायक्षराक्षसाः ॥
यास्कौपमन्यवावेतान् आहतुः पञ्च वै जनान् ।
निषादपञ्चमान् वर्णान् मन्यते शाकटायनः ॥
ऋत्विजो यजमानं च शाकपूणिस्तु मन्यते ।
होताध्वर्युस्तथोद्गाता ब्रह्मा चेति वदन्ति तान् ॥
चक्षुः श्रोत्रं मनो वाक् च प्राणश्चेत्यात्मवादिनः ।
गन्धर्वाप्सरसो देवा मनुष्याः पितरस्तथा ॥
सर्पाश्च ब्राह्मणे चैव श्रूयन्ते ह्यैतरेयके ।
ये चान्ये पृथिवीजाता देवाश्चान्येऽथ यज्ञियाः ॥ बृह० ७।६८—७२॥

९. कोशे 'तथर्त्विग्यज०' इत्यपपाठः ।

ब्राह्मणादिषु[1] व[र्णेषु]सनि[षा]देषु पञ्चसु।
उपमन्युसुतेनेष्टं[2] संख्या सर्वैर्विवक्षिता[3] ॥३२॥
अविवक्षितसंख्यं वा मनुष्येष्वेत्र वर्तते ।
समुदायप्रसिद्ध्या हि न्याय्यमेवांशबाधनम् ॥३३॥
व्याख्याने प्रथमे त्वेषां वैश्वदेव्येव[4] केवलम् ।
ऋगर्धं तु द्वितीयादौ यजमानादिगोचरम् ॥३४॥
ऋत्विजो यजमानश्च हविःशेषान्नभोजिनः[5] ।
ऊर्जाद इति निर्दिष्टा यज्ञसंपादिनश्च ते ॥३५॥
यज्ञसंपादितैतेषां प्रत्यक्षेणोपलक्ष्यते ।
पञ्चैव च जना एते [6]प्रकृतौ स्फुटमोप्सिताः ॥३६॥
[सं]जुषन्ते च ते सर्वे होत्रमात्मोग्रकर्मणा ।
यूयं पञ्च मया सार्धं जना इत्यत्र यो[वदेत्] ॥३७॥
निषादः[7] पञ्चमो वर्णो दासस्त्वत्र विवक्षितः ।
कर्तृत्वेन त्रयः[8] पूर्वं [9]यज्ञसंपादिनो यथा ॥३८॥
पिंषन्ती[10] तण्डुलान्[11] दासो यज्ञं संपादयेत्तया ।
तथोदम[न्थदानादि][12] शूद्रसाध्यं च दृश्यते ॥३९॥

---

१. कोशे 'ब्राह्मणादिष्ठव सनि देष्ठ पचसु' इति भ्रष्टः पाठः ।

२. कोशे '०नेष्ठं' इत्यपपाठः । ३. कोशे '०विचक्षिता' इत्यपपाठः ।

४. कोशे 'वैश्वदेव्यैव' इति पाठः ।

५. कोशे '०भोजनिः' इत्यपपाठः ।

६. सर्वाङ्गनिर्देशाद् दर्शपूर्णमासयागाविष्टीनां प्रकृतिरित्युच्यते । तत्र चत्वार ऋत्विजो यजमानश्चेति पञ्चजना यज्ञं सम्पादयन्ति ।

७. कोशे 'निषादपंचमा वर्णा दायात्वत्र विवक्षिताः' इति पाठः ।

८. ब्राह्मणक्षत्रियवैश्याः । ९. कोशे '०संपादिशस्तदा' इत्यपपाठः ।

१०. कोशे 'विषन्ती' इत्यपपाठः ।

११. तथा च स्मर्यते—दासी पिनष्टि पत्नी वा (आप० श्रौ० १।२१।८) इति ।

१२. कोशे 'तथोदत' 'शूद्र०' इति भ्रष्टः पाठः ; गोसवे उदमन्थदानप्रतिग्रहौ शूद्रसाध्यौ श्रूयेते—आयुरसि । तत्ते प्रयच्छामि (तै० ब्रा० २।७।७।५) इति ।

गास्तु रक्षन्निषादोऽपि काष्ठान्य[थ]वा [1]हरन्नपि ।
स्थपतीष्टचां[2] पुनस्साक्षाद् यज्ञं संपादयत्यसौ ॥४०॥
मनुष्यमात्रवाचित्वे सर्वमेतत्स[मर्थितम्] ।
असुराभिभवस्यापि[3] प्रार्थनैवं घटिष्यते ॥४१॥
गन्धर्वादिषु[4] देवत्वाद् असुराणां न[5] युज्यते ।
पञ्च पृक्ता[6] जनाः केचिद् गृह्यन्तेऽधिकारिणः ॥४२॥
सुपूर्वस्य[7] रमेर्धातोः[8] निष्ठार्थे ड्रे[9] [सुराः स्मृताः] ।
सुष्ठुरताः[स्वकोयेषु]स्थानेष्वित्येवमीरिताः[10] ॥४३॥
अलोलुपा महात्मानः सन्तोषामृतसेविनः[11] ।
स्मर्यन्ते[12] त्रिदशाः सर्वे त्रिलोकोपतयोऽपि ते ॥४४॥
नैव[13] सुष्ठुरताः केचित् ते जगत्यसुराः स्मृताः[14] ।
देवलोकजिघृक्षायामसिद्धायां कुतो रतिः ॥४५॥
अस्तत्वादथवा देवैः[15] स्थानेभ्यश्चापि सर्वतः ।
असुरा[16] उरनीष्टाः स्युरसेः कर्मणि कारके ॥४६॥

१. कोशे 'हरणन्नपि इत्यपपाठः ।

२. कोशे 'स्थपतीष्यां' इत्यपपाठः । निषादस्थपतिर्गविधुकेऽधिकृतः (का० श्रौ० १।१।१२) इति कात्यायनः । जैमिनिरप्याह—स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् (पू० मी० ६।१।५१) इति ।

३. कोशे 'असुरादिभव०' इत्यपपाठः ।

४. कोशे 'गन्वर्वादिष्ठ' इत्यपपाठः ।

५. कोशे 'स युज्यते' इत्यपपाठः ।

६. कोशे 'पंच वृत्ताः जना केचित्' इत्यपपाठः ।

७. कोशे 'सपूर्वस्य' इत्यपपाठः ।

८. धा० १।६०६॥

९. कोशे 'ढे' इत्यपपाठः ।

१०. कोशे '०मीरितः' इत्यपपाठः ।

११. कोशे '०सेचिनः' इत्यपपाठः ।

१२. कोशे 'सूर्यन्ते' इत्यपपाठः ।

१३. कोशे 'तेनैवम् सुष्ठरताः न्चित्यसुराः इत्यपपाठः ।

१४. असुरा असुरताः स्थानेष्वस्ताः स्थानेभ्य इति वा । अपि वासुरिति प्राणनाम, अस्तः शरीरे भवति । तेन तद्वन्तः । निरु० ३।८॥

१५. कोशे विसर्गरहितः पाठः ।

१६. कोशे 'असुर उरनिष्ठास्यरसेः' इत्यपपाठः । धा० ४।१००॥ असेरुरन् । उणा० १।४२॥

असेरुप्रत्यये यद्वा प्राण एवासुरुच्यते ।
अस्तः क्षिप्तः शरीरेऽसौ रो मत्वर्थीय[1] इष्यते ॥४७॥
असुरा असुमन्तः स्युः प्राणवन्तो बलान्विताः ।
बलेनैव[2] प्रवर्तन्ते शास्त्रार्थमवधूय ते ॥४८॥
ब्राह्मणेनान्यथैवेदं[3] निरुक्तमसुरा इति ।
नाभेरूर्ध्वं[4] सुशब्दोक्तं प्रशस्तत्वान्मुखादिकम् ॥४९॥
सुशब्दादसुशब्दाच्च प्रत्ययो रोऽर्थ ईरिते[5] ।
ऊर्जमूर्गिति[6] चान्नं[7] स्याद् ऊर्जयत्यात्मभोजिनः ॥५०॥
अन्तर्णीतणिजर्थस्य[8] पूर्वमच्यपरं क्विपि ।
धातोरूर्जयतेरेवं[9] [10]बलप्राणनवाचिनः ॥५१॥
कुर्यात्तद्[11] बलवन्तं वा प्राणवन्तमथापि वा ।
पक्वं[12] वा सुप्रवृक्णं वा यत्तदूर्गित्युदाहृतम् ॥५२॥
पक्वशब्दपलोपे[13] च व्यत्यासे परयोरपि ।
वस्योठि[14] रपरे रूपम् [15]ऊर्गित्येतत् प्रसिध्यति ॥५३॥
व्रश्चेः[16] क्विप्यशयोर्लोपे कर्मण्यूठि तथा भवेत् ।
अन्नं[17] हि पक्वमेवेष्टं [18]वृक्णं छिन्नं परस्परम् ॥५४॥

---

१. कोशे 'रामत्वर्थीय' इत्यपपाठः । २. कोशे 'खले०' इत्यपपाठः ।

३. सोऽदेवानसृजत तत् सुराणां सुरत्वम् । असोरसुरानसृजत तदसुराणामसुरत्वम् (तै० ब्रा० २।२।९।४) इति विज्ञायते । निरु० ३।८॥

४. कोशे 'नाहेदूर्ध्वं' इत्यपपाठः । ५. पूर्वोक्ते मत्वर्थे इत्यर्थः ।

६. ऊर्गित्यन्ननाम । ऊर्जयतीति सतः । पक्वं सुप्रवृक्णमिति वा । निरु० ३।८॥

७. कोशे 'चाणा' इत्यपपाठः । ८. कोशे '०त निअर्थस्य पूर्वमत्यपरंत्विति' इत्यपपाठः ।

९. धा० १०।१६॥ १०. कोशे 'बलप्राणिन०' इत्यपपाठः ।

११. कोशे 'कुर्यात्ता' इत्यपपाठः । १२. कोशे 'पखं वासु प्रवृग्णं सत्तदुर्ग्वि०' इत्यपपाठः ।

१३. कोशे 'परवशब्द०' इत्यपपाठः । १४. कोशे 'वस्योङि' इति पाठः ।

१५. पक्व > क्व > ऊक् —इत्येवं प्रक्रियते ।

१६. कोशे 'प्रश्चेः वित्यशयेल्लोंपे कर्मण्युर्जि तथा' इत्यपपाठः । धा० ६।११॥ व्रश्च् क्विप् > व्रश्च् > व् र् च् > ऊक् —इति प्रक्रियते ।

१७. कोशे 'अन्तं' इत्यपपाठः । १८. कोशे 'वृग्णञ्छिन्नं' इत्यपपाठः ।

छिन्नमित्यपि चानेन विशदं प्रतिपादितम् ।
शालिर्वा[1] स्याद्यवागूर्वा तण्डुला दुग्धमेव वा ॥५५॥
अन्यद्वापि[2] शृतं तस्मादन्नमित्यभिधीयते ।
अद्यमानत्वसामान्याद् यवाग्वाद्यन्नमुच्यते ॥५६॥
उक्तवागर्थसद्भावाद्[3] अन्ने तत् परिकल्पनम् ।
निष्पूर्वस्य[4] सदेर्धातोर्जातावाधारवर्तिनि[5] ॥५७॥
निषादो धञि[6] सिद्धः स्याद् निसोऽर्थोऽतिशयस्त्विति ।
अस्मिन्नतिशयेनैव[7] लग्नं सन्नं हि पापकम् ॥५८॥
नैरुक्तग्रहणाच्चापि पक्षोऽन्य इह सूचितः ।
निषाद्यत्वाद् विनाश्यत्वाद् निषादः [8]कैश्चिदिष्यते ॥५९॥
अन्यैर्निषद्य[9] हन्तीति निषादः परिकल्पितः ।
अस्पृश्यः[10] प्रतिलोमोऽसौ रथकारोऽथवा मतः[11] ॥६०॥[12]
[वर्षासु रथकारस्य][13] तस्याप्याधानभावतः ।
शत्रः सौधन्वनो[14] नाम प्रसिद्धः सिन्धुदेशतः ॥६१॥

---

१. कोशे 'खलिर्वास्याद्यवागुर्वा तण्डलादग्ध०' इत्यपपाठः ।

२. कोशे 'अन्यथापिगतं तस्मात् नमित्य०' इत्यपपाठः ।

३. ऊर्जि पक्वत्वच्छिन्नत्वयोर्वर्तमानत्वाद् उक्तनिरुक्तिद्वयं परिकल्प्यत इति भावः ।

४. कोशे 'निष्पर्वस्य' इत्यपपाठः । धा० १।९०७॥

५. जातिरूपेऽधिकरण इत्यर्थः । निषादः कस्मात् ? निषदनो भवति । निषण्णमस्मिन् पापकमिति नैरुक्ताः । निरु० ३।८॥ ६. कोशे 'घन्नि सिद्ध स्यात् निसोथोति०' इत्यपपाठः ।

७. कोशे '०न्नत्रशयेनैवं लग्नं सन्तं हि पावकम्' इत्यपपाठः ।

८. ते क इति न ज्ञायते । ९. दुर्गस्कन्दाभ्याम् ।

१०. कोशे 'अस्तृश्यः' इत्यपपाठः । ११. कोशे 'मकः' इत्यपपाठः ।

१२. अतोऽग्रे कोशे—'असुराभिभवस्यापि प्रायेणात्र घटिष्यते । गन्धर्वादिष्टदेवत्वात् असुरत्वं न युज्यते ॥६१॥ यज्ञसंपादितं पंच' इत्यध्यर्द्धश्लोकपाठ उपलभ्यते । स चात्राप्रासङ्गिकत्वात् पूर्वत्र यथास्थानं (संख्या ४१-४२) वर्तमानत्वाच्च नादृतः ।

१३. द्र०—शाबरभाष्य ६।१।४६॥ तै० ब्रा० १।१।४।८॥ का० श्रौ० कर्कभाष्य १।१।१०॥

१४. कोशे 'शव सोधन्मनो' इत्यपपाठः । 'शत्रः' इति सन्दिग्धम् ! 'सौधन्वना ऋभवः' इति मन्त्रवर्णः (ऋ० १।११०।४॥ ३।६०।४) ।

मनुष्यमात्रवाचित्वे निस्सन्दिग्धामिमामृचम् ।
यत्पाञ्चजन्ययेत्याह[1] निस्संदिग्धः पदैक्यतः ॥६२॥
अर्थैकत्वं[2] पदैकत्वे न्याय्यमेव गवादिवत् ।
तद्धितप्रकृतिर्ह्येतत् पदं पञ्चजना इति ॥६३॥
तस्माञ्ञ्यप्रत्यये[3] रूपं भवार्थे पाञ्चजन्यया ।
खप्रत्यये[4] पुनर्युक्तं भवेत् पञ्चजनीनया ॥६४॥
संघातोऽवयवाधारस्तद्धितेनेह[5] कथ्यते ।
तथैव दृश्यते लोके तान्तवोऽयं पटस्त्विति ॥६५॥
अवयव्यर्थश्चेत्तत्र[6] जातिर्व्यक्त्याश्रयास्ति नः ।
विशेति सैव निर्दिष्टा मनुष्यव्यक्तिषु स्थिता ॥६६॥
यद्यप्यवयवार्थोऽत्र पदैक्येऽपि प्रतीयते[7] ।
तथापि युज्यते बाधः समुदायप्रसिद्धितः ॥६७॥
विप्रादयो निषादान्ता यद्यपि स्युर्विशस्तु[8] ते ।
मनुष्यत्वं तथाप्येषां पञ्चानामपि विद्यते ॥६८॥
मनुष्यमात्रवाचित्वे घोषोत्[स]र्गोऽपि युज्यते ।
यद्यदा[9] वृष्ट्यभावेन लोके दुर्भिक्षपीडिते ॥६९॥
इन्द्रे घोषा[10] असृक्षन्त विशा पञ्चजनीनया ।
सप्तम्या विषयः प्रोक्तो घोषाणाम् इन्द्र इत्यपि ॥७०॥
लौकिक्यस्तत्र[11] या घोषा वैदिक्यश्चापि[12] साम हि ।
भगवन्नव[13] देवेश भट्टारक शचीपते ॥७१॥

---

१. यत् पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।
अस्तृणाद् बर्हणा विपोऽर्यो मानस्य स क्षयः ॥ ऋ० ८।६३।७॥

२. कोशे 'अर्थैकं' इत्यपपाठः । ३. कोशे 'तस्याण्य०' इत्यपपाठः । महाभाष्य वा० ४.३।६०॥ ४. महाभाष्य वा० ५।१।६॥ ५. कोशे 'तद्धितेन ह' इति पाठः ।
६. कोशे 'अवयव्यथचेत्तत्र' इत्यपपाठः । ७. कोशे 'प्रदीयते' इत्यपपाठः ।
८. कोशे 'स्युर्भवन्तु' इत्यपपाठः । ९. कोशे 'वृष्यभावेन' इत्यपपाठः ।
१०. कोशे 'घोषं' इत्यपपाठः । ११. कोशे 'लौकित्यस्तत्र' इत्यपपाठः ।
१२. कोशे 'साम्ही' इत्यपपाठः । १३. कोशे 'भगवन्नेव' इत्यपपाठः ।

दयालो त्राहि[1] दुर्भिक्षाद् लोकं वृष्टचा[:]सुरान्तकम् ।
लौकिक्य एवमाद्याः[2] स्युरितराश्च स नो वृषन्[3] ॥७२॥
तदासावस्तृणाल्लोकं वर्षेणाच्छादयत्[4] स्फुटम् ।
बर्हणा सुप्रवृद्धेन विपो मेघो[5] विपाटतः ॥७३॥
मेधावी वा विपः प्रोक्तः सोऽप्यनर्थस्य [6]पाटकः ।
ईश्वरोऽयं इति प्रोक्त [7]ऋच्छतेरर्यतेऽर्थिभिः ॥७४॥
प्रार्थितोऽप्यस्तृणात्तस्मात् यतो मानस्य स क्षयः ।
मानशब्देन पूजोक्ता [8]गर्वो निर्माणमेव वा ॥७५॥
निवासः क्षयशब्दोक्तः पूजादेराश्रयः प्रभुः ।
प्रार्थितस्य प्रदातैव पूजादेराश्रयो भवेत् ॥७६॥
अदातुर्नैव पूज्यत्वं गर्वो वा कीदृशः पुनः ।
अप्रदाने [9]पुनर्वृष्टेर्निर्मातृत्वं न युज्यते ॥७७॥
मनुष्यैरेव वृष्टिश्च प्रार्थ्यते न सुरादिभिः ।
तस्मात् पञ्चजनाः प्रोक्ताः मनुष्या एव नेतरे ॥७८॥
त एव चेदिह प्रोक्तास्तदद्येत्यत्र[10] किं न ते ।
रूढया[11] वाप्यधिकाराद्वा पूर्वोक्ता यदि कल्पना ॥७९॥
न वार्यते तथाप्यस्यां मनुष्या एव निश्चिताः ।
पृञ्चेरन्[12] प्रत्यये पञ्च[13] गुणे रेफस्य मत्वतः ॥८०॥

---

१. कोशे 'म्राहि' इत्यपपाठः ।
२ कोशे '०माद्यासुः इतरा०' इत्यपपाठः ।
३. ऋ० १।७।६॥ ४. कोशे '०दयन् स्पुटम्' इत्यपपाठः ।
५. कोशे 'मेघ विपाटतः' इत्यपपाठः । ६. कोशे 'पाठनः' इत्यपपाठः ।
७. कोशे 'ऋछेतेर्येतेर्थिभिः' इत्यपपाठः । धा० १।९८३॥
८. कोशे 'गर्वो न्निर्मा०' इत्यपपाठः । ९. कोशे 'पुनः स्पृष्टे निर्मा०' इत्यपपाठः ।
१०. उक्तचरायामृचि (ऋ० १०।५३।४)
११. कोशे 'रूढचात्यधिका०' इत्यपपाठः ।
१२. कोशे 'पृच्छेरन्०' इत्यपपाठः । धा० ७।२५॥
१३. पञ्च पृक्ता संख्या । स्त्रीपुंनपुंसकेष्वविशिष्टा । निरु० ३।८॥

लिङ्गत्रयेण [1]संपृक्ता संख्या संख्येयगोचरा ।
स्त्रीपुंनपुंसकेष्वस्या[2] विशेषो न हि दृश्यते ॥८१॥
स्त्रियः पञ्च पुमांसश्च तथा पञ्चेतराण्यपि ।
रूढित्वान्न प्रसङ्गोऽस्ति [3]षडादिष्विति गम्यताम् ॥८२॥
पञ्चशब्दाभिधेयायाः [4]पृक्तताऽत्र विधीयते ।
न पञ्चशब्दवाच्यत्वं [5]पृक्ताया इह वर्ण्यते[6] ॥८३॥
द्वादशैवेह नामानि[7] बाहूनामप्यतः[8] परम् ।
बाधेरुप्रत्यये[9] रूपं करणे घस्य हत्वतः ॥८४॥
बाहू इति विनिर्दिष्टं कर्माण्याभ्यां प्रबाधते ।
निष्ठां [10]गमयतीत्यर्थो बाधैषां हि समापनम् ॥८५॥
विंशतिर्द्वे[11] च नामानि त्वङ्गुलीनां ततः परम् ।
अग्रे हस्तस्य गच्छन्ति प्रथमं वापि कर्मसु ॥८६॥
तस्मादङ्गुलयः प्रोक्ता [12]अग्रगाम्यर्थदृष्टतः ।
अकारञ्चैव रेफञ्च समादायाग्रशब्दतः ॥८७॥
स्थापयित्वा तयोर्मध्ये विपर्यस्य गमि[13] तथा ।
इकारे प्रत्यये चैव तस्मात्ताच्छीलिके कृते ॥८८॥

१. कोशे 'संवृत्ता' इत्यपपाठः । २. कोशे '०नपुंसकेष्वस्य' इत्यपपाठः ।
३. कोशे 'षसादि०' इत्यपपाठः । ४. कोशे 'वृत्तात्र' इत्यपपाठः ।
५. कोशे 'वृत्ताया' इत्यपपाठः ।

६. तथा चावोचत् स्कन्दः—ननु षडादीन्यप्यविशिष्टानि ? उच्यते, प्रत्ययोपात्तरूढ्यर्थसम्बन्धस्वार्थाभिधानाददोष इत्युक्तम् । अपि च न या पृक्ता सा पञ्चेति, किन्तु या पञ्च सा पृक्तेति ।

७. बाहुनामान्युत्तराणि द्वादश । बाहुः कस्मात् ? प्रबाधत आभ्यां कर्माणि । निरु० ३।८॥ ८. कोशे '०नामव्यतः' इत्यपपाठः ।

९. धा० १।५॥ १०. कोशे 'निष्ठांगं नयती०' इत्यपपाठः ।

११. अङ्गुलिनामान्युत्तराणि द्वाविंशतिः । अङ्गुल्यः कस्मात् ? अग्रगामिन्यो भवन्तीति वा । अग्रगालिन्यो भवन्तीति वा । अग्रकारिण्यो भवन्तीति वा । [अग्रसारिण्यो भवन्तीति वा] अङ्कना भवन्तीति वा । अञ्चना भवन्तीति वा । अपि वाभ्यञ्जनादेव स्युः ।

१२. कोशे 'अग्रगम्यर्थ०' इति पाठः । १३. धा० १।१०३१॥

उपधोत्वे रलत्वे च भवेदङ्गुलयस्त्विति[1] ।
गलन्त्यग्रेण वा वारि तस्मादङ्गुलयो मताः ॥८९॥
अग्रशब्दादगित्येतद्[2] गलतेः पूर्वमिष्यते ।
प्रत्ययश्चोक्त एव स्यात् उपधोत्वञ्च तादृशम् ॥९०॥
गकारस्य मकारत्वं पूर्वस्यैवञ्च सिध्यति[3] ।
अङ्के रञ्चेस्तथाञ्जेश्च[4] [5]कादेर्गत्वमुलौ कृते ॥९१॥
अङ्क्यते[6] लिख्यते चाभिरच्यते[7] गम्यतेऽथवा ।
अज्यते व्यज्यते स्पष्टं [8]सृष्टं दृष्टमपि स्मृतम् ॥९२॥
तस्मादङ्गुलयो नाम [9]तासामेषोपवर्ण्यते ।
अङ्गुल्यर्थत्वमिद्ध्यर्थम् अवन्यादिपदस्य तत्[10] ॥९३॥
नद्योऽप्यवनयः प्रोक्ताः पृथिव्यप्यवनिः[11] स्मृता ।
कक्ष्यायोक्त्रपदाभ्यां[12] च रज्जुरप्यभिधीयते ॥९४॥
अध्वनः परिमाणे च तथा योजनमित्यपि ।
रश्मिष्वभीशुशब्दोऽपि रज्वां [13]बाह्वोश्च दृश्यते ॥९५॥
अतश्च संशयोत्पत्तेरिहाङ्गुल्यर्थतोच्यते[14] ।
दशावनिभ्य[15] इत्यादौ ग्राव्णामन्यपदार्थता ॥९६॥

---

१. तथा चेत्थं प्रक्रियते—अग्र गम् इ > अ म् गर् इ > अम् गुलि > अङ्गुलि ।

२. कोशे 'अग्रशब्दादगत्येत गलतेः' इत्यपपाठः । धा० १'५७९॥

३. तथा चैषा प्रक्रिया—अग्र गल् इ > अग् गल् इ > अग् गुल् इ > अम् गुल् इ > अङ्गुलि ।

४. कोशे 'अ केरंजेस्तथान्चेश्च' इति पाठः । धा० १।८७॥ १।२०३ ॥ ७।२१॥

५. कोशे 'कादगत्वमुलौ' इत्यपपाठः । उलौ प्रत्यये यथासंख्यं ककारचकारजकाराणां गकारादेश इत्यभिप्रायः ।

६. कोशे 'अत्येते' इत्यपपाठः ।

७. कोशे 'चापिरज्यते' इत्यपपाठः ।

८. कोशे 'सृष्टं सृष्टादष्टमपि' इति पाठः ।

९. तासामेषा भवति । निरु० ३।८॥

१०. अङ्गुल्यर्थत्वमित्यर्थः ।

११. कोशे '०प्यवनी' इति पाठः ।

१२. कोशे '०योक्तपदा०' इत्यपपाठः ।

१३. कोशे 'बाहोश्च' इत्यपपाठः ।

१४. कोशे '०रिहान्तुल्यर्थ०' इत्यपपाठः ।

१५. दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुर दश युक्ता वहद्भ्यः ॥ १०।९४।७॥

दशैवावनयो[१] येषां ग्राव्णामङ्गुलयो ग्रहे ।
दशावनिभ्य इत्येवम् उक्तास्ते प्रस्तुतत्वतः ॥९७॥
इहावन्यादिशब्दानाम् [२]अर्थैक्येऽपि न जामिता[३] ।
प्रतिशब्दं क्रियाभेदात् स्तुत्यर्थः स विवक्षितः ॥९८॥
रक्षार्थस्यावतेर्धातोरनौ[४] कर्तरि कारके ।
अङ्गुल्योऽवनयः[५] प्रोक्ताः कर्मण्येता[६] अवन्ति हि ॥९९॥
साधनत्वेन रक्षन्ति न कर्माणि विनाङ्गुलीः[७] ।
रज्जुः कक्षे भवत्वेन कक्ष्येत्येवं पुरोदितम्[८] ॥१००॥
कक्ष्याः[९] प्रकाशयन्तीति भाष्यवाक्यानुरोधतः ।
आसज्यते व्यज्यते वा [१०]स्पृष्टं दृष्टमपि स्थितम् ॥१०१॥
ख्यातेरेव[११] यथा रूपं तथा लक्षणमूह्यताम् ।
अन्तर्णीतणिजर्थस्य[१२] [१३]काशेर्यप्रत्यये कृते ॥१०२॥
अभ्यस्त उपधालोपे [१४]शषत्वे चैव सिध्यति[१५] ।
अनुष्ठानेन विज्ञेयं कर्मणाञ्च प्रकाशनम् ॥१०३॥
योक्त्राणि[१६] योजनानीति व्याख्यातं स्पष्टवृत्तितः ।
युजेरेतद् द्वयं रूपं सिद्धमेवेत्यमन्यत ॥१०४॥

---

१. कोशे 'दशेवा०' इत्यपपाठः । २. कोशे 'अर्थेकोपि' इत्यपपाठः ।
३. पुनरुक्तिरित्यर्थः । ४. धा० १।६३१॥
५. अवनयोऽङ्गुल्यो भवन्ति, अवन्ति कर्माणि । निरु० ३।९॥
६. कोशे 'कर्मण्येता भवन्ति' इत्यपपाठः ।
७ कोशे 'विनांगुलिः' इत्यपपाठः । ८. निरु० २।२॥
९. कोशे विसर्गरहितः पाठः । कक्ष्याः प्रकाशयन्ति कर्माणि । निरु० ३।९॥
१०. कोशे 'स्पष्टं' इति पाठः ।
११. धा० २।५१॥
१२. कोशे '०णिजन्तस्य' इति पाठः । १३. धा० १।६७८॥
१४. कोशे 'शेषत्वे' इत्यपपाठः ।
१५. इयं चात्र प्रक्रिया—काश् य > काश् काश् य > ककाश् य > कक्श् य > कक्ष् य > कक्ष्या । १६. योक्त्राणि योजनानीति व्याख्यातम् । निरु० ३।९॥

युजेष्ट्रन्प्रत्यये[1] कृत्वे गुणे योक्त्रं [2]पदं ल्युटि ।
कारकस्य तु भेदेन पौनरुक्त्यं[3] न विद्यते ॥१०५॥
ग्रावाणोऽभिषवे[4] ह्यभियुज्यन्त इति योक्त्रता ।
एषु[5] युज्यन्त इत्येवं योजनत्वं विवक्षितम् ॥१०६॥
अशेरुण्यभिपूर्वस्य[6] पूर्वरूपसरूपतः ।
आदेरभीशवो[7] रूपं [8]कर्माण्यश्नुवते हि ताः ॥१०७॥
व्याप्नुवन्ति हि कर्माणि कुर्वन्त्योऽङ्गुलयः[9] स्फुटम् ।
रक्षणे दश येषां स्युर्दश येषां प्रकाशने[10] ॥१०८॥
दश योगे तथा येषां करणत्वं समाश्रिताः ।
तथाधिकरणे येषां [11]योगस्यैव दश स्थिताः ॥१०९॥
दशैव व्यापने येषां जरा येषां न विद्यते ।
वहन्ति ते यथा युक्ता धुरो दश दर्शत्विजाम् ॥११०॥
अध्वर्यौ नेष्टर्याग्नीध्रे [12]निष्ठा अङ्गुलयो धुरः ।
धूर्वणाद्धारणाद्वापि [13]धुर इत्युदिता बुधैः ॥१११॥
वहन्त्येवाङ्गुलयस्तेऽपि[14] प्रापयन्त्यूर्ध्वमप्यधः ।
यथाप्यङ्गुलयस्तेषां[15] ग्राव्णामिष्टा विधारणे[16] ॥११२॥

---

१. कोशे 'युजेष्ठत्प्रत्यये' इत्यपपाठः । धा० ७।७॥ अष्टा० ३।२।८२॥
२. कोशे 'परे' इत्यपपाठः ।
३. कोशे 'पौनरुक्तन्न' इत्यपपाठः ।
४. कोशे 'ग्रावाणो हिषवे ह्यतियुज्यन्त इति गोक्तृता' इत्यपपाठः ।
५. एभिः, एषु—इति व्युत्पत्तिप्रदर्शनमात्रम् इति लिङ्गसामान्यनिर्देशः ।
६. धा० ५।१८॥
७. कोशे 'आदेरभिशवो' इत्यपपाठः ।
८. अभीशवोऽप्यश्नुवते कर्माणि । निरु० ३।९॥
९. कोशे विसर्गरहितः पाठः ।
१०. कोशे 'प्रकाशते' इत्यपपाठः ।
११. कोशे 'गो गस्यैव' इत्यपपाठः ।
१२. कोशे 'अध्वर्योनिष्टग्वीर्यं निष्ठा' इत्यपपाठः ।
१३. कोशे 'दुर' इत्यपपाठः ।
१४. कोशे '०वांगुलीयस्ते०' इत्यपपाठः ।
१५. कोशे 'यद्यप्यंगुल०' इति पाठः ।
१६. कोशे '०मिष्टापि धारणे' इति पाठः ।

ग्रावाणोऽपि तथा तासामुत्क्षेपे [1]धारका इव ।
तेभ्य एवं विशिष्टेभ्यो ग्रावभ्यो[2] यूयमर्चत ॥११३॥
यूयमित्यपि चाक्षिप्ता याज्ञे कर्मण्यवस्थिताः ।
उच्चारणेऽर्चतिर्धातुः[3] स्तुतीनामत्र गम्यते ॥११४॥
विभक्तिव्यत्ययो [4]वाच्यश्चतुर्थ्यः कर्मगोचराः ।
यद्वा दश दशैवेष्टाश्चमसा सवनत्रये ॥११५॥
ऋणं ते यजमानस्य घ्नन्त उक्ता धुरः पुनः ।
युक्ता इति द्वितीयैत्र धुरामेतद्विशेषणम् ॥११६॥
अर्चतेप्यथवैतेन युक्ता उक्ता इहर्त्विजः ।
चमसान्प्रति[5] योक्तृत्वं ग्राव्णां सोमप्रदानतः ॥११७॥
चमसान्[6] प्रापयन्त्येते ददतः सोममध्वरम् ।
[धू]र्वतेरन्त्यलोपेन[7] क्विपि स्यात् पुनरित्यपि ॥११८॥
युगैकदेशभूतापि[8] धूरस्मादेव धूर्वतेः ।
विहन्ति[9] वहमित्येतत् धात्वर्थस्योप[वर्ण]नम् ॥११९॥
अश्वादीनां वहः[10] स्कन्धो युक्तानां[11] हन्यते धुरा ।
यद्वा [12]धारयतेरेव धार्यन्तेऽन[डु]हस्तया ।१२०॥

---

१. कोशे 'धारणा' इति पाठः ।

२. कोशे 'ग्रावच्यो' इत्यपपाठः ।

३. कोशे '०रणोक्चतिर्वातु०' इत्यपपाठः । धा० १।२१९॥

४. कोशे 'वाच्टा चतुर्थ्यर्थः कर्म०' इत्यपपाठः ।

५. कोशे 'चमसात्प्रति योद्धृत्वं' इत्यपपाठः ।

६. कोशे 'चमसात्प्रावयन्त्येते' इत्यपपाठः ।

७. कोशे 'वंतेरत्तलोपेन क्षिपिस्स्यात्' इत्यपपाठः । धा० १।६०४। अष्टा० ६।४।२१॥ धुधूर्वतेर्वधकर्मगः । इयमपीतरा धूरेतस्मादेव । विहन्ति वहम् । धारयतेर्वा । निरु० ३।९॥

८. कोशे 'युगैकत्रेशभूतापि धुर०' इत्यपपाठः ।

९. कोशे 'वहन्ति' इत्यपपाठः । १०. कोशे विसर्गरहितः पाठः ।

११. कोशे 'युकानाहन्यते धुराः इत्यपपाठः ।

१२. धा० १।९४८॥

अङ्गुलीष्वपि चैतत्स्याद् [1]आभिः सर्वं हि धार्यते ।
धातवः [2]कान्तिकर्माणो दशाष्टौ चोत्तरे त्वतः ॥१२१॥
आख्यातान्येव तानि [3]स्युरुश्मसीत्यादिकानि हि ।
कान्तिरिच्छा क्रियैवैषा[4] साध्यमाना प्रतीयते ॥१२२॥
अष्टाविंशतिरन्नस्य[5] नामानीहोत्तराण्यतः ।
आनमेरन्नमत्रोक्तम्[6] आनतोक्त्यावगम्यते ॥१२३॥
भूतेभ्यो जातमात्रेभ्य [7]आनतं तदुपस्थितम् ।
जीवन्ति हि न भूतानि विनान्नेन कदाचन ॥१२४॥
नमतेर्ग्रसनेऽन्नं[8] स्याद् न प्रह्वत्ववाचिनः ।
निष्ठानत्वेऽथवा [9]रूपमत्तेः स्यात् कर्तृकर्मणोः ॥१२५॥
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते[10] ।
एवं श्रुत्या निरुक्तत्वात् कारकद्वयसंग्रहः ॥१२६॥
कर्तृत्वं पुनरेतस्य प्राणभावेन तिष्ठतः ।
अद्यन्ते प्राणिभिस्सृष्टौ[11] प्राणिनोऽपि हि सर्वतः ॥१२७॥
धातवस्त्वत्तिकर्माण[12] आत्रयत्यादयो दश[13] ।
तत्र [14]बब्धामिति त्वस्य पृथक्पाठप्रयोजनम् ॥१२८॥

---

१. कोशे 'आदिस्सर्वं' इत्यपपाठः ।

२. कान्तिकर्माण उत्तरे धातवोऽष्टादश । निरु० ३।९॥

३. कोशे 'स्युरुशदीत्यादि०' इत्यपपाठः ।

४. कोशे 'क्रियैवेषा' इत्यपपाठः ।

५. अन्ननामान्युत्तराण्यष्टाविंशतिः । अन्नं कस्मात् ? आनतं भूतेभ्यः, अत्तेर्वा । निरु० ३।९॥ ६. कोशे 'आनतेरणमत्रोक्तं' इत्यपपाठः । धा० १।८६७॥

७. कोशे 'अन्तं' इत्यपपाठः ।

८. कोशे 'न द्योति ग्रसितेन्नं' इत्यपपाठः ।

९. कोशे 'रूपमत्तेस्या' इत्यपपाठः ।

१०. तै० उप० २।२॥ ११. कोशे 'सृष्टं' इत्यपपाठः ।

१२. अत्तिकर्माण उत्तरे धातवो दश । निरु० ३।९॥

१३. कोशे 'दशः' इत्यपपाठः । १४. कोशे 'बघ्नामीति तस्य' इत्यपपाठः ।

न किञ्चिद् दृश्यते स्पष्टं धात्वन्यत्वं [1]परे विदुः ।
धातुभेदप्रक्लृप्तेश्च न किञ्चिद् दृश्यते फलम् ॥१२९॥
अष्टाविंशतिरेव[2] [3]स्युर्बलनामान्यतः परम् ।
बलं भरमिति प्रोक्तं विभर्तेरच्यृतो[4] गुणे ॥१३०॥
भस्य बत्वे रलत्वे च सर्वं तेन हि धार्यते ।
अष्टाविंशतिरेव[5] स्युर्धननामान्यतः परम् ॥१३१॥
पूर्वैस्समानसंख्यत्वाद् एवशब्दं पपाठ ह ।
हिरण्यस्यैव नामानि द्वितीये[6] निजगाद ह ॥१३२॥
मघादीन्यविशेषेण धनानामिति गम्यताम् ।
धिनोतेः[7] [8]प्रीणनार्थस्य कर्तर्यचि धनं स्मृतम् ॥१३३॥
इकारस्य तथैवात्वे[9] सर्वस्य प्रीणकं[10] हि तत् ।
गोनामानि[11] नवात्र स्युर्निरुक्तं गोपदं पुरा[12] ॥१३४॥
अतः परं दशाम्नाताः [13]क्रुध्यत्यर्थास्तु धातवः ।
क्रोधस्यापि[14] दशैकञ्च नामानि स्युरनः परम् ॥१३५॥
क्रुध्यर्थोऽपि[15] कालुष्यं चेतसो[16] विक्रिया क्वचित् ।
तस्यैव सत्त्वभूतस्य नामानि कवयो विदुः ॥१३६॥

---

१. स्कन्दः ।

२. बलनामान्युत्तराण्यष्टाविंशतिः । बलं कस्मात् ? बलं भरं भवति, बिभर्त्तेः । निरु० ३ ९॥ ३. कोशे 'स्युः ब...लनामा०' इति पाठः ।

४. कोशे 'बिभर्त्तेरध्यतो' इत्यपपाठः । धा० ३।५॥

५. धननामान्युत्तराण्यष्टाविंशतिरेव । धनं कस्मात् ? धिनोतीति सतः । निरु० ३।९॥

६. निरु० २।१०॥ ७. धा० ५।६२४॥

८. कोशे 'प्रीणतार्थस्य कर्तर्यपि' इत्यपपाठः ।

९. वकारलोपे च । १०. कोशे 'प्रीणनं' इति पाठः ।

११. गोनामान्युत्तराणि नव । निरु० ३।९॥ १२. निरु० २।५॥

१३. कोशे 'क्रुध्यर्थास्तथा तव' इत्यपपाठः । क्रुध्यतिकर्माण उत्तरे धातवो दश । निरु० ३।९॥ १४. क्रोधनामान्युत्तराण्येकादश । निरु० ३।९॥

१५. कोशे 'कृत्यर्थोपि' इत्यपपाठः ।

१६. कोशे 'चेतसोपि क्रिया' इत्यपपाठ ।

धातवो [1]गतिकर्माणो द्वाविंशतिशतं परे ।
विशिष्टगतिवाचित्वं केषाञ्चिद्यद्यपीष्यते ॥१३७॥
देशान्तराप्तिसामान्या[2] गतिरत्र विवक्षिता ।
गमिनाख्यातभूतेन साध्यमानाभिधीयते ॥१३८॥
षड्विंशतिस्तु नामानि [3]क्षिप्रस्याहुरतः परम् ।
गुणः कर्तुः क्रियाया वा क्षिप्रशब्देन वर्ण्यते ॥१३९॥
द्रुतोपासनरूपोऽसौ क्रियायास्तद्वतोऽपि वा ।
त्वरन्तं[4] शकुनिञ्चैव [5]भुरण्युरिति वक्ष्यति[6] ॥१४०॥
मतुब्लोपप्रक्लृप्त्या[7] वा तद्वतां वाचकानि वै ।
एकादशान्तिकस्यापि[8] नामानि स्युरतः परम् ॥१४१॥
निष्ठार्थे [9]नयतेराङि तिकपि[10] ह्लसितेऽन्तिकम् ।
सन्निकृष्टत्वसामान्याद् आनीतं त्वित्यभाषत[11] ॥१४२॥
संग्रामस्यापि[12] नामानि षट्चत्वारिंशतं विदुः ।
संपूर्वस्य [13]गमेर्ग्रामो [14]भवेदाधारवर्तिनि ॥१४३॥

---

१. गतिकर्माण उत्तरे धातवो द्वाविंशशतम् । निरु० ३।६॥

२. कोशे '०सामान्यात्' इति पाठः ।

३. कोशे 'क्षिप्रस्याहरतुः' इत्यपपाठः । क्षिप्रनामान्युत्तराणि षड्विंशतिः । क्षिप्र कस्मात् ? संक्षिप्तो विकर्षः । निरु० ३।६॥

४. कोशे 'त्वदन्तं' इत्यपपाठः ।

५. कोशे 'भुवण्यु०' इत्यपपाठः ।

६. निरु० १२।२२॥

७. गुणवचनेभ्यो मतुपो लुक् । महाभाष्य वा० ५।२।६४॥

८. अन्तिकनामान्युत्तराण्येकादश । अन्तिकं कस्मात् ? आनीतं भवति । निरु० ३।६॥

९. धा० १।६५०॥

१०. कदाचिदत्र 'तिकडि' इति पाठः स्यात् । डित्त्वसामर्थ्याच्च नयतेरीकारलोपः स्यात् ।

११. कोशे '०भाषतः' इत्यपपाठः ।

१२. संग्रामनामान्युत्तराणि षट्चत्वारिंशत् । संग्रामः कस्मात् ? संगमनाद्वा, संगरणाद्वा, संगतौ ग्रामाविति वा । निरु० ३।६॥

१३. कोशे 'गमेग्रामो' इत्यपपाठः । धा० १।१०३१॥

१४. कोशे 'भवेराधार०' इत्यपपाठः ।

संग्राम इति रूपं तु [1]संगच्छन्तेऽत्र सैनिकाः ।
ग्रामे[2] वा गिरतेरिष्टमृकारस्यापि रत्वतः ॥१४४॥
ज्ञेयं संगरणं [3]चापि नामगोत्रादिशब्दनम् ।
आगच्छ [4]सूत राधेय पाण्डवोऽस्मि धनंजयः ॥१४५॥
एवं संशब्दयन्तो हि युध्यन्ते शूरमानिनः ।
ग्रामौ[5] वा संगतावस्मिन् समुदायौ [6]युयुत्सताम् ॥१४६॥
तत्रान्यत्रापि[7] रूढानां [8]संग्रामार्थत्वसिद्धये ।
निगमाः खल इत्यस्य भवन्तीत्याह भाष्यकृत् ॥१४७॥
धान्यमर्दनदेशेऽपि मनुष्ये च दुरात्मनि ।
खल शब्दप्रयोगस्य दृष्टत्वात् संशयोऽस्ति नः ॥१४८॥
निगमैर्निर्णयस्तस्य[9] वाजसात्यादिकेष्वपि ।
अभीदमेकमित्येषा[10] [11]त्वेकैवात्र निदर्श्यते ॥१४९॥
वैकुण्ठो भगवानिन्द्रो ब्रूते [12]सामर्थ्यमात्मनः ।
देवता तत्त्वसंमूढमनुष्यानुजिघृक्षया ॥१५०॥
अभ्यस्म्यभिभवामीदमेकमेकार्थसंभवम् ।
अर्थैकपरमित्यर्थस्तस्मान्नार्थपरो[13] भवेत् ॥१५१॥

---

१. कोशे 'संगमन्ते०' इत्यपपाठः ।
२. कोशे 'आपे' इत्यपपाठः । धा० १।९८४॥
३. कोशे 'वापि' इति पाठः ।
४. कोशे 'सुत' इत्यपपाठः ।
५. कोशे 'ग्रामो' इत्यपपाठः ।
६. कोशे 'ययुत्वाताम्' इत्यपपाठ ।
७. कोशे 'यत्रान्यत्र०' इति पाठः । तत्र खल इत्येतस्य निगमा भवन्ति । निरु० ३।९॥
८. कोशे '०मार्थन्त्वसि०' इत्यपपाठः ।
९. कोशे '०र्णयन्तस्य वाजमात्मादिगेष्वपि' इत्यपपाठः ।
१०. अभी३दमेकमेको अस्मि निष्षाडभि द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥ ऋ० १०।४८।७॥
११. कोशे '०मित्येषा मेको निदश्यते' इति पाठः ।
१२. कोशे 'सामर्थमा' इत्यपपाठः ।
१३. कोशे 'अर्थैक०' इत्यपपाठः ।

निष्षाण्निषहमाणो[1] ह निष्कुष्यैनं विनाशयन् ।
द्वावप्यभ्यस्मि तञ्चैव तथा कामपरं नरम् ॥१५२॥
तन्तुनिर्णास्तितञ्चैव[2] यश्च पाषण्डमाश्रितः ।
तमप्यभिभवाम्येवं[3] किं ते कुर्वन्ति मे त्रयः ॥१५३॥
खले संग्राम इत्यर्थ इवार्थे नेति वर्तते ।
भूरीनपि तथा हन्मि संग्रामे दैत्यदानवान् ॥१५४॥
पर्षानपि तथा हन्मि संगतान्[4] दुष्टकर्मसु ।
किं[5] मा निन्दन्ति तेऽनिन्द्राश्शत्रवो न कदाचन ॥१५५॥
इन्द्रो न विद्यते येषां ज्ञायमानतया प्रभुः ।
तेऽनिन्द्रा इन्द्रतो वान्ये दुर्बलाः पापचेतसः ॥१५६॥
इन्द्रं ये हि विदुस्ते च ये चेन्द्रादपरे नराः ।
स्वकर्मपरिविभ्रष्टा हता निन्दन्ति ते कथम् ॥१५७॥
यावदेव न निन्दन्ति ताव[देव च ते]हताः ।
निन्दनेन[6] सुरो नैषामिति किं मेत्यभाषत ॥१५८॥
एवं व्याख्यायमाने तत् प्रस्तुतोऽर्थः[7] प्रसिध्यति ।
धान्यमर्दनदेशे[ऽपि खलशब्दोऽ]त्र योजितः ॥१५९॥
पर्षानिति[8] तथैवायं धान्यपूलेषु योजितः ।
उपपन्नेऽपि मन्त्रार्थे तेषां न प्रस्तुतं भवेत् ॥१६०॥
तथा संग्रामनिर्देशः तथै.......................पि ।
भाष्यञ्चापि न युज्येत क्लिष्टा वा योजना भवेत् ॥१६१॥

---

१. कोशे 'निषाण्णिषमाणो ह निष्क्रिष्यैनां विना०' इत्यपपाठः ।
२. यथाकोशं पाठः । 'अभिभवामि तौ चैव' इति पाठोऽत्रोहितः स्यात् ?
३. कोशे 'तामप्यभिभवामेव्य किन्ते कुर्वन्ति नेत्रयः' इत्यपपाठः ।
४. कोशे 'संगतो' इत्यपपाठः ।
५. कोशे 'कर्मान्निदन्नि ते हीन्द्राश्शत्रवो' इत्यपपाठः ।
६. कोशे 'निन्दनेव' इति पाठः ।
७. कोशे विसर्गरहितः पाठः ।
८. कोशे 'वर्षानित्ति' इत्यपपाठः ।

एतेरेको[1] [2]गुणे के स्यात् प्रत्यये [3]कर्तृगोचरे ।
संख्येति [4]वाच्यमस्माभिर्निरुक्तस्य[मते]त्यपि ॥१६२॥
द्वित्वादिलक्षणां[5] संख्यां सर्वत्रैषा गतैव हि ।
एकाद्यवयवेनैव संख्या सर्वोत्तरेष्यते ॥१६३॥
संख्या नाम पुनः केयं धर्मः संख्येयगोचरः ।
एकत्वादिप्रती[ती]नाम् आहुरालम्बनं च तम्[6] ॥१६४॥
येन यद् गृह्यते द्रव्यं गुणो वापीह केनचित् ।
तेनैव तद्गता संख्या गृह्यते[7] चक्षुरादिना ॥१६५॥
एकोऽयमिति [8]दृष्ट्वैव स्पृष्ट्वै[व]वावगच्छति ।
न द्रव्यमात्रबोधोऽयं न च मिथ्या दृढत्वतः ॥१६६॥
एक [9]इत्यादिके शब्दे संख्या स्पष्टं प्रतीयते ।
क्वचिद्विशिष्टसंख्येयं पदान्तरसमर्पितम् ॥१६७॥
गुणत्वादेव वा संख्या संख्येयं किञ्चिदाक्षिपेत्[10] ।
नाधारेण विना तस्याः [11]स्थितिरित्यर्थकल्पना ॥१६८॥
तद्विशेषप्रतीतिस्तु भवेच्छब्दान्तराद्भुवा[12] ।
विशिष्टवाच्यपक्षेऽपि बुद्धिः पूर्वं विशेषणे ॥१६९॥
पश्चाद्विशेष्य इत्येवं शब्दात्संख्यामतिः[13] स्फुटम् ।
संख्यामत्या व्यपेतत्वात् संख्येये धीर्न शब्दतः ॥१७०॥

---

१. एक इता संख्या । निरु० ३।१०॥ धा० २।३६॥
२. कोशे 'गुणेकस्स्यात्' इत्यपपाठः । ३. कोशे 'कतृगे चरे' इत्यपपाठः ।
४. कोशे 'वाच्यमस्माभि निरुक्त०' इत्यपपाठः ।
५. कोशे '०लक्षणो संख्या सर्व शैशा' इत्यपपाठः ।
६. तं धर्ममित्यर्थः । ७. कोशे 'गृह्यतेन्यक्षरा०' इत्यपपाठः ।
८. कोशे 'दृष्ट्वेव' इत्यपपाठः ।
९. कोशे 'इत्यादिते' इत्यपपाठः । १०. कोशे '०दाक्षिपत्' इत्यपपाठः ।
११. कोशे 'स्थितिवित्यर्थ०' इत्यपपाठः ।
१२. कोशे '०रोद्भवम्' इत्यपपाठः ।
१३. कोशे '०संख्यामिति' इत्यपपाठः ।

प्रतिपाद्य यथा गोत्वं [1]व्यक्ति न प्रतिपादयेत् ।
तथा संख्याञ्च शब्दोऽयं [2]संख्येयं नावबोधयेत् ॥१७१॥
संख्येयस्यैव वाच्यत्वं यदि वाभ्युपगम्यते ।
इहैक इति निर्देशः संख्येत्यपि न युज्यते ॥१७२॥
एकस्संख्येय[3] इत्येवं वाच्यं [4]स्यादित इत्यपि ।
अभिधेयानुरूपं हि लिङ्गमिष्टं मनीषिभिः ॥१७३॥
आविष्टलिङ्गतोऽन्यत्र संख्याया एक इत्यपि ।
आविष्टलिङ्ग एवेष्टं तेन नात्र विरुध्यते ॥१७४॥
संख्याया गुणभावश्चेत्संख्येयं प्रति सम्मतः ।
अस्त्वसावभिधेयाया [5]व्यक्ति प्रत्याकृतेरिव ॥१७५॥
निकृष्टगुणवाचित्वे [6]पटादेरेक इत्यपि ।
प्रसज्यते प्रयोगश्चेदस्तु केन निवार्यते ॥१७६॥
अदृष्टत्वादनिष्टश्चेन्मा [7]भूत् किं तेन नो भवेत् ।
संख्याविशिष्टसंख्येयवाचित्वमथवा भवेत् ॥१७७॥
एक इत्युदिता संख्या गता संख्येयमाश्रयम् ।
संख्येयनिष्ठता चैव संख्याया मुनिनोदिता ॥१७८॥
संख्याप्राधान्यविज्ञानं तथाप्याविंशतेरिह ।
गावो विंशतिरित्येवं गवां विंशतिरित्यपि ॥१७९॥
प्राधान्यमुभयोरिष्टम् उत्तरेषु तथोक्तितः ।
गावो विंशतिरित्यत्र संख्या स्याद् गोविशेषणम् ॥१८०॥
गवां विंशतिरित्यत्र गावस्संख्याविशेषणम् ।
विशेषणविशेष्यत्वमर्थानां स्याद्विवक्षया ॥१८१॥

---

१. कोशे 'व्यक्तिनं' इत्यपपाठः।
२. कोशे 'संख्यं' इत्यपपाठः। ३. कोशे 'एतस्सं०' इत्यपपाठः।
४. कोशे 'स्यादत' इत्यपपाठः। ५. कोशे 'वक्ति' इत्यपपाठः।
६. कोशे 'पदादेरक' इत्यपपाठः।
७. कोशे 'भूतिन्तेन' इत्यपपाठः।

तथा च मेघनीलोऽयं[1] नीलमेघोऽयमित्यपि ।
वस्तुत्वं वाच्यता चैवं संख्याया उपपादिम् ॥१८२॥
एकेनैकेन चान्येन [2]द्वित्वमप्युपजन्यते ।
द्वाभ्याञ्चैकेन[3] चान्येन त्रित्वं सर्वं तथा परम् ॥१८३॥
संख्याख्येन गुणेनैव संख्याख्यो जन्यते गुणः ।
इकारे[4] द्रवते[र्धातोः]लोपे रेफस्य कर्तरि[5] ॥१८४॥
सा[6] पूर्वस्य न संभक्ता [7]नावाप्ता दशलक्षणाम् ।
वनोतेरपि[8] नैवोक्तस्त्वर्थो [9]नापेरिदं पदम् ॥१८५॥
नन्वस्ति दशसंख्यायां नापरिच्छेदकत्वतः ।
विरोधाद्वास्तवी सत्ता न तत्रास्या निवार्यते ॥१८६॥
अविरोधादतश्चैवमितेत्याद्युपपद्यते[10] ।
दस्ता[11] दशेति निर्दिष्टा [12]दस्यतेरनि कर्तरि ॥१८७॥
सकारस्य शकारत्वे क्षीणैकादिविशेषतः[13] ।
दृशेरन्प्रत्यये[14] यद्वा गुणे रेफस्य लोपतः ॥१८८॥
उत्तरास्वपि सा दृष्टा संख्यास्वेकादशादिषु ।
विनादेशे[15] द्विशब्दस्य शतौ च प्रत्यये कृते ॥१८९॥

---

१. कोशे '०नीलोय' इत्यपपाठः ।
२. कोशे 'नित्यमप्युप०' इत्यपपाठः । ३. कोशे 'द्वाभ्याच्च केन' इत्यपपाठः ।
४. द्वौ द्रुततरा संख्या । निरु० ३।१०॥ धा० १।६६२॥
५. अतोऽग्रे कश्चिद्ग्रन्थपातः संजात इति प्रकरणविच्छेदादाक्षिप्यते ।
६. कोशे 'न' इति पाठः । नव न वननीया नावाप्ता वा । निरु० ३।१०॥
७. कोशे 'न वाप्ता दशलक्षणा' इति पाठः ।
८. धा०७।१८॥ ९. कोशे 'नोपेरिदं' इत्यपपाठः । धा० ५।१४॥
१०. कोशे '०तश्चैवमित्येत्याद्युप०' इत्यपपाठः ।
११. कोशे 'भस्ता' इत्यपपाठः । दश दस्ता दृष्टार्था वा । निरु० ३।१०॥
१२. कोशे 'दस्युते०' इत्यपपाठः । धा० ४।१०४॥
१३. कोशे '०विशेषता' इति पाठः । एकादशादित एकादिविशेषतः क्षीणा इत्यर्थः ।
१४. कोशे 'दृशेर प्रत्यये' इत्यपपाठः । धा० १।१०३७॥
१५. द्र०—पङ्क्तिविंशति० (अष्टा० ५।१।५९) इति सूत्रे महाभाष्यम् ।

रूपं [1]विंशतिरित्येतत् [2]दशतौ द्वौ च विंशतिः ।
दशतो[3] दशपूर्वस्य केवले शति शेषिते ॥१९०॥
अप्रत्यये कृते रूपं शतमित्यत्र सम्मतम् ।
दशद्वर्गा[4] दशेत्यर्थः शतशब्देन भाषितः ॥१९१॥
सहेरस् प्रत्यये[5] रूपं सहो रश्च ततो यदा ।
मतुबर्थे तदा रूपं सहस्रमिति सिध्यति ॥१९२॥
सहस्वद्बलवत्[6] तद्धि पूर्वसंख्याभिभूनितः[7] ।
सहस्रमिति बुध्वा[8] हि शतबुद्धिर्निवर्तते ॥१९३॥
यद्वा संख्येयधर्मेण बाहुल्येनाभिभूयते ।
दशकृत्वस्तदभ्यस्तं [9]सहस्रमयुतं स्मृतम् ॥१९४॥
दशकृत्वस्तदभ्यस्तं नियुतं पुनरुच्यते ।
नियुतं तद्वदभ्यस्तं प्रयुतं कीर्त्यते बुधैः ॥१९५॥
प्रयुतञ्च तथाभ्यस्तम् अर्बुदाख्यं प्रपद्यते ।
यौतेरेतानि[10] रूपाणि निष्ठान्तस्य प्रचक्षते ॥१९६॥
अयुतं न युतं तावत् [11]संख्याया न पृथक् स्फुटम् ।
मिश्रितं नियमेनैवं संख्यया नियुतं विदुः ॥१९७॥
प्रकर्षेण युतञ्चापि प्रयुतं प्रतिजानते ।
निरुच्यतेऽम्बुदस्तावद् अर्बुदनिर्विवक्षया[12] ॥१९८॥

---

१. विंशतिर्द्विर्दशतः । निरु० ३।१०॥ २. कोशे 'देशतो' इत्यपपाठः ।
३. कोशे 'दर्शतौ' इत्यपपाठः । शतं दशदशतः । निरु० ३।१०॥
४. कोशे 'दशद्वर्गं' इत्यपपाठः ।
५. कोशे 'सहेरसप्रत्यये' इत्यपपाठः । धा० १।६०५॥ उणा० ४।१९०॥
६. सहस्रं सहस्वत् । निरु० ३।१०॥ ७. कोशे '०संख्यादिभूति०' इत्यपपाठः ।
८. कोशे 'बुद्धा' इत्यपपाठः ।
९. अयुतं प्रयुतं नियुतं तत्तदभ्यस्तम् । निरु० ३।१०॥
१०. कोशे 'यौवतेरेतानि' इत्यपपाठः । धा० २।२३॥
११. कोशे 'संख्यावान' इति पाठः ।
१२. कोशे 'अर्बुदन्निर्विवक्षणा' इत्यपपाठः ।

अम्बुदस्य निरुक्त्या हि शक्यं [1]निर्वक्तुमर्बुदम् ।
निरुक्तिरिह सादृश्याद् [2]अर्बुदस्याम्बुदेन हि ॥१९९॥
अर्तेर्बु प्रत्ययेऽम्बु[3] स्याद् गुणे रफस्य मत्वतः ।
अम्बु[4] तदरणं वारि गमनं [5]तस्य सर्वतः ॥२००॥
तत्पूर्वस्य [6]ददातेस्स्याद् अम्बुदो मेघ उच्यते ।
अम्बरो मेघ [7]इत्यन्ये तेषां तेन निरुच्यते ॥२०१॥
उकारस्य[8] कृतेऽकारे [9]रातेरप्यम्बुपूर्वतः ।
भवेदम्बर इत्येतदर्थमाह ददादिना ॥२०२॥
तद्द इत्येवमेतेन तदित्यम्बु पुरेरितम् ।
अन्तरिक्षे यदा नाम वर्ततेऽम्बर[10] इत्यपि ॥२०३॥
तदा निर्वचनं तस्य प्रसङ्गादाह भाष्यकृत् ।
अध्यम्बर[11] इतीह स्याद् निरुक्तेश्च प्रयोजनम् ॥२०४॥
राजतेरम्बुपूर्वस्य[12] कृते डप्रत्ययेऽम्बरम् ।
उकारस्य तथैवात्वे मत्वर्थे रोऽथवेष्यते ॥२०५॥
अम्बुदो वाम्बरो वापि महान्वर्षन्यदा बहुः ।
तदा तत्तुल्यमेवेदं [13]बाहुल्येनार्बुदं स्फुटम् ॥२०६॥
महांस्तु विपुलः प्रोक्तो [14]बहुव्यापी प्रकीर्तितः ।
संख्येयस्य[15] बहुत्वेन संख्यावैपुल्यमीप्सितम् ॥२०७॥

---

१. कोशे 'निर्वर्तुमर्बुदम्' इत्यपपाठः ।

२. अम्बुदो मेघो भवति । अरणमम्बु तद्दः । [अम्बुदो] अम्बुमद् भतीति वा । अम्बुमद् भवतीति वा । स यथा महान् बहुर्भवति वर्षंस्तदिवार्बुदम् । निरु० ३।१०॥

३. धा० ३।१६॥

४. कोशे 'मंबूत्तमरणं' इत्यपपाठः ।

५. कोशे गन्त' इति पाठः ।

६. कोशे 'तदादेस्स्यात्' इत्यपपाठः । धा० ३ ९ ।

७. स्कन्दः ।

८. कोशे 'इकारस्य' इत्यपपाठः ।

९. धा० २।४८॥

१०. कोशे 'वर्ततेबर' इत्यपपाठः ।

११. ऋ० ८।८।१४॥

१२. धा० १।८७४॥

१३. कोशे '०नाम्बुदं' इत्यपपाठः ।

१४. कोशे 'बहुव्यापी' इत्यपपाठः ।

१५. कोशे 'सख्यै यस्य' इत्यपपाठः ।

अन्तर्भावात्तु[1] पूर्वासां तस्मिंस्तद्वाप्तृता[2] भवेत् ।
अर्बुदाख्या समुद्राख्या मत्स्याख्या [3]तत्पदेरिता ॥२०८॥
तथा [4]परार्धशब्दोक्ता [5]तद्वदित्येव वर्णितम् ।
खजतेर्मन्थनार्थस्य[6] डले स्यात्खल[7] इत्यपि ॥२०९॥
मथ्यन्ते तत्र [8]योद्धृभिर्दुर्बला बलवत्तरैः ।
खलतेर्वाप्यकारे[9] स्यात्[10] खलन्त्यत्र हि भीरवः ॥२१०॥
धान्यसञ्चयदेशोऽपि खजतेः पूर्ववत्खलः ।
मथ्यन्तेऽत्रापि सस्यानि [11]क्षुद्यन्ते कणसिद्धये ॥२११॥
स्खलतेरथवा[12] सोऽपि स्खलन्त्यत्र कृषीवलाः ।
समास्कन्न इतीदन्तु भवेन्निर्वचनान्तरम् ॥२१२॥
कशब्दस्य खशब्दत्वे सकारस्यापि लोपतः ।
स्कन्देर्लप्रत्यये लोपे[13] समास्कन्नस्त्वतः खलः ॥२१३॥
सस्यैर्मर्त्यैर्बलीवर्दैस्समास्कन्नो[14] हि दृश्यते ।
दुष्टो वायमपीत्युक्तो दुर्जनोऽप्युच्यते खलः ॥२१४॥

---

१. कोशे 'अन्तभावत्तु' इत्यपपाठः । २. कोशे '०तद्वाप्तिता' इत्यपपाठः ।

३. कोशे '०मत्स्याख्यान्त पदेरिता' इत्यपपाठः ।

४. कोशे 'परार्थशब्दोक्ता' इति पाठः ।

५. कोशे 'तत्तदित्येव' इत्यपपाठः । 'तद्वद्' इति स्कन्दपाठः । 'तदिव' इति तु सार्वत्रिकः पाठः । ६. कोशे '०मथनार्थ०' इत्यपपाठः । धा० १।२५०॥

७. खल इति संग्रामनाम । खलतेर्वा स्खलतेर्वा । अयमपीतरः खल एतस्मादेव । समास्कन्नो भवति । निरु० ३।१०॥

८. कोशे 'गोधाभिः' इत्यपपाठः । ९. धा० १।५७८॥

१०. अतोऽग्रे ग्रन्थपातः सम्भाव्यते; त त्वेवंविधः कल्प्यते—

खलन्ति तत्र योधकाः ॥

स्खलतेः पतनार्थस्य वाकारे प्रत्यये क्षति ।
सलोपे च खलः सिद्धः स्खलन्त्यत्र हि भीरवः ॥

११. कोशे 'क्षद्यन्तेक्षण सिद्धये' इत्यपपाठः । १२. धा० १।५७७॥

१३. कोशे '०प्रत्ययेस्थे' इति पाठः । नकारदकारयोर्लोपोऽभिप्रेयते ।

१४. कोशे 'सस्यैर्मर्त्यैबलीवर्दैस्समा०' इत्यपपाठः ।

मथ्यते साधुभिस्सोऽपि स्खलत्यप्यात्मनो हितात् ।
पापेनापि समास्कन्नो व्याप्तोऽकीर्त्यादिभिस्तथा ॥२१५॥
धातवो [1]व्याप्तिकर्माण [2]इन्वतीत्यादयो दश ।
तत्र द्वे नामनी त्वेव सत्त्वप्राधान्यतः स्फुटम् ॥२१६॥
आख्यातेषु समाम्नानं नामत्वे कथमुच्यते ।
व्याप्त्यर्थधातुजत्वस्य तयोस्तेन प्रसिद्धये ॥२१७॥
आक्षाण इति तत्रैकमापान इति चापरम् ।
अशेरापेश्च[3] ते रूपे [4]श्नुत्वाभावेन वैदिके ॥२१८॥
शानजन्ते च पूर्वस्य [5]सिप्याङ्च्यपि शकत्वतः ।
आश्नुवानस्त्वशेर्युक्त[6] आप्नुवानः परस्य च ॥२१९॥
धातवो [7]वधकर्माणस्त्रयस्त्रिंशदतः परम् ।
वियात इति नामेदं [8]तडिदाखण्डलेति च ॥२२०॥
वधार्थधातुजानीति [9]तेष्वेषां पाठ आश्रितः ।
यातेरेतद्[10] वियातेति तृजन्तात् स्याद्विपूर्वकः ॥२२१॥
वियातरिति[11] तस्यैव संबुद्धौ वधकर्मणः ।
धारिपार्योर्यथा[12] रूपं धारयः पारयश्च शे[13] ॥२२२॥

---

१. व्याप्तिकर्माण उत्तरे धातवो दश । तत्र द्वे नामनी आक्षाण आश्नुवानः । आपान आप्नुवानः । निरु० ३।१०॥ २. कोशे 'इच्छती०' इत्यपपाठः ।

३. कोशे 'असेरा०' इत्यपपाठः । धा० ५।१८॥ धा० ५।१४॥

४. कोशे 'अत्वाभावेन' इत्यपपाठः । ५. कोशे 'सिच्यन्यपि' इति पाठः ।

६. कोशे 'अश्नुवानन्त्वशे०' इत्यपपाठः ।

७. कोशे 'धर्मकर्माणः' इत्यपपाठः । वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत् । तत्र वियात इत्येतद् वियातयत इति वा, वियातयेति वा । निरु० ३।१०॥

८. कोशे 'दलिताखण्ड०' इत्यपपाठः । ९. कोशे 'तेषेषां' इत्यपपाठः ।

१०. कोशे 'पातेरेतद्द्वितीयातेति त्रिजन्तात्' इत्यपपाठः । धा० २।४०॥

११. कोशे 'वियातिरिति' इत्यपपाठः ।

१२. कोशे 'धारिवार्यो यथा' इत्यपपाठः । अष्टा० ३।१।१३८॥

१३. कोशे 'गे' इत्यपपाठः ।

शपश्च पररूपत्वे तथा यातयतेरपि ।
वियातयेति संबुद्धौ भाष्यकारेण दर्शितः ॥२२३॥
वियातयितृशब्दोऽन्यैः[1] पठ्यतेऽस्यैव वाचकः ।
आखण्डलेति शब्दस्य खलवाच्यत्वहेतुतः[2] ॥२२४॥
वक्ति[3] पूर्वं तच्छिब्दान्नामत्वञ्चार्थमेव च ।
आङि [4]खण्डयतेर्धातोर्वधार्थात्प्रत्यये खले ॥२२५॥
आखण्डलेति संबुद्धावाखण्डयितरित्यपि ।
तृजन्तस्य भवेत्तस्य तथा [5]भाष्यकृतेरितम् ॥२२६॥
शाचिगो[6] इति मन्त्रेऽस्मिन्पदमाखण्डलेति यत् ।
इन्द्रः संबोध्यते तेन [7]पूर्वाभ्यामिति निश्चितम् ॥२२७॥
शचीति [8]कर्म निर्दिष्टं शाची तत्र[9] भवेरिता ।
गौर्वाक्[10] स्तुतिरभिप्रेता यस्याऽसौ[11] शाचिगुः स्मृतः ॥२२८॥
पुंवद्भावस्य [12]चाभावो [13]नैगमी ह्रस्वता तथा ।
शाच्या[14] पूज्यत इत्येवं [15]यस्त्वसौ शाचिपूजनः ॥२२९॥

---

१. कोशे विसर्गरहितः पाठः । स्कन्दग्रन्थोऽत्रानुसन्धेयः ।

२. तडिदाखण्डलयोः क्रमभेदे हेतुः स्कन्देन न निरदेशि । दुर्गस्तु— आखण्डलशब्देऽल्पतरं वक्तव्यं बहुतरं तडिच्छब्दे इति क्रमभेदेन०—इत्यवोचत् ।

३. कोशे 'पङ्क्तिपूर्वं तदिछब्दा०' इत्यपपाठः ।

४. धा० १०।४४॥

५. आखण्डल प्र हूयसे (ऋ० ८।१७।१२) । आखण्डयितः । निरु० ३।१०॥

६. शाचिगो शाचिपूजनायं रणाय ते सुतः । आखण्डल प्र हूयसे ॥ ऋ० ८।१७ १२॥

७. त.सूक्तवर्त्तिनीभ्यां पूर्वाभ्यमृग्भ्यामित्यर्थः ।

८. निघ० २।१॥ ९. कोशे 'शाचीत्यत्र भवे०' इत्यपपाठः ।

१०. कोशे 'गौर्वा स्तुति०' इत्यपपाठः ।

११. कोशे 'सो शपिगुस्मृतः' इत्यपपाठः ।

१२. स्त्रियाः पुंवत्० (अष्टा० ६।३।३४) इति प्राप्तः पुंवद्भावो वृद्धिनिमित्तस्य० (अष्टा० ६।३।३९) इति प्रतिषिध्यते ।

१३. कोशे 'नैशमो' इत्यपपाठः । ङ्यापोः संज्ञाछन्द० (अष्टा० ६।३।६२) ।

१४. कोशे 'शच्या' इत्यपपाठः । १५. कोशे 'यद्यसौ' इत्यपपाठः ।

पूर्वेण पौनरुक्त्यं स्याद् इत्यतो योज्यतेऽन्यथा ।
शाचीं [1]पूजयतीत्येवम् उच्यते शाचिपूजनः ॥२३०॥
सूर्यस्येवेति[2] मन्त्रे च [2]नान्येन स्तोम इत्यपि ।
इन्द्रेण [3]पूजितः स्तोम इति स्तोमोऽभिधीयते ॥२३१॥
पौलोम्येव[4] शची तस्याश्चेष्टा शाच्यथवा भवेत् ।
तामसौ पूजयन्नुक्तः [5]साधुत्वाद्वापि पूजनः ॥२३२॥
रणार्थं रमणार्थं वा रणस्संग्राम उच्यते ।
सुतस्तेऽभिषुतस्सोमः[6] शाचिगो [7]शाचिपूजन ॥२३३॥
अतः [8]प्रहूयसेऽस्माभिराखण्डल शचीपते ।
ऐन्द्रत्वाद्वरणनिर्देशात् खल इत्युपपत्तितः ॥२३४॥
आखण्डयितरित्येवं[9] युज्यतेऽस्य वधार्थता ।
तडिदित्यपि[10] नामेदम् [11]अन्तिकस्य वधस्य च ॥२३५॥
साधारणत्वमेवोक्तं [12]नाम्नस्संसृष्टमित्यपि ।
अन्तिकस्य वधस्यापि नामेत्येतावतैव तु ॥२३६॥
साधारण्यस्य[13] सिद्धत्वात् संसृष्टग्रहणं वृथा ।
तथा[14] साधारणादीति नात्यन्तं दोषमासजेत् ॥२३७॥

---

१. कोशे 'पूजयतेत्येवं' इत्यपपाठः ।
२. ऋ० ७।३३।८॥ ३. कोशे विसर्गरहितः पाठः ।
४. कोशे 'पौरम्येव' इत्यपपाठः ।
५. कोशे '०त्वाच्छापि' इत्यपपाठः ।
६. कोशे 'सुतस्तेभिष्टतस्सोमः' इत्यपपाठः ।
७ कोशे 'शाचिपूजनः' इति सविसर्गोऽपपाठः ।
८. कोशे 'प्रहयसे' इत्यपपाठः । ९. कोशे 'अखण्डयितरीत्येवं' इत्यपपाठः ।
१०. कोशे 'तलिदि०' इति पाठः ।
११. तडिदित्यन्तिकवधयोः संसृष्टकर्म । ताडयतीति सतः । निरु० ३।१०॥
१२. स्कन्दनिर्दिष्टोऽयं पाठभेदः ।
१३. कोशे 'साधारणस्य' इति पाठः ।
१४. कोशे 'यथासाधारणादीनि नात्यन्नं' इति पाठः ।

अन्ये [1]संसृष्टकर्मेति न च मामित्यधीयते ।
यस्याहरन्ति[2] नामेति तस्य संसृष्टकर्मता ॥२३८॥
अन्तिकाख्यं वधाख्यञ्च संसृष्टे यस्य कर्मणी[3] ।
संसृष्टकर्म तन्नाम द्वयं वाच्यं समुच्चितम् ॥२३९॥
केवलं नान्तिकं वक्ति न वधं केवलं तथा ।
अन्तिकं वधसंसृष्टं वधञ्चाप्यन्तिकान्वितम् ॥२४०॥
एतच्चायुक्तमेव स्यात् [सं]सृष्टानुपलब्धितः ।
अन्तरेण वधं तावद् अन्तिकं दृश्यते स्फुटम् ॥२४१॥
अन्तिकेन[4] विनैवेह वधश्चाप्युपलभ्यते ।
अघ्नदप्यन्तिकं[5] दृष्टं [6]घ्नच्चैवानन्तिकं तथा ॥२४२॥
संसृष्टे[7] कर्मणी येन वाच्यत्वेनैव नामतः ।
एवं व्याख्यायमानेऽपि मन्दमेव प्रयोजनम् ॥२४३॥
साधारणत्वमेवोक्तं तेनापीत्यल्पकार्यता ।
भाष्ये [8]ताडयतीत्येतद् वधनिर्वचनं किल ॥२४४॥
अन्तिके [9]कल्पयन्त्येवं तडित्तरति डौ कृते ।
आसन्ने भवतीत्यर्थो [10]धातुजत्वेन हेतुना ॥२४५॥

---

१. अयमेव सार्वत्रिक. पाठः ।
२. कोशे 'अस्याहरन्ति' इति पाठः ।
३. कोशे 'कर्मणि' इत्यपपाठः ।
४. कोशे 'अन्तिकेनु विनैवेह वधञ्चा०' इत्यपपाठः ।
५. कोशे 'अनघ्नदन्तिकं' इति पाठः ।
६. कोशे 'घ्नपैर्वानन्तिकं' इत्यपपाठः ।
७. कोशे 'संसृष्ट' इत्यपपाठः ।
८. कोशे 'तालयती०' इति पाठः ।
९. कोशे '०यन्त्येव तलित्तरति ढौ किते' इति पाठः । तरच्छब्दस्थस्य रस्य डिरित्यादेशे कृते तडिच्छब्दं कल्पयन्तीत्यभिप्रायः । इयं कल्पना दुर्गस्कन्दाभ्यां नोट्टङ्किता ।
१०. धातूनामनेकार्थत्वात् । तथा चाह पतञ्जलिः—बह्वर्था अपि धातवो भवन्तीति । महा० १।३।१।

वधे निर्वचनं नैव [1]तडिच्छन्दस्य युज्यते ।
वधस्य कर्तृकर्त्वेन [2]त्वबन्तं नहि कर्तरि ॥२४६॥
प्रकृत्यन्तरभावात्तु[3] भवेदेतत् [4]पचाद्यचि ।
जनिवध्योश्च[5] सूत्रे हि प्रकृत्यन्तरमाश्रितम् ॥२४७॥
हन्तीत्येव वधस्तस्मात्[6] तडित्ताडयतीत्यपि ।
स्पर्शस्य तु विवक्षायाम् अन्तिकेऽप्युपपद्यते ॥२४८॥
ताडितोऽयमनेनेति[7] क्वचित्स्पृष्टेऽपि दृश्यते ।
तन्त्रेणार्थद्वये शब्दो निरुक्त इति गम्यते ॥२४९॥
त्वयेत्येषोऽन्तिकार्थस्य[8] निगमः प्रतिपाद्यते ।
अन्तर्णीतणिजर्थस्य[9] सुपूर्वस्य वृधेस्त्वपि ॥२५०॥
सुवृधेति तृतीयायां त्वयेत्यस्य विशेषणम् ।
ब्रह्मणो ब्राह्मणो वेदा वाग्वै ब्रह्मेति च श्रुतिः[10] ॥२५१॥
पतिः पालयिता तस्य मध्यमो ब्रह्मणस्पतिः ।
स्पृहेरप्रत्यये[11] रूपं कृत्यार्थे गुणवृद्धितः ॥२५२॥
आकारे[12] च द्वितीयार्थे स्पार्हत्येवापि वैदिकम् ।

---

१. कोशे 'तलिच्छन्देस्य' इत्यपपाठः ।

२. कोशे 'त्वन्वन्तन्नहि' इत्यपपाठः । हनश्च वधः (अष्टा० ३।३।७६) इत्यप् प्रत्ययोऽकर्तरि (भावे) विधीयते ।

३. कोशे 'प्रत्ययान्तर०' इत्यपपाठः । द्र०—काशिका ७।३।३५॥

४. महभाष्यवार्त्तिक ३।१।१३४॥

५. अष्टा० ७।३।३५॥ अत्र वृत्तिकृता वधिः प्रकृत्यन्तरं व्यञ्जनान्तमाश्रितं, न तु हन्तेरादेशः । द्र०—काशिका ।

६. कोशे '०तस्मा तलित्तालयती०' इत्यपपाठः ।

७. कोशे 'तालितो०' इति पाठः ।

७. त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।
या नो दूरे तडितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥ ऋ० २।२३।९॥

९. कोशे '०णिजार्थस्य सुपूर्वस्य मृधेत्वपि' इत्यपपाठः । धा० १।७९६॥

१०. श० ब्रा० १४।४।१।२३॥

११. धा० १०।३२५॥ १२. अष्टा० ७।१।३९॥

वस्वित्येकं[1] जसः स्थाने सुपां स्वित्येव कल्पितम् ॥२५३॥
बहूनां[2] प्रार्थनीयत्वान्मनुष्येत्यपि पञ्चमो ।
आकारस्य तदर्थत्वात् तादर्थ्यञ्च सुपां[3] स्विति ॥२५४॥
त्वया [4]सुवर्धयित्रास्य सर्वस्य [5]ब्रह्मणस्पते ।
सहितानुगृहीता[6] वा स्पृहणीयानि [7]वाञ्जताम् ॥२५५॥
शत्रुभूतमनुष्येभ्यो वसूनि ह्याददीमहि ।
याश्च नोऽरातयो दूरे याश्च स्युस्तडितोऽन्तिके[8] ॥२५६॥
सन्निधौ दूरतश्च स्युस्तडितो[9] या इतीरणात् ।
अन्तिकस्यैव[10] वक्ता तु [11]तडिच्छब्दः प्रतीयते ॥२५७॥
दूरे यास्तडितो[12] हन्त्य इत्यर्थो यदि कल्प्यते ।
पुनर्या इत्यवाच्यं स्यात् शत्रुत्वाद्धन्तृतोदिता ॥२५८॥
उभयीरपि तास्सर्वा आभिमुख्येन जम्भय[13] ।
स्तम्भयास्वस्थविज्ञानाः कुरु [14]पश्चादनप्नसः ॥२५९॥
अनप्नसो[15] यथा ताः स्युस्तथा संस्तम्भयेति वा ।
दानं [16]रातिरिति प्रोक्तं तद्यासां नैव विद्यते ॥२६०॥

---

१. कोशे '०त्येकज्जसस्थाने सुपां सुत्येव कल्पितः' इत्यपपाठः । अष्टा० ७।१।३९॥
२. वसूनामिति शेषः । पूर्वत्र व्यत्ययकल्पने हेतुरयम् ।
३. कोशे 'सुखांस्विति' इत्यपपाठः । अष्टा० ७।१।३९॥
४. कोशे 'सुखर्धयित्रा०' इत्यपपाठः ।
५. कोशे 'ब्रह्मणस्पतेः' इत्यपपाठः ।
६. सहायेनानुगुहीता वयमित्यर्थः । ७. यथाकोशं पाठः ।
८, कोशे 'स्युस्तलिकोन्तिके' इत्यपपाठः ।
९. कोशे '०तलितो' इति पाठः ।
१०. कोशे 'अवन्ति०' इत्यपपाठः । ११. कोशे 'तलि छब्दः' इत्यपपाठः ।
१२. कोशे '०तलितो' इति पाठः ।
१३. कोशे 'जंभयः' इत्यपपाठः ।
१४. कोशे 'पश्चादनुप्नसः' इत्यपपाठः ।
१५. कोशे 'अनुप्ससो' इत्यपपाठः ।
१६. कोशे 'रात्रिरिति' इत्यपपाठः ।

ता [1]एवादानकर्माणोऽरातयः [परिकीर्त्तिताः] ।
अदृष्टार्थं न दातव्यं कस्मैचिदिति बुद्धयः ॥२६१॥
अदानप्रज्ञतैतासां यद्वास्मै नेति वारणात् ।
आपेर्नस्प्रत्ययेऽप्नः[2] स्यात् [3]कर्तर्यादेर्विकारतः ॥२६२॥
रूपं[4] हि द्रव्यमाप्नोति स्वाश्रयान्नान्यथा स्थितिः ।
विद्युतं [5]तडिदित्युक्तं [6]शाकपूणिस्तु मन्यते ॥२६३॥
लोकेऽपि [7]तडिदित्येष विद्युत्येव प्रयुज्यते ।
वधकर्मत्वमप्येवं [8]तडिच्छब्दस्य सिध्यति ॥२६४॥
तथा [9]ताडयतीत्युक्तं वधकर्मत्वसिद्धये ।
अन्तिकाभावसिद्ध्यर्थं दूराच्चेत्यप्यभाषत ॥२६५॥
तडितो[10] या इतीदं तु शाकपूणिमतेऽन्यथा ।
याश्चैवारातयोऽस्माकम् अदानादौ व्यवस्थिताः ॥२६६॥
तडितश्चैव[11] ता हन्त्र्यो विद्युतो वाऽथवा पराः ।
दूरस्था एव तास्सर्वा जम्भयेति प्रकल्प्यते ॥२६७॥
भवेदुदाहृतिश्चैवं त्वयेति वधकर्मणः ।
अपिः[12] संभावनार्थोऽत्र तुश्च [13]पक्षान्तरग्रहः ॥२६८॥

---

१. कोशे 'एव दानकर्माणो' इत्यपपाठः । अरातयोऽदानकर्माणो वा । अदानप्रज्ञा वा । निरु० ३।११॥

२. कोशे 'आपेर्नस्पत्ययेप्नुस्यात्' इत्यपपाठः । धा० ५।१४॥ तु०—उणा० ४।२०६॥

३. कोशे 'कर्तव्यादे०' इत्यपपाठः ।

४. अप्न इति रूपनाम । आप्नोतीति सतः । निरु० ३।११॥

५. कोशे 'तलितित्युक्तं' इत्यपपाठः ।

६. विद्युत् तडिद् भवतीति शाकपूणिः । सा ह्यवताडयति दूराच्च दृश्यते । निरु० ३।११ ।

७. कोशे 'तलिदित्येष विद्युतेव' इत्यपपाठः ।

८. कोशे 'तलिछब्दस्य' इत्यपपाठः ।

९. कोशे 'तालयती०' इत्यपपाठः ।

१०. कोशे 'तलितो' इति पाठः ।

११. कोशे 'तलितश्चैव ता हन्त्र्यौ' इत्यपपाठः ।

१२. कोशे 'अपि' इति विसर्गरहितः पाठः । अपि त्विदमन्तिकनामैवाभिप्रेतं स्यात् । दूरे चित् सन् तडिदिवाति रोचसे (ऋ० १।९४।७) । दूरेऽपि सन्नन्तिक इव संदृश्यस इति । निरु० ३।११॥

१३. कोशे 'पश्चान्तर०' इत्यपपाठः ।

इदं संभाव्यते नाम [1]तडिदित्यन्तिकस्य तु ।
अपि त्वित्यथवा तेन मतमुक्तं निवर्त्यते ॥२६९॥
दूरस्था ताडिनी चैव [2]तडिद्विद्युदितीरितम् ।
निहन्त्री विद्युदेवेति तदेतन्नोपपद्यते ॥२७०॥
यो विश्वत[3] इति ह्यस्यां[4] तडिदन्तिकमुच्यते ।
मुखं वा दर्शनं वापि प्रतीकमभिधीयते ॥२७१॥
तद्यस्य शोभनं [5]सोऽपि सुप्रतीकोऽग्निरीरितः ।
सर्वतस्सर्वदेशेषु यस्त्वमग्ने [6]सदृङ्ङसि ॥२७२॥
सदृङ् सदृश इत्यर्थः स त्वं दूरेऽपि [7]सन् भवन् ।
तडिदन्तिक इत्यर्थः समीप इव रोचसे ॥२७३॥
अतिशब्दो भृशार्थोऽत्र सुष्ठु दीप्त्या प्रकाशसे ।
दूरशब्दसमीपत्वात् चितश्चाप्यर्थवत्वतः ॥२७४॥
घ्नन्तीवेत्ययुक्तत्वमभावादत्र[8] कर्मणः ।
चिच्छब्दस्याप्यनर्थत्वं[9] भवेद्विद्युदिवेति चेत् ॥२७५॥
यथान्तिकार्थतात्रैवं तडितो दूर इत्यपि ।
व्यवधानादिदोषश्च तत्र स्यादन्यथा ध्रुवम् ॥२७६॥
रात्र्या[10] अपि तमो देव [11]ह्यतीत्येवं प्रपश्यसि ।
प्रतिबद्धा[12] न ते कश्चित् दृष्टैरैश्वर्ययोगतः ॥२७७॥

१. कोशे 'तलिदि०' इति पाठः ।
२. कोशे 'तलिद्विद्युरितीरितम्' इत्यपपाठः ।
३. यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन् तडिदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ऋ० १।९४।७॥
४. कोशे 'ह्यस्या दलिन्तन्तलित्...' इति त्रुटितो भ्रष्टश्च पाठः ।
५. कोशे 'सोति' इत्यपपाठः ।
६. कोशे 'सदृङ्नसि' इत्यपपाठः ।
७. कोशे 'सङ्कवत्' इत्यपपाठः ।
८. कोशे 'घ्नन्तिवेत्य०' इत्यपपाठः ।
९. कोशे 'छिछब्दस्यानर्थत्वं' इत्यपपाठः ।
१०. कोशे 'रात्र्यां' इत्यपपाठः ।
११. कोशे 'देवप्यात्ती०' इत्यपपाठः ।
१२. कोशे 'प्रतिबद्धो' इत्यपपाठः ।

यद्वा दर्शयसीत्यर्थो दृश्यसे चेति वा मतम् ।
एवंभूतस्य ते सख्ये[1] स्तुत्यस्तोतृलक्षणे ॥२७८॥
मा रिषाम वयं त्वग्ने मा हिंसीष्महि केनचित् ।
वज्रायुधस्य[2] नामानि दशाष्टौ चाप्यतः परम् ॥२७९॥
पचाद्यचि[3] गुणे रस्य जकारात्परतः[4] स्थितौ ।
वृजेस्तु[5] वर्जनार्थस्य वज्र इत्येव सिध्यति ॥२८०॥
क्षिप्तोऽसौ देहिभिर्देहान्[6] वर्जयेद्वज्र उच्यते ।
हन्त्यर्थोऽत्र[7] वृजिर्यद्वा सामर्थ्यादवगम्यते ॥२८१॥
धनुराद्यायुधं सर्वं वज्रमिच्छन्ति[8] केचन ।
इन्द्रस्यैवायुधं किञ्चिद् विशिष्टमपरे[8] विदुः ॥२८२॥
वज्रशब्दप्रवृत्तिस्तु गौणीष्टा धनुरादिषु ।
तत्र[9] कुत्स इति त्वेतद् ऋषौ वज्रे च[10] वर्तते ॥२८३॥
वज्रस्तु [11]कृन्ततेरिष्टस्तदर्थस्योपपत्तितः ।
उत्वमिष्टमृकारस्य सशब्दः प्रत्ययस्तथा ॥२८४॥
कृन्तत्यरीन् छिनत्तीति कुत्सो वज्रोऽभिधीयते ।
छिदेर्वा[12] करणं वज्र इन्द्रः कर्ता विवक्षितः[13] ॥२८५॥

---

१. कोशे 'संख्ये' इत्यपपाठः ।

२. वज्रनामान्युत्तराण्यष्टादश । वज्रः कस्मात् ? वर्जयतीति सतः । निरु० ३।११॥

३. महाभाष्यवार्त्तिक ३।१।१३४॥

४. कोशे विसर्गरहितः पाठः ।

५. धा० १०।२७०॥

६. कोशे '०देहा वर्जयद्वज' इत्यपपाठः ।

७. कोशे 'व्रजि०' इत्यपपाठः ।

८. स्कन्दव्याख्यात्र द्रष्टव्या ।

९. तत्र कुत्स इत्येतत् कृन्ततेः । ऋषिः कुत्सो भवति । कर्ता स्तोमानामित्यौपमन्यः । अथाप्यस्य वधकर्मैव भवति । तत्सख इन्द्र शुष्णं जघानेति । निरु० ३।११॥

१०. कोशे 'व्रजेव वर्तते' इत्यपपाठः ।

११. धा० ६।१४१॥

१२. कोशे 'हिदेर्वा' इत्यपपाठः ।

१३. [इन्द्रः] कृन्तति येन स कुत्स इति भावः ।

ऋषौ निर्वचनं [1]चैतदौपमन्यवसंश्रितम् ।
ऋकारस्याप्युकारत्वे[2] करोतेः स्तोमतस्तथा ॥२८६॥
पचाद्यच्यन्त्ययोः[3] कुत्सः सतयोर्विपरीतयोः ।
त्रिवृदादीनसौ [4]कुर्वन्स्तोमान्कुत्सोऽभिधीयते ॥२८७॥
ऋषिञ्च कृन्ततेरेव कुत्सं[5] यास्कोऽब्रवीदिह ।
तत्सखस्तस्य कुत्सस्य सखेन्द्रस्तेन संस्कृतः ॥२८८॥
स्तुत्या प्रोत्साहितः [6]शुष्णमवधीदसुरं किल[7] ।
उदकस्याप्रदानेन मेघं वा सस्यशोषणम् ॥२८९॥
सहायत्वमतः कुर्वन् इन्द्रस्यारिविनाशने ।
वृत्तस्स[8] कृन्ततेरेव कुत्सो वज्रवदिष्यताम् ॥२९०॥
एवं समानकर्मत्वे शब्दस्यैकस्य निश्चिते ।
तुल्यं निर्वचनं न्याय्यं क्लृप्तशक्तिपरिग्रहात् ॥२९१॥
किञ्चिच्छक्त्यन्तरं[9] कल्प्यं न युक्तं तच्च सम्भवेत् ।
क्षीणत्वात्कल्पनाहेतोरिति यास्कस्य निश्चयः ॥२९२॥
ऐश्वर्यार्थास्तु[10] चत्वारः पठिता धातवः परे ।
ईश्वरस्यापि[11] नामानि चत्वार्येवोत्तराण्यतः ॥२९३॥

---

१. वक्ष्यमाणम् ।

२. कोशे '०रस्यप्युकारत्वे करोते स्तो०' इत्यपपाठः । द्रा० ५।७॥

३. कोशे '०च्यन्तयोः कुत्सा' इत्यपपाठः । महाभाष्यवार्त्तिक ३।१।१३४॥

४. कोशे 'कुर्वं' स्तोमान्कुत्साभि०' इत्यपपाठः ॥

५. कोशे 'कुत्सायास्तो ब्रवी०' इत्यपपाठः ॥

६. कोशे 'कृष्णम०' इत्यपपाठः ।

७. इन्द्रकुत्ससख्यप्रबोधिकाख्यायिका सायणभाष्ये (ऋ० ४।१६।१०) द्रष्टव्या । शुष्ण-वधश्रुतिः खल्वपि—ऋ० २।१४।५॥ ५।३२।४ इत्यादिस्थलेषु द्रष्टव्या ।

८. कोशे 'कृन्तस्यस्कृन्ततेरेव' इत्यपपाठः ।

९. कोशे 'चैछत्यन्तरं' इत्यपपाठः ॥

१०. ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः । निरु० ३।११॥

११. ईश्वरनामान्युत्तराणि चत्वारि । तत्रेन इत्येतद् सनित ऐश्वर्येणेति वा, सनितमनेनैश्वर्यमिति वा । निरु० ३।११॥

तत्र तेष्विन इत्येतदर्थादेव निरुच्यते ।
सनितस्सङ्गतो[1] यस्मादैश्वर्येणाणिमादिना ॥२९४॥
ऐश्वर्यञ्चाप्यनेनैवं सनितं रुद्धमात्मनि ।
इन[2] इत्युच्यते तस्माद् [3]नकीणः कर्तृकर्मणोः ॥२९५॥
सनिना कथितोऽप्यर्थं एतेरेवेति गम्यते ।
सनोतेरिन[4] इत्येतत् [5]लसेरे प्रसिध्यति ॥२९६॥
अप्रत्यये [6]सनोतेर्वा सस्येत्वे कर्तृकर्मणोः ।
इन इत्येतदेष्टव्यं भाष्यवाक्यानुरोधतः ॥२९७॥
समितस्समितं[7] वेति संपूर्वः पठचते परैः[8] ।
एतेराक्षिप्तसंपूर्वादिन इत्येतदिष्यते ॥२९८॥
ऐश्वर्यं सकलं यस्मिन् संगतं परमात्मनि ।
इनोऽसौ भगवानीशो नित्यानन्दोऽव्ययो विभुः ॥२९९॥
तत्प्रसादादिहान्येषाम् आनन्दलव इष्यते ।
सैषानन्दस्य मीमांसा पुरा स्यादिति च [9]श्रुतिः ॥३००॥
सर्वं तृणलवप्रायं वदन्त्यन्याश्रयं सुखम् ।
वेदान्तेषु प्रसिद्धोऽयं पुराणेष्वपि सर्वतः ॥३०१॥
श्रद्धया तपसा भक्त्या ज्ञायते सुसमाहितैः ।
अधिदैवमथाध्यात्मं[10] पृथगेकत्वतस्तथा ॥३०२॥
इनो विज्ञेय इत्येवं [11]यत्रेत्येषोपवर्ण्यते ।

---

१. कोशे 'सहितस्सन्नतो' इति पाठः ।
२. कोशे 'ई इत्यु०' इत्यपपाठः ।
३. कोशे 'नटीणः' इति पाठः । इण् धातोः (धा० २।३६) नक्प्रत्यये (उणा० ३१२) इत्यर्थः ।
४. कोशे 'सनोतेरितन' इत्यपपाठः ।
५. यथाकोशं पाठः !
६. धा० ८।२॥
७. कोशे '०सम्मितं वेति सं पूर्वा' इत्यपपाठः ।
८. इदं पाठान्तरं स्कन्देन निर्दिष्टम् ।
९. तै० उप० २।८।१॥
१०. कोशे '०थाध्यात्म्यं' इति पाठः ।
११. 'यञ्जित्येषाप०' इत्यपपाठः ।

सुपर्णा[1] रश्मयो यत्र यस्मिन्नादित्यमण्डले ॥३०३॥
यत्रेत्याधारनिर्देशात् स्थिता इत्यपि कल्प्यते ।
अमृतस्योदकस्यांशं [2]भौमस्याभिस्वरन्ति वै ॥३०४॥
स्वरतिश्चोपतापार्थो[3] णिजर्थसहितस्त्विह ।
अनिमेषं निमेषेण विना यत्नेन भूरिणा ॥३०५॥
विदथा वेदनेनापि ज्ञानेन स्वेन केनचित् ।
रश्मीनामपि विज्ञानं देवतैश्वर्यहेतुकम् ॥३०६॥
अचैतन्येऽपि सूर्यस्य ज्ञानं तेषूपचर्यते ।
तापयन्त्यष्टभिर्मासैः [4]शोषयन्त्यथवाऽन्यथा ॥३०७॥
अभिगृह्य प्रयन्तीति गत्यर्थस्स्वरतिर्भवेत् ।
यत्रस्था [5]रसमादाय भौमं गच्छन्ति रश्मयः ॥३०८॥
तत्रस्थो य इनः[6] स्वामी सर्वस्य जगतः प्रभुः ।
सर्वेषामेव भूतानां गोपा गोपायिता रविः ॥३०९॥
स मामावेशयत्वत्र धीरः पाकं स्वमण्डले ।
सुपूर्वस्य[7] [8]पतेर्णे स्यात् सुपर्णा अन्त्यरेफतः ॥३१०॥
मृतं[9] न विद्यते यस्य [10]सृष्टौ तदमृतं पयः ।
उदकं[11] दिव आयातं पुनरेव दिवं व्रजेत् ॥३११॥

---

१. यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभि स्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥ ऋ० १।१६४।२१॥
२. कोशे 'भौमस्यभिस्वरन्नि वै' इत्यपपाठः ।
३. कोशे 'स्वरभिश्चाप०' इत्यपपाठः ।
४. कोशे 'शेषयन्त्य०' इत्यपपाठः ।
५. कोशे 'रथमादाय' इत्यपपाठः ।
६. कोशे विसर्गरहितः पाठः ।
७. [सुपर्णाः] सुपतना आदित्यरश्मयः । निरु० ३।१२॥
८. धा० १।८९८॥ ९. कोशे 'सुतन्न' इत्यपपाठः ।
१०. कोशे 'सृष्टिस्तसमृतं' इत्यपपाठः ।
११. कोशे 'उदकन्दव' आयातः' इत्यपपाठः ।

तदेव पुनरायाति[1] तदेवोर्ध्वं पुनर्व्रजेत्[2] ।
नोदकस्य विनाशोऽस्ति [3]समानोदकवाक्यतः ॥३१२॥
विपक्वा यस्य धीरस्ति[4] सिद्धा सर्वार्थगोचरा ।
स धीरो भगवान् सूर्यो विपक्वप्रज्ञ ईरितः ॥३१३॥
पचेर्घञि[5] तु पाकस्स्यात् कर्मण्यत्रापि कारके ।
पाकः पक्तव्य[6] इत्युक्तं संस्कार्यो ज्ञानसाधनैः ॥३१४॥
आविवेशेति चाप्येतत् [7]लोडर्थे लिडिहेष्यते ।
अन्तर्णीतणिजर्थं च [8]प्रार्थितार्थोपपत्तितः ॥३१५॥
सम्यगुत्पाद्य विज्ञानं [9]सूर्यः स्वात्माश्रयं मम ।
प्रवेशयतु मां तुष्टो दयालुर्भक्तमञ्जसा ॥३१६॥
सदेस्तूपनिपूर्वस्य[10] [11]क्विप्येवोपनिषत्पदम् ।
विद्या रहस्यभूतेयं [12]पादेनैकेन वर्णिता ॥३१७॥
उपेत्य नियमेनैव रागादीनवसादयेत् ।
विज्ञानस्यास्य वर्णोऽस्मिन्मन्त्रे रूपं प्रदृश्यते ॥३१८॥
अधिदैवमतश्चैवं व्याख्यातं देवतात्मनि ।

---

१. कोशे '०यान्ति' इत्यपपाठः ।

२. कोशे 'पुनव्रजेत्' इत्यपपाठः ।

३. समानोदकभावस्तु निवर्त्तेताचतुर्दशात् (याज्ञ०स्मृति-व्यवहाराध्यायश्लोक १३६ मिताक्षरा) इति स्मरणात् समानोदकता चतुर्दशपुरुषपर्यन्तमनुवर्तते । तत उदकविनाशाभावः प्रकल्प्यत इत्यर्थोऽभिप्रेतः स्यात् ।

४. धीरो धीमान् । निरु० ३।१२॥ ५. धा० १।१।०४५॥ अष्टा० ३।३।१९॥

६. पाकः पक्तव्यो भवति । विपक्वप्रज्ञ आदित्यः इत्युपनिषद्वर्णो भवति । इत्यधिदैवतम् । निरु० ३।१२॥

७. कोशे 'लोडतो' इत्यपपाठः ।

८. आदित्यमण्डलप्राप्तिः प्रार्थ्यते जनैरिति हेतोराविवेशेत्यस्याविशयतु प्रापयत्वित्यर्थोऽभिप्रेयते ।

९. कोशे विसर्गरहितः पाठः ।

१०. धा० १।९०७॥

११. कोशे 'क्षिप्येवो०' इत्यपपाठः ।

१२. प्रकृताया ऋचोऽन्त्येन पादेनेत्यर्थः ।

रहस्यज्ञानरूपत्वाद् [1]अध्यात्ममपि योज्यते ॥३१९॥
कथमेकस्य वाक्यस्य द्वावर्थाविह संश्रितौ ।
द्वयोरपि प्रतीतत्वाद् विशेषानवधारणात् ॥३२०॥
क्वचिद्[2] यास्केन चाप्येवं मन्त्रार्थस्योपवर्णनात् ।
द्वे एव च तदा वाक्ये स्यातामावृत्तिक्लृप्तितः ॥३२१॥
श्रोत्रादीनीन्द्रियाण्येव[3] सुपर्णाख्यानि भाष्यकृत् ।
अध्यात्मं योजयामास[4] सुष्ठु तानि पतन्ति हि ॥३२२॥
शब्दे नानाविधे श्रोत्रं स्पृश्ये [5]त्वक्स्वगुणे तथा ।
रूपे चैव तथा चक्षुः साधारे बहुलक्षणे ॥३२३॥
रसे जिह्वा तथा घ्राणं गन्धे सम्यक्प्रवर्तते ।
प्रवृत्तिर्विषयेष्वेषां मनःपूर्वैव लक्ष्यते ॥३२४॥
पुरुषस्योपभोगार्थं तेषु तेषां प्रवर्तनम् ।
शब्दादेर्ग्रहणं भोगः सुखदुःखात्मकस्य च ॥३२५॥
यत्रात्मनि श्रितान्येवमिन्द्रियाणि यथोदितम् ।
शब्दादिविषयं ज्ञानममृतं स्थितिहेतुतः ॥३२६॥
यावत्तद्विषयज्ञानं तावज्जीवति [6]नान्यदा ।
विज्ञानस्य तु तस्यैव भागमंशं स्वकं स्वकम् ॥३२७॥
अभिस्वरन्ति कुर्वन्ति गमयन्त्यथवादरात् ।
व्याख्यानेऽस्मिन्करोत्यर्थः [7]स्वरतेः परिगृह्यते ॥३२८॥

---

१. अथाध्यात्मम् । यत्र [सुपर्णाः] सुपतनानीन्द्रियाणि । अमृतस्य भागं ज्ञानस्य । अनिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वा । ईश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा । स मा धीरः पाकमत्राविवेश । धीरो धीमान् पाकः पक्तव्यो भवति । विपक्वप्रज्ञ आत्मा । इत्यात्मगतिमाचष्टे । निरु० ३।१२॥

२. कोशे 'क्वचिद्वेत्मेन चाप्येवं' इत्यपपाठः ।

३. कोशे 'श्रोत्रादीनिन्द्रिया०' इत्यपपाठः ।

४. कोशे '०यामासुः' इत्यपपाठः ।

५. कोशे 'त्वत्सगुणे' इत्यपपाठः ।

६. कोशे 'नान्यथा' इति पाठः । ततोऽग्रे '(दा)' इति निर्देशः ।

७. कोशे 'स्वरतः' इत्यपपाठः ।

गमयत्यर्थवाची[1] वा द्वेधापि प्रतिपादितम् ।
ज्ञानेन भज्यमानत्वात् भागश्शब्दादिरेव वा ॥३२९॥
स्वरतिश्च [2]प्रकाशार्थः प्राप्त्यर्थो वा भविष्यति ।
यत्रात्मनि निमित्ते वै पुंसो यस्योपभुक्तये ॥३३०॥
प्रकाशयन्ति शब्दादीन् [3]विदथा मनसा सह ।
इन्द्रियाणामचैतन्याद् वेदनं नैव विद्यते ॥३३१॥
वेदनेनेति तेनेह मनसेति समाश्रितम् ।
अथवेन्द्रियदेवानां वेदनं तेषु लक्ष्यते ॥३३२॥
अथवा वेदनं लाभः ज्ञानस्य विषयस्य वा ।
इत्थंभावे[4] तृतीया स्यात् [5]लब्ध्वेत्यर्थो विवक्षितः ॥३३३॥
यस्मिन्नात्मनि[6] देहस्थे सुखादेरुपभोक्तरि ।
क्षेत्रज्ञे[7] य इनो देवः परमात्मा सनातनः ॥३३४॥
द्वा सुपर्णेति[8] मन्त्रे च [9]क्षेत्रज्ञोऽस्तीत्युदाहृतः ।
अनश्नन्नन्य इत्युक्तः परमात्मा समस्तवित् ॥३३५॥
स मां [10]पक्तव्यविज्ञानं क्षेत्रज्ञं मूढमात्मनि ।
स्वात्मज्ञानप्रदानेन[11] बोधयन्नैक्यमात्मनः ॥३३६॥
आवेशयतु तत्रात्र स्वात्मन्येव परः प्रभुः ।
तस्यैव हि प्रसादेन मुक्तिरज्ञस्य नान्यथा ॥३३७॥
इत्यर्थो दर्शितोऽनेन तस्मात्तं शरणं व्रजेत् ।
परमात्मात्मकास्सर्वे क्षेत्रज्ञा यद्यपि स्फुटम् ॥३३८॥

---

१. कोशे 'गमयत्यथवाचीवा' इत्यपपाठः ।
२. कोशे 'प्रकारार्थः' इत्यपपाठः ।
३. कोशे 'विदधा' इत्यपपाठः ।
४. इत्थंभूतलक्षणे । अष्टा० २।३।२१ ।
५. कोशे 'लब्धेत्यर्थो' इति पाठः ।
६. कोशे 'तस्मिन्ना०' इति पाठः ।
७. कोशे 'क्षत्रज्ञो न इनो' इत्यपपाठः ।
८. ऋ० १।१६४।२०॥
९. कोशे 'क्षेत्रज्ञोस्मीत्यु०' इत्यपपाठः ।
१०. कोशे 'वक्तव्य०' इत्यपपाठः ।
११. कोशे 'स्वात्मज्ञं न प्रदानेन' इत्यपपाठः ।

भिन्ना एव तथाप्येते देहेऽहंभावमोहिताः ।
तत्त्वमस्यादिवाक्यैस्तु[1] क्षेत्रज्ञपरमात्मनोः ॥३३९॥
मुख्यमेकत्वमेवोक्तं भेदो[2] गौणस्तथाश्रितः ।
अध्यात्मञ्चाधिदैवञ्च तथैक्यमुपपादितम् ॥३४०॥
तद्योऽहं[3] स च यश्चायमित्याद्यैर्वचनैः[4] स्फुटम् ।
तत्राभ्युदयकामस्य भेदेनोपासनं विदुः ॥३४१॥
सगुणं निर्गुणञ्चैव मुमुक्षोरैक्यतस्तथा ।
अहं ब्रह्मेति[5] वाक्येन तदैक्यं प्रतिपादितम् ॥३४२॥
अथ योऽन्यामितीदञ्च भेदज्ञानस्य बारकम् ।
इत्यात्मगतिमाचष्टे मन्त्रोऽयं स्वात्मबोधनम् ॥३४३॥
अधियज्ञन्तु मन्त्रस्य व्याख्यानं क्लेशतो यतः ।
उपेक्षितमतस्तस्य व्याख्यानमिति गम्यते ॥३४४॥
प्रतिमन्त्रं त्रयं वाच्यम् इत्यर्थो न विवक्षितः ।
अधियज्ञं क्वचिद्वाच्यम् अधिदैवं तथा क्वचित् ॥३४५॥
अध्यात्मञ्च क्वचिद्वाच्यं [6]द्वितयं त्रितयं क्वचित् ।
यद् [7]याज्ञदैवते वाक्यं [8]संभवोत्प्रेक्षमेव तत् ॥३४६॥

॥ इति पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके
तृतीय[ाध्याय]स्य द्वितीयः पादः ॥

---

१. छा० उप० ६।८।७॥ २. कोशे 'भेदौ' इत्यपपाठः ।

३. कोशे 'तद्योहं सययश्चा०' इति पाठः । तु०—ऐत० उप० २।४।३॥

४. कोशे विसर्गरहितः पाठः । ५. बृह० उप० १।४।१०॥

६. कोशे 'द्वितीयं' इत्यपपाठः ।

७. याज्ञदैवते पुष्पफले दैवताध्यात्मे वा । निरु० १।२०॥

८. अत्रायं व्याख्याकारो दुर्गेण संवदते । तथा हि—'तस्मादेतेषु यावन्तोऽर्था उपपद्येरन् —अधिदैवाध्यात्माधियज्ञाश्रयाः सर्वे एव ते योज्या नात्रापराधोऽस्ति'(निरु० २।८ दुर्गवृत्ति.) । स्कन्ददर्शने तु—सर्वदर्शनेषु सर्वे मन्त्रा योजनीयाः । कुतः ? स्वयमेव भाष्यकारेण सर्वमन्त्राणां त्रिप्रकारस्य विषयस्य प्रदर्शनाय 'अर्थं वाचः पुष्पफलमाह' इति यज्ञादीनां पुष्पफलत्वेन प्रतिज्ञानात् (निरु० ७।५ निरुक्तभाष्यटीका)—इति सन्दर्भेण'प्रतिमन्त्रं त्रयं वाच्यम्'इति पक्षो छन्यते ।

# तृतीयः पादः

बहुवाचीनि[1] नामानि [2]द्वादशेहोत्तराण्यतः ।
वैपुल्यञ्च बहुत्वञ्च बहुशब्देन भण्यते ॥१॥
प्रचितोऽवयवैः[3] स्थूलो महान् विपुल उच्यते ।
वैपुल्यं तद्गतो धर्मो विपुलज्ञानकारणम् ॥२॥
बहुत्वमिति निर्दिष्टा संख्या त्रित्वादिलक्षणा ।
त्रित्वादयो विशेषास्स्युस्तत्सामान्यमतस्तु तत्[4] ॥३॥
पण्डिता बहवो ग्राम इत्युक्ते [5]ते कतीत्यपि ।
पृष्टाः [6]प्रतिवदन्त्येवं त्रयश्चत्वार इत्यपि ॥४॥
अतस्त्रित्वादिका संख्या बहुत्वमविशेषतः ।
किमेषामुभयं वाच्यं वैपुल्यं वाऽथवेतरत्[7] ॥५॥
अविशेषाद् द्वयं वाच्यम् इति केचित्प्रचक्षते ।
बहु कस्मादिति प्रोक्ते [8]वैपुल्यमपरे विदुः ॥६॥
न ह्येकवचनान्तोऽयं बहुत्वस्याभिधायकः ।
वैपुल्यं तु वदन्नेष वचनैर्युज्यते त्रिभिः ॥७॥
त्रिशब्दवद्[9] बहुत्वस्य वक्ता चेद्युज्यतेऽञ्जसा ।
बहुत्वमेव वा [10]वाच्यं महन्नाम्नां पृथक्त्वतः ॥८॥
महद्विपुलशब्दौ हि पर्यायौ लोकसम्मतौ[11] ।
यदि वैपुल्यवाचीनि तानीमानीत्यसंशयम् ॥९॥

---

१. बहुनामान्युत्तराणि द्वादश । बहु कस्मात् ? प्रभवतीति सतः । निरु० ३।१३।
२. कोशे 'द्वादशैहो०' इत्यपपाठः ।
३. कोशे विसर्गरहितः पाठः ।
४. तत्=बहुत्वम् ।
५. कोशे 'नेकत्रीण्यपि' इत्यपपाठः ।
६. कोशे 'प्रतिपद०' इत्यपपाठः ।
७. कोशे '०वेतरम्' इत्यपपाठः ।
८. कोशे 'वैमुख्यम०' इत्यपपाठः ।
९. कोशे 'त्रिशब्दव' इत्यपपाठः ।
१०. कोशेऽनुस्वाररहितः पाठः ।
११. कोशे 'लोकसम्मितौ' इति पाठः ।

अनर्थकं[1] महन्नाम्नामाम्नानं[2] तें प्रसज्यते ।
द्वयोर्वैतानि नामानि वैपुल्यस्यैव[3] तान्यपि ॥१०॥
एवं तु पृथगाम्नानं तेषां नैव निरर्थकम् ।
बहुत्ववचनोऽप्येष[4] युज्यते वच[नै]स्त्रिभिः ॥११॥
न विद्यते प्रयोगश्चेद् अयमेव भविष्यति ।
बहुत्वविषयत्वे हि नाम्नामेषां विनिश्चिते ॥१२॥
बहु कस्मादिति त्वेतद् बहुत्वस्यापि वाचकम् ।
यथैकवचनान्तोऽपि बहुत्वस्याभिधायकः ॥१३॥
दृष्टो विंशतिरित्यादिस्तथात्रायं भविष्यति ।
यद्वैकवचनस्येदं फलमन्यद्भविष्यति ॥१४॥
निवृत्तिस्संशयस्यैव कः कथं वा निवर्तते ।
प्रयुक्ते [5]बहुवद्ध्यस्मिन् महन्नाम्नां बहुश्रुतौ ॥१५॥
बहुत्वस्यैव वक्तायम् इति जायेत संशयः ।
एकवत्तु[6] प्रयोगस्य निवत्तिस्तस्य सिध्यति ॥१६॥
बहवस्त्वविति [वक्तव्ये] यद्बह्वित्याह भाष्यकृत् ।
तद्वैपुल्यार्थताञ्चैषां वक्तुमित्यवसीयते ॥१७॥
द्वयोश्चापि प्रवृत्तीनां निरुक्तिश्च समेत्यपि ।
डहौ[7] तु प्रत्यये बत्वे[8] भस्य स्याद् [9]भवतेर्बहु ॥१८॥
अन्तर्णीतप्रपूर्वस्य प्रभवत्यर्थसिद्धये ।
बहुशब्देन तत्प्रोक्तं बहुत्वं विपुलं तथा ॥१९॥
एकोऽपि ननु पर्याप्तः पर्याप्तौ द्वावपि स्फुटम् ।
वैपुल्येनाप्तिः[10] पर्याप्तिरिष्टैवेति न दुष्यति ॥२०॥

---

१. कोशे 'अनर्थं कर्महन्ना०' इत्यपपाठः ।
२. निघ० ३।३॥
३. कोशे 'वैपुल्यस्येव' इत्यपपाठः ।
४. कोशे '०वचनाप्येष' इत्यपपाठः ।
५. कोशे 'बहुवध्यस्मिन्' इत्यपपाठः ।
६. कोशे 'एकवक्तु' इत्यपपाठः ।
७. कोशे 'सहौ' इत्यपपाठः ।
८. कोशे 'बत्वे हस स्याद्' इत्यपपाठः ।
९. धा० १।१॥
१०. कोशे विसर्गरहितः पाठः ।

नातिप्रसङ्गदोषोऽस्ति रूढित्वेनेति साधितम् ।
एकादशोत्तराण्याह[1] ह्रस्वनामान्यतः परम् ॥२१॥
ह्रस्वाल्पयोरभेदोऽत्र [2]मात्रापचयसाम्यतः ।
अभिप्रेतः किलास्तेने[3] तेनैतानि द्वयोरपि ॥२२॥
आरोहात्परिणाहाच्च[4] ह्रसितो ह्रस्व ईरितः ।
ह्रसतिः[5] क्षयकर्मेष्टः[6] प्रत्ययो वोऽस्य संश्रयः ॥२३॥
महतस्त्वेव[7] नामानि पञ्चविंशतिरप्यतः ।
मिमीति[8] ह्रसति कृत्वा [9]जहाति च ततः परम् ॥२४॥
प्रत्ययञ्च डति[10] कुर्यात् महदेवं प्रसिध्यति ।
शतृवत्[11] कार्यतश्चास्य महानित्यवतिष्ठते ॥२५॥
मानेनान्यान्[12] जहातीति तस्यार्थो मुनिनोदितः ।
प्रमाणेन महत्त्वेन स्वकीयेनेतरान् लघून् ॥२६॥
जहातीति महानुक्तो हानमन्यत्र वर्तनम् ।
[प्रत्यये क्वि]ति प्रोक्ते [13]मंहतेरथवा भवेत् ॥२७॥
मंहनीयोऽल्पतो[14] ह्येष पूजनीयो महत्त्वतः ।
तत्र[15] तेषां महन्नाम्नां [16]ववक्षिथ विवक्षसे ॥२८॥

१. ह्रस्वनामान्युत्तराण्येकादश । ह्रस्वो ह्रसतेः । निरु० ३।१३॥
२. कोशे 'मात्रावयवसाम्यतः' इति पाठः । ३. यथाकोशं पाठः ।
४. कोशे 'अरोहा०' इत्यपपाठः । ५. कोशे 'प्रसतिः' इत्यपपाठः । धा० १।७४३॥
६. कोशे '०कर्मेष्टा प्रत्यये वोस्य' इत्यपपाठः ।
७. महन्नामान्युत्तराणि पञ्चविंशतिः । महान् कस्मात् ? मानेनान्यान् जहातीति शाकपूणिः । मंहनीयो भवतीति वा । निरु० ३।१३॥ ८. कोशे 'मिमिर्ति' इत्यपपाठः ।
९. धा० ३।८॥ १०. कोशे 'सर्ति' इत्यपपाठः ।
११. कोशे 'शतावः' इत्यपपाठः । वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च । उणा० २।८५॥
१२. कोशे 'मानेनान्यां' इत्यपपाठः ।
१३. कोशे 'मंहरेऽथवा' इत्यपपपाठः । १४. कोशे 'महनीयो०' इति पाठः ।
१५. तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासात् । निरु० ३।१३॥
१६. कोशे 'पवक्षिथ' इत्यपपाठः ।

वक्तेर्वा[1] [2]वहतेर्वेते त्वाख्याते द्वे[3] पदे अपि ।
साभ्यासे[4] न यथासं[ख्य]मेकै[क]स्यापि तद् द्वयम् ॥२९॥
अर्थरूपस्य तुल्यत्वाद् इति व्याचक्षते बुधाः[5] ।
सहत्त्वेऽप्यनयोर्वृत्तिः प्रकृत्योरिति भाषितुम् ॥३०॥
आख्यातयोस्समाम्नानं[6] महन्नामसु युज्यते ।
आ पप्राविति[7] पूर्वस्य [त्वाग्नि नेति][8] परस्य च ॥३१॥
आपप्रौ [9]बद्बधे चेति पदयोर्व्यत्ययेन तु ।
न[10] त्वावानिति वाक्यस्य संगानम्मध्यमेन च ॥३२॥
व्याख्यायते ततश्चैवं व्यत्ययेन पदद्वयम् ।
आपप्रौ[11] पार्थिवं लोकं[पप्रौ वृष्टि]प्रदानतः[12] ॥३३॥
मनुष्यैः पशुभिर्धान्यैः मृगैः पक्षिसरीसृपैः ।
बद्बधे[13] च बबन्धापि बध्नासि[14] त्वममून्यपि ॥३४॥
रोचनानि सुदीप्तानि भास्करादीनि वै दिवि ।
त्वया संपूर्यते[चायं]त्वयैवा[सौ]विधार्यते ॥३५॥
इत्यर्थो दर्शितोऽनेन युक्त्या किं [15]वेन्द्रसन्निधौ ।
सूर्यादीनां दिविस्थानं हविषा वृष्टितो [16]हविः ॥३६॥
कृत्वा वा वैदिकं कर्म दिवं प्राप्नोति तान्यपि ।
[इति]पौराणिकाः प्राहुः तच्चापि त्वत्प्रसादतः ॥३७॥

---

१. धा० २।५४॥ २. कोशे 'वहतैर्वेते' इत्यपपाठः । धा० १।१०५३॥
३. कोशे 'त्वाख्याते द्विप' इत्यपपाठः । ४. कोशे 'चोनाये' इत्यपपाठः ।
५. स्कन्दोऽत्रानुसृतः । ६. कोशे '०माम्नातं' इत्यपपाठः ।
७. ऋ० १।८१।५॥ ८. ऋ० १०।२१।१
९. कोशे 'पत्बधे' इत्यपपाठः । १०. कोशे 'त्वापानिति' इत्यपपाठः ।
११. आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि ।
न त्वावाँ इन्द्र कश्चन जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥ ऋ० १।८१।५॥
१२. कोशे 'लोकं…बुदानतः' इति पाठः ।
१३. कोशे 'बल्बधे' इत्यपपाठः । १४. कोशे 'मध्नासि' इत्यपपाठः ।
१५. कोशे 'वेद सन्निधौ' इत्यपपाठः । १६. कोशे विसर्गरहितः पाठः ।

न [1]त्वावाँ कश्चनान्योऽतस्त्वद्विधोऽन्यो न विद्यते ।
न जातः [2]कश्चनातीतो नापि कश्चिज्जनिष्यते ॥३८॥
कालत्रयेऽपि देवेन्द्र त्वत्तुल्यो नैव [विद्यते] ।
[त्व]वातीत्य जगत्सर्वं [3]ववक्षिथ महानसि ॥३९॥
विवक्षिथेति[4] युक्तं स्यादित्वाभावोऽस्य नैगमः ।
वक्तिश्च[5] भाषणे धातुः प्रापणे [6]वहतिस्तथा ॥४०॥
महत्वे च [7]तथैवैतौ महन्नामसु पाठतः ।
इ[ति व्याचक्षते][8] [9]केचिदपरे ब्रुवतेऽन्यथा ॥४१॥
वक्तुमिच्छसि विश्वं त्वं वोढुं चातिशयान्वितः ।
अतो महानसीत्यर्थः सामर्थ्यादवगम्यते ॥४२॥
आज्ञापयति यस्सर्वं प्रापयेद्वाप्यभीप्सितम् ।
[महत्त्वं]तस्य सिद्धं हि तच्चैवं गम्यतेऽर्थतः ॥४३॥
एवं व्याख्यायमाने तु पाठस्स्यान्निष्फलोऽनयोः ।
नहि सामर्थ्यगम्यार्थं प्रतिपत्तिप्रसिद्धये ॥४४॥
पदानामर्थवा[10] पाठः सामर्थ्ये............... ।
सामर्थ्यावगतश्चार्थो नहि शब्दमपेक्षते ॥४५॥
आनन्त्याच्चार्थसिद्धानाम् अर्थानां प्रतिपादने ।
अध्येया बहवश्शब्दाः प्रसज्येरन्प्रयत्नतः ॥४६॥
एवं [नैवास्य]शास्त्रस्य समाप्तिरुपपद्यते ।
गौणमुख्यविभागश्च प्रसिद्धः प्रक्षयं व्रजेत् ॥४७॥

---

१. कोशे 'नत्वा पाकश्च नान्योतः तद्विधो०' इत्यपपाठः ।

२. कोशे 'कञ्चनानीतो नपि' इत्यपपाठः । ३. कोशे 'विपक्षिथ' इत्यपपाठः ।

४. वक्तेर्वहतेर्वा सनि लिटि थलि रूपमित्यर्थः ।

५. धा० २।५४॥ ६. धा० १।१०५३॥

७. कोशे 'तथैवेतौ' इत्यपपाठः । तथा च पतञ्जलिः—अनेकार्था अपि धातवो भवन्ति । महाभाष्य १।३।१॥ ८. उणाध्यायमतमेत् स्कन्देन प्रदर्शितम् ।

९. स्कन्दमतमेतत् । द्र०—निरुक्तभाष्यटीका-द्वितीयभागः पृ० १५७ ।

१०. यथाकोशं पाठः ।

व्याख्यानं प्रथमं तस्माद् [1]न्याय्यमित्यवगम्यते ।
यस्मादेवंविधोऽसि [2]त्वं तस्मा[द् वै त्वामु]पास्महे ॥४८॥
अग्निं नेति[3] नशब्दोऽत्र [4]नोपमाने प्रयुज्यते ।
अभावादुपमेयस्य होता चेदग्निरेव सः ॥४६॥
आग्नेयत्वाच्च सूक्तस्य नाग्नेरित्युपमानतः ।
[पदपूर]ण एवातो यद्वा स्यादवधारणे ॥५०॥
अग्निमेव वयं देवं होतारं त्वा वृणीमहे ।
केन [5]स्ववृक्तिभिः कास्ताः[6] स्तुतयो दोषवर्जिताः ॥५१॥
वृजी वर्जन[7] इत्यस्य स्वपूर्वस्य स्व[वृक्तयः] ।
वर्जिताः[6] स्वयमेवैता दोषैश्शुद्धाः[6] स्वभावतः ॥५२॥
नित्यत्वसद्गुणार्थत्वात् [8]शब्दलक्षणयोगतः ।
अग्नेर्विशेषणे चैते शीरं पावकशोचिषम् ॥५३॥
शेतेर्वाप्यथवाश्नातेः[9] शीरमीरक्युदाहृतम्[10] ।
अनुशाय्यवाशी[11] स्यादग्निस्तच्छील उच्यते ॥५४॥
अनुप्रविश्य[12] सर्वाणि शेते भूतानि [13]पावकः ।
जाठरेणैव[14] रूपेण जङ्गमानीतराणि तु ॥५५॥

---

१. कोशे 'नार्यमित्य०' इत्यपपाठः ।

२. कोशे 'विधोसिद्धन्तस्मा' इत्यपपाठः ।

३. अग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
यज्ञाय स्तीर्णबर्हिषे वि वो मदे शीरं पावकशोचिषं विवक्षसे ॥ ऋ० १०।२१।१॥

४. कोशे 'नोपमान प्रयु०' इत्यपपाठः ।

५. कोशे 'स्ववृत्तिभिः' इत्यपपाठः ।

६. कोशे विसर्गरहितः पाठः ।

७. कोशे 'वृजीव जन' इत्यपपाठः । धा० ७।२४॥

८. कोशे 'शब्दोलाक्षण०' इति पाठः ।

९. कोशे 'णतेर्वाप्य०' इत्यपपाठः । धा० २।२२॥ धा० ९।५१॥

१०. कोशे '०मीरस्सदा०' इत्यपपाठः ।

११. कोशे 'अनुशार्यथा वा शि' इत्यपपाठः ।

१२. कोशे 'अनुप्रषश्य' इत्यपपाठः ।

१३. कोशे 'पार्वकः' इत्यपपाठः ।

१४. कोशे 'जाठरेणेव' इत्यपपाठः ।

अनतिव्यक्तया शक्त्या सन्मात्राधारयो विभुः ।
अशेरप्यादिलोपेन[1] शीरमित्यवतिष्ठते ॥५६॥
अश्नाति सर्वमेवासौ नातो भोक्ता परः क्वचित् ।
पाविका[2] शोचिरस्येष्टा ज्वाला पापस्य शोधिनी ॥५७॥
ततः [3]पावकशोचिस्स्यात् शुद्धदीप्तिरथापि वा ।
किमर्थं वरणं तस्य यज्ञाय स्तीर्णबर्हिषे ॥५८॥
आस्तीर्णदर्भको[4] यज्ञो होतारं[5] त्वामपेक्षते ।
त्वया ह्यधिष्ठितो होता मानुषो नान्यथा यतः ॥५९॥
अतस्त्वां यज्ञसिद्ध्यर्थं होतृत्वेन वृणीमहे ।
होतुर्देहमधिष्ठाय होत्रा [6]वा कुर्वतेप्सितम् ॥६०॥
षष्ठ्येकवचनस्यार्थे [7]वसादेशोऽत्र नैगमः ।
मदे च तव कर्तव्ये [8]विविधं त्वां वृणीमहे ॥६१॥
तृप्तये च तवेत्यर्थो यद्वाज्यं विमदस्त्विह ।
आज्ये[9] हि [10]विनियोगोऽस्य सत्रे तेनैवमुच्यते ॥६२॥
विवक्षसे[11] यतस्त्वत्र[12] महानस्यधिको गुणैः ।
वक्तेर्वा वहतेर्वैतत् [13]सनि लिटचथ नैगमम्[14] ॥६३॥
गृहाणामपि[15] नामानि द्वाविंशतिरतः परम् ।
कप्रत्यये[16] [17]ग्रहेर्गेहे गृहास्स्युस्सम्प्रसारणे ॥६४॥

---

१. कोशे 'अशोरप्या०' इति पाठः । २. कोशे 'वापिका' इत्यपपाठः ।
३. कोशे 'पावकः शोधिस्स्यात्' इत्यपपाठः । ४. कोशे 'अस्तीर्ण०' इत्यपपाठः ।
५. कोशे 'होतारस्त्वा०' इत्यपपाठः । ६. कोशे 'नाकुर्वंतीप्सितम्' इत्यपपाठः ।
७. कोशे 'वसादे गोत्र' इत्यपपाठः । 'तव' स्थाने 'वः' आदेशश्छान्दस इत्यर्थः ।
८. कोशे 'विविधे त्वं' इत्यपपाठः । ९. कोशे 'आज्यो' इति पाठः ।
१०. तथा चाश्वलायनः—अग्निं न स्ववृक्तिभिरित्याज्यम् । आश्व० श्रौ० ७।११।८॥
११. कोशे 'विवक्षते' इत्यपपाठः । १२. कोशे 'यतस्त्वस्य' इति पाठः ।
१३. कोशे 'सत्रि' इत्यपपाठः । १४. छान्दसं रूपमित्यर्थः ।
१५. गृहनामान्युत्तराणि द्वाविंशतिः । गृहाः कस्मात् ? गृह्णन्तीति सताम् । निरु० ३।१३॥ १६. गेहे: कः । अष्टा० ३।१।१४४॥
१७. कोशे 'गृहेगेहे' इत्यपपाठः । धा० ९।६०॥

प्राप्ताप्राप्तं धनं सर्वं गृह्णन्त्यभ्यागतानपि[1] ।
श्रुतिस्मृत्युदितं वापि कर्म यद्वापि कामिनम् ॥६५॥
निःस्पृहास्तु[2] गृहाँस्त्यक्त्वा विज्ञायात्मानमञ्जसा ।
अरण्येष्वपि तिष्ठन्ति शान्ता ध्यानपरायणाः ॥६६॥
धातवः [3]परिचर्यार्थाः [4]दशैव स्युरतः परम् ।
विंशतिस्सुखनामानि[5] खेभ्यः स्यात्सुहितं[6] सुखम् ॥६७॥
इन्द्रियाण्येव [7]खान्याह खेभ्य इत्यपि पञ्चमी ।
हेतौ हेतुत्वमेतेषां सुखं प्रत्यवगम्यते ॥६८॥
हितयोगे चतुर्थी चेद् नैषाञ्चैतन्यवर्जनात् ।
खहेतुकं सुखं तस्माद् आत्मने सुहितं त्विति ॥६९॥
व्याख्येयं सुहितं यद्वा सम्यगात्मन्यवस्थितम् ।
इन्द्रियार्थं सुखं सर्वम् आत्मनैवानुभूयते ॥७०॥
अथवा सुहितं [8]बुद्धौ बुद्धिस्थं ह्यनुभूयते ।
आत्मानो वा खशब्दोक्ताः [9]प्राणन्नेवेति च श्रुतिः ॥७१॥
प्राणो नाम [10]भवत्येष प्राणन्नेवेत्युदाहृतः ।
वदन्पश्यंस्तथा [11]शृण्वन्मन्वानो वाऽभिधीयते ॥७२॥

---

१. कोशे 'गृह्णन्त्यभागता०' इत्यपपाठः ।

२. कोशे 'निस्पृहास्तु गृहास्त्यक्त्वा' इत्यपपाठः ।

३. परिचरणकर्माण उत्तरे धातवो दश । निरु० ३।१३॥

४. कोशे 'दंशेन' इत्यपपाठः ।

५. सुखनामान्युत्तराणि विंशतिः । सुखं कस्मात् ? सुहितं खेभ्यः । खं पुनः खनतेः । निरु० ३।१३ ।

६. कोशे 'सहितं' इत्यपपाठः ।

७. कोशे 'ख्यान्याह' इत्यपपाठः ।

८. कोशे 'बुद्धो' इत्यपपाठः ।

९. प्राणन्नेव प्राणो नाम भवति,वदन् वाक्, पश्यंश्चक्षुः, शृण्वन् श्रोत्रं, मन्वानो मनः । तस्यैतानि कर्मनामान्येव । बृह० उप० १।४।७॥

१०. कोशे 'भवन्त्येष'इत्यपपाठः ।

११. कोशे 'शृण्वन्घ्नन्ननेवाभिधीयते' इत्यपपाठः ।

एवञ्चोपनिषद्युक्तं चतुर्थ्येव[1] भविष्यति ।
हितमात्मार्थं[2] इत्यर्थ इन्द्रियेभ्योऽथवा [3]हितम् ॥७३॥
हितमित्युच्यते श्रेयः श्रेयश्च सुखमात्मनः ।
हितस्योत्पादनात्तानि[4] हितं नैव स्वरूपतः ॥७४॥
तस्मात्सुष्ठु हितं खेभ्य इत्येतदुपपद्यते ।
सुखञ्च दुःखसंविद्धं दुःखमेव [5]विजानताम् ॥७५॥
अतो धर्माविरुद्धस्य सुखस्योत्पादनानि नः ।
इन्द्रियाणि हितानि स्युर्नेतराणि कदाचन ॥७६॥
खं पुनः [6]खनतेरिष्टं प्रत्ययो [7]डोऽस्य कल्पितः ।
आधारस्यैव खातत्वात् खातानीव हि तान्यपि ॥७७॥
तथा [8]पराञ्चि खानीति प्रकृत्योक्तं कठश्रुतौ ।
आधारस्य[9] विखातत्वं सर्वेषां नैव यद्यपि ॥७८॥
तथापि व्यपदेशत्वात् केनचिल्लक्षणाबलात् ।
निखनन्तीति वा खानि विषयेषु हि कामिनम् ॥७९॥
मज्जयन्त्यवशं[10] मूढं स्थाणुं पङ्कजले यथा ।
अतस्तान्यभिभूतानि[11] जेतव्यानि विपश्चिता ॥८०॥
अथवोत्खननात्खानि वस्तु [12]तद्द्वारकं यतः ।
उत्खन्यते सदा प्राज्ञैर्युक्तिपूर्वं निरूप्यते ॥८१॥
प्रत्यक्षपूर्विका युक्तिर्वस्तुतत्त्वे प्रवर्तते ।
प्रत्यक्षञ्चापि स्वाधीनं विज्ञानं निश्चितं सदा ॥८२॥

---

१. कोशे 'चतुर्थ्येवं इति पाठः । २. कोशे 'हतमात्मार्थं' इत्यपपाठः ।
३. कोशे 'हितः' इति पाठः । ४. कोशे '०पादनान्तानि' इत्यपपाठः ।
५. कोशे 'विजातनाम्' इत्यपपाठः । ६. धा० १।६२७॥
७. कोशे 'प्रत्ययो पोस्य' इत्यपपाठः ।
८. कठोप० ४।१॥ ९. कोशे 'अधारस्य विघातत्वं' इत्यपाठः ।
१०. कोशे 'सज्जयन्त्यवशं' इत्यपपाठः ।
११. कोशे '०तान्यपिभूतानि' इति पाठः । १२. कोशे 'तद्वारको' इत्यपपाठः ।

अत ऊर्ध्वं समाम्नाये रूपनामानि[1] षोडश ।
रोचतेरिति[2] [3]पूर्वोक्तम् इह केचिदधीयते ॥८३॥
इह प्रकरणे वाच्यं प्रसङ्गात्पूर्वमीरितम् ।
एवं प्रतिसमाधानं[4] पौनरुक्तयस्य ते[5] विदुः ॥८४॥
अन्ये[6] शब्दादिरूपस्य निरुक्तिमिह मन्वते ।
चक्षुर्ग्राह्यस्य रूपस्य निरुक्तिः पूर्वमीरिता ॥८५॥
इदं शब्दस्य रूपं स्यात् स्पर्शस्य त्विदमित्यपि ।
प्रयोगो दृश्यते लोके तेनास्येह परिग्रहः ॥८६॥
वर्णात्मकं तु शब्दस्य रूपं तच्चापि रोचते ।
स्पर्शस्य मृदुकाठिन्यपिच्छिलोष्णादिलक्षणम् ॥८७॥
रूपस्य शुक्लनीलादि रसस्य मधुरादिकम् ।
तीव्रादिकं तु गन्धस्य सर्वमेतच्च रोचते ॥८८॥
दश [7]प्रशस्यनामानि [8]प्रशस्यः स्तुत्य उच्यते ।
प्रज्ञानामानि[9] चाप्यूर्ध्वमेकादश विदुर्बुधाः ॥८९॥
अविसंवादि[10] यद्वस्तु [11]तत्सत्य[म]भिधीयते ।
प्रमाणं वा प्रमेयं वा सत्सु [12]तत्तायते यतः ॥९०॥
सत्पूर्वस्य [13]तनोतेः स्यात् सत्यं [14]डयत्प्रत्यये कृते ।
साधवः सत्पदेनोक्ता वीतरागा विपश्चितः ॥९१॥

---

१. रूपनामान्युत्तराणि षोडश । रूपं रोचतेः । निरु० ३।१३॥
२. धा० १।७८१॥
३. निरु० २।३॥
४. कोशे '०धान पौनरुक्तस्य' इत्यपपाठः ।
५. द्रष्टव्योऽत्र स्कन्दस्वामिग्रन्थः ।
६. के त इति न ज्ञायते ।
७. प्रशस्यनामान्युत्तराणि दश । निरु० ३।१३॥
८. कोशे विसर्गरहितः पाठः ।
९. प्रज्ञानामान्युत्तराण्येकादश । निरु० ३।१३॥
१०. कोशे 'अपि संवादि' इत्यपपाठः ।
११. सत्यनामान्युत्तराणि षट् । सत्यं कस्मात् ? सत्सु तायते । सत्प्रभवं भवतीति वा । निरु० ३।१३॥
१२. कोशे 'सत्तायते' इत्यपपाठः ।
१३. धा० ८।१॥
१४. कोशे 'यत् प्रत्यये' इति पाठः ।

अविसंवादि[1] यद्वस्तु तत्ते जानन्ति तत्त्वतः ।
अतस्तत्तायते तेषु प्रथते संप्रकाशते ॥९२॥
यत्प्रत्ययेऽथवा सत्यं प्रभवत्यर्थवाचिनि ।
तत् [2]सत्प्रभवमित्युक्तं [3]सच्छब्दादेव केवलात् ॥९३॥
सद्भ्यः[4] प्रभवतीत्यर्थः साधुभ्यस्तद्धि जायते ।
प्रवर्तयन्ति तत्सन्तः सत्यमेतदिति स्फुटम् ॥९४॥
यद्वा स्वेनैव रूपेण सत्सु वस्तुषु तायते ।
यत्तत्सत्यमिति प्रोक्तम् असत्यं स्यादतोऽन्यथा ॥९५॥
तद्यथोदकविज्ञानम् उदके जातमक्षयम् ।
सत्यं तज्ज्ञानगम्यञ्च तथैवोदकमुच्यते ॥९६॥
नोषरे[5] रश्मिसंतप्ते वारिज्ञानं कदाचन ।
शशशृङ्गादिविज्ञानं[6] शब्दमात्रनिबन्धनम् ॥९७॥
न सत्यमिष्यते लोके सत्यासत्ये च वस्तुनि ।
जगतः कारणं यत्तत् परमात्माख्यमव्ययम् ॥९८॥
तच्चापि सत्यमिष्टन्नः [7]सत्यं ज्ञानमिति श्रुतेः ।
महदादि विकारेषु [8]घटादिष्विव मृत्तिका ॥९९॥
सत्सु तत्तायते तेन सत्यमित्यभिधीयते ।
मृत्तिकेत्यादिवाक्येन[9] कारणं सत्यमोरितम् ॥१००॥
कारणञ्च परं ब्रह्म वेदान्तैरुपपादितम् ।
उत्तराणि पदान्यष्टावामिश्राण्याह[10] भाष्यकृत् ॥१०१॥

---

१. कोशे 'अपिसंवादि' इत्यपपाठः ।
२. कोशे 'तत्संभव०' इत्यपपाठः ।
३. कोशे 'स छब्दा०' इत्यपपाठः ।
४. कोशे 'सभ्यः' इत्यपपाठः ।
५. कोशे 'नोपरे' इत्यपपाठः ।
६. कोशे 'शशृगादि०' इत्यपपाठः ।
७. सत्यं ज्ञानमनन्तं ब्रह्म । तै० उप० २।१।१॥
८. कोशे 'पटा०' इति पाठः ।
९. यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । छा० उप० ६।१।४॥
१०. अष्टा उत्तराणि पदानि पश्यतिकर्माणः । उत्तरे धातवश्चायतिप्रभृतीनि च नामान्यामिश्राणि । निरु० ३।१३॥ 'चायतिप्रकृतीनि' इति स्कन्दपाठः ।

यत्राख्यातानि दृश्यन्ते पश्यत्यर्थानि कानिचित् ।
चाचष्टे[1] च विचष्टे च साध्यभावप्रसङ्गत ॥१०२॥
यत्साध्यमानभावार्थस्तदाख्यातं पुरेरितम् ।
इमान्यप्येवमर्थानि तेनाख्यातान्यसंशयम् ॥१०३॥
सिद्धार्थविषयत्वाच्च [2]धीकृदित्याह भाष्यकृत् ।
नामान्येवेति विज्ञेयं विभागो लक्षणादयम् ॥१०४॥
आमिश्रत्वात्पदानीति पूर्वं भाष्यकृतोदितम् ।
नामानि धातवो वेति पाठो नात्रोपपद्यते ॥१०५॥
व्यामिश्राणां पुनः पाठः कस्मात्पूर्वैः प्रवर्तितः ।
विभागो लक्षणेनापि विज्ञेय इति भाषितुम् ॥१०६॥
नैषां प्रतिपदं पाठ आनन्त्यादुपपद्यते ।
उक्तानि यानि नामानि तथाख्यातानि यानि च ॥१०७॥
तेषामर्थं परिज्ञाय लिङ्गं [3]शेषेषु कल्पयेत् ।
इत्येवामिश्रपाठोऽयं[4] पूर्वैरेषां समाश्रितः ॥१०८॥
विज्ञायेममभिप्रायं यास्को लक्षणमब्रवीत् ।
आमिश्राणि[5] पदानि स्युरुत्तराणि नवाप्यतः ॥१०९॥
उपसर्गनिपातानां समाहारात्मकत्वतः ।
इष्टा व्यामिश्रतैतेषां [6]समाम्नानं [6]भविष्यति ॥११०॥
पदानामिह सर्वेषां समाम्नानं भविष्यति ।
संक्षेपेणान्यथा पाठे गरिमा जायते स्फुटम् ॥१११॥

---

१. 'चष्टे' इत्येव निघण्टुपाठः । कदाचिदत्र 'चाक्ष्म चष्टे विचष्टे च' इति पाठः स्यात् ?

२. यथाकोशं पाठः ! अत्र 'चायतिप्रकृतीनि तु' इति पाठो युक्तः स्यात् ?

३. कोशे 'शेष्टेषु' इत्यपपाठः ।

४. कोशे 'इत्यमिश्रपाठोयं पूर्वैशेषां' इत्यपपाठः ।

५. नवोत्तराणि पदानि सर्वपदसमाम्नानाय । निरु० ३।१३।। 'आमिश्राणि' इति पूर्वतोऽनुषज्यते ।

६. सन्दिग्धम् !

निपातानां समाहारो हिक्कमित्यादिलक्षण:[1] ।
उपसर्गनिपातानां सुकमित्यादिलक्षण: ॥११२॥
व्यस्ता एते क्वचिद् ग्राह्याः समस्ताश्च तथा क्वचित् ।
चतुर्णां पदजातानां सर्वेषां हि समासतः ॥११३॥
पाठो व्यामिश्रपाठेन सिद्ध इत्यब्रवीदृषिः ।
अथात[2] उपमा वाच्या उपमार्था इवादयः ॥११४॥
उपमा इति निर्दिष्टास्तदर्थस्तूपमेष्यते ।
अनन्तरमतस्तेषामुपमार्थत्वमुच्यते ॥११५॥
पौनरुक्त्यं[3] न भाष्यस्य मूलग्रन्थे न विद्यते ।
पदत्वञ्चार्थवत्त्वञ्च पूर्वमेवोपपादितम् ॥११६॥
उपमायाः[4] स्वरूपं हि तत्र नोक्तमिहोच्यते ।
उपमालक्षणं[5] तावत् सामान्येनाभिधीयते ॥११७॥
उपमा वोपमेयो वा तदित्येतेन कथ्यते ।
गवयो गौरिवेत्युक्ते गौरित्युक्तोपमा स्फुटम् ॥११८॥
गवयश्चोपमेयोऽत्र गवा स ह्युपमीयते ।
उपमा चेत्तदित्युक्ता तत्तुल्यो गवयोऽप्यतः ॥११९॥
इवादेर्गवयः कर्म प्रसज्येत न चेष्यते ।
इवादिर्नहि तं वक्ति वक्ति [6]धर्मं पराश्रयम् ॥१२०॥
निपातानां हि सर्वेषां धर्मवाचित्वमीरितम् ।
अत एवोपमेयोऽपि तदित्येतेन चोच्यते ॥१२१॥

---

१. कोशे 'हिकमित्यादिलक्षणम्' इत्यपपाठः ।

२. अथात उपमाः । निरु० ३।१३।।

३. पूर्वं (निरु० १।४) निरूपितत्वात् पुनरुक्तिशङ्कां निवारयति—पौनरुक्त्यमिति । मूलग्रन्थे निघण्टाविति यावत् ।

४. कोशे 'उपमायां' इत्यपपाठः ।

५. यदतत्तत्सदृशमिति गार्ग्यः । तदासां कर्म । निरु० ३।१३।।

६. कोशे 'धर्मः' इत्यपपाठः ।

उपमेये तदित्युक्ते गौरिवादेः[1] प्रसज्यते ।
गोशब्दस्यैव गौरर्थे[2] इवो धर्मस्य वाचकः ॥१२२॥
सादृश्यं चैव धर्मोऽत्र धर्मी स्यात्सदृशस्तथा[3] ।
कर्मत्वं सदृशस्यात इवादेर्नोपपद्यते ॥१२३॥
गवयो नोपमेयो[4] न सादृश्यं [5]सदृशो न च ।
अतस्सदृशशब्देन सादृश्यं न विवक्षितम् ॥१२४॥
न च तस्योपमानत्वं धर्मिणः केवलस्य वा ।
सादृश्येन विशिष्टस्य धर्मिणस्तूपपद्यते ॥१२५॥
सादृश्येन विशिष्टेन धर्मी धर्म्यन्तरेण हि ।
उपमीयते [6]यथा लोके वेदे चैव तथा स्फुटम् ॥१२६॥
षड् भावेत्यादिके[7] भाष्ये [8]धर्मसत्ता प्रसाधिता ।
धर्माणामपि केषाञ्च सादृश्यं नाम किन्त्विह ॥१२७॥
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ।
क्रियासामान्ययोगोऽपि स च प्रत्यक्षगोचरः ॥१२८॥
शृङ्गाद्यवयवानां हि सामान्यं भूयसां तु यत् ।
तद् गोगवययोः स्पष्टं प्रत्यक्षेणोपलभ्यते ॥१२९॥
यद् व्यक्तीनां[9] तु भूयस्त्वं प्रत्याख्यातमथापि वा ।
अतस्तस्योपमानत्वमुपमानत्वमेव च ॥१३०॥
गौरेव गोपदेनोक्तो गवयो गवयस्त्विवति ।
अव्यक्तश्चानुपात्तश्च ताभ्यामुक्त[10] इवादिना ॥१३१॥

१. कर्मेति शेषः । २. कोशे 'गोरर्थे' इति पाठः ।
३. कोशे '०सदृशं तथा' इति पाठः । ४. कोशे 'नोपमेयेन' इति पाठः ।
५. कोशे 'सदृशं' इति पाठः । ६. कोशे 'तथा' इत्यपपाठः ।
७. कोशे 'षाट्भावे०' इति पाठः । द्र०—निरु० १।२।
८. कोशे 'धर्मि सक्ता' इत्यपपाठः ।
९. कोशे 'व्यक्तीनन्तु' इत्यपपाठः ।
१०. कोशे 'इवादिनम्' इत्यपपाठः ।

सादृश्यलक्षणो धर्मस्तद्विशिष्टं [1]गवादिकम् ।
सदृशं त्विति निर्दिष्टम् अभेदाद्धर्मधर्मिणोः ॥१३२॥
नात्यन्तं भिद्यते धर्मी धर्माद्धर्मोऽपि[2] धर्मिणः ।
शुक्लो गौरुत्पलं नीलम् इत्येवमुपपद्यते ॥१३३॥
षष्ठ्येव त्वन्यथा युक्ता विज्ञानञ्च तथा दृढम् ।
गर्गस्य ग्रहणं तत्र [3]गार्ग्यः पूजयितुं गुरुम् ॥१३४॥
नो चेन्मतान्तरं ब्रूयादागमत्वोक्तयेऽथवा ।
तदासामिति निर्देश उपमा इत्युपक्रमात् ॥१३५॥
सादृश्यं नाम सामान्यमुपमानोपमेययोः ।
व्यवस्थितं यदा तत्र कस्य स्यादुपमानता ॥१३६॥
ज्यायसा[4] वेति तत्प्राह ज्यायस्त्वं व्यक्तिभूमतः ।
प्रशस्यत्वेन वा ज्ञेयं कनीयांस्तद्विपर्ययात् ॥१३७॥
क्रियाऽपि[5] गुणभूतत्वात् गुणशब्देन गृह्यते ।
इन्द्र इवेह[6] मन्त्रादाविन्द्रस्यातिशयो[7] गुणः ॥१३८॥
देवैश्वर्यविशिष्टत्वं तेन राजोपमीयते ।
निकृष्टस्थानसंयोगाद् निकृष्टो नृप इष्यते ॥१३९॥
विप्रवद् वृषलो ब्रूयाद् इत्यादौ क्रिययोपमा ।
प्रख्यातस्तु[8] प्रसिद्धस्स्याद् दीप्त्या वाऽभिभवेन वा ॥१४०॥

---

१. कोशे 'गवादितम्' इत्यपपाठः ।

२. कोशे '०धमोवि' इत्यपपाठः ।

३. कोशे 'गार्गः' इत्यपपाठः ।

४. ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाप्रख्यातं वोपमिमीते । अपि वा कनीयसा ज्यायांसम् । निरु० ३।१३॥

५. कोशे 'क्रिया विगणभूत०' इत्यपपाठः ।

६. इन्द्र इवेह ध्रुवस्तिष्ठ० । ऋ० १०।१७३।२॥

७. कोशे '०दाविन्द्रस्यावतिशयो' इत्यपपाठः ।

८. अग्निरिव मन्यो (ऋ० १०।८४।२) इत्युदाहरण उपमाप्रवृत्तिं प्रदर्शयति—प्रख्यात इति । अत्र यथेत्यध्याहारः तथेति श्रवणात् ।

अग्निर्नहि[1] तथा मन्युस्तस्याग्नेरुपमानता ।
अधिकत्वं प्रशस्तत्वं प्रख्यातत्वमथापि वा ॥१४१॥
धर्मिण्यवसितं यस्मिन् तस्य स्यादुपमानता ।
इतरस्योपमेयत्वं लोके वेदे च निश्चितम् ॥१४२॥
उक्तस्य व्यभिचारोऽस्य क्वचिद्वेदे प्रतीयते ।
यथा [2]तनूत्यजेवेति [3]तनूर्देहोऽभिधीयते ॥१४३॥
मथित्वाग्निं समाधाय स्तुवन्नेवाब्रवीदृषिः ।
यथा तनूत्यजौ चौरौ [4]वनर्गू वनगामिनौ ॥१४४॥
मुष्णन्तौ[5] पथिकं कञ्चिद् [6]बध्नीयातामशङ्कितौ ।
रशनाभिस्तथा [7]बाहू दशभिर्यज्ञकर्मणि ॥१४५॥
त्वामग्नेऽङ्गुलिभिस्सम्यगभ्यधातां विधानतः ।
दधातेरभिपूर्वस्य[8] बन्धनं वाच्यमिष्यते ॥१४६॥
आधानं बन्धनं त्वग्नेरिह मन्त्रे विवक्षितम् ।
नवीयसी[9] मनीषेयं [10]स्तुतिर्नवतरेरिता ॥१४७॥
नित्यत्वादजरा[11] ह्येषा नवीयस्येव सर्वदा ।
हीनोपमानयुक्तत्वाद् अथवेयं नवीयसी ॥१४८॥
अदृष्टत्वादियं लोके नवीयस्येव वैदिकी ।
कृतज्ञश्चेह राजाऽयं [12]भुङ्क्ते चाहूय काकवत् ॥१४९॥

---

१. कोशे 'अग्निन्नहि तथा मन्यु तस्याग्निरुपमानतः' इत्यपपाठः ।
२. तथा च मन्त्रवर्णः—
तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः ॥ ऋ० १०।४।६॥
३. कोशे 'तनुर्देहो०' इत्यपपाठः ।
४. कोशे 'वनगुर्वन०' इत्यपपाठः ।
५. कोशे 'मुषन्तौ' इत्यपपाठः ।
६. कोशे 'बध्नीयात्ताम०' इत्यपपाठः ।
७. कोशे 'बाहुः' इत्यपपाठः ।
८. कोशे 'दधातेरिभि०' इत्यपपाठः । धा० ३।१०॥
९. कोशे 'नवीनसी' इत्यपपाठः ।
१०. कोशे 'स्ततिन्नपतरे०' इत्यपपाठः ।
११. कोशे 'नित्यत्व अजरा' इत्यपपाठः ।
१२. कोशे 'भुंक्तेश्चाहूय' इत्यपपाठः ।

इयं[1] हीनोपमा लोके नष्टा साधुविवर्जिता ।
विज्ञायैनां[2] नियुङ्क्ष्वाग्ने[3] रथं नात्मनमध्वरे ॥१५०॥
दीप्यमानैर्यथा कश्चित् रथं स्वाङ्गैर्नियोजयेत् ।
तथा नियोजयात्मानं स्वाङ्गैरध्वरसिद्धये ॥१५१॥
तनूत्यगित्यवच्छिद्य [4]तनूत्यक्तेति भाष्यकृत् ।
निर्वदन् वचनं मेने [5]निरुक्तावविवक्षितम् ॥१५२॥
निर्वक्तुं तावता शक्यम् इत्येतदुपपद्यते ।
तनूत्यक्तेति[6] निर्देशात् क्विपस्ताच्छील्यवृत्तिता[7] ॥१५३॥
स्वदेहनिरपेक्षत्वं प्रायश्चोरस्य विद्यते ।
अन्यथा न प्रवर्तेत जानन्मरणमात्मनः ॥१५४॥
चौर्यं कुर्वन् [8]म्रियेतैव धार्मिके सति राजनि ।
इष्टस्यापि शरीरस्य विनाशमनपेक्ष्य हि ॥१५५॥
द्रव्यतृष्णावशाच्चौर्यं प्रयासेनानुतिष्ठति ।
तथैहिकं सुखं त्यक्त्वा धर्ममेवानुचिन्तयन् ॥१५६॥
आदधीताग्निमित्यर्थ उपमानेन वर्णितः ।
वनपूर्वाद् [9]गमेर्धातोर्डौ रेफागमतस्तथा ॥१५७॥
वनर्गुरिति[10] रूपं स्याद् वनगामीति दर्शितम् ।
वनगामीति[11] निर्देशः सौकर्यप्रतिपत्तये ॥१५८॥

---

१. कोशे 'इयं हि नोपमा' इत्यपपाठः । २. एनाम्=स्तुतिम् ।

३. कोशे 'नियुक्षग्ने रथन्नामातनमध्वरे' इत्यपपाठः । रथं न आत्मानम् =रथमिवात्मानम् ।

४. तनूत्यक् तनूत्यक्ता वनर्गू वनगामिनौ बाहू तस्कराभ्यामुपमिमीते । निरु० ३।१४।।

५. कोशे 'निरुक्तापविवक्षितम्' इत्यपपाठः ।

६. कोशे 'तनुत्यक्ते०' इत्यपपाठः । तनूत्यक्तेति ताच्छीलिकतृन्नन्तनिर्देशात् तनूत्यगिति ताच्छीलिकक्विबन्त इत्याक्षिप्यत इत्याशयः । ७. कोशे '०ताच्छील्यवृत्तिना' इत्यपपाठः ।

८. कोशे 'म्रियैतैव' इत्यपपाठः ।

९. कोशे 'गमेर्धातोः धोरेथागम०' इत्यपपाठः । धा० १।१०३१।।

१०. कोशे 'वनगूरिति' इत्यपपाठः । ११. कोशे 'वनगामीत्यनिर्देशः' इत्यपपाठः ।

बन्धनस्येति विज्ञेयं निश्शङ्कं बन्धनं वने ।
निश्शङ्कं बन्धनं यद्वत् वने तस्करकर्तृकम् ॥१५९॥
तथा निश्शङ्कमेवाग्नेराधानं कार्यमीप्सितम् ।
अस्ति धर्मो न वास्तीति त्यक्त्वा शङ्कां विचक्षणः ॥१६०॥
आदधीताग्निमित्येतद्[1] अनेनाप्युपपद्यते ।
अग्निमन्थननिर्देशो[2] बाह्वोर्ज्यायस्त्वकीर्तये ॥१६१॥
उपमानकनीयस्त्वं वक्तु[3] तस्करकीर्तनम् ।
तत्पूर्वस्य[4] [5]करोतेस्स्यात् [6]तलोपे सुटि तस्करः ॥१६२॥
अत्यन्तकुत्सितं पापं पापकं तत्पदेरितम् ।
तस्करः [7]तत्करोतीति चोरः पापकृदीरितः ॥१६३॥
यद्वा तनोतिपूर्वस्य करोतेर्नस्य लोपतः ।
सुट्येव[8] तस्करो ज्ञेयः [9]सन्ततं चौर्यलक्षणम् ॥१६४॥
कर्माहोरात्रमस्येति । चौर्यतात्पर्यमीरितम् ।
ज्यायानेवोपमेयोऽत्र गुणश्चोरगुणान्मतः[10] ॥१६५॥
प्राशस्त्यलक्षणो[11] बाह्वोरग्निमन्थनवर्तिनोः ।
तस्करस्थः कनीयान्स्यात्[12] निषिद्धस्तेन्यलक्षणः ॥१६६॥

---

१. कोशे 'अदधीता०' इत्यपपाठः ।

२. कोशे 'अग्निबन्धननिर्देशो बाह्वोर्जायस्त्व०' इत्यपपाठः ।

३. कोशे 'वस्तुन्तस्कर०' इत्यपपाठः ।

४. तस्करस्तत्करो भवति यत्पापकमिति नैरुक्ताः । तनोतेर्वा स्यात् सन्ततकर्मा भवति । अहोरात्रकर्मा वा । निरु० ३।१४॥

५. धा० ५।७॥

६. कोशे 'कलोपे' इत्यपपाठः । तथा चाह वार्त्तिककारः– तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । महाभाष्य वा० ६।१।१५७॥

७. कोशे 'तस्करो०' इत्यपपाठ. ।

८. कोशे 'सुग्येव' इत्यपपाठः ।

९. कोशे 'सन्नश्चौर्य०' इत्यपपाठः ।

१०. उपमानाच्चोरगुणादत्रोपमेयगुणो ज्यायान् मत इत्यन्वयः । ज्यायांस्तत्र गुणोऽभिप्रेतः । निरु० ३।१४॥

११. कोशे 'प्रशस्त्य०' इत्यपपाठः ।

१२. कोशे 'निषिद्धन्तेन्य०' इत्यपपाठः ।

ज्यायांस्त्वित्युपमानस्थं गुणमुक्तं विदुः परे[1] ।
ज्यायानेव गुणीऽवापि गाढबन्धनलक्षणः ॥१६७॥
प्रसिद्धस्तस्करस्थोऽपि नाग्निमन्थनयोस्तथा ।
एवं कनीयसेत्येतत् भाष्यं त्यक्तुं प्रसज्यते ॥१६८॥
प्रशस्तोऽपि गुणो लोके हीनस्थो नोपमेष्यते ।
तेनोपमीयमानस्य मन उद्विजते यतः ॥१६९॥
देवतायास्तु नोद्वेग इति हीनोपमा श्रुतौ ।
भक्त्या प्रयुज्यमाना हि स्तुतिः प्रीणाति देवताः ॥१७०॥
हीनोपमाथवाप्यन्या भक्त्या तुष्यति देवताः ।
अहल्याजारकल्पादिकीर्तनञ्च स्तुतिस्ततः ॥१७१॥
कुह[2] स्विदिति चानेन हीनैव प्रतिपाद्यते ।
चिरात्समागतौ दृष्ट्वा घोषा सप्रणयं [3]किञ्च ॥१७२॥
अश्विनावब्रवीद्यज्ञे सोपालम्भं कुहेति वै ।
कुहशब्देन सप्तम्या सामानाधिकरण्यतः ॥१७३॥
दोषावस्तोरितीमे च सप्तम्यन्ते विनिश्चिते ।
क्व[4] स्विद्रात्रौ दिवा चैव साम्प्रतं [5]भवथो युवाम् ॥१७४॥
इह तावन्न दृश्येथे रात्रावेवमहन्यपि ।
अभिपित्वमभिप्राप्तिं[6] कुरुथः क्व युवामतः ॥१७५॥
प्राप्य [7]देशान्तरं वापि भवथः क्व युवामुभौ ।
ऊषतुः [8]करतश्चेति प्रथमौ पुंसि मध्यमे ॥१७६॥

---

१. द्र०—स्कन्दभाष्यम् (निरुक्तभाष्यटीका द्वितीयभागे पृ० १६४) ।
२. कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥ ऋ० १०।४०।२॥
३. कोशे 'कि' इत्यपपाठः । ४. कोशे 'क्वचिद्रात्रौ' इत्यपपाठः ।
५. कोशे 'भवतो' इत्यपपाठः । ६. कोशे 'अभिवित्वमभिप्राप्ति कुरुतः' इत्यपपाठः ।
७. कोशे 'देशान्तरा वापि भवथ क्व' इत्यपपाठः ।
८. कोशे 'कतरश्चेति' इत्यपपाठः ।

कल्पितौ [1]भाष्यकारेण मन्त्रे प्रत्यक्षवृत्तितः ।
प्रत्यक्षवृत्तिता चापि वामित्यस्योपलब्धितः ॥१७७॥
ऊषतुश्चेति वाप्येतत् लडर्थे परिकल्पितम् ।
अस्मत्तो वा [2]विशिष्टोऽन्यः क एवं कुरुते युवाम् ॥१७८॥
सम्यक्परिचरेद्यज्ञे [3]विधवा देवरं यथा ।
शयुत्रा[4] शयने यद्वत् [5]योषा मर्यं यथापि वा ॥१७९॥
शीङ[6] उत्रे शयुत्रेति गुणायादेशयोस्ततः ।
सप्तम्यान्तु[7] तथाकारे ल्युडर्थे प्रत्यये कृते ॥१८०॥
विगतो[8] हि धवो धाता यस्यास्मा विधवा स्मृता ।
विधातैव हि धातोक्तो विधानाज्जीवनस्य हि ॥१८१॥
ऐहिकामुष्मिकस्यापि सुखस्यासौ विधायकः ।
विधातृशब्दवाच्यो हि भर्ता [9]धाता स वै धवः ॥१८२॥
धूञो[10] वा कम्पनार्थस्य विपूर्वस्याचि[11] कर्तरि ।
गुणावादेशतस्सिद्धा विधवा मृतभर्तृका ॥१८३॥
पतिनाशाभिसन्तप्ता [12]धूनुते कम्पते हि सा ।
धावतेर्वा[13] [14]विपूर्वस्य ह्रस्वत्वे च [15]विधावनात् ॥१८४॥

---

१. क्वस्विद्रात्री भवथः, क्व दिवा । क्वाभिप्राप्तिं कुरुथः । क्व वसथः । को वां शयने विधवेव देवरम् । निरु० ३।१५॥

२. कोशे 'वशिष्टोन्यः' इत्यपपाठः ।

३. कोशे 'विधवां दैवतं' इत्यपपाठः ।

४. कोशे 'शयुत्र' इत्यपपाठः ।

५. कोशे 'योवा' इत्यपपाठः ।

६. कोशे 'शीङ् इद्रे' इत्यपपाठः । धा० २।२२॥

७. सुपां सुलुक्० । अष्टा० ७।१।३९॥

८. [देवरः कस्मात् ? द्वितीयो वर उच्यते । ] विधवा विधातृका भवति । विधवनाद्वा, विधावनाद्वेति चर्मशिराः । अपि वा धव इति मनुष्यनाम तद्वियोगाद् विधवा । निरु० ३।१५॥

९. कोशे 'धाज्ञो स वेधसः' इत्यपपाठः ।

१०. धा० ५।९॥

११. कोशे 'विपूर्वस्यापि' इत्यपपाठः ।

१२. कोशे 'धूयते' इति पाठः ।

१३. धा० १।५९३॥

१४. कोशे 'पिपूर्वस्य' इत्यपपाठः ।

१५. कोशे 'पिधावनात्' इत्यपपाठः ।

धावत्यसौ हि दुःखार्ता सर्वतश्शरणार्थिनी ।
ऋषिश्चर्मशिरा नाम पक्षावेतावुवाच ह ॥१८५॥
मनुष्यस्याथवा[1] नाम धव[2] इत्येतदिष्यताम् ।
मनुष्यमात्रवाचित्वं नैवास्येष्टं प्रसिद्धितः ॥१८६॥
पत्यावेव प्रसिद्धोऽयं क्ष्माधवश्चेति[3] दृश्यते ।
विधवा तद्वियोगेन न त्वेवं पुनरुक्तता ॥१८७॥
विधातृकेत्यनेनैव पूर्वमेतत्समीरितम् ।
विधानमात्रकारित्वं[4] पूर्वत्र प्रतिपादितम् ॥१८८॥
पतिभावस्तु सामर्थ्यात् प्रतित्वं केवलं त्विह[5] ।
दीव्यतेर्देवृशब्दः[6] स्याद् ऋकारे प्रत्यये गुणे ॥१८९॥
जायायां देवनं कुर्वन् भ्रातुर्देवा[7]भिधीयते ।
म्रियतेर्यति[8] मर्यस्स्यात् मर्त्योऽसौ मरणात्मकः ॥१९०॥
यौतेः[9] षप्रत्यये योषा गुणे[10] मिश्रणकर्मणः ।
मिश्रयत्यात्मना सा हि पुमांसं कामभुक्तये ॥१९१॥
सधस्थानं[11] सहस्थानं वेद्याख्यं यज्ञकर्म वा ।
ज्याय[सो]यजमानस्य ज्यायसाश्विनोरपि ॥१९२॥
विधवा देवरश्चापि हीनावेवोपमा स्फुटम् ।
यद्यपि प्रेमबाहुल्याद् विधवा देवरं प्रति ॥१९३॥

---

१. निघ० २।३॥ २. कोशे 'धवले-त्येत०' इत्यपपाठः ।
३. कोशे 'र्निविवञ्चेति' इत्यपपाठः । द्रष्टव्यमत्र स्कन्दव्याख्यानम्—'पृथिवीपतौ 'क्ष्माधव' इति प्रयोगदर्शनात्' इति । ४. कोशे 'विवानमातृकारित्वं' इत्यपपाठः ।
५. कोशे 'केवलस्त्विह' इत्यपपाठः ।
६. कोशे 'दीप्यते देवृ०'इत्यपपाठः । धा० ४।१॥ देवरो दीव्यतिकर्मा । निरु० ३।१५॥
७. कोशे 'भ्रातर्देवा०' इत्यपपाठः ।
८. कोशे 'म्रियतेर्यदि' इत्यपपाठः । धा० ६।११०॥ मर्यो मनुष्यो मरण[धर्मा] । निरु० ३।१५॥
९. कोशे 'योतः' इत्यपपाठः । धा० २।२३॥ योषा यौतेः । निरु० ३।१५॥
१०. कोशे 'गुणमिश्रण०' इत्यपपाठः ।
११. कोशे 'ससस्थानं' इत्यपपाठः । आकुरुते सहस्थाने । निरु० ३।१५॥

सादरेत्यवनम्येत तथा यज्वाश्विनौ प्रति ।
तथापि[1] हीनकर्मभ्यां ज्यायसां नोपमेष्यते ॥१९४॥
लोके, वेदे न [2]दुष्टेति पूर्वमेवोपपादितम् ।
अथात उपमेत्येवमुपमारूपमीरितम् ॥१९५॥
लक्षणेनोपमेयञ्च लोके वेदे च तद्द्विधा ।
अथेदानीं[3] विशेषेण [4]व्याख्येया उपमायुजः ॥१९६॥
निपाता इति मत्वाह [5]व्याख्याता इति भाष्यकृत् ।
लक्षणोक्त्याविशेषेण विशेषेणापि केचन ॥१९७॥
अथवात्वप्रसिद्ध्यर्थं तेषामेवा[6] इतीह तु ।
त्यक्त्वेदमिति शब्दं[7] तु व्याख्याततत्वेन हेतुना ॥१९८॥
इदं यथेति संप्राप्तमाह[8] कर्मोपमेति वै ।
क्रियाकर्मेति निर्दिष्टा कर्मणः कर्मणोपमा ॥१९९॥
प्रायेणैव यथेत्याह क्रियायाः क्रिययोपमा ।
द्रव्यस्याप्युपमां वक्ति द्रव्येणैव तथा क्वचित् ॥२००॥
देवदत्तो यथैवायं यज्ञदत्तस्तथा स्फुटम् ।
यस्या गर्भो न निर्गच्छेत् संपूर्णोऽपि प्रमूढतः ॥२०१॥
तस्या गर्भस्य मन्त्रोऽयं[9] च्यावने विनियुज्यते ।
यथा[10] वातो वनं वारि प्रसिद्धं वनमेव वा ॥२०२॥

---

१. कोशे 'तथाहि हीनकर्माभ्यां ज्यायसा' इत्यपपाठः ।

२. कोशे 'नुष्ठेति' इत्यपपाठः ।

३. अथ निपाताः पुरस्तादेव व्याख्याताः । निरु० ३।१५॥

४. कोशे 'व्याख्नेयं' इति पाठः ।          ५. कोशे 'व्याख्यातं' इत्यपपाठः ।

६. कोशे '०प्रसिध्यर्थं तेषामेव' इति पाठः । 'एवा त्वं दशमास्य' (ऋ० ५।७८।८) इत्यत्र 'एवा' शब्द आत्वप्रसिद्ध्यर्थमिति भावः ।

७. कोशे '०मिति शब्न्तु' इत्यपपाठः । 'इदं यथा' (निघ० ३।१३) इत्यत्रत्यम् इदं-शब्दं विहायेत्यर्थः ।          ८. यथेति कर्मोपमा । निरु० ३।१५॥

९. यथा वातो यथा वनं यथा समुद्र एजति ।
एवा त्वं दशमास्य सहावेहि जरायुणा ॥ ऋ० ५।७८।८॥

१०. कोशे 'तथा' इत्यपपाठः ।

यथैजति[1] समुद्रो वा कम्पते [2]स्थानतः स्वकात् ।
एवा[3] च त्वं तथैवैज हे गर्भ दशमास्यक ॥२०३॥
चलित्वा चाप्यवाधस्ताद् इति गच्छोदराद्बहिः ।
जरायुणो विमुक्तस्य जन्म गर्भस्य सर्वदा ॥२०४॥
उल्बेन तु सहैवास्ति तेनेहोल्ब[4] विवक्षितम् ।
तस्यैव[5] तु विवक्षायां [6]तच्च गच्छेदिति स्थितम् ॥२०५॥
निष्पन्नो दशभिर्मासैर्दशमास्योऽभिधीयते ।
वातोदकसमुद्राणामेजनेनोपमीयते[7] ॥२०६॥
गर्भैजनमिति[8] त्वेवम् उक्तं कर्मोपमेति वै ।
अदृश्रमस्य[9] सूर्यस्य दृश्यन्ते [10]केतवस्त्विमे ॥२०७॥
केत्यते ज्ञायते सर्वमेभिरित्येव केतवः ।
विशेषणञ्च रश्मीनाम् एतदर्थोपपत्तितः ॥२०८॥
जनाननु विदृश्यन्ते विविधं सूर्यरश्मयः ।
जनानामुपकाराय भ्राजमाना यथाग्नयः ॥२०९॥
भ्राजनं सूर्यरश्मीनाम् [11]अग्निभ्राजनकर्मणा ।
इहोपमीयते स्पष्टं यदिमा[12] इति [13]चापरम् ॥२१०॥
दीक्षितस्योपतप्तस्य हस्तेनोषधिधारणे ।
विनियोगोऽस्य मन्त्रस्य[14] यदेत्यर्थे यदित्ययम ॥२११॥

---

१. कोशे 'यथेजति' इत्यपपाठः । २. कोशे 'स्थापतः' इत्यपपाठः ।
३. कोशे 'ए दुखवन्त्वन्तन्तथैवैजहे गर्भं दशमास्यकः' इत्यपपाठः ।
४. कोशे 'तेनेहाद्वं विवक्षितः' इत्यपपाठः । ५ तस्य=जायुणः ।
६. कोशे 'तच्छ' इत्यपपाठः । तत्=जरायु ।
७. कोशे '०णामजने०' इत्यपपाठः । ८. कोशे 'गर्भैजनमिति' इत्यपपाठः ।
९. अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥ ऋ० १।५०।३॥
१०. कोशे 'केतवन्त्विमे' इत्यपपाठः । ११. कोशे 'अग्निभाजन०' इत्यपपाठः ।
१२. ऋ० १०।९७।११॥ १३. उदाहरणमिति शेषः ।
१४. यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ऋ० १०।९७।११॥

यदेमा [1]ओषधीर्हस्ते वाजयन्नूजयन्नहम् ।
आदधे धारयाम्यद्य [2]यवादीः कुशमिश्रिताः ॥२१२॥
यक्ष्मस्यात्मा[3] स वैरस्यरूपं रोगस्य[4] नश्यति ।
व्यापारादस्मदीयाच्च पूर्वं जीवग्रहो यथा ॥२१३॥
जीवग्राहं गृहीतस्य यथात्मा हननात्पुरा ।
नश्येद् दुष्टस्य भीतत्वात् तथा रोगस्य नश्यतु ॥२१४॥
जीवनाशेन रोगस्य नाशोऽत्राप्युपमीयते ।
मन्प्रत्यये[5] [6]तनोतेस्स्याद् [7]आङि ह्यात्मा टिलोपतः ॥२१५॥
ततश्चाततनादात्मा[8] सर्वं तेनाततं जगत् ।
मृदेव मृन्मयं व्याप्तं तेनेत्यर्थो विवक्षितः ॥२१६॥
मनावेवाथवात्तेः[9] स्यात् [10]प्रत्ययेऽकारदीर्घतः ।
अत्ता भोक्ता स शब्दादेर्नान्यतोऽस्तीति [11]च श्रुतिः ॥२१७॥
आपेरेवाथवात्मा[12] स्यात् [13]तस्मिन्नेव पतत्वतः ।
आत्मा ह्याप्त्वैव सर्वस्य सर्वगत्वेन हेतुना ॥२१८॥
अपि वात्त इति त्वेवं पाठोऽन्येषां[14] प्रदृश्यते ।
मन्प्रत्यये[15] तथाप्यात्मा [16]ददातेराङि तत्वतः ॥२१९॥

---

१. कोशे 'ओषधी हस्ते' इत्यपपाठः । २. कोशे 'यवादिः' इत्यपपाठः ।
३. कोशे 'यक्ष्स्यात्मा' इत्यपपाठः । ४. कोशे 'भोगस्य' इत्यपपाठः ।
५. कोशे 'मत्प्रत्यये' इत्यपपाठः । आत्माततेर्वाप्तेर्वापि वाप्त इव स्याद् यावद् व्याप्तिभूत इति । निरु० ३।१५॥ ६. धा० ८।१॥
७. कोशे 'ह्यादि ह्यात्मादि लोपतः' इति पाठः ।
८. कोशे 'ततश्चातततनादात्मा' इति पाठः । आकरे 'आत्माततेर्वा' इत्येव पाठः । स्कन्दः 'अतनं गतिः' इति यथाकरं व्याख्याय 'ततनात् सर्वं हि तेन ततम्, विभुत्वात् सर्वगः इत्यर्थः' इति तनोतेर्निरुक्तिं निरदिक्षत् । तदनुकरणमेवात्र दृश्यते ।
९. कोशे विसर्गरहितः पाठः । धा० २।१॥ १०. कोशे 'ददत्वेकार०' इत्यपपाठः ।
११. बृह० उप० ३।७।२३॥ १२. धा० ५।१४॥
१३. कोशे 'तस्मिन्नप' इत्यपपाठः । मनिप्रत्यय एव पकारस्य तकारत्वादित्यर्थः ।
१४. द्र०—स्कन्दपाठः । १५. कोशे 'स प्रत्यये' इत्यपपाठः ।
१६. कोशे 'ददातेराति' इत्यपपाठः । धा० ३।९॥

आत्तो गृहीत इत्यर्थः परेण मनसापि च ।
प्राज्ञेन हि परिष्वक्तः क्षेत्रज्ञः [1]श्रूयते श्रुतौ[2] ॥२२०॥
......मनस आमोक्षादिति निश्चयः ।
.............ऐश्वर्ये तेनैवम् उपवर्णितम् ॥२२१॥
यावदित्यादिना चायमुक्तो यः स्पष्टमुच्यते ।
व्याप्यत्वाद् [3]व्याप्तिशब्दोक्तं शरीरं जगदेव वा ॥२२२॥
समासो व्याप्तिशब्दस्य यावदित्यवधारणे ।
अव्ययीभावरूपोऽसौ व्याप्यं यावद्विनिश्चितम् ॥२२३॥
भूत इत्यपि शब्दोऽयं [4]भवतेः प्राप्तिकर्मणः ।
आलोमनखकेशाग्रं व्याप्तः क्षेत्रज्ञ इष्यते ॥२२४॥
आ नखाग्रेभ्य इत्येवं [5]बृहदारण्यकं तथा ।
विकारञ्च तथा कृत्स्नं प्राप्त आत्मा [6]परस्तथा ॥२२५॥
आत्मैवेत्यस्य वाच्योऽयमेवमेतेन वर्णितम् ।
आत्त इत्ययमप्यर्थो व्याप्तिद्वारेण निश्चितः ॥२२६॥
प्रसङ्गेन नशब्दस्य [7]पूर्वमर्थः प्रकीर्तितः ।
इह [8]प्रकरणप्राप्त इदानीमुपवर्ण्यते ॥२२७॥
अग्निवन्मरुतो[9] दीप्त्या युक्ता ये [10]रुक्मवक्षसः ।
रुक्मं[11] रोचिष्णवं प्रोक्तं यद्वा भूषणमुच्यते ॥२२८॥
रोचिष्णुवक्षसो वा स्युर्यद्वा भूषितवक्षसः ।

१. कोशे 'श्रयते' इति पाठः । २. बृह० उप० ४।३।२१॥
३. कोशे 'व्यप्ति०' इत्यपपाठः ।
४. धा० १०।३००॥ ५. बृह० उप० १।४.७॥
६. कोशे 'परन्तथा' इत्यपपाठः । ७. निरु० १।४॥
८. कोशे 'प्रकरणः प्राप्तः' इत्यपपाठः ।
९. अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्य ऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥ ऋ० १०।७८।२॥
१०. कोशे 'रूपवक्षसः' इत्यपपाठः ।
११. कोशे 'रुक्षं रोचिष्णवं' इत्यपपाठः ।

वाता इव नियोक्तारो ये लोकस्यात्मनोऽपि वा ॥२२९॥
स्वतन्त्रा ये प्रवर्तन्ते प्रेरयन्त्यथवा जगत् ।
सद्य एव क्षणेनैव [1]येषामूतिर्गतिस्तथा ॥२३०॥
यं देशं [2]प्राप्तुमिच्छन्ति सुष्ठु दूरञ्च ये यदा ।
तं तदैव प्रपद्यन्ते योगैश्वर्यबलान्विताः ॥२३१॥
प्राज्ञा इव मनुष्येषु ज्येष्ठा देवेषु ये तथा ।
नीतिश्च शोभना येषां [3]सामभेदादिगोचरा ॥२३२॥
सोमा इव सुशर्माणो ये च [4]स्युर्ऋतकारिणः ।
सुगृहास्सुसुखा वापि सुशर्माणो विवक्षिताः ॥२३३॥
यज्ञो वाप्यथवा [5]सत्यमृतमित्यभिधीयते ।
अस्मभ्यं ते प्रयच्छन्तु सुखमित्येकवाक्यता ॥२३४॥
चतुरश्चिददिति[6] त्वस्यां [7]चिच्छब्दस्योपमार्थता ।
संख्याभीतिनिधानानां[8] श्रवणं स्यात् [9]समञ्जसम् ॥२३५॥
अक्षेषु[10] कितवे चेति भाष्यकारेण[11] निश्चितम् ।
चतुरो धारयन्नक्षान् [12]जयेत्कश्चित्परान्[13] यदा ॥२३६॥
भयमुत्पद्यते तीव्रं कितवान्प्रतिवेदितुम् ।
दृष्टान्तोऽयं तदैवं स्यात् [14]दुरुक्तस्य निवृत्तये ॥२३७॥

---

१. कोशे '०मूतिगति०' इत्यपपाठः ।
२. कोशे 'प्राप्तमिच्छन्ति सुष्टु' इत्यपपाठः ।
३. आदिपदेन दानदण्डयोः संग्रहः ।
४. कोशे 'स्युरुतकारिणः' इत्यपपाठः ।
५. कोशे 'सत्यमृत्यमित्य०' इत्यपपाठः ।
६. चतुरश्चिद्ददमानाद् बिभीयादा निधातोः ।
न दुरुक्ताय स्पृहयेत् ॥ ऋ० १.४१।९ ।
७. कोशे 'चिछब्द०' इत्यपपाठः ।
८. कोशे 'संख्याहीति०' इत्यपपाठः ।
९. कोशे 'समञ्जसा' इति पाठः ।
१०. कोशे 'अर्थेषु कितवै' इत्यपपाठः ।
११. चतुरोऽक्षान् धारयत इति तद्यथा कितवाद् बिभीयादेवमेव दुरुक्ताद् बिभीयान्न दुरुक्ताय स्पृहयेत् कदाचित् । निरु० ३।१६॥
१२. कोशे जायेत्' इत्यपपाठः ।
१३. कोशे '०चिद्यदान्यदा' इत्यपपाठः ।
१४. कोशे 'दुरुकस्य' इत्यपपाठः ।

कितवाच्चतुरो यद्वद् अक्षान्वारयतः परम् ।
बिभेत्येव दुरुक्ताच्च बिभियान्नैव तद्वदेत् ॥२३८॥
आ निधानाद् भयञ्चैषां [नि]हितेषु न विद्यते ।
पराजयस्य वृत्तत्वात् जयस्याप्यथवा स्फुटम् ॥२३९॥
दुरुक्तं नैव वक्तव्यं परस्मा इति निश्चितम् ।
लुप्तोपममिदं यस्मात् [1]ब्राह्मणा व्रतचारिणः ॥२४०॥
तस्मादुत्सृष्टमेतस्मात् स्थानादित्यत्र[2] नोच्यते ।
उपमावाचिनोऽभावाद्ध इष्टं लुप्तोपमं त्विदम् ॥२४१॥
उपमार्थत्वमप्यस्य सामर्थ्यादिति [3]वक्ष्यते ।
वृक्षस्य नु त इत्येतत् [4]पूर्वमेवोपवर्णितम् ॥२४२॥
उक्तञ्च[5] वक्ष्यमाणञ्च त्यक्त्वा तौ [6]जार आ भगम् ।
इति [7]व्याख्यातुमाहैवमा[8] इत्याद्यत्र भाष्यकृत् ॥२४३॥
व्याख्यातोऽत्रेह [9]चिच्छब्दो व्याख्यातो दृश्यत ननु ।
चिदित्यस्योपमार्थत्वं भाषायां पूर्वमीरितम् ॥२४४॥
नशब्दस्योपमार्थत्वं भाषायां नैव विद्यते ।
अर्थवत्त्वप्रसिद्ध्यर्थं निषेधव्यतिरेकतः ॥२४५॥
व्याख्यानं[10] तस्य तत्पूर्वम् आम्नायोदाहृतिस्त्विह ।
व्याख्यानान्निर्णये[11] रूपं नहीयं[12] विहृता पुरा ॥२४६॥

---

१. ऋ० ७।१०३।१॥

२. निघण्टौ समाम्नातमपीह न व्याख्यायत इत्यर्थः ।

३. निरु० ९।६॥

४. निरु० १।४॥

५. 'वृक्षस्य नु ते' इत्युक्तम् (निरु० १।४) 'ब्राह्मणा व्रतचारिणः' इति वक्ष्यमाणम् (निरु० ९।६) इत्यर्थः ।

६. ऋ० १० ११।६॥

७. कोशे 'व्याख्यातुमाहृत्याद्यत्र' इत्यपपाठः ।

८. आ इत्याकार उपसर्ग, पुरस्तादेव व्याख्यातः । अथाप्युपमार्थे दृश्यते । निरु० ३।१६॥

९. कोशे 'विच्छब्दो' इत्यपपाठः ।

१०. कोशे 'व्याख्यातं' इत्यपपाठः ।

११. कोशे 'व्याख्यातान्नि०' इत्यपपाठः ।

१२. इयम्=उदाहृतिः ।

आकार उपसर्गोऽत्मा [1]यस्यावार्गर्थ ईरितः[2] ।
निपातात्मा समाम्नात [3]उपमार्थोऽधुनोच्यते ॥२४७॥
उपमावाचिता नास्य निपातत्वे विरुध्यते ।
विरुध्येतोपसर्गत्वे क्रियायोगे[4] हि संस्कृतः ॥२४८॥
अत एवोपसर्गत्वं व्याख्यातस्योपवर्णितम्[5] ।
कर्मोपग्रहवाचित्वं [6]निपातस्यैव वर्णितम् ॥२४९॥
उभयात्मकताप्यस्य [7]भवत्यादिवदर्थतः ।
मथ्यमानोऽरणिभ्यां त्वं पितरौ [8]प्रत्युदीरय ॥२५०॥
आत्मानं यज्ञसिद्ध्यर्थं रोदस्यौ पितराविह ।
सर्वेषामेव [9]भूतानां जननात्पालनेन वा ॥२५१॥
पालनं जननं वापि न [10]विनाभ्यां हि कस्यचित् ।
तयोः [11]स्थितिस्त्वदुद्गत्या यागमिद्धौ यतः स्मृता ॥२५२॥
अतस्त्वदुद्गमस्यास्ति [12]तादर्थ्यमिति गम्यते ।
पितरौ दम्पती यद्वा यजमानौ विवक्षितौ ॥२५३॥
ताभ्यामुत्पादितो ह्यग्निराधानेनेष्टिभिस्तथा ।
तयोर्यागप्रसिद्ध्यर्थं[13] प्रार्थनैवमथो भवेत् ॥२५४॥

---

१. कोशे 'यस्मैवागर्थ' इत्यपपाठः । २. निरु० १।३॥
३. कोशे 'उपमार्थाधुनो०' इत्यपपाठः ।
४. प्रादय उपसर्गाः क्रियायोगे । अष्टा० १।४।५८॥
५. कोशे '०वर्णितः' इत्यपपाठः ।
६. कोशे 'निपातस्येव' इत्यपपाठः । ७. यथाकोशं पाठः ।
८. कोशे 'प्रत्युदीरयः' इत्यपपाठः । मन्त्रवर्णस्तु—
उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति ।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती ॥ ऋ० १०।११।६॥
९. कोशे 'भूताना' इत्यपपाठः ।
१०. कोशे 'विनाश्यं' इत्यपपाठः ।
११. कोशे 'स्थितिः तदुद्गत्या' इति पाठः ।
१२. कोशे 'तादथ्यमिति' इत्यपपाठः ।
१३. कोशे 'तयोर्योगप्रसिध्यर्थं' इत्यपपाठः ।

अथवोदीरयेत्यस्य पित्रोरेवेह[1] कर्मता ।
पितरावुद्धरैतस्माद्[2] अग्ने त्वं दुःखसंगरात् ॥२५५॥
स्वर्गं[3] वाप्यथवा मोक्षं प्रापयेति विवक्षितम् ।
जार आ भगमादित्यो भजनीयं रसं यथा ॥२५६॥
जारो [4]जरयितादित्यो रात्रेर्भासां तथायुषः ।
स भगं भजनीयं हि रसं भौममुदीरयेत् ॥२५७॥
यथा तथेति दृष्टान्त आकारेणोपपादितः ।
सावित्रीमथवावस्थामनुभूय दिवाकरः ॥२५८॥
उत्तरावस्थमात्मानं भगाख्यं समुदीरयेत् ।
एक एव हि देवोऽसौ कालभेदेन भिद्यते ॥२५९॥
बिभ्रद्रूपान्तरञ्चैव संज्ञामन्यां प्रपद्यते ।
दैवते[5] वक्ष्यते चैतत् [6]पृथिव्यादिश्रुतिस्तथा ॥२६०॥
जार एवाऽथवा जारो यस्त्वसौ पारदारिकः ।
भगोऽपि स्त्रीभगस्त्वेव स यद्वत्तमुदीरयेत् ॥२६१॥
भगस्योदीरणञ्चापि पारदारिककर्तृकम् ।
विटा[7] एव विजानन्ति प्रसिद्धं[8] तत् स्त्रियोऽपि वा ॥२६२॥
एवं व्याख्यायमाने च [9]प्रसिद्धिरनुगृह्यते ।
तस्मात् त्वमुच्यसे [10]त्वेवमिति चेहाभिधीयते ॥२६३॥
यियक्षतीति रूपं तु सनन्तस्य [11]यजे[:]स्मृतम् ।
तस्यादेर्य्यस्य[12] लोपेन वैदिकं स्यादियक्षति ॥२६४॥

१. कोशे 'रेवैह' इत्यपपाठः ।
२. कोशे 'रैतस्तात् अग्नेत्व' इत्यपपाठः ।
३. कोशे 'स्वर्ग' इत्यनुस्वाररहितः पाठः ।
४. कोशे 'जरायितादित्यो रात्रेर्हासा' इत्यपपाठः ।
५. निरु० १२।१२, १३॥
६. कोशे 'पृथिव्यादि०' इत्यपपाठः । पृथिवी स्थानत्रयेऽपि श्रूयते—
यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ऋ० १।१०८।१०॥
७. विटाः=कामुकाः ।
८. कोशे 'प्रसिद्धन्त स्त्रियो०' इति पाठः ।
९. कोशे 'प्रसिद्धेरनु०' इत्यपपाठः ।
१०. कोशे 'त्येवमिति चेदभि०' इत्यपपाठः ।
११. धा० १।१०५१॥
१२. कोशे 'तस्यादेय्यस्य' इत्यपपाठः ।

यष्टुमिच्छति देवेशान् [1]हर्य्यतो वाञ्छतो हविः ।
सामर्थ्याद्यजमानोऽयं [2]छान्दस[:]स्यादुपग्रहः ॥२६५॥
हृत्तश्च हृदयेनापि न वाङ्मात्रेण केवलम् ।
यज्ञमिष्यति जानाति [3]तेनेच्छाविकृतस्य सा ॥२६६॥
इषेर्गत्यर्थतायां[4] हि जानातीत्युपपद्यते ।
सन्प्रकृत्या च [5]यागोऽत्र निर्दिष्टः कर्मतां व्रजेत् ॥२६७॥
अन्तर्णीतसनन्तस्य विवक्तीति पदं त्विह ।
अभ्यासस्याथवा दृष्टेः सन्मात्रस्यैव लोपतः ॥२६८॥
वक्तुमिच्छति [6]शस्त्राणि याज्यानुवचनान्यपि ।
को [7]होता वह्निशब्दोक्तः वहनादात्मकर्मणः ॥२६९॥
वह्निनाधिष्ठितत्वाद्वा होता वह्निरुदीरितः ।
स्वपश्च शोभनं कर्म [8]कर्तुमिच्छति को मखः ॥२७०॥
मखकृन्मखशब्दोक्तस्तत्करोतीति णिच्यचि[9] ।
अर्थादध्वर्युरेत्रासौ[10] णेर्लोपेऽन्तस्य च स्मृतः ॥२७१॥
तविष्यतेऽसुरश्चायम्[11] उद्गता स्तुतिभिस्सुरान् ।
प्रज्ञावान् प्राणवान् वापि संवर्धयितुमिच्छति ॥२७२॥
कम्पते च तथा ब्रह्मा प्रायश्चित्तक्रियां प्रति ।
मतं[12] यस्यास्ति विज्ञानं मती ब्रह्मा स उच्यते ॥२७३॥

---

१. कोशे 'हय्यतो' इत्यपपाठः । २. 'इयक्षति' इत्यत्र ।
३. कोशे 'तेनेच्छाधीकृत०' इत्यपपाठः ।
४. कोशे 'इषे गत्यर्थतां याहि' इत्यपपाठः । धा० ४।१९॥
५. कोशे 'योगोत्र' इत्यपपाठः । इयक्षतीत्यनेनाक्षिप्तो याग इष्यतेः कर्मेत्यर्थः ।
६. कोशे 'शास्त्राणि' इत्यपपाठः । ७. कोशे 'हैतावग्नि०' इत्यपपाठः ।
८. कोशे 'कतुमिच्छति कोमकः' इत्यपपाठः ।
९. कोशे 'णिच्छपि' इत्यपपाठः । मखशब्दात् तत्करोति० (महाभाष्य ३।१।२६) इति णिचि, टिलोपे, अजपि सर्वधातुभ्यः (महाभाष्य ३।१।१३४) इत्यचि णेरनिटि (अष्टा० ६।४।५१) इति णिलोपः । १०. कोशे 'अथादस्वयुरेवासौ णोर्लोपि०' इत्यपपाठः ।
११. कोशे 'तविष्यते स्मरश्चायं' इत्यपपाठः । १२. कोशे 'मंति यस्यस्ति' इत्यपपाठः ।

त्रय्याः शुक्रस्य बोद्धासौ सामर्थ्यादिह संश्रितः ।
मतिमानिति युक्तस्स्यात्[1] [2]तदनन्तरसम्भवात् ॥२७४॥
साहचर्यादिना चास्य स्वसोषाः परिकीर्तिता ।
नक्तानन्तर्यमेव स्यात् साहचर्यं द्वयोरपि ॥२७५॥
रसानां हरणं वापि स्वसृत्वे कारणं मतम् ।
स्वसुस्संबन्धिनो[3] यद्वद् भोक्तु [4]भ्राता हरेद्रसान् ॥२७६॥
क्षीरादिकांस्तथादित्यः [5]शोषयन्नुषसो रसान् ।
अवश्यायान्[6] हरेदेवं ते[7] चोषःकालभाविनः[8] ॥२७७॥
जारत्वं पुनरेतस्य [9]पूर्वमेवोपपादितम् ।
दिधिषुर्धारणादुक्तो[10] निरोधो धारणं त्विह ॥२७८॥
अदितेः पुत्रभावेन [11]भ्रातेन्द्रस्य दिवाकरः ।
उभावप्यदितेः पुत्रौ भरणादथवा भवेत् ॥२७९॥
बिभर्तीन्द्रमसौ तस्मै[12] ददद् भौमान् रसान् स्फुटम् ।
स्तुत्यस्तोतृत्वभावेन सखित्वं प्रीतितोऽथवा ॥२८०॥
उषसं प्रति [13]जारत्वं यद्यप्यस्मिन्नवश्रुतम् ।
तथापि जरयेद्रात्रिम् उषसं जरयन्नसौ ॥२८१॥

---

१. इतोऽग्रे ग्रन्थपातः समजनि । अत्र निरुक्तम्—स एव भासाम् । तथापि निगमो भवति 'स्वसुर्जारः शृणोतु नः (ऋ० ६।५५।५) इत्युषसमस्य स्वसारमाह साहचर्याद् रसहरणाद् वा । निरु० ३।१६॥

२. अस्य पूर्वचरण इत्थं स्यात्—'मातादित्यस्य रात्रिः स्यात्' इति ।

३. रसविशेषणमेतत् ।

४. कोशे 'भाता हरेद्रसात्' इत्यपपाठः ।

५. कोशे 'शेषय०' इत्यपपाठः ।

६. कोशे 'अवश्यायात्' इत्यपपाठः ।

७. ते=रसाः

८. कोशे 'चोषः काय भविनः' इत्यपपाठः ।

९. द्र०—अत्रैव श्लोक २५० ।

१०. कोशे 'दिधिषुद्धरणा०' इत्यपपाठः । मन्त्रवर्णस्तु—
मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः । भ्रातेन्द्रस्य सखा मम ॥ ऋ० ६।५५।५॥

११. कोशे 'द्रातेन्द्रस्य' इत्यपपाठः ।

१२. कोशे 'तस्मै दद भौमान्' इत्यपपाठः ।

१३. कोशे 'राजत्वं' इत्यपपाठः ।

रात्रेश्चापरकालत्वाद् नात्यन्तं भिद्यते [1]ततः ।
य एवंगुणसंयुक्तस्तमस्तौषं गृणामि वा ॥२८२॥
गृणामीत्येव वार्थ[ः]स्यात् शृणोत्वित्यभिधानतः ।
अपि[2] त्वित्यादि वाक्यं तु गतार्थं पूर्वमन्त्रतः ॥२८३॥
उपमा[3] मेष इत्यस्य भूतशब्देन भाषिता ।
लोकेऽपि भूतशब्दस्य सामर्थ्यं प्रतिपादितम् ॥२८४॥
क्व सत्त्वभूतमित्यत्र पितृभूतोऽयमित्यपि ।
इत्थानेन[4] प्रकारेण [5]धीवन्तमद्रिवोऽद्रिवन् ॥२८५॥
काण्वं कण्वस्य पुत्रं मां ख्यातं [6]मेध्यातिथिं प्रभो ।
मेधातिथिपदस्यैव [7]यकारश्छान्दसोऽधिकः ॥२८६॥
यद्वा [8]संज्ञान्तरं त्वेव तस्यैतदवगम्यताम् ।
अभियन्नभिगच्छंस्त्वं भक्तानां यज्ञकर्मणि ॥२८७॥
अय आगतवानद्य [9]मेषवत्तु वशीकृतः ।
यथा [10]मेषो व्रजेत् कश्चिद् ग्रासदानवशीकृतः ॥२८८॥
तथै[व]भगवन्निन्द्र[11] मामेव प्राप्तवानसि ।
अनुग्रहः कृतो मेऽयमित्यृषेः[12] प्रीतिजं वचः ॥२८९॥
अय इत्यथवास्यार्थं आगच्छेति [13]विवक्षितः ।
नित्यपक्षे तु [14]कण्वः स्याद्यष्टैव [15]करणनात् स्तुतेः ॥२९०॥

---

१. ततः=रात्रेः । उषा रात्रेर्नात्यन्तं भिद्यते इत्यर्थः ।

२. अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् । स्त्रीभगस्तथा स्याद् भजतेः । निरु० ३।१६॥

३. मेष इति भूतोपमा । निरु० ३।१६॥

४. इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् । मेषो भूतोभि यन्नयः ॥ ऋ० ८।२।४०॥

५. कोशे 'धीपस्तत्व दिपोद्रिवत्' इत्यपपाठः ।

६. कोशे 'मेधातिथिः' इत्यपपाठः ।

७. कोशे 'यकार छान्दसो०' इत्यपपाठः ।

८. कोशे 'संज्ञान्तस्त्वेव' इति पाठः ।

९. कोशे 'मे फलन्तु' इत्यपपाठः ।

१०. कोशे 'मेघो वजन् किञ्चित् ग्रसदग्तवंशी०' इत्यपपाठः ।

११. कोशे 'भगवन्निद्रम्मामेवं' इत्यपपपाठः ।

१२. कोशे '०मित्युषेः' इत्यपपाठः ।

१३. कोशे 'विवक्षितम्' इत्यपपाठः ।

१४. कोशे 'त्तत्वस्या०' इत्यपपाठः ।

१५. कण शब्दे । धा० १।४४५॥

मेध्यातिथित्वमप्येवं तत्पुत्रस्योपपद्यते ।
प्रज्ञां वा कर्म वा प्राह [1]धीशब्देनेह मन्त्रकृत् ॥२९१॥
मेध्या[2] देवा द्विजा वापि कण्वस्यातिथयो मताः ।
मेषस्तु[3] मिषतेर्धातोरीक्षणार्थस्य वर्णितः ॥२९२॥
मिषतीत्येव मेषस्स्यात् [4]पश्यत्येव स केवलम् ।
पशुश्च[5] पश्यतेरेव प्रसङ्गेनोदितं त्विदम् ॥२९३॥
तद्रूप[6] इति चाम्नातं तथा [7]तद्वर्ण इत्यपि ।
तदित्येतेन निर्दिष्टं हिरण्याद्येव किञ्चन ॥२९४॥
सामान्येन तु निर्देशः सर्वस्य प्रतिपत्तये ।
उदाहृतिर्द्वयोरेका [8]तत्राग्निरुपमीयते ॥२९५॥
रूपशब्देन तच्चापि तथा वर्णपदेन च ।
हिरण्यरूप[8] इत्युक्ते वाच्या[9] रूपोपमेति तु ॥२९६॥
अग्निरित्येष निर्देशो लक्ष्यते निष्प्रयोजनः ।
भूतोपमेति निर्दिष्टं मेष इत्यभिधाय यत् ॥२९७॥
तत्प्रतीतप्रतीत्यर्थं तथा [10]नाग्निरितीत्यपि ।
न दोषस्त्विवतिशब्दस्य षष्ठ्यर्थे वृत्तिसंभवात् ॥२९८॥
अग्ने रूपोपमेत्यर्थो [11]नन्वस्यां नाग्निशब्दनम् ।
न [12]दोषोऽपान्नपादग्निर्मध्यमः सूक्तगोचरः ॥२९९॥

---

१. कोशे 'धीशब्देनाह' इति पाठः । २. कोशे 'मेध्ये' इत्यपपाठः ।

३. कोशे 'मेषो' इत्यपपाठः । मेषो मिषतेः (निरु० ३।१६) । धा० १।७३०॥

४. कोशे 'पश्यतेव' इत्यपपाठः ।

५. कोशे 'पश्यन् च पश्यतोरेव' इत्यपपाठः । तथा पशुः पश्यतेः (निरु० ३।१६) । धा० १।१०३७॥ ६. निघ० ३।१३॥

७. अग्निरिति रूपोपमा । निरु० ३।१६॥ ८. तथा च मन्त्रवर्णः—
हिरण्यरूपः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥ ऋ० २।३५।१०॥

९. कोशे 'वाच्यो' इत्यपपाठः । १०. कोशे 'नाग्नरतीत्यपि' इत्यपपाठः ।

११. कोशे 'न त्वस्यां' इत्यपपाठः । १२. कोशे 'दोषोवान्नपाद०' इत्यपपाठः ।

स एव रूपशब्देन मन्त्रेऽस्मिन्नुपमीयते ।
इत्यर्थमग्निशब्दस्य ग्रहणार्थं प्रचक्षते ॥३००॥
हिरण्यं[1] नाग्निरूपं स्याद् भिन्नं द्रव्यं ततो हि तत् ।
हिरण्यस्थं हिरण्यस्य रूपं [2]नाग्नेर्भविष्यति ॥३०१॥
नान्याधारो[3] गुणोऽन्यस्य गुणो द्रव्यस्य गम्यते ।
नापि षष्ठीसमासोऽयं पुंल्लिङ्गस्योपलब्धितः ॥३०२॥
नित्यं[4] नपुंसको लोके रूपशब्दः प्रयुज्यते ।
हिरण्यरूपता तेन नाग्नेरत्रोपपद्यते ॥३०३॥
न दोषो रूपशब्देन समासादुपमामतेः ।
नासत्यामुपमायां[5] हि समास उपपद्यते ॥३०४॥
लुप्तोत्तरपदश्चायं[6] बहुव्रीहिस्समाश्रितः ।
हिरण्यरूपतुल्यं हि रूपं[7] यस्येह विद्यते ॥३०५॥
हिरण्यरूपशब्देन स एवेहाभिधीयते ।
हिरण्य[स्य]हि रूपे ये गुणा [8]रक्तादिलक्षणाः ॥३०६॥
अग्निरूपेऽपि[9] ते सन्ति तेन [10]तत्तुल्यरूपता ।
प्रीत्या [11]संदृश्यते यद्वत् हिरण्यं तद्वदेव सः ॥३०७॥
वृष्टयर्थिनां हि दृष्टोऽग्निर्मध्यमः प्रीतिमावहेत् ।
अपान्नपादपां[12] नप्ता[13] सूर्योऽद्भ्यस्सोऽपि सूर्यतः ॥३०८॥

---

१. कोशे 'हिरण्यानग्निरूपं' इत्यपपाठः ।
२. कोशे 'नाग्ने भविष्यति' इत्यपपाठः ।
३. कोशे 'तान्याधारो' इत्यपपाठः ।
४. कोशे 'नित्या' इत्यपपाठः ।
५. कोशे '०पमायो हि' इत्यपपाठः ।
६. कोशे '०पदाश्चायं' इत्यपपाठः । सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च (महाभाष्य वा० २।२।२४) इति बहुव्रीहिः ।
७. कोशे 'रूपायस्येह' इत्यपपाठः ।
८. कोशे 'रक्षाभिलक्षणाः' इत्यपपाठः ।
९. कोशे 'अतिरूपे०' इत्यपपाठः ।
१०. कोशे 'तन्तुल्य०' इत्यपपाठः ।
११. कोशे 'स दृश्यते' इत्यपपाठः ।
१२. कोशे '०पादपं नप्ता' इत्यपपाठः ।
१३. कोशे 'सूर्याभ्यस्सोपि' इत्यपपाठः । सः=अग्निः (वैद्युतः) ।

मेघो [1]वाद्भ्यस्ततः [2]सोऽग्निरित्यपां पौत्र उच्यते ।
हिरण्यवर्ण इत्यत्र न वह्ने रूपमिष्यते ॥३०९॥
हिरण्यरूपशब्देन पौनरुक्त्यप्रसङ्गतः ।
अतो हिरण्यवर्णोऽग्निर्वरणीय इतीष्यताम् ॥३१०॥
पञ्चमीद्वयम्[3] अप्यत्र सप्तम्यर्थे व्यवस्थितम् ।
यो[4] हिरण्यमये स्थाने निर्मलोऽसौ हिरण्यदाः ॥३११॥
निषद्य [5]परितो दाता जलस्यास्मै प्रयच्छति ।
अन्नं[6] तच्चेह वार्येव तस्य निष्पादकं विदुः ॥३१२॥
परस्मैपदनिर्देशो [7]ददतीत्यस्य वैदिकः ।
ददातेरथवा[8] दाजो [9]लेटि नैगमवृत्तितः ॥३१३॥
लोको वा यजमानो वा संप्रदानमिहेष्यते ।
हिरण्यवर्णशब्दं[10] हि षष्ठ्यन्तं संप्रयुज्य [11]यत् ॥३१४॥
इवास्य[12] रूपमित्युक्तं तत्समासार्थकीर्तनम् ।
क्रमप्राप्तं [13]वर्ति त्यक्त्वा था इत्यस्योपमार्थताम्[14] ॥३१५॥
अब्रवीत्[15] त्वरितं कस्मादित्यत्राहुः प्रयोजनम् ।
वेद एवोपमार्थत्वं कुतस्तत्क्रमभेदतः ॥३१६॥

---

१. कोशे 'वाभ्य०' इत्यपपाठः । २. कोशे 'सो हिरित्यपां' इत्यपपाठः ।
३. 'हिरण्यरूपात्' 'योनेः' इति पञ्चमीद्वयम् ।
४. कोशे 'योन न हिरणमये स्थाने निमलौ सौ हिरण्यदा' इत्यपपाठः ।
५. कोशे 'परित दाता' इत्यपपाठः । ६. कोशे 'अनन्तचेंह' इत्यपपाठः ।
७. दद दाने (धा० १।१७) इत्यात्मनेपदी ।
८. कोशे 'ददतेरथवा' इत्यपपाठः । धा० ३।९॥
९. कोशे 'जसि नैगम०' इत्यपपाठः । दाधातोर्लेटि लेटोऽडाटौ (अष्टा० ३।४।९४) इत्यडागमः । घोर्लोपो लेटि वा (अष्टा० ७।३।७०) इत्याकारलोपः ।
१०. हिरण्यवर्णस्येवास्य रूपम् । निरु० ३।१६॥
११. कोशे 'तत्' इत्यपपाठः ।
१२. कोशे 'उपास्य रूपमित्युक्त रतत्समासा०' इत्यपपाठः ।
१३. कोशे 'वर्ति' इत्यपपाठः । था इति च । निरु० ३।१६ ॥
१४. कोशे '०पमार्थता' इत्यपपाठः । १५. कोशे 'अब्रवीतवरितं तस्मा०' इत्यपपाठः ।

वतेस्सिद्धोपमार्थत्वं[1] क्रमं भित्त्वा हि वक्ष्यति ।
असिद्धोपमता तेन था इत्यस्य विवक्षिता ॥३१७॥
अन्यथा तन्न वक्तव्यमिवादेरविशेषतः ।
इवादेश्च वतेश्चैव विशेषो नैव कश्चन ॥३१८॥
सिद्धोपमार्थतायां[2] हि तेनैवं लङ्घितः क्रमः ।
तं [3]प्रत्नथेति मन्त्रोऽयमैन्द्रो मध्यमलिङ्गतः ॥३१९॥
बर्हिषद्दोहसंबन्धो[4] लिङ्गं तस्योपलभ्यते ।
प्रत्नशब्दः[5] [6]पुराणार्थस्थेत्यस्याप्युपमार्थता ॥३२०॥
प्रत्ना[7] भृग्वादयः प्रोक्ताः [8]पुराणाः प्रत्नसूनवः ।
तत्पुत्राश्चैव पूर्वे स्युरस्मत्पित्रादयो यथा ॥३२१॥
भविष्यन्तश्च विश्वे स्युरिमे स्युर्वार्त्तमानिकाः[9] ।
ज्येष्ठतातिपदेनापि[10] ज्येष्ठ एवाभिधीयते ॥३२२॥
तातिलः [11]स्वार्थिकत्वं हि स्मर्यते शब्दकोविदैः ।
ततिर्वा[12] तातिरित्युक्ता [13]ज्योतिष्टोमादिलक्षणा ॥३२३॥
सन्तानलक्षणा वापि [14]ज्येष्ठा तातिस्तु यस्य तम् ।
इन्द्रश्चैतेन शब्देन निर्दिष्टोऽत्र प्रतीयते ॥३२४॥

---

१. कोशे 'वदेश्चैव' इत्यपपाठः । २. कोशे 'सिद्धोपमायार्थतायां' इत्यपपाठः ।
३. कोशे 'तं प्रश्नतेति' इत्यपपाठः । मन्त्रवर्णस्तु—
तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे गिराशुं प्रयन्तमनु यासु वर्धसे ॥ ऋ० ५।४४।१॥
४. कोशे 'बहिषद्दोह०' इत्यपपाठः । ५. कोशे 'प्रश्नशब्दः' इत्यपपाठः ।
६. कोशे 'पुराणार्थस्वेत्यस्या०' इत्यपपाठः । ७. 'प्रश्ना' इत्यपपाठः ।
८. को 'पुराणः प्रश्न०' इत्यपपाठः ।
९. कोशे 'स्युर्वात्तशायिकाः' इत्यपपाठः ।
१०. कोशे 'ज्येष्ठतादिपदे०' इत्यपपाठः ।
११. कोशे 'स्वथिकत्वं हि स्मयते' इत्यपपाठः । सर्वदेवात् तातिल् (अष्टा० ४।४।१४२) इत्यत्र सर्वदेवग्रहणं प्रकृत्युपलक्षणमित्यभिप्रायः ।
१२. कोशे 'तनिर्वा' इत्यपपाठः । १३. कोशे '०माभिलक्षणा' इत्यपपाठः ।
१४. कोशे 'ज्येष्ठतादिः स्वयस्य तत्' इत्यपपाठः ।

बर्हिषत् पदवाच्योऽत्र[1] मेघः कर्म [2]दुहेरपि ।
इहान्तरिक्षमेवोक्तं [3]बर्हिरित्यपि गम्यते ॥३२५॥
तत्र सीदति मेघोऽपि [4]स्वर्विच्चासाविहोच्यते ।
स्वरित्यप्युदकं प्रोक्तं तदसौ लब्धवानिति ॥३२६॥
तद्वा लम्भयतीत्येव[5] प्रतीचीनः पराङ्मुखः ।
वृजनं[6] तु बलं प्रोक्तं प्रतिपक्षस्य वर्जनात् ॥३२७॥
तद्धेतुरुदकं[7] त्वत्र वृजनं दुहिकर्म तत् ।
दुहेर्द्विकर्मकत्वेन[8] कर्म मेघोदकद्वयम् ॥३२८॥
आशु जयन्तमित्येते इन्द्रस्येष्टे विशेषणे ।
यास्वित्येतेन निर्दिष्टा अग्निष्टोमादिकाः क्रियाः ॥३२९॥
यत्तदोर्नित्यसंबन्धात्[9] तच्छ्रुतेर्यत्पदेक्षणम्[10] ।
क्रियासु[11] वर्धसे यासु हविर्भिः स्तुतिभिस्तथा ॥३३०॥
यथोक्तलक्षणं मेघं यस्त्वं वार्यपि दोहसे ।
तं[12] त्वां तासु [13]स्थिता [14]वाचा स्तुम प्रत्नादयौऽथवा ॥३३१॥
यज्ञो वा [15]बर्हिरित्युक्तः स्तीर्णं वा दर्भलक्षणम् ।
तत्रेन्द्रः सीदतीत्युक्तः [16]सदिना[17] क्विन्नि कर्तरि ॥३३२॥

---

१. 'त्वयिषट् पद०' इत्यपपाठः । २. कोशे 'दुवेरपि' इत्यपपाठः । धा० २।४॥
३. कोशे 'वहिरि०' इत्यपपाठः । ४. कोशे 'स्वर्विच्यसा०' इत्यपपाठः ।
५. कोशे 'लंबयतीमेव प्रतीचिनः' इत्यपाठः ।
६. कोशे 'व्रजनन्तु' इत्यपपाठः । ७. '०दकस्त्वत्र व्रजनं दुःखिकर्म' इत्यपपाठः ।
८. दुहियाचि (महाभाष्य १।४।५१) ।
९. कोशे 'संबन्धा तत्रच्छ्रुते०' इत्यपपाठः ।
१०. पूर्वार्धर्चे 'तम्' इति श्रवणाद् उत्तरार्धर्चे 'यः' इत्यध्याहारः; तथैव 'यासु' इति श्रुतेः, 'तासु' इत्यध्याह्रियते ।
११. कोशे 'वर्तते' यासु हविभि स्तुति०' इत्यपपाठः ।
१२. 'कस्त्वान्तासु' इत्यपपाठः । १३. वयमिति शेषः ।
१४. कोशे 'वाचां स्तुम प्रग्नादयो०' इत्यपपाठः ।
१५. कोशे 'वहिरित्युक्त' इत्यपपाठः ।
१६. धा० १।९०७॥ १७. सत्सूद्विष० (अष्टा० ३।२।६१.) ।

सूर्यवित्स्वर्गविद्वापि स एव स्वर्विदुच्यते ।
आशु[1] जयन्तमित्येते मेघस्यैते विशेषणे ॥३३३॥
आशुव्यापी जयत्यन्यान् [2]मेघान्मेघो बहूदकः ।
प्रतीचीनपदेनापि[3] स एवोक्तः [4]पराङ्मुखः ॥३३४॥
इमथेत्यस्य शब्दस्य प्रकृत्यर्थोऽभिधीयते[5] ।
अयमेततरोऽमुष्मादित्येतिः[6] प्रकृतिर्मता ॥३३५॥
अयमित्यपि निर्देश इमे इत्यस्य प्रस्तुतः ।
एतेरचि[7] गुणे रूपमयादेशेऽयमित्यपि ॥३३६॥
अत्यन्तासन्नवर्तित्वाद्[8] उक्तमेततरस्त्विवति[9] ।
यद्यप्यागमकं नास्ति [10]सादृश्यादेवमुच्यते ॥३३७॥
प्रसङ्गाददसोऽप्यर्थमसावस्ततरस्त्विवति ।
असेरौप्रत्ययेऽसौ[11] [12]स्याद् अस्मादस्ततरस्त्वतः ॥३३८॥
अत्यन्तदूरवर्तित्वात् सादृश्येनैवमीरितम् ।
अदसोऽप्युपमार्थे स्यादिदमस्था यथा तथा ॥३३९॥
अमुथाऽसाविवेत्यर्थो[13] यथासाविति वर्णितम् ।
यथासाविति योऽस्या[र्थ]स्सोऽमुथेत्यस्य निश्चितः ॥३४०॥

---

१. कोशे 'अश्रज्जय०' इत्यपपाठः । २. कोशे 'मेघोन्मेघो' इत्यपपाठः ।
३. कोशे 'पराचीन०' इत्यपपाठः । ४. कोशे 'परं समम्' इत्यपपाठः ।
५. प्रत्न इव पूर्व इव विश्व इवेति । अयमेततरोऽमुष्मात् । असावस्ततरोऽस्मात् । अमुथा यथासाविति व्याख्यातम् । निरु० ३।१६॥
६. कोशे 'अयमेकतरो यष्मा हित्येतिः' इत्यपपाठः । धा० २।३६॥
७. कोशे 'एतेरपि' इत्यपपाठः । पचाद्यच् (अष्टा० ३।१।१३४) ।
८. कोशे 'अन्यत्रासन्न०' इत्यपपाठः ।
९. कोशे 'उक्तमेकरन्त्विति' इत्यपपाठः । आकरे पुंल्लिङ्गेन निर्देशः ।
१०. एततर आगमकतर इवेत्यर्थः ।
११. धा० ४।१००॥
१२. कोशे 'स्या अस्मादस्ततरस्त्वतः' इत्यपपाठः ।
१३. कोशे 'अमुथासाविपेत्यर्थो यथा सावित्रि' इत्यपपाठः ।

अमुथेति[1] प्रकृत्यर्थस्त्वसावित्येव वर्णितः ।
वदित्यस्योपमा[2] वाच्या सिद्धा लोकेऽपि गम्यते ॥३४१॥
किमर्थमिदमत्रोक्तं थेत्यस्यैतन्निवृत्तये ।
अधीते विप्रवद्राजा [3]शुश्रूषुश्शूद्रवत्तथा ॥३४२॥
उदाहृतिर्लौकिकी[4] त्वेषा वैदिकी[5] चेयमिष्यते ।
मेधा यज्ञा[:]प्रिया यस्य प्रियमेधस्स उच्यते[6] ॥३४३॥
प्रियमेधो विरूपोऽत्रिरङ्गिरा ऋषयस्त्विमे ।
जातवेदो[7] यथैतेषाम् अश्रौषीस्त्वं महिव्रत ॥३४४॥
एवं मे कण्वपुत्रस्य शृणु ह्वानं प्रसन्नधीः ।
कण्वस्य पुत्र[8] इत्येतत् कथमित्याह भाष्यकृत् ॥३४५॥
कण्वात्प्रभवतीत्यर्थ आदौ प्रप्रत्ययः स्मृतः ।
ऋषौ वाच्ये [9]सुडप्यत्र दृष्टान्तं प्राग्रमब्रवीत् ॥३४६॥
वृक्षाग्रप्रभवं प्राग्रं पुष्पं वा फलमेव वा ।
प्राग्रमित्युच्यते लोके तथेदं परिगृह्यताम् ॥३४७॥
अत्रेर्निर्वचने प्राप्ते तत्सिद्धौ[10] भृगुमब्रवीत् ।
भृज्यमानो[11] [न देहेऽ]सौ भृगुस्तेनोच्यते बुधैः ॥३४८॥

---

१. कोशे 'अमथेति' इत्यपपाठः ।

२. वदिति सिद्धोपमा । ब्राह्मणवद् वृषलवत् । ब्राह्मणा इव वृषला इवेति । वृषलो वृषशीलो भवति वृषाशीलो वा । निरु० ३।१६॥

३. कोशे '०शुद्र०' इत्यपपाठः । ४. कोशे 'उदाहृती लौकिकी' इत्यपपाठः ।

५. तथा च मन्त्रः— प्रियमेधवदत्रिवज्जातवेदविरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥ ऋ० १।४५।३॥

६. प्रियमेधः प्रिया अस्य मेधा यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम् । निरु० ३।१७॥ ७. कोशे 'जतवेदो' इत्यपपाठः ।

८. कोशे 'पुत्रमित्येतत्' इति पाठः । प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रवभो यथा प्राग्रम् । निरु० ३।१७॥

९. कोशे 'सुधप्यत्र' इत्यपपाठः । तथा च पाणिनिः—प्रस्कण्वहरिश्चन्द्रावृषी (अष्टा० ६।१।१४८) । १०. अर्चिषि भृगुः सम्बभूव । भृगुर्भृज्यमानो न देहे । निरु० ३।१७।

११. कोशे 'भ्रज्यमानो सौ...भृगुस्ते०' इति भ्रष्टः पाठः ।

देवस्य[1] महतो यज्ञे वितते वरुणस्य ह ।
ब्रह्मणोऽप्सरसं दृष्ट्वा रेतश्चस्कन्द कर्हिचित् ॥३४९॥
तत्प्रतीक्ष्य[2] सवर्णो न स जुहाव विभावसौ ।
भगवानभवत्तस्माद् भृगुरङ्गारतोऽङ्गिराः[3] ॥३५०॥
अत्रैवान्वेषणादत्रिः [4]खननाद्विखना मुनिः ।
इत्थं प्रजापतेर्जाताः पुराणा ऋषिसत्तमाः ॥३५१॥
एवं पौराणिकाः[3] प्राहुर्मुनीनां प्रभवं शुभम् ।
अर्चिषा [5]भृज्यमानोऽपि न दग्धोऽसौ यतस्ततः ॥३५२॥
भृजेरुप्रत्यये[6] प्रोक्तो भृगुः कुत्वे च पण्डितैः ।
भृजेश्चैव [7]गमेश्चैव भृगुः पूर्वान्त्यलोपतः ॥३५३॥
डुप्रत्यये[8] भवेद्यद्वा भृज्यमानो गतो ह्यसौ ।
अङ्गारेषु समुत्पन्न [9]इत्यसिप्रत्ययेऽङ्गिराः ॥३५४॥
आकारस्य भवेदित्वमकारोऽन्त्योऽपि लुप्यते ।
अङ्गेरारे[10] कृतेऽङ्गारा[11] अङ्कना अग्निरङ्ककः ॥३५५॥
ग[तय]स्तेष्विति प्रोक्ता अङ्गारा अङ्कना जसि ।
ब्रह्मकल्पावुभौ दृष्ट्वा जातौ तौ दीप्तेजसौ ॥३५६॥

---

१. तु०—बृहद्देवता ५।९७–१०१॥ सर्वानुक्रमणीटीकायां वेदार्थदीपिकायां पञ्चममण्डलस्यादौ ॥ स्कन्दकृतनिरुक्तभाष्यटीकाद्वितीयभागे पृ० १७९॥

२. कोशे 'तत्प्रतीष्य सवर्णोन सञ्जिहाव' इत्यपपाठः । 'तत्परीक्ष्य' इति स्कन्दपाठः ।

३. कोशे विसर्गरहितः पाठः ।

४. कोशे '०खनान्मुनिः' इत्यपपाठः । '०खनो मुनिः' इति स्कन्दपाठः ।

५. कोशे 'भज्यमानो' इत्यपपाठः ।

६. धा० १।१९१॥

७. धा० १।१०३१॥

८. भृज् गम् डु इति स्थिते पूर्वान्त्यजकारलोपे, गमेश्च टिलोपे भृगुपदसिद्धिः ।

९. कोशे '०प्रत्ययोगिराः' इत्यपपाठः । अङ्गारेष्वङ्गिराः । निरु० ३।१७॥

१०. अङ्गारा अङ्कना अञ्चनाः । निरु० ३।१७॥ अङ्कना इति पाठान्तरमिति स्कन्दः । धा० १।१५५॥

११. कोशे 'कतेंगारा' इत्यपपाठः ।

ब्रह्माणं मुनयः प्रोचुरत्रैवेत्यादिनोदितम्[1] ।
[तं]तृती[यमृच]छतात्रेति प्रार्थितो भगवान्प्रभुः ॥३५७॥
तृतीयं जनयामास [2]सोऽत्रिरत्रादिकीर्तनात् ।
तृतीयोऽत्रेति निर्देशाद् अत्रिनामा बभूव सः ॥३५८॥
यस्मिन्जाते त्रयो नान्ये[ऽभावा]दित्युदितं बुधैः ।
तस्माद्वा सोऽत्रिरित्युक्तो नलोपेन ततस्तु तम् ॥३५९॥
जज्ञे[3] विखननादस्य स्थानस्याह प्रसङ्गतः ।
ऋषिं वैखानसं नाम ना[नारूपो] [4]विरूपधृत् ॥३६०॥
योगैश्वर्यबलेनासौ[5] कुरुते [6]नैकरूपताम् ।
महाव्रतो महाकर्मा सोऽग्निरत्र [7]महिव्रतः ।
भर्जनादिगुणेनोक्ता[8] यज्वानो[वरुणक] तौ ॥३६१॥

॥ इति[9] पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके
तृतीयाध्यायस्य तृतीयः पादः ॥

---

१. अत्रैव तृतीयमृच्छतेत्यूचुस्तस्मादत्रिर्न त्रय इति । विखननाद् वैखानसः । भरणाद् भारद्वाजः । विरूपो नानारूपः । महिव्रतो महाव्रत इति । निरु० ३।१७॥

२. कोशे 'सोत्रिरात्रादि०' इत्यपपाठः ।

३. कोशे 'ज्ञं' इत्यपपाठः ।

४. कोशे 'पिरूपधृत्' इत्यपपाठः ।

५. कोशे 'योगैश्च यद्बले०' इत्यपपाठः ।

६. कोशे 'नकरूपताम्' इत्यपपाठः ।

७. कोशे 'महिव्रतम्' इत्यपपाठः ।

८. कोशे '०गुणेनोक्तो' इत्यपपाठः ।

९. कोशे 'इति निरुक्ते पद्मभगवत्प्रणीते निरुक्तश्लोकवार्त्तिके तृतीयस्याध्यायस्य तृतीयः पादः' इति पाठः ।

# चतुर्थः पादः

अथ[1] लुप्तोपम[न्याह]ब्राह्मणा व्रतचारिणः ।
समाम्नाये[2] समाम्नातम्[3] तत्कृष्टं तत्स्वदेश[तः] ॥१॥
उपम[त्वं]यतस्त्वेव पूर्वेभ्यस्तद्धि[लक्ष]णम् ।
पूर्वेष्विवादिशब्देन साक्षादेवोपमोदिता ॥२॥
संवत्सरमिति[4] त्वस्मिन् नोपमावाचि विद्यते ।
मण्डूकदेवते मन्त्रे ब्राह्मणा[5] [व्रतचारिणः] ॥३॥
इत्याम्नातं पदं तस्य मण्डूकशेषता[खलु] ।
त्यज्यते नोपमार्थेन विना तेन[6] स कल्प्यते ॥४॥
अतो लुप्तोपमं त्वेव ननु[7] तद्रूप इत्यपि ।
न[8] तत्र रूपशब्देन[समासादु]पमामतेः ॥५॥
यस्यामेव[9] समासोऽयं स्मर्यते शब्दकोविदैः ।
इवादिर्वा समासो[10] वा नेह कश्चित्प्रतीयते ॥६॥

---

१. कोशे 'अथ लुप्तोपमं॰॰ ब्राह्मणं व्रत॰' इति पाठः । अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते । निरु॰ ३।१८॥ २. निघ॰ ३।१३॥

३. कोशे 'समाम्नातः उत्कृष्टस्तत्स्व॰' इति पाठः ।

४. तथा च मन्त्रवर्णः—
संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥ ऋ॰ ७।१०३।१॥

५. कोशे 'ब्राह्मणा प्र॰॰॰' इति पाठः ।

६. सः=उपमार्थः ।

७. कोशे 'तद् ब्रूम' इत्यपपाठः । निघ॰ ३।१३॥

८. नैष दोषः, हिरण्यरूपादिषु रूपशब्दोत्तरपदात् समासादुपमाप्रतीतेरित्यभिप्रायः ।

९. यस्याम्=उपमायाम् । सप्तम्युपमान॰ (महाभाष्य २।२।२४) इति समासः ।

१०. कोशे 'या' इत्यपपाठः ।

मण्डूकानां यतो व्याख्या दैवते[1] तद्वशादतः ।
तत्रैव भाष्यका[रेण युक्त्ये]दं विवरीष्यते[2] ॥७॥
तदर्थप्रतिपत्त्यर्थं [3]भाषिकान्येव कानिचित् ।
इह [4]लुप्तोपमान्याह सिंह इत्यादिकं[5] यथा ॥८॥
लुप्तोपमोपमावाचिशब्दो[6] येषु न विद्यते ।
तानि[7] लुप्तोपमान्याह [8]तथा तेषूपमामतेः ॥९॥
अत्राहार्थोपमानीति [9]तेष्वर्थेनोपमामतिः ।
सामर्थ्यमर्थशब्दोक्तं[10] सामर्थ्येनेषु तन्मतिः ॥१०॥
लुप्तोपमेषु वाक्येषु[11] सामर्थ्येनोपमेष्यते ।
सामर्थ्यमीदृशं तेषु शब्दन्यायविदो विदुः ॥११॥
सिंहोऽयं केरलो राजा गोदवर्मेति भाषिते ।
सिंहेनैवास्य सादृश्यं [संल]पन्ति[12] विचक्षणाः ॥१२॥
कुतस्तत्प्रत्ययस्तेषां [13]न तावच्छन्दतो भवेत् ।
सिंहशब्दस्य वाच्योऽर्थस्त्वारण्यकेसरी मृगः ॥१३॥
क्षत्रियस्याभिषिक्तस्य राजशब्दोऽपि वाचकः ।
के[रलो]गोदवर्मायमित्यप्यस्य विशेषणम् ॥१४॥
केरलत्वं न सिंहस्य सिंहत्वं केरलस्य वा ।
विशेषणविशेष्यत्वं न नीलोत्पलवत्तयोः ॥१५॥

---

१. निरु० ९।६॥ २. कोशे 'विपरीष्यते' इत्यपपाठः ।
३. कोशे 'लुप्तोपमंप्राह' इत्यपपाठः ।
४. कोशे 'कातिकान्येव' इत्यपपाठः । ५. कोशे 'इत्यादिकान्यथा' इति पाठः ।
६. कोशे 'लुप्तोपमोपमोवापि शब्दो' इत्यपपाठः ।
७. कोशे 'तानिप्ता···पमान्याह' इति भ्रष्टः पाठः ।
८. कोशे 'तथान्तेषू०' इत्यपपाठः । ९. कोशे 'तेष्वर्थन्तोपमा०' इत्यपपाठः ।
१०. कोशे '०मथशब्दोक्तं सामर्थ्येनेषु' इत्यपपाठः ।
११. कोशे 'वाक्ये ···र्थे नोपमेयते' इति भ्रष्टः पाठः ।
१२. कोशे '···पत्ति' इति पाठः ।
१३. कोशे 'नतावस्कन्दतो' इत्यपपाठः ।

जातिरुत्पलशब्दोक्ता[१] यस्यां व्यक्तौ व्यवस्थिता ।
नीलाख्योऽपि गुणस्तस्यां प्रत्यक्षेणोपलभ्यते ॥१६॥
शब्देन लक्षिता व्यक्तिः सा च तेन विशेष्यते ।
तथैकव्यक्तिनिष्ठत्वं[२] नानयोः संप्रतीयते ॥१७॥
संगतिर्नानयोस्तेन शब्दयोरर्थयोरपि ।
परस्परानपेक्षत्वात् तेन सादृश्यधीर्मृषा ॥१८॥
निर्मूलत्वान्न चेहान्यत् सादृश्यस्यावबोधकम् ।
सिंहशब्दो वदत्यर्थं स्वकीयं नात्र संशयः ॥१९॥
धर्मेषु[३] जायते बुद्धिः सिंहतत्त्वं विजानतः ।
प्राप्तोऽयं सिंह इत्युक्ते भीतिस्तेनैव जायते ॥२०॥
न सिंहो हरिणस्त्वेष इत्युक्ते [४]भीरपैत्यपि ।
जातिर्वाप्यथवा व्यक्तिर्यदि धर्मं न लक्षयेत् ॥२१॥
नैतत्स्यादस्ति वाऽप्येतत् तेन सा तस्य लक्षणा ।
तथा राजेति शब्दोऽपि [५]वार्त्तैषा पुष्कलोदिता ॥२२॥
शौर्यादिधर्मसामान्यलक्षितव्यक्तिसंगतेः ।
सिंहेन विद्यते राज्ञः सादृश्यं गोदवर्मणः ॥२३॥
तदेवैतेन वाक्येन सिंहोऽयमिति गम्यते ।
प्रसह्यकारिता शौर्यं [६]बलमोजोऽरिपीडनम् ॥२४॥
सद्गुणाः [७]प्रहिताः सिंहे राजा तैरुपमीयते ।
सामर्थ्यादुपमाज्ञानं शब्दानर्थक्यमन्यथा ॥२५॥
न चेदत्रोपमेष्टा स्याद् इत्येवं तत्प्रकल्पनम् ।
उपमालक्षणार्थत्वे नैव वाक्यं निरर्थकम् ॥२६॥

---

१. कोशे 'जाति···ल्पल०' इति पाठः ।
२. कोशे '०निष्ठत्वात्' इत्यपपाठः ।
३. कोशे 'धमेषु' इत्यपपाठः ।
४. कोशे 'भीरवैत्यपि' इत्यपपाठः ।
५. कोशे 'वार्तेषा पुष्करोदिता' इति पाठः ।
६. कोशे 'बलमेजोरि०' इत्यपपाठः ।
७. कोशे 'प्रहताः' इति पाठः ।

संभवे चार्थवद्वाक्यं[1] नानर्थक्यप्रकल्पनम् ।
युज्यते लौकिकं ह्येतद् अस्य मूलमुदाहृतम् ॥२७॥
शूरः प्रसह्यकारी च सिंहोऽयं सम्मतो यथा ।
तथा राजायमित्यर्थः सिंहो राजेति गम्यते ॥२८॥
राजानं सिंहतुल्यं यः परस्मै[2] वक्तुमिच्छति ।
सिंहो राजेति निर्दिश्य कृती संपद्यतेऽप्यसौ ॥२९॥
प्रतिपत्तुश्च विज्ञानं सिंहसादृश्यरंजितः ।
जायते[3] गोदवर्मायमिति सिद्धमुदीरितम् ॥३०॥
इवादेरेव लुप्तस्य सोऽर्थ इत्यपरे विदुः ।
एवं लुप्तोपमोक्तिस्स्याद्[4] अन्यथाऽर्थोपमैव सा ॥३१॥
इवादेरपि सोऽर्थोऽस्तु[5] सामर्थ्यावगतस्त्विह ।
नैवेवादेरसावर्थो[6] यत्रेवादिः प्रयुज्यते ॥३२॥
तस्मिन्नविद्यमाने तु सामर्थ्यं नास्य कारणम् ।
उपमावाचिनोऽभावादुक्ता लुप्तोपमेत्यपि ॥३३॥
सामर्थ्याद्दुपमाबोधाद् भाषितार्थोपमेत्यपि ।
इवादेः विद्यमा[नत्वे]क्वचित्सा नैव विद्यते ॥३४॥
तद्यथेह[7] निधेहीति[तस्मिन्]सत्यपि नोपमा ।
यावन्मात्रादिके[8] वाक्ये[9] उषसो नेत्यपि श्रुतौ ॥३५॥

---

१. कोशे '०वद्वाक्यन्तानर्थक्य०' इत्यपपाठः ।

२. कोशे 'वक्तुमिच्छसि' इत्यपपाठः ।

३. कोशे '०वर्मादमिति' । इत्यपपाठः ।

४. कोशे 'अत्यथोर्थो०' इत्यपपाठः ।

५. कोशे '०वगतास्त्विह' इत्यपपाठः ।

६. कोशे '' ''वादोसार्थो' इति भ्रष्टः पाठः । नैवेति सामर्थ्यावर्गति निषिध्यते ।

७. अत्र 'यथेहेव निधेहीति' इति पाठः स्यात् । तथा चाह यास्कः—अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोग इहेव निधेहीति यथा (निरु० ७।३१) ।

८. यावन्मात्रम् उषसो न प्रतीकम् (ऋ० १०।८८।१९ ॥ निरु० ७।३१) ।

९. कोशे 'उषसे नेत्यपि' इत्यपपाठः ।

तस्मात् लुप्तोपमाप्येषा न चेदर्थोपमं तथा[1] ।
यद्यप्यसाधवस्सन्ति क्रौर्यप्राणिवधादयः ॥३६॥
धर्मास्सिहे तथाप्येभिर्नोपमा लोकसम्मता ।
इत्येतदब्रवीद्यास्कः [2]पूजायामिति [3]निर्दिशन् ॥३७॥
श्वा काक इति कुत्सायाम्[4] इतीदं चापि लौकिकम् ।
मार्गमाश्रित्य निर्दिष्टम् अनयोश्चापि सद्गुणाः ॥३८॥
सन्त्येव [5]हि शुनस्तावत् [6]कृतज्ञतादिलक्षणाः ।
काकस्याहूय भोक्तृत्वं गुह्यमैथुनमेव च ॥३९॥
आहूय काकवद् भुङ्क्ते [7]कृतज्ञः श्वेव चाप्ययम् ।
इत्येवमुदिते चापि कुत्सायां जगतो मतिः ॥४०॥
भवतीत्यनुचिन्त्याह[8] कुत्सायामिति भाष्यकृत् ।
एवमेव मतिस्तस्माद् जगतो भवतीति चेत् ॥४१॥
अशुच्याद्युपसेवादेस्तयोरन्यत्र[9] रूढतः ।
गुणज्ञानतिरोधानात्[10] तथैवोत्पद्यते मतिः ॥४२॥
वृषलः[11] श्वायमित्युक्ते जाल्मोऽयं काक इत्यपि ।
गम्यते कुत्सनैवोक्ता यथा श्वा काक एव वा ॥४३॥
आहा[रा]यातुरो धावेत्तथायं सर्वथा व्रजेत् ।
इत्यर्थः[12] कथितोऽनेन श्वा काक इति कुत्सितः ॥४४॥

---

१. अत्र स्कन्दग्रन्थः स्पष्टतरकः । द्र० —निरुक्तभाष्यटीकाद्वितीयभागे पृ० १८१॥
२. सिंहो व्याघ्र इति पूजायाम् । निरु० ३।१८॥
३. कोशे 'निर्दिशत्' इत्यपपाठः ।
४. श्वा काक इति कुत्सायाम् । निरु० ३।१८॥
५. कोशे 'हिं' इत्यपपाठः ।　६. कोशे 'कृतज्ञामिदिलक्षणाः' इत्यपपाठः ।
७. कोशे 'कृतज्ञश्चेव' इत्यपपाठः ।
८. कोशे 'भवन्तीन्त्यनुचिन्त्याह कुत्स्नायमिति' इत्यपपाठः ।
९. कोशे 'अशुचाद्युप०' इत्यपपाठः ।
१०. कोशे 'गुणज्ञान निरोधानात्' इत्यपपाठः ।
११. कोशे 'वृषयश्चाय०' इत्यपपाठः ।　१२. कोशे विसर्गरहितः पाठः ।

काकेत्येव[1] वदन् काकः काक इत्यभिधीयते ।
प्रायश्शकुनयस्सर्वे शब्दानुकृतिहेतुकम् ॥४५॥
लभन्ते नाम लोकेऽस्मिन् इति भाष्यकृतेरितम् ।
आत्मस्थेनैव धर्मेण गवादिर्गमनादिना ॥४६॥
लभते[2] लौकिकं नाम तथा काकादिरिष्यताम् ।
यद्वा तदिदमित्यादि वक्ष्यमाणस्य कारणम् ॥४७॥
अनित्यं बहुलं प्राहुः शब्दानुकरणं यतः ।
न नित्यं दृश्यते लोके तस्मात्तन्नैव कारणम् ॥४८॥
इत्यौपमन्यवः प्राह हंसादौ व्यभिचारतः ।
हंसा[3] हन्तेरिति[4] ह्येवं निरुक्तिरुपलभ्यते ॥४९॥
नाम्नामाख्यातजत्वं च नैवं त्यक्तं भविष्यति ।
अन्यथा त्यक्तमेव स्यात् [5]कल्प्यञ्चानित्यलक्षणात् ॥५०॥
अन्तर्णीतापपूर्वस्य[6] काक[:] [7]कालयतेरतः ।
कप्रत्ययेऽन्तलोपस्थे[8] कर्मकारकवाचिनि ॥५१॥
ओदनाद्युपघातार्थमागच्छन्नपकाल्यते ।
अपनीयत इत्यर्थस्तस्मात्काकोऽभिधीयते ॥५२॥
तित्तिरिस्तरणादिष्टः[9] तरणं प्लवनं विदुः ।
उत्प्लुत्य पक्षपातेन गमनं प्लवनं त्विह ॥५३॥
बाहुभ्यामुदकेऽन्यत्र प्रसिद्धं तद्धि लोकतः ।
रिप्रत्यये तथाभ्यासे [10]तरतेस्तागमे तथा ॥५४॥

---

१. काक इति शब्दानुकृतिः । तदिदं शकुनिषु बहुलम् । न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः । निरु० ३।१८॥

२. कोशे 'लभन्ते' इत्यपपाठः ।

३. निरु० ४।१३॥

४. कोशे 'हतेरिति' इत्यपपाठः । धा० २।२॥

५. कोशे 'कल्प्यञ्चाश्रित्य०' इत्यपपाठः ।

६. कोशे '०तावपूर्वस्य' इत्यपपाठः । तथा च यास्कः—काकोऽपकालयितव्यो भवति । निरु० ३।१८॥

७. धा० १०।६४॥

८. कोशे 'कः प्रत्यये०' इति पाठः ।

९. तित्तिरिस्तरणात् तिलमात्रचित्र इति वा । निरु० ३।१८॥

१०. धा० १।१०१८॥

अकारस्य[1] तथैवेत्वे तित्तिरिश्शकुनि[:]स्मृतः ।
तिलमात्राणि चित्राणि तिलकान्यस्य पक्षयोः ॥५५॥
दृश्यन्ते तेन [2]ह्य ेष स्यात् तिशब्दस्तिलशब्दतः ।
तरेफौ चित्रशब्दस्थौ रेफान्तश्चेत्वमृच्छति ॥५६॥
इकारश्च तकारेऽन्य इयमत्र प्रकल्पना ।
जीर्णः [3]कपिरिवेत्यर्थे रस्य लत्वे तथा नुमि ॥५७॥
कपिञ्जलो निरुक्तोऽत्र जीर्णमर्कटसाम्यतः ।
नुमागमो रलत्वं च विशिष्टे पक्षिणीष्यते ॥५८॥
अविशेषविवक्षायां[4] न्याय्यः कपिजरस्त्विति ।
कपेरिव जरास्येति [5]समासादुपमान्ततः ॥५९॥
धूम्रवर्णत्वसामान्यात्[6] तथा शैथिल्यमिष्यताम् ।
जीर्णः कपिरिवेत्येतद् युक्तमेवोपवर्णितम् ॥६०॥
यद्वा कपिरिवोत्प्लुत्य जवतेऽतः कपिञ्जलः ।[7]
जवतेः[7] कपिपूर्वस्य डले नुम्यपि सिध्यति ॥६१॥
युक्तः कपिञ्जलोऽत्रापि सामान्येन विवक्षिते ।
कपेरिव[8] जवोऽस्येति विग्रहो [9]नहि संश्रितः ॥६२॥
पचाद्यचि[10] पुनस्त्विष्टः कपिवज्जवते[11] त्विति ।
ईषदर्थेऽथवा कोऽत्र गस्य जत्वं तथाश्रितम् ॥६३॥

---

१. कोशे 'मकारस्य' इत्यपपाठः । २. कोशे 'येषस्स्यात्' इत्यपपाठः ।
३. कोशे 'कविरिवे०' इत्यपपाठः । तथा च यास्कः—कपिञ्जलः कपिरिव जीर्णः । कपिरिव जवते । ईषत्पिङ्गलो वा । कमनीयं शब्दं पिञ्जयतीति वा । निरु० ३।१८॥
४. कोशे 'अविशेषे विवक्षायां न्याय्यं कपिजरन्त्विति' इत्यपपाठः ।
५. कोशे '०दुपमामतः' इत्यपपाठः ।
६. कोशे 'धूमवर्णत्वस्य मान्यात्' इत्यपपाठः ।
७. सौत्रो धातुः । धा० १।६५५॥ ८. कोशे 'जपेरिव जपो०' इत्यपपाठः ।
९. कोशे 'घन्नि०' इत्यपपाठः ।
१०. अजपि सर्वधातुभ्यः । महाभाष्य ३।१।१३४॥
११. '०जवतेस्त्विति' इत्यपपाठः ।

ईषत्पिङ्गल इत्यर्थस्तथैवासौ प्रदृश्यते ।
पिजे:[1] [2]कमिकपूर्वस्य प्रत्ययोऽलोऽथवा भवेत् ॥६४॥
शब्दं[3] श्रुतिमुखत्वेन कमनीयं करोत्ययम् ।
तित्तिर्यादिनिरुक्तिस्तु प्रसङ्गेनैवमीरिता ॥६५॥
एतेर्धातो:[4] [5]शुपूर्वस्य णिन्यर्थे धातुलोपिनि ।
अनि शु क्षिप्रमेतीति[6] [7]श्वा बुधैरभिधीयते ॥६६॥
श्वा शु [8]आयोति निर्देशात्संस्कारोऽयं प्रकल्पितः ।
शवतेर्वोपधालोपे[9] [10]तस्मिन्नेव प्रसिध्यति ॥६७॥
शवत्यसौ हि सर्वत्र गच्छत्याहारकाङ्क्षया ।
डनि वा [11]श्वसितेरिष्टं श्वसित्येव हि सर्वदा ॥६८॥
श्वा श्वासं विवृतास्यो हि[गृह्णन्]प्रायेण दृश्यते ।
पचाद्यचि[12] [13]सहेस्सिह [14]उपधेत्वे तथा नुमि ॥६९॥
सहनादिति[15] निर्देशात् तच्चान्याभिभवं विदुः ।
तस्मिन्नेवाऽथवा[16] [17]हिंसेर्विपरीतस्य सिध्यति ॥७०॥

---

१. धा० १०।२१७॥ २. कमेः कः पूर्वो यस्मात्, तस्येत्यभिप्रायः ।

३. कोशे 'शब्दा' इति पाठः । ४. धा० २।३६॥

५. कोशे 'शूपूर्वस्य' इत्यपपाठः ।

६. शु इ अन्, धातुलोपे श्वन् इति ।

७. श्वा शुयायी, शवतेर्वा स्याद् गतिकर्मणः, श्वसितेर्वा । नि० ३।१८॥

८. मूले 'शु यायी' इत्येव पाठः ।

९. कोशे 'शवधेर्वोपधा०' इत्यपपाठः । धा० १।७६१॥

१०. अनीत्यर्थः ।

११. धा० २।६०॥

१२. अजपि सर्वधातुभ्यः । महाभाष्य ३।१।१३४॥

१३. धा० १।६०५॥

१४. कोशे 'उपबन्धे' इत्यपपाठः ।

१५. सिंहः सहनाद्, हिंसेर्वा स्याद् विपरीतस्य, सम्पूर्वस्य वा हन्तेः, संहाय हन्तीति वा । निरु० ३।१८॥

१६. तस्मिन्=अचि । १७. कोशे 'हिंसोर्वि०' इत्यपपाठः । धा० ७।१६॥

हिनस्तीति तु सिंहस्स्याद् [1]विपर्यासे समाश्रिते ।
संपूर्वस्याथवा [2]हन्तेः समित्वे[3] डे प्रतीयताम् ॥७१॥
अथवा[4] संहाय हन्तीति [5]तस्यैव तु निर्दशितः ।
संकोच्यात्मानमादौ हि पश्चाद्विक्रम्य हन्त्यसौ ॥७२॥
व्या[घ्रा]णाद् व्याघ्र[6] इत्युक्तं व्याघ्राणं चोपजिघ्रणम्[7]
घ्रात्वा गन्धमुपादाय [8]व्रजत्यामिषकाङ्क्षया ॥७३॥
व्याङ्पूर्वस्य तु संज्ञायां निषेधे [9]शस्य के कृते ।
घ्रा[10] इत्यस्य भवेद्व्याघ्रो व्याजिघ्रत्यामिषं हि सः ॥७४॥
ड्प्रत्ययेऽथवा[11] [2]हन्तेर्व्यापूर्वस्य [12]हघत्वतः ।
व्यादायाकृष्य हन्तीति [13]व्याघ्र इत्यभिधीयते ॥७५॥
विवृत्यास्यमथादाय हन्तीत्येवोच्यतेऽथवा ।
धातवोऽर्चतिकर्माण[14] [15]उपमार्थस्य उत्तरे ॥७६॥
चत्वारिंशत्समाम्नाताश्चत्वारश्चाधिका मताः ।
मेधाविनां[16] तु नामानि चत्वार्यप्यथ विंशतिः ॥७७॥

---

१. कोशे 'अस्मिन्...मसमाश्रिते' इति भ्रष्टः पाठः । २. धा० २।२॥
३. कोशे 'समित्वेघे' इत्यपपाठः । समोऽकारस्येत्व इत्यर्थः ।
४. कोशे 'अरवः सिंहाय यन्तीति' इत्यपपाठः । ५. तस्य=हन्तेः ।
६. कोशे 'व्यघ्र'इत्यपपाठः । व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वा । निरु० ३।१८॥
७. 'उपजिघ्रणम्' इत्यस्य साधुत्वं चिन्त्यम् ।
८. कोशे 'गजत्या०' इत्यपपाठः ।
९. कोशे 'सस्य' इत्यपपाठः । जिघ्रः संज्ञायां प्रतिषेधः (महाभाष्य ३।१।१३७) इति शप्रत्ययस्य प्रतिषेधे, आतश्चोपसर्गे (अष्टा० ३।१।१३६) इति कप्रत्ययः ।
१०. धा० १।९७३॥ ११. कोशे 'घप्रत्यये०' इत्यपपाठः ।
१२. कोशे 'हंलतः' इत्यपपाठः ।
१३. कोशे 'व्यघ्य' इत्यपपाठः ।
१४. अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत् । निरु० ३।१९॥
१५. कोशे 'उपमार्थस्य' इत्यपपाठः ।
१६. कोशे 'मेधावीनां' इत्यपपाठः । तथा चाह—मेधाविनामान्युत्तराणि चतुर्विंशतिः । मेधावी कस्मात् ? मेधया तद्वान् भवति । मेधा मतौ धीयते । निरु० ३।१९॥

मेधाऽस्यास्तीति मेधावी मत्वर्थे [1]विनि सिध्यति ।
ग्रन्थग्रहणसामर्थ्यं गृहीतस्य च धारणम् ॥७८॥
अन[ाया]सेन मेधोक्ता मतौ सा धीयते [2]यतः ।
मेशब्देन मतिः प्रोक्ता मतिरित्युदितं [2]मनः ॥७९॥
मनस्यवस्थिता शक्तिर्मेधा [3]धिष्णेति सेरिता ।
स्तोतॄणामपि[4] नामानि दश [5]त्रीण्यप्यतः परम् ॥८०॥
दश पञ्च[च] नामानि [यज्ञ]स्य[6] स्युरतः परम् ।
यज्ञो[7] यजतिकर्म[8] स्यात् प्रख्यातं तच्च गृह्यते ॥८१॥
यज्यर्थत्वाविशेषेण[9] प्रख्यातं संगताद्यपि ।
[प्र]ख्यातग्रहणेनातः [तन्नि]वृत्तिर्न युज्यते[10] ॥८२॥
एवं यजतिकर्मेति सिद्धे प्रख्यातधीर्वृथा ।
मा भूद्वैयर्थ्यमस्येति पूर्वोक्तोऽर्थस्समाश्रितः ॥८३॥
यथा[11] वा देवपूजायां प्रख्यातो यज्ञ इत्ययम् ।
संगतादौ[12] [तथा] नेति भाष्यकारस्य निश्चयः ॥८४॥

---

१. कोशे 'पीति' इत्यपपाठः । अस्मायामेधास्रजो विनिः (अष्टा० ५।२।१२१) ।

२. कोशे 'मतः' इत्यपपाठः ।

३. कोशे 'धाणोतिमेत्विताद्' इति विकृतः पाठः ।

४. कोशे 'स्तोतृणा०' इत्यपपाठः । स्तोतॄनामान्युत्तराणि त्रयोदश । स्तोता स्तवनात् । निरु० ३।१९॥

५. कोशे '०त्रीण्यपतः' इत्यपपाठः ।

६. कोशे 'नामानि...स स्युतरतः' इत्यपपाठः । यज्ञनामान्युत्तराणि पञ्चदश । निरु० ३।१९॥

७. यज्ञः कस्मात् ? प्रख्यातं यजतिकर्मेति नैरुक्ताः । याच्ञो भवतीति वा । यजुरुन्नो भवतीति वा । बहुकृष्णाजिन इत्यौपमन्यवः । यजूंष्येनं नयन्तीति वा । निरु० ३।१९॥

८. कोशे 'यजतिकर्मा' इत्यपपाठः ।

९. कोशे 'यज्यथत्वाविशेषेण प्रख्यातसंगता०' इत्यपपाठः ।

१०. स्कन्दस्तु प्राह—'प्रख्यातग्रहणं संगतकरणादिनिवृत्त्यर्थम्' इति ।

११. कोशे 'यथावद्देव०' इति पाठः ।

१२. कोशे '...संगतादी नेति' इति पाठः ।

मीमांसकप्रसिद्धिर्वा प्रख्यातग्रहणेरिता[1] ।
उद्दिश्य [2]देवतां सम्यक् त्यागो द्रव्यस्य यस्त्वसौ ॥८५॥
प्रख्यातो जैमिनीयानाम् अग्निष्टोमादिलक्षणः ।
प्रख्यातग्रहणेनापि तस्य सिद्धत्वमीरितम् ॥८६॥
इज्यन्ते देवता येन पूज्यन्ते तस्य यज्ञता ।
याच्ञो वा यज्ञ इत्युक्तो याच्ञावान् यज्ञ उच्यते ॥८७॥
अर्शआदित्वतो[3] याच्ञो मत्वर्थेऽपि प्रसिध्यति ।
याच्यन्ते देवतास्तस्मिन् फलं स्वर्गादिलक्षणम् ॥८८॥
भक्तस्य याचनं चास्मिन्दक्षिणायां तथा [4]सवे ।
ह्रस्वत्वे[5] चस्य जत्वे च [6]याच्ञ यज्ञो भविष्यति ॥८९॥
यजुर्भिरथवोन्नत्वाद्[7] उन्नत्वं व्याप्ततार्थतः ।
भूयस्त्वाद्[8] यजुषां व्याप्तिः क्लेदनं तस्य तैर्भवेत् ॥९०॥
यज्ञसाधनभूतानां द्रव्याणां[व्रीहिबर्हिषाम्] ।
क्षालनात्प्रोक्षणाच्चैव [9]यजुःसंस्कृतवारिणा ॥९१॥
यजुश्शब्दादुनत्तेश्च[10] यज्ञ एवं समाश्रितः ।
यजुश्शब्दाद्[11] यजित्येतद्[उन्देर्नश्चा]पि गृह्यते ॥९२॥
तस्मादप्रत्यये ञत्वे[12] नस्य यज्ञः प्रसिध्यति ।
बहुकृष्णाजिनो[13] यज्ञ इति [14]प्राहौपमन्यवः ॥९३॥

---

१. कोशे '०ग्रहणेरित' इत्यपपाठः । २. कोशे 'देवता' इत्यपपाठः ।
३. कोशे 'अग आगित्वतो याच्या' इत्यपपाठः । अर्शआदिभ्योऽच् (अष्टा० ५।२।१२७) । ४. कोशे 'सने' इत्यपपाठः ।
५. कोशे 'ह्रस्वते चास्य' इत्यपपाठः । ६. कोशे 'याज्ञो' इत्यपपाठः ।
७. कोशे 'यजतीरथवान्नत्वाद्' इत्यपपाठः ।
८. कोशे 'भूयस्त्वद्य जुषा वाप्तिः छेदनं' इत्यपपाठः ।
९. कोशे 'यज्ञासंभृतवारिणा' इत्यपपाठः ।
१०. कोशे 'यज्ञस्शब्दादुनक्तेश्च' इत्यपपाठः । धा० ७।२०॥
११. कोशे 'यज्ञशब्दादजित्येतत् मु॰॰॰पि गृह्यते' इत्यपपाठः ।
१२. कोशे 'ज्ञत्वे' इत्यपपाठः ।
१३. कोशे 'बहुकृषाजिनो' इत्यपपाठः । १४. कोशे 'प्राहोपम०' इत्यपपाठः ।

अत्राजिनपदे[1] योऽयम् इकारस्सोऽपकृष्यते ।
आदौ[2] तस्य यणादेशे [3]मत्वर्थेऽचि नञत्वतः[4] ॥९४॥
यज्ञ इत्यवतिष्ठेत [5]मत्वर्थेऽजिनलक्षणः ।
सोमोपहननादीनि सन्ति [6]तानि बहूनि हि ॥९५॥
कृष्णसंबन्धिता चैषाम् इति मत्वैवमब्रवीत् ।
यजूंष्येनं[7] नयन्तीति यद्वा यज्ञो भविष्यति ॥९६॥
यजुश्शब्दाद्यजित्येतद् [8]नयतिश्च ततः परम् ।
डप्रत्यये [9]नञत्वे च ततो [10]यज्ञोऽत्र सिध्यति ॥९७॥
आरभ्यान्तान्नयन्त्येनं [11]यजूंष्येव हि नेतरे[12] ।
यजुषारभ्यते यज्ञो यजुषैव [13]समाप्यते ॥९८॥
ऋत्विजामपि[14] नामानि [15]भवन्त्यष्टौ ततः परम् ।
ऋत्विगीरण इत्युक्त [:] कर्मणां प्रेरको ह्यसौ ॥९९॥
ईर्तेः[16] [17]क्त्विज्यादिलोपे स्याद् ऋग्यष्टेति मतान्तरम् ।
ऋक्शब्दाच्च[18] [19]यजेश्चैव शाकपूणिरकल्पयत् ॥१००॥
ऋक्शब्दतस्त्वृकारस्स्याद् यजिश्च परतस्ततः ।

---

१. कोशे 'अत्र जिनपदे' इत्यपपाठः । २. कोशे 'अदौ' इत्यपपाठः ।

३. कोशे 'मत्वर्थेपि' इत्यपपाठः ।

४. अजिन शब्दाद् भूम्नि अर्श आदिभ्योऽच् (अष्टा० ५।२।१२७) इत्यचि. इकारस्यादौ निपाते, यणादेशे, अन्त्याकारलोपे, श्चुत्वे च यज्ञ इति सिध्यतीत्यभिप्रायः ।

५. कोशे 'मत्वर्थोभ्रमलक्षणः' इत्यपपाठः ।

६. तानि=अजिनानि । ७. कोशे 'यज्ञं ह्येनं' इत्यपपाठः ।

८. धा० १।९५०॥ ९. कोशे 'न यज्ञत्वे' इत्यपपाठः ।

१०. कोशे 'यज्ञो न सिध्यनि' इत्यपपाठः । ११. कोशे 'यज्ञं ह्येवहि' इत्यपपाठः ।

१२. इतरे=ऋक्सामे । १३. कोशे 'समास्यते' इत्यपपाठः ।

१४. ऋत्विङ्नामान्युत्तराण्यष्टौ । ऋत्विक् कस्मात् ? ईरणः । ऋग्यष्टा भवतीति शाकपूणिः, ऋतुयाजी भवतीति वा । निरु० ३।१९॥ १५. कोशे 'भवत्यष्टौ' इत्यपपाठः ।

१६. धा० २।८॥

१७. कोशे 'क्त्रिप्यादि०' इति पाठः । ईर् क्त्विज्=र्त्विज्=ऋत्विज् ।

१८. 'ऋक्शब्दाश्च' इत्यपपाठः । १९. धा० १।१०५१॥

तयोर्मध्ये [1]तुशब्दश्च तथैवागम इष्यते ॥१०१॥
क्विनि[2] प्रसारणे [3]चैवमृत्विगित्यवतिष्ठते ।
ऋग्यष्टेत्यत्र निर्दिष्टा ऋचो याज्याः प्रचक्षते ॥१०२॥
स्तुत्यर्था अपि गृह्यन्ते [विगृह्य[4] वचनं त्वतः] ।
ऋतुयाज्यथवर्त्विक्स्याद् ऋतुशब्दाद्यजेः क्विनि[5] ॥१०३॥
ऋतौ हि विहिते काले [6]यज्ञशीलोऽयमिष्यते ।
याच्ञार्था[7] उत्तरे चातो दश सप्त[8] च धातवः ॥१०४॥
दानार्थास्ते[9] दशेह स्युश्चत्वारोऽध्येषणाश्रयाः ।
सत्कृत्याभ्यर्थनां[10] दातुम् आहुरध्येषणामिह ॥१०५॥
धातू [11]स्वपिति सस्तीति द्वावेव स्वपिताविह ।
शेते निपद्यते [12]चैतौ तथा संविशतीत्यपि ॥१०६॥
प्रयोगस्योपलब्धत्वात् [13]संख्या नान्यनिवारिणी ।
कूपनामानि[14] चत्वारि दश च स्युरतः परम् ॥१०७॥

---

१. कोशे 'तशब्दश्च' इत्यपपाठः ।

२. कोशे 'क्विति' इत्यपपाठः ।  ३. कोशे 'चैवमृत्युगित्यव०' इत्यपपाठः ।

४. कोशेऽस्य श्लोकस्य तृतीयचरणस्य पाठभ्रंशः प्रदर्श्यते । अस्माभिस्तु द्वितीयचरण-पाठभ्रंशं मन्यमानैः सोऽयमूहितः, कोशस्थद्वितीयचरणपाठश्च न्याय्यतया तृतीयचरणस्थानं प्रापितः ।  ५. अष्टा० ३।२।५९॥

६. कोशे 'यष्टचशीलो०' इत्यपपाठः ।  ७. कोशे 'यच्आर्थी' इत्यपपाठः ।

८. कोशे 'दश पञ्च च' इत्यपपाठः । याच्ञाकर्माण उत्तरे धातवो सप्तदश । निरु० ३।१९॥

९. कोशे 'दानार्थास्तद्यशेह' इत्यपपाठः । दानकर्माण उत्तरे धातवो दश । अध्येषणकर्माण उत्तरे धातवश्चत्वारः । निरु० ३।१९

१०. कोशे 'सत्तत्याभ्यर्थनां' इत्यपपाठः ।

११. कोशे 'स्वपिहि सन्तीति द्वावेव परिताविह' इत्यपपाठः । स्वपिति सस्तीति द्वौ स्वपितिकर्माणौ । निरु० ३।१९॥  १२. कोशे 'चैते' इत्यपपाठः ।

१३. कोशे 'सर्घं नान्यनिवारिणि' इत्यपपाठः ।

१४. कोशे 'रूपनामानि' इत्यपपाठः । कूपनामान्युत्तराणि चतुर्दश । कूपः कस्मात् ? कुपानं भवति, कुप्यतेर्वा । निरु० ३।१९॥

कुत्सनार्थकुपूर्वस्य [1]पिबतेर्भाववाचिनि ।
कप्रत्यये[2] तथा दैर्घ्ये कूप इत्यवतिष्ठते[3] ॥१०८॥
कुपानं[4] कूप इत्युक्तः पानमस्मिन् हि कुत्सितम् ।
दुर्ग्राह्यत्वात् तथाल्पत्वात् [5]शौचासंभवतस्तथा ॥१०९॥
कुप्यतेरथवा[6] कूपः[7] क्रोधार्थस्यार्थसंभवात् ।
जलार्थं बहवः प्राप्ताः[8] कुप्यन्त्यत्र त्वरान्विताः ॥११०॥
तावन्त्येव च नामानि[9] स्तेनस्य स्युरतः परम् ।
संस्त्यानं संहतं यस्मात् [10]पापकं बहु पिण्डितम् ॥१११॥
अस्मिन्नित्युच्यते [11]स्तेन इति नैरुक्तदर्शनम् ।
स्त्यायतेः[12] प्रत्ययो नः[8] स्यादेवं येत्यपि गच्छति ॥११२॥
नैरुक्तग्रहणेनापि पक्षोऽन्योऽप्युपसूचितः ।
स्तनतेः[13] स्तेन इत्याह स्तन्यते स्तनतीति वा ॥११३॥
स्तेनोऽयं स्तेन इत्येवं [14]सर्वैः संशब्द्यते हि सः ।
अत्राहं चोरयामीति तथा संशब्द इत्यपि ॥११४॥

---

१. धा० १।९७२॥
२. कोशे 'अप्रत्यये' इति पाठः ।
३. कोशे '०तिष्ठति' इत्यपपाठः ।
४. कोशे 'कुपा न कूप' इत्यपपाठः ।
५. कोशे 'शौचातसंभवस्तथा' इत्यपपाठः ।
६. धा० ४।१२२॥
७. कोशे 'रूपः' इत्यपपाठः ।
८. कोशे विसर्गरहितः पाठः ।
९. स्तेननामान्युत्तराणि, चतुर्दशैव । स्तेनः कस्मात् ? संस्त्यानमस्मिन् पापकमिति नैरुक्ताः । निरु० ३।१९॥
१०. कोशे 'पावकं बह्वि पिण्डितः' इत्यपपाठः ।
११. कोशे '०च्यतेन्तेन इति' इत्यपपाठः ।
१२. कोशे 'स्यायतेः' इत्यपपाठः । धा० १।९५९॥
१३. कोशे 'स्तनते' इति विसर्गरहितः पाठः । धा० १।४८९॥
१४. कोशे 'सर्वैसंशब्यते' इत्यपपाठः ।

षण्निर्णीतस्य[1] नामानि तथैवान्तर्हितस्य च ।
निर्णीतं तु [2]बहिर्नीतं प्रकाशं निश्चितं विदुः ॥११५॥
अप्रकाशमनिर्णीतं तथान्तर्हितमुच्यते ।
द्वयोस्साधारणान्येव षडप्याहुर्मनीषिणः ॥११६॥
कर्मधारयमाश्रित्य [3]वदन्त्यन्येऽन्यथा त्विदम् ।
निर्णीतञ्चैव [4]तज्ज्ञेयं तथैवान्तर्हितञ्च यत् ॥११७॥
निर्णीतञ्चेदनिर्णीतं नैव [5]तत् स्याद्विरोधतः ।
ततो[6] निर्णीतशब्देन निश्चितं नेह गृह्यते ॥११८॥
इन्द्रियेभ्यो बहिर्नीतम् इन्द्रियैर्यन्न गृह्यते ।
तन्निर्णीतमिह प्रोक्तं तच्चैवान्तर्हितं ततः ॥११९॥
दूरनामानि[7] पञ्चेह द्रुतं दूरं प्रकीर्तितम् ।
रेफोकारविपर्यासे तथोकारस्य दैर्घ्यतः ॥१२०॥
निष्ठार्थे प्रत्ययेऽकारे [8]द्रवतेर्दूरमाश्रितम् ।
दुरयंवाचि[9] दूरं स्याद् दुर्गमं विप्रकृष्टतः ॥१२१॥
एतेर्वाप्ययतेर्वा[10] डे दुरित्यस्योपरि स्थिते ।
उकारस्य च दीर्घत्वे [11]दूरमुक्तं यथोदितम् ॥१२२॥
दुःखेन गम्यते तद्धि विप्रकृष्टत्वहेतुतः ।
पुराणस्य[12] तु नामानि षडत्र स्युरतः परम् ॥१२३॥

---

१. कोशे 'षण्नण्णीतस्य' इत्यपपाठः। तथा च यास्कः—निर्णीतान्तर्हितनामधेयान्युत्तराणि षट्। निर्णीतं कस्मात्? निर्णिक्तं भवति। निरु० ३।१९॥

२. कोशे 'बहिर्णीतं' इत्यपपाठः।

३. स्कन्देन प्रदर्शितोऽयं पक्षः, न तु दुर्गेण। ४. कोशे 'तज्ञेयं' इत्यपपाठः।

५. कोशे 'तस्याद्विरोधतः' इत्यपपाठः। ६. कोशे 'न तन्निर्णीत०' इत्यपपाठः।

७. दूरनामान्युत्तराणि पञ्च। दूरं कस्मात्? द्रुतं भवति, दुरयं वा। निरु० ३।१९॥

८. धा० १।९९२॥ ९. कोशे 'दूरयंवाचि' इत्यपपाठः।

१०. कोशे '०तेर्वादी दुरितस्योपरि' इत्यपपाठः। धा० २।३६॥ धा० १।५३०॥

११. कोशे 'दीर्घत्वेड्दूराद्युक्तं' इत्यपपाठः।

१२. पुराणनामान्युत्तराणि षट्। पुराणं कस्मात्? पुरा नवं भवति। निरु० ३।१९॥

पुरानवपदे नस्य णत्वे वस्यापि लोपतः ।
पुराणमिति रूपं स्याद् [1]नवं तत् स्यात्पुरैव हि ॥१२४॥
इदानीं [2]जीर्णमित्यर्थश्चिरोत्पन्नमथापि वा ।
अन्तर्णीतोपसर्गस्य[3] नयतेः प्रत्यये [4]डवे ॥१२५॥
नवमित्येतदिष्टं स्याद् आनीतमिव संप्रति ।
आनीतमिति[5] यद्वोक्तं [6]यदेवाविष्कृतं तु तत् ॥१२६॥
एकैकस्य[7] द्विशो द्वे द्वे नामान्यत्रोत्तराण्यतः ।
वीप्सायां[8] शोऽविशेषेण सर्वाण्याहाथ भाष्यकृत् ॥१२७॥
व्याख्या धर्मावबोधार्था तेनान्यत्राप्ययं क्रमः ।
कर्तव्य इति यास्केन मन्दबुद्धयर्थमीरितम् ॥१२८॥
अतीतान्यपि सर्वाणि व्याख्येयान्येव युक्तितः ।
न व्याख्यातानि सर्वाणि गौरवातिक्रमेप्सया ॥१२९॥
प्रपित्वेऽभीक[9] इत्येते आसन्नस्य तु [10]नामनी ।
प्रपित्वे[11] प्राप्त इत्यर्थः आसन्ने त्विति गम्यताम् ॥१३०॥
अभीकेऽभ्यक्त[12] इत्यर्थो निरुक्तिरनयोरियम् ।
सप्तम्यन्ते पदे त्वेते सोपसर्गे च दर्शिते ॥१३१॥
पदे दृष्टे तथैवेति [13]प्रतीतेः प्रतिपत्तये ।
प्रतीकग्रहणं शीघ्रं [14]वेदं दृष्ट्वोपजायते ॥१३२॥

---

१. कोशे 'तवं तस्यात्पुरैव' इत्यपपाठः । २. कोशे 'शीर्ण०' इति पाठः ।

३. इतः पूर्वम्—षडेव नवनामानि स्युरुत्तराण्यतः परम्—इति पाठो लुप्तः स्यात् ? तथा च निरुक्तम्—नवनामान्युत्तराणि षडेव । नवं कस्मात् ? आनीतं भवति । निरु० ३।१९॥

४. कोशे 'ड्चे' इत्यपपाठः । ५. कोशे 'अनीतमिति यद्वोक्त' इत्यपपाठः ।

६. कोशे '०विकृतन्तु' इत्यपपाठः ।

७. द्विश उत्तराणि नामानि । निरु० ३।२०॥ ८. अष्टा० ५।४।४३॥

९. कोशे 'प्रपित्वे भीत' इत्यपपाठः । तथा च निरुक्ते—प्रपित्वेऽभीक इत्यासन्नस्य । प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते । निरु० ३।२०॥ १०. कोशे 'नामानि' इत्यपपाठः ।

११. कोशे 'प्रहत्वे' इत्यपपाठः । १२. कोशे 'अभिकेम्यन्त' इत्यपपाठः ।

१३. कोशे विसर्गरहितः पाठः । १४. कोशे 'वद' इत्यपपाठः ।

आपेरित्वे[1] प्रपूर्वस्य निष्ठार्थे त्वादिलोपतः ।
प्रपित्वमिति रूपं स्याद् [2]आङ्यपीत्वं तथेष्यते ॥१३३॥
उपसर्गकृतं भेदम् अर्थस्याहुर्मनीषिणः ।
विप्रकृष्टेन कालेन देशाद्वापि प्रकृष्टतः ॥१३४॥
कालेन महता प्राप्तं [3]प्रपित्वमिह भण्यते ।
आसन्नेन तु कालेन शीघ्रमापित्वमिष्यते ॥१३५॥
अतश्चापित्वमित्येतद् आसन्नस्येह वाचकम् ।
इन्द्रमाह[4] यथा गौरो मरुदेशाश्रयो मृगः ॥१३६॥
अवहायेरिणं[5] देशमेति तृष्यन्नपा कृतम् ।
अवहायेति[6] सामर्थ्याद् अवसानस्य वाचकम् ॥१३७॥
अपेत्यप्यद्भिरित्यर्थे[7] सुपां स्वित्यनुशासनात्[8] ।
जलाशयस्तथा [9]खातः कृतशब्देन भाषितः ॥१३८॥
तृष्यन्नित्युदितो हेतुः [10]पिपासैवागतेरिह ।
साकाङ्क्षत्वाद्यथेत्यस्य तथेत्यप्यत्र कल्प्यते ॥१३९॥
तथैव भगवन्निन्द्र [11]संरम्भेणागते चिरात् ।
तूयं[12] त्वं क्षिप्रमेह्यस्मान्[13] एत्य सुष्ठु सुतं पिब ॥१४०॥

---

१. धा० ५।१४॥

२. कोशे 'आद्यपीन्त्वन्तथे०' इत्यपपाठः । आङ्पूर्वस्यापेरित्वे प्रत्यये, आदिलोपे च 'आपित्वम्' इति निष्पद्यत इत्यर्थः ।

३. कोशे 'प्रापित्व०' इत्यपपाठः ।

४. यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ ऋ० ८।४।३॥

५. कोशे 'अपहायेरिणं' इत्यपपाठः ।

६. कोशे 'अपहायेति सामर्थ्यात् उपसन्नस्य' इत्यपपाठः ।

७. कोशे 'अपेत्यव्यद्भि०' इत्यपपाठः ।

८. अष्टा० ७।१।३९॥

९. कोशे 'घातः' इत्यपपाठः ।

१०. कोशे 'पिपांसैवा०' इत्यपपाठः ।

११. कोशे 'संरंभेणाहते' इत्यपपाठः ।

१२. कोशे 'तूयस्त्वं' इत्यपपाठः ।

१३. कोशे '०ह्यस्मात्' इत्यपपाठः ।

कण्वेष्विति[1] तृतीयार्थे सचेत्यस्य सहार्थता ।
कण्वा मेधाविनः[2] प्रोक्ताः [3]कणनादृत्विजोऽत्र ते ॥१४१॥
कण्वैस्सह पिबेत्यर्थः कणनं मन्त्रभाषणम् ।
उपसर्गसमाहारं[4] प्रोपदं केचिदब्रुवन् ॥१४२॥
अपरेषां निपातोऽयं संबन्धोऽस्यार्चतेति[5] तु ।
षष्ठ्याः स्थाने [6]चतुर्थी च सुस्तु [7]शूषविशेषणम् ॥१४३॥
सुशूषं[8] प्रार्चतेन्द्रस्य शोभनं बलमस्य यत् ।
पुरोऽग्रतो रथो यस्य सेनाख्यं [9]तत् स्तुतर्त्विजः ॥१४४॥
युष्मदभ्यर्चितं तच्च वीर्यवन्नाशयेदरीन् ।
अभीकेऽपि[10] च यः सङ्गे संग्रामेऽन्तिकमागते ॥१४५॥
स्तुत्युत्पादितवीर्येण बलेन महतान्वितः ।
केशाकेश्यादिरूपेऽपि[11] लोककृत्पाकशासनः ॥१४६॥
स्थानं तु लोक [12]इत्युक्त उकारश्चावधारणे ।
इन्द्रः[13] स्थानकृदेव[ास्ति तिष्ठति न]पलायते ॥१४७॥
ककारप्रत्यये कृत्वे त्वभिपूर्वस्य कर्मणि ।
अञ्चतेरित्वतश्चादेरभीकमिति[14] सिध्यति ॥१४८॥
कीदृशो यः समत्स्विन्द्रः संग्रामेषु बहुष्वपि ।
वृत्रहा हतवान् वृत्रं शत्रुं नासौ पलायते ॥१४९॥

---

१. कोशे 'कण्वेष्विव' इत्यपपाठः । २. निघ० ३।१५॥
३. कोशे 'कणनादृत्थजो' इत्यपपाठः ।
४. प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहास्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ ऋ० १०।१३३।१॥
५. कोशे '०स्यार्यतेति' इत्यपपाठः । ६. कोशे 'चतुर्थ्यां' इत्यपपाठः ।
७. कोशे 'श्रूषविशेषणम्' इत्यपपाठः । ८. कोशे 'सुश्रूषं' इत्यपपाठः ।
९. कोशे 'तस्तुत०' इत्यपपाठः । १०. कोशे 'अभिकेपि च यं' इत्यपपाठः
११. कोशे 'केशाकेशादि०' इत्यपपाठः ।
१२. कोशे 'इत्युक्तं' इत्यपपाठः । १३. कोशे विसर्गरहितः पाठः ।
१४. कोशे 'अञ्चतेरित्वतत्वादेरभीकमिनि' इत्यपपाठः । धा० १।२०३॥

ऋत्विजः प्रार्चतेत्युक्ता विशेष्यैन्द्रबलं त्विह ।
इन्द्रायेत्यस्य[1] पारोक्ष्याद् बोधी[हे]त्युच्यते तथा ॥१५०॥
अर्चतेत्यादिकं वाक्यं [2]सोऽस्माकं[1][3]बोधि[3]बुध्यताम् ।
स त्वमित्यथवा कल्प्यं बोधि [4]बुध्यस्व नो वचः ॥१५१॥
चोदिता[5] जगतश्चासौ सर्वस्य प्रेरकः प्रभुः ।
अस्तु चोदयितास्माकं भव त्वमिति वा भवेत् ॥१५२॥
अन्यके[6] कुत्सितास्त्वत्र शत्रवश्च विवक्षिताः ।
धनुःष्ववस्थिता[7] ज्याकाः कुत्सितानां [8]सुकुत्सिताः ॥१५३॥
सर्वदेन्द्रप्रसादेन [9]नभन्तां नाशमाप्नुयुः ।
नश्यन्तु शत्रवोऽस्माकं नष्टसंग्रामसाधनाः ॥१५४॥
इत्येतत्प्रार्थितं चात्र ततस्तद्बलमर्चत[10] ।
पुरोरथं [11]पुरोगामि यद्वा मेघात्मकं बलम् ॥१५५॥
इतिहासाश्रयं पूर्वमिदं नित्याश्रये मतम् ।
दभ्रमर्भकमित्येते[12] अल्पस्यार्थस्य नामनी ॥१५६॥
रप्रत्यये वधार्थस्य [13]दभ्नोतेर्दभ्रमिष्यते ।
सुदम्भमिति[14] तत्प्राह सौकर्ये सुरिह स्थितः ॥१५७॥

---

१. कोशे इतः पूर्वम् 'अस्माकं' इति पाठ उपलभ्यते । पाठभ्रंशोऽत्र प्रतीयते ।

२. सः = इन्द्रः

३. कोशे 'बाधि' इत्यपपाठः ।

४. कोशे 'बुध्यास्व' इत्यपपाठः ।

५. कोशे 'वारिता जगत्तत्वासौ' इत्यपपाठः ।

६. कोशे 'अन्यते' इत्यपपाठः ।

७. कोशे 'धनुष्ववस्थितज्याकाः' इत्यपपाठः ।

८. कोशे 'स कुत्सिताः' इत्यपपाठः ।

९. कोशे 'न हन्ताम्नागमाप्नुयुः' इत्यपपाठः ।

१०. कोशे '०मर्चतः' इत्यपपाठः ।

११. कोशे 'पुरोगामी' इत्यपपाठः ।

१२. कोशे 'ददमर्भक०' इत्यपपाठः । दभ्रमर्भकमित्यल्पस्य । दभ्रं दभ्नोतेः सुदम्भं भवति । अर्भकमवहृतं भवति । निरु० ३।२०॥

१३. कोशे 'दह्नोतेर्दभ्रमिष्यते' इत्यपपाठः । धा० ५।२३॥

१४. कोशे 'सुदन्तमिति' इत्यपपाठः ।

दभ्नोतेश्च[1] वधार्थत्वाद् दम्भं नाश्यमितीरितम् ।
अर्भकञ्च तथाल्पत्वाद् [2]महतोऽवहृतं त्विति ॥१५८॥
अन्तर्णीतावपूर्वस्य [3]हृणोऽके कर्मकारके ।
गुणे पुनर्विपर्यासे ह्रस्यभत्वेऽर्भकं भवेत् ॥१५६॥
बालेति मन्यमानेन भर्त्रा भोगबहिष्कृता ।
भावयव्यमथोवाच रोमशा प्राप्तयौवना ॥१६०॥
उपोपेत्युपसर्गोऽयम्[4] अभ्यस्तः पादपूरणे ।
उपसर्गे[5] श्रुते योग्यमध्याहार्यं क्रियापदम् ॥१६१॥
परामृशेति निर्देशात् कर्मणश्च समर्पकम् ।
उपेत्य मे ममोपस्थं पाणिना त्वं परामृश ॥१६२॥
समुत्थानि[6] च रोमाणि मा मे [7]दभ्राणि मन्यथाः ।
अङ्गैः[8] कक्ष्यादिभिस्सर्वै रोमशै [9]रोमशास्म्यहम् ॥१६३॥
आह दृष्टान्तमप्यत्र [10]गन्धारीणामिवाविका ।
गन्धारदेशजातानामवीनामविका[11] यथा ॥१६४॥
रोमभिर्मृदुभिर्दीर्घैर्घनैश्चोरणिकान्विता[12] ।
तथाहं रोमशा वृत्ता किं मां योग्यामुपेक्षसे ॥१६५॥
प्राग्रोमजन्मनश्चैव निषिद्धं मैथुनं विदुः ।
गन्धार्य[13] इव गन्धार्यस्त्ववयश्चाविकाश्रुतेः ॥१६६॥

---

१. कोशे 'अञ्जेतस्दर्थत्वात् दध्यन्नाश्य०' इत्यपपाठः ।
२. कोशे 'महतोपहृतस्त्विति' इत्यपपाठः ।
३. कोशे 'हृणोतेः' इत्यपपाठः । धा० १।६४७॥
४. उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥ ऋ० १।१२६।७॥
५. कोशे 'प्रसर्गः' इत्यपपाठः । ६. कोशे 'समुत्पाति' इत्यपपाठः ।
७. कोशे 'भ्रद्राणि' इत्यपपाठः । ८. कोशे 'अंशैः कक्ष्यदिभि०' इत्यपपाठः ।
९. कोशे 'रोमशस्म्यहम्' इत्यपपाठः । १०. कोशे 'गान्धारीणामिवाहिका' इत्यपपाठः ।
११. कोशे 'गान्धार०' इति पाठः ।
१२. कोशे '०दुभिदीर्घैःघनैश्चोरणिकान्विताः' इत्यपपाठः ।
१३. कोशे 'गान्धार्यं एव गान्धार्य०' इत्यपपाठः ।

पुरुषस्य सकाशाद्वा गम्यमानत्वहेतुतः ।
गर्भ एव [ग]शब्दोक्तो गन्धार्यस्तस्य धारणात् ॥१६७॥
गर्भिण्यो रोमशोपस्था अविकोपस्थ उच्यते ।
प्रीत्यर्थस्यावतेर्योनावविकाऽके[1] प्रसिध्यति ॥१६८॥
गर्भिणीनां सदाचारो यद्रोम्णामप्रकर्त्तनम्[2] ।
गर्भिणीनां [3]यथा योनिस्तथा मे रोमशाकृतिः ॥१६९॥
यूपे बद्धः शुनश्शेपो[4] नमस्कारपुरस्सरम् ।
विश्वान् देवानथाशास्ते स्वदेहस्याभिरक्षणम् ॥१७०॥
वृद्धा एव महान्तोऽत्र बाला एव तथार्भकाः ।
युवानस्तरुणाः प्रोक्तास्तेभ्यश्चाप्याशिनाः[5] परे ॥१७१॥
आसन्नपलितास्ते स्युर्महद्भ्योऽप्यन्य[6] एव ते ।
महद्भ्यश्चार्भकेभ्यश्च युवभ्योऽन्येभ्य एव च ॥१७२॥
विश्वे देवा [7]नमो वोऽस्तु देवान्युष्मान् यजेम च ।
यूपाच्चैव विनिर्मुक्ताः प्रसादाद् भवतां वयम् ॥१७३॥
युष्मान् यक्ष्यामहे[8] सर्वान् मुक्ताः स्मो यदि सर्वशः ।
आत्मनो दीनतामाह दुःखितोऽसौ यदीत्यपि ॥१७४॥
न तां तस्य[ह्य]विज्ञाय दयां कुर्युस्सुरोत्तमाः ।

---

१. कोशे '०नावपि केके' इत्यपपाठः । धा० १।६३१॥
२. कोशे '०मप्रकाशनम्' इति पाठः ।
३. कोशे 'तथा योनिः तथ' इत्यपपाठः ।
४. कोशे '०शेफो' इति पाठः । तथा च मन्त्रवर्णः—
नमो महद्भ्यो नमोऽर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥ ऋ० १।२७।१३।
५. कोशे '०चाप्याशिनः' इत्यपपाठः ।
६. कोशे 'महद्भ्योर्चाण्व' इत्यपपाठः ।
७. कोशे 'नमो चोस्तु देवानुष्मान्' इत्यपपाठः ।
८. कोशे 'यक्षामहे सर्वान् जक्ता स्मो' इत्यपपाठः ।

दयावन्तस्सुरा[1] नित्या भक्तेषु तु विशेषतः ॥१७५॥
आकारः शंसशब्देन युज्यते त्वादितोऽग्रतः ।
आशंसं[2] ज्यायसो देवा मा वृक्षीहाहमायुषः ॥१७६॥
आयुषस्त्विति सामर्थ्यात् [3]मा न आयुरितीरणात् ।
ज्यायस्त्वमपि तस्यैव काङ्क्षितत्वेन हेतुना ॥१७७॥
तस्यैवाशंसनाशंसो दीर्घायुष्यस्य [4]याचनम् ।
उत्तमैकवचोरूपं [5]व्रश्चेर्वृक्षीत्यतो लुङि ॥१७८॥
युष्मत्तः प्रार्थ्यमानस्य [6]मा छैत्सं ह्यायुषस्सुराः ।
बह्वर्थवाचिनः[7] स्थाने मध्यमस्याथवा भवेत् ॥१७९॥
मा छैत्त[8] प्रार्थनां देवाः सफलां कुरुतेह नः ।
गुणस्य ज्यायसो यद्वा युष्मदीयस्य शंसनम् ॥१८०॥
मा छैत्सं[9] सर्वदैवाहं भूयासं शंसितैव च ।
तिरस्सत[10] इति त्वेते प्राप्तस्यार्थस्य नामनी ॥१८१॥
अप्राप्तस्येति पाठोऽत्र केषाञ्चिदुपलभ्यते ।
तिरस्तीर्णमिति[11] प्रोक्तं [12]सतस्संसृतमित्यपि ॥१८२॥
आगतं प्राप्तमित्यर्थो यद्वा प्राप्तं परागतम् ।
निष्ठार्थे [13]तरतेर्धातोर्डिरसि स्यात्तिरस्त्विति ॥१८३॥

---

१. कोशे 'दयावतस्सुराः' इत्यपपाठः ।
२. कोशे 'आशंस ज्यायतो देवाः माद्यक्षीहा०' इत्यपपाठः ।
३. ऋ० १।२४।११॥ ४. कोशे 'वाजनम्' इत्यपपाठः ।
५. कोशे 'व्रश्चेर्वंक्षीत्यतो' इत्यपपाठः । धा० ६।११॥
६. कोशे 'मा जैत्सं घायुष०' इत्यपपाठः ।
७. कोशे विसर्गरहितः पाठः । ८. कोशे 'मा छैस्तत्' इत्यपपाठः ।
९. कोशे 'मा जैत्सं सर्वदेवाहं भूयांसं शंसितेव च' इत्यपपाठः ।
१०. तिरः सत इति प्राप्तस्य । तिरस्तीर्णं भवति । सतः संसृतं भवति । निरु० ३।२०॥
११. कोशे '०तीण्णमिति' इत्यपपाठः ।
१२. कोशे 'सतस्संस्कृतमि०' इत्यपपाठः ।
१३. कोशे 'तदुददतेर्धातोडिरसि' इत्यपपाठः । धा० १।१०१८॥

नासत्यदस्रनामानौ[1] नासत्यावित्युदाहृतौ ।
तद्विरूपैकशेषेण [2]मित्रयोरितिवद् भवेत् ॥१८४॥
नासिकाप्रभवौ[3] वापि [4]सत्यावेत्राश्विनामकौ ।
आगत्य च महाभागौ मा [5]विवेनतमद्य नः ॥१८५॥
वेनतेः[6] कान्तिकर्मत्वाद् [7]विगतेच्छौ कदाचन ।
अस्मान्प्रतीह मा भूतमित्यर्थोऽत्र विवक्षितः ॥१८६॥
गतिकर्मत्वतो[8] वापि यज्ञस्यास्यासमाप्तितः ।
गन्तृत्वस्य निषेधोऽयं तिष्ठतश्चासमाप्तितः ॥१८७॥
विलम्बेन निषेधो वा शीघ्रमागच्छतं त्विति ।
तिरश्चिदपि संप्राप्तावर्ययार्यौ[9] क्रियेश्वरौ ॥१८८॥
स्तुतेश्चैव यजेश्चैव स्वामिनौ तावुभावपि ।
प्रथमाद्विवचः[10] स्थाने याडादेशे [11]सुपां स्विति ॥१८९॥
अर्यये[ति] भवेदेतद् उक्तार्थस्योपपत्तितः ।
प्रथमा वर्तिरित्येषा तृतीयार्थे विनम्यते ॥१९०॥
वर्त्या मार्गेण तीर्थेन [12]चात्वालोत्करदेशतः ।
अथवा वर्तिशब्देन रथ एवाभिधीयते ॥१९१॥

---

१. कोशे 'अदित्यदस्मनामानौ' इत्यपपाठः । मन्त्रवर्णस्तु—
अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम् ॥ ऋ० ५।७५।७॥
२. यथा मित्रश्च वरुणश्चेति मित्रौ, तथा नासत्यश्च दस्रश्चेति नासत्यौ ।
३. कोशे 'नासिकाप्रभवो' इत्यपपाठः । निरु० ६।१३॥
४. कोशे 'सत्याववेतिनामकौ' इत्यपपाठः ।
५. कोशे 'मापिवेनतमद्य' इत्यपपाठः ।
६. कोशे विसर्गरहितः पाठः । निघ० २।६। ७. कोशे 'विगतेच्छो' इत्यपपाठः ।
८. निघ० २।१४॥ ९. कोशे 'संप्राप्तावर्यवारौ' इत्यपपाठः ।
१०. कोशे '०द्विवचस्थाने यद्वादेशे सुपां स्थितिः' इत्यपपाठः ।
११. अष्टा० ७।१।३९॥
१२. कोशे 'चात्वालोकर०'इत्यपपाठः । चात्वालोत्करयोर्मध्यवर्त्तिदेशस्तीर्थमिति याज्ञिक-प्रसिद्धिः ।

आङः स्थाने [1]परीत्येष रथेनायातमध्वरम् ।
तिरश्चिदथवाप्राप्तावायातं दूरतोऽपि नः ॥१६२॥
अहिंसकावहिंस्यौ वा [2]तावदाभ्या ह्युदाहृतौ ।
मध्वेव[3] माध्वमित्युक्तमी [4]मत्वर्थे ततः श्रुतौ ॥१६३॥
माध्वी तौ मधुमन्तौ हि सोमिनौ परिकीर्तितौ ।
श्रुतं शृणुतमित्यर्थो हवमाह्वानमध्वरे[5] ॥१६४॥
स्तुतिर्वा[6] हवशब्दोक्ता [7]ह्वयतेः स्तुतिकर्मणः ।
अर्यशब्दात्[8] क्यचीच्छायाम् अर्ययेत्यपरे विदुः ॥१६५॥
आकारश्च तृतीयार्थे [9]सुपां स्वित्यत्र कल्पितः ।
अर्ययार्येच्छ्येत्यर्थः[10] तथास्मान् कर्तुमीश्वरान् ॥१६६॥
आयातमिति संबन्धः [माध्वी] शब्दं[11] च तेऽन्यथा ।
वर्णयन्ति [12]भृतिः पूर्णो मधुनो माध्व उच्यते ॥१६७॥
गुणावादेशसद्भावाद् माधवो[13] ह्युपपद्यते ।
माध्वं [14]पुनर्यणादेशे नैगमं परिकल्पितम् ॥१६८॥

---

१. कोशे 'परीत्येषो' इत्यपपाठः ।

२. कोशे 'तावदाभ्यामुदाहृतौ' इत्यपपाठः ।

३. कोशे 'मध्यमाधममित्युक्त०' इत्यपपाठः ।

४. छन्दसीवनिपौ च (महाभाष्य ५।२।१०९) ।

५. कोशे '०ह्वानमद्धरे' इत्यपपाठः ।

६. कोशे 'श्रुतिर्वा' इति पाठः ।

७. कोशे विसर्गरहितः पाठः । धा० १।१०५७॥ निघ० ३।१४॥

८. कोशे 'आर्यशब्दात् त्यचीच्छायां' इत्यपपाठः । अष्टा० ३।१।८॥

९. अष्टा० ७।१।३९॥

१०. कोशे 'अर्ययार्यय्य येत्यर्थः कः कस्मात् कर्तुमीश्वराद्' इति पाठः । इतः प्रभृति-त्रिश्लोकी न स्पष्टार्था, कथमपि पाठाः प्रकल्पिताः ।

११. कोशे 'शब्दश्च' इति पाठः ।

१२. कोशे 'द्वतिः' इति पाठः ।

१३. कोशे 'माधवो न्युपपद्यते' इति पाठः ।

१४. द्र०—अष्टा० ६।४।१७५॥

भृतिरेवंविधास्ती[1] [ति से]ह वां मधुनो भृतिः ।
इत्युक्तं गम्यते स्पष्टं तेनैवं तैः[2] प्रकल्पितम् ॥१९९॥
यातयन्ति[3] जगत्सर्वं पीडयन्तीति यातवः ।
यातुधानाश्च[4] ये प्रोक्ता राक्षसा देवविद्विषः ॥२००॥
हवींषि ये विमथ्नन्ति विलोड्याक्षिप्य गृह्णते ।
ते हविर्मथयः प्रोक्तास्तेषामिन्द्रः पराशरः ॥२०१॥
परं शरः प्रकृष्टो वा परेषामथवा शरः ।
अभ्येत्य[5] चापि सल्लोकमाभिमुख्येन [6]दुर्धियः ॥२०२॥
विवासयन्ति[7] ये तेषाम् अपि स्यात् स पराशरः ।
अथवा परिचर्यायां [8]समाम्नानाद् विवासतेः ॥२०३॥
परिचर्याकृतो ज्ञेयाः षष्ठ्युक्ता [9]देवयाजिनः ।
हवींषि[10] ये विमथ्नन्ति [11]तेषामित्यत्र योजना ॥२०४॥
सोऽभ्येत्यभ्येतु नो यज्ञं शक्रः शक्तः स्वकर्मणि ।
दृष्टान्तद्वयमत्राह [12]यथास्वार्थोपबृंहणम् ॥२०५॥
पाणिस्थः[13] परशुर्यद्वद् वनं छिन्दन् [14]व्रजेत् तथा ।
पात्राणि[15] वा यथा कश्चित्तथा भिन्दन्स राक्षसान् ॥२०६॥

---

१. कोशे 'भृतिरेव विधोस्ती' 'हवामृघनो भृतिः' इति पाठः ।
२. कोशे 'ते' इत्यपपाठः । ३. तथा च मन्त्रः—
इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्या विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ॥ ऋ० ७।१०४।२१॥
४. कोशे 'यातुतानाश्च' इत्यपपाठः ।
५. कोशे 'रुत्येत्य वापि बल्लोक०' इत्यपपाठः ।
६. कोशे 'दुर्धियः' इत्यपपाठः । ७. कोशे 'पिपासयन्ति' इत्यपपाठः ।
८. कोशे 'समाम्नात् विवासते' इत्यपपाठः ।
९. कोशे 'देववाजिनः' इत्यपपाठः । १०. कोशे 'हविंषि' इत्यपपाठः ।
११. विवासतां परिचर्याकृतां हवींषि विमथ्नन्ति ये यातवस्तेषां पराशर इत्याशयः ।
१२. कोशे 'यथाज्ञार्थोप०' इति पाठः । १३. कोशे 'पाणिनः' इत्यपपाठः ।
१४. कोशे 'व्रजन्' इति पाठः । १५. कोशे 'पार्श्वाणि' इत्यपपाठः ।

संश्रितान्पथि संप्राप्तान् दूरस्थान् वापि [1]दुष्कृतान् ।
परान्[2] शातयतीत्येवमग्निर्वा परशुस्त्विह ॥२०७॥
वनं भिन्दन् स [3]दाहेन ग्रीष्मे [4]यात्यनिवारितः ।
भेदनस्य च सौकर्यं दृष्टान्तेनोपपादितम् ॥२०८॥
त्वो नेम इति[5] निर्दिष्टे [6]समस्यार्धस्य नामनी ।
नपुंसकस्य[7] निर्देशादिहार्धं हरतेरिति[8] ॥२०९॥
नामनी [9]नैकदेशस्य पुंल्लिङ्गस्य स गोचरः ।
अन्तर्णीतापपूर्वस्य[10] [11]तनोतेरचि कर्तरि ॥२१०॥
तकारोपधयोर्मध्यम् उकारः प्रतिपद्यते ।
यणादे[शे [12]विस]र्गे च नशब्दस्य प्रसिध्यति ॥२११॥
त्व इत्येतदिति प्राहुरन्ये त्वप्रत्यये विदुः ।
इदमेव तु युक्तं स्यात् कल्पनाया लघुत्वतः ॥२१२॥
समुदायादपेतोऽसौ[13] ततो विस्तीर्ण इष्यते ।
अपेत्यस्योपसर्ग[स्य] स्थाने नेति यदा तदा ॥२१३॥

---

१. कोशे 'दुष्कृतात्' इत्यपपाठः ।
२. कोशे 'परायोन्तयतीत्येवमग्निर्व्यापारशु०' इत्यपपाठः ।
३. कोशे 'दाभेन' इत्यपपाठः ।
४. कोशे 'यात्यग्निवारितः' इत्यपपाठः ।
५. त्वो नेम इत्यर्धस्य । त्वोऽपततः । नेमोऽपनीतः । निरु० ३।२०॥
६. समप्रविभागस्येत्यर्थः ।
७. तु०—समप्रविभागे नपुंसकलिङ्गः, अवयववाची पुंल्लिङ्गः । महाभाष्य २।२।२॥
८. निरु० ३।२०॥
९. कोशे 'नेकदेशस्य पुंल्लिगस्य' इत्यपपाठः । नैकदेशस्य नामनी, यतोऽवयववाचिनोऽर्धशब्दस्य पुंल्लिङ्गस्य स निर्देशो गोचर इत्यन्वितार्थः ॥
१०. कोशे '०तावपूर्वस्य' इत्यपपाठः ।
११. धा० ८।१॥
१२. विसर्गे=लोपे ।
१३. कोशे '०दपेतौ सौ' इत्यपपाठः ।

एतेमंप्रत्यये[1] रूपं [2]गुणे नेम इतीदृशम्[3] ।
प्रसङ्गादर्धमित्यस्य[4] वक्त्यर्थं हरतेरिति ॥२१४॥
हरतेः[5] प्रत्ययेऽकारे गुणे वर्णविपर्यये ।
हकारस्य[6] तथा धत्वे [7]भवत्यर्धमितीदृशम् ॥२१५॥
यद्वा [8]धारयतेरेव भवत्यर्धं लघुत्वतः ।
उद्धृ[तं] हि धृतं तस्मात् समुदायात्प्रतीयते ॥२१६॥
उदित्यप्युपसर्गोऽत्र सामर्थ्येनोपवर्णितः ।
ऋध्नोतेरथवा[9] तस्मिन्[10] गुणमात्रे प्रसिध्यति ॥२१७॥
अ[र्द्धभागोऽ][11] न्यापेक्षोऽयं समृद्धोऽतिशयादिति ।
स [12]ऋद्धतम इत्युक्तो विभागस्समलक्षणः ॥२१८॥
बोध[13] बुध्यस्व हेऽग्ने त्वं वच[स]स्तत्त्वमस्य मे ।
महत्तमं[14] तु मंहिष्ठं [15]यन्मे[दातृतमं] वचः ॥२१९॥
प्रभृतं[16] संभृतञ्चैवं मद्वचस्तावकैर्गुणैः ।

---

१. कोशे 'एतेमप्रत्यये' इत्यपपाठः । धा० २।३६॥

२. कोशे 'गुणनेम' इत्यपपाठः ।

३. 'अपनीतः' इति प्रसिद्धो मूलपाठः । अनेन व्याख्यात्रा तु 'अपेतः' इति मूलपाठो विवृतः ।

४. कोशे 'प्रसगादि-र्धमित्यस्य पक्त्यर्थं' इत्यपपाठः । तथा च निरुक्ते—अर्धं हरतेविपरीतात् । धारयतेर्वा स्यादुद्धृतं भवति । ऋध्नोतेर्वा स्याद ऋद्धतमो विभागः । निरु० ३।२०॥

५. धा० १।९४७॥

६. कोशे 'नकारस्य' इत्यपपाठः ।

७. कोशे 'भवत्यर्थमिती०' इत्यपपाठः ।

८. धा० १।९४८॥

९. धा० ५।२४॥

१०. तस्मिन्=अकारप्रत्यये ।

११. कोशे 'अ ··नन्यापेक्षो' इति भ्रष्टः पाठः ।

१२. कोशे 'समृद्धोतिशय इत्युक्तो' इत्यपपाठः ।

१३. बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने ॥ ऋ० १।१४७।२॥

१४. कोशे 'महत्तरन्त' इत्यपपाठः ।

१५. कोशे 'य मं···वचः' इति भ्रष्टोऽपपाठः ।

१६. कोशे 'प्रहृतं' इत्यपपाठः ।

यविष्ठेत्यादि[1] संबुद्धौ यविष्ठो बलवत्तमः ॥२२०॥
यद्वा युवतमस्त्वेव स्वधावानन्नवानिह ।
स्वधाव इति संबुद्धौ स्वधावन्निति [2]भाषिकम् ॥२२१॥
द्वितीयार्थेऽथवा [3]षष्ठ्यो वर्जयित्वात्र मे पदम् ।
यथोक्तं शृणु मे वाक्यम् इत्यर्थोऽत्र विवक्षितः ॥२२२॥
विभक्तं तु जगत्सर्वं द्वेधा तावत्प्रतीयते ।
आसुरञ्चैव दैवञ्च भावमाश्रित्य संप्रति ॥२२३॥
अदातृत्वमयष्टृत्वमस्तोतृत्वमसत्यता ।
नास्तिक्यं[4] वेदनिन्दा च भाव आसुर एव च ॥२२४॥
दातृत्वादिरभिप्रेतो भावो दैवोऽत्र पण्डितैः ।
गीतासु[5] विस्तरेणोक्तौ[6] व्यासेनैतावुभावपि ॥२२५॥
तत्र[7] त्वोऽर्द्धं जगत्तावत् पीयत्यासुरसंभवम् ।
हिनस्त्यर्द्धं[8] सुरान् सर्वान् यागदानादि वर्जयत्[9] ॥२२६॥
अस्तुतौ पीयतिर्यद्वा गृणात्यर्धमितीरणात् ।
अस्तुत्या वक्ष्यते चापि यागदानादिवर्जनम् ॥२२७॥
गृणात्यर्धं तथा देवानभिष्टौति यजत्यपि ।
तयोर्मध्ये पुनः कोऽहं वन्दारुर्दैत्यविद्विषाम् ॥२२८॥
अतो [10]वन्दामि ते [11]तन्वं तनूमग्ने गृणाम्यहम् ।
वैदिकेऽवस्थितं मार्गे ज्ञात्वाग्नेऽनुगृहाण माम् ॥२२९॥

---

१. कोशे 'यविष्ठ्येत्यादि संबुद्धौ यविष्ठयो' इत्यपपाठः । मन्त्रे 'यविष्ठ' 'स्वधावः' 'अग्ने' इत्येतानि पदानि सम्बुद्धौ ।
२. कोशे 'भाषितम्' इत्यपपाठः ।
३. कोशे 'षष्ठ्यौ' इत्यपपाठः ।
४. कोशे 'नस्तिक्यं' इत्यपपाठः ।
५. द्र०—भगवद्गीता अ० १६ ।
६. कोशे 'विस्तरेणोक्तो' इत्यपपाठः ।
७. कोशे 'तत्र त्वोर्ध्वं' इत्यपपाठः ।
८. कोशे 'हिनत्यर्धौ' इत्यपपाठः ।
९. कोशे 'वर्जयन्' इत्यपपाठः ।
१०. 'वन्दे' इत्येव साधुः ।
११. कोशे 'तत्वं तनुमग्नं' इत्यपपाठः ।

नेमे[1] देवा इतीमां च नेमस्योदाहृतिं विदुः ।
नेमे इति पदं केचित् सप्तम्यन्तं प्रचक्षते ॥२३०॥
अर्धे देवास्तथैवार्धे [2]वासुकेरसुराः श्रिताः ।
संग्रामस्याथवार्धे स्युर्देवा [3]अर्धेऽसुरास्तथा ॥२३१॥
सर्वादित्वात्[4] तु नेमस्य नेमस्मिन्निति सप्तमी ।
प्र[5] नेमस्मिन्नितीहापि तादृश्येवोपलभ्यते ॥२३२॥
प्रथमाया [6]जसोदं स्यान्नेमे पदमतो ध्रुवम् ।
अर्धं देवास्तथैवार्धम् असुरा जगतस्त्विति ॥२३३॥
युज्यतेऽर्थोऽस्य[7] वाक्यस्य द्वै[वि]ध्यं च पुरोदितम् ।
युक्तिमानपि चार्थो यः पूर्वोऽयं कल्प्यहेतुकः ॥२३४॥
ऋक्षाः[8] स्तृभिरितीमे तु स्यातां [8]नक्षत्रनामनी ।
स्तृभिरित्येव दृष्टत्वात् तृतीयान्तमुदाहृतम् ॥२३५॥
स्तृणीत्येवान्यथा[9] ब्रूयात् विभक्तिर्न विवक्षिता ।
नक्षत्राणीति रूपं [10]स्याद् नक्षतेर्गतिकर्मणः ॥२३६॥
कारके कर्तरि त्रे तु नक्षन्त्येव हि सर्वदा ।
देशान्तराणि दृष्ट्वा च गन्तृत्वमनुमीयते ॥२३७॥
नेमानीत्यादिना[11] चापि [12]गतिमत्तात्र वर्णिता ।

---

१. कोशे 'न मे' इत्यपपाठः । नेमे देवा आसन्नेमेऽसुराः । मै० सं० १।११।६॥

२. कोशे विसर्गरहितः पाठः । ३. कोशे 'अर्धेसुरान्तथा' इत्यपपाठः ।

४. कोशे 'सर्वादित्वा तु' इत्यपपाठः । द्र०—अष्टा० १।१।२६॥

५. ऋ० १०।४८।१०॥ ६. जसि—बहुवचने ।

७. कोशे 'युज्यर्धोस्य' इत्यपपाठः ।

८. ऋक्षाः स्तृभिरिति नक्षत्राणाम् । नक्षत्राणि नक्षतेर्गतिकर्मणः । नेमानि क्षत्राणीति च ब्राह्मणम् । ऋक्षा उदीर्णानीव ख्यायन्ते । स्तृभिः स्तीर्णानीव ख्यायन्ते । निरु० ३।२०॥

९. कोशे 'स्तृणी०' इत्यपपाठः ।

१०. कोशे 'स्यानक्षते०' इत्यपपाठः । धा० १।६६२॥

११. तु०—शत० ब्रा० २।१।२।१८-१९॥

१२. कोशे 'गतिमन्तोत्र वर्णिताः' इत्यपपाठः ।

स्थैर्यार्थस्य[1] [2]क्षदेस्तस्मिन् नक्षत्राण्याह तन्नभि ॥२३८॥
स्थिराण्येतानि नैव [3]स्युर्गच्छन्त्येवाम्बरान्तरे ।
क्षयते:[4] किं[नु]वैतानि न क्षीयन्ते कदाचन ॥२३९॥
नक्षत्राणि न नश्यन्ति तारकाः प्रप[त]न्त्यपि ।
अदृश्यत्वं प्रपद्यापि दृश्यन्ते तानि सर्वदा ॥२४०॥
उपयोगस्तु नानेन [5]प्रकृते कश्चिदस्ति नः ।
अतोऽस्य ब्राह्मणस्यार्थः पूर्वोक्तः परिगृह्यते ॥२४१॥
निरुक्तिरपरा यद्वा ब्राह्मणोक्त्या [6]प्रदर्शिता ।
ईर्तेऋकारमादाय[7] तस्य [8]ख्यातिमनन्तरम् ॥२४२॥
सप्रत्यये तथाकारे ह्रसिते यस्य लोपतः ।
खकारस्य ककारत्वे प्रत्ययस्यापि षत्वतः ॥२४३॥
ऋक्षा[9] [10]इत्यवतिष्ठेत तथार्थस्योपपत्तितः ।
उदीर्णानीव तान्यूर्ध्वम् ईरितान्येव केनचित् ॥२४४॥
ख्यायन्तेऽस्तंगते सूर्ये नक्षत्राणि समन्ततः ।
ऋक्षा इति ततस्तानि भण्यन्ते लोकवेदयोः ।२४५॥
स्तृभिस्त्वति[11] तृतीयायां [12]तरतेः क्विपि सागमे ।
तीर्णानीवेति निर्देशात् ख्यात्यर्थोऽर्थात्समीरितः ॥२४६॥

---

१. कोशे 'धैर्यार्थस्य क्षते तस्मिन्' इत्यपपाठः ।

२. अयं धातुर्धातुपाठेषु न संगृह्यते । उणादौ (४।१६८) तु क्षदेस्त्रप्रत्ययो विहितः 'क्षत्रम्' इति सिद्धये । तस्मिन्=त्रप्रत्यये ।

३. कोशे 'स्युर्गच्छन्नेवांबरा०' इत्यपपाठः ।

४. कोशे 'क्षीयन्ते कि वैतानि' इत्यपपाठः । धा० १।२५५॥

५. कोशे 'प्रकृतेः' इति सविसर्गः पाठः । ६. कोशे 'पर्दशिता' इत्यपपाठः ।

७. कोशे 'ईर्ते तृकार०' इत्यपपाठः । धा० २।५८॥

८. कोशे 'खातिमनन्तरम्' इत्यपपाठः । धा० २।५१॥

९. ईर् ख्या स=ऋ ख्या स=ऋ ख्य स=ऋक्स=ऋक्ष ।

१०. कोशे 'इत्यवनिष्ठेत' इत्यपपाठः । ११. कोशे 'स्मृभि०' इत्यपपाठः ।

१२. कोशे 'तरतेत्वपि' इत्यपपाठः । धा० १।१०१८॥

अमी[1] ये निहिता[2] ऋक्षा उच्चा तूच्चैरवस्थिताः ।
यद्रात्रौ ते प्रदृश्यन्ते [3]दिवेयुर्युञ्जते क्वचित् ॥२४७॥
चन्द्रमाश्चैव यन्नक्तं दीप्यमानोऽम्बरे व्रजेत् ।
एतानि त्रीण्यदब्धानि हिंसितानि न केनचित् ॥२४८॥
वरुणस्योत्तमस्यैव कर्माणि स्युरसंशयम् ।
आदित्येऽस्तंगते व्यक्तं [4]दृश्यन्ते तान्यथोदितम् ॥२४९॥
रश्मिना च सुषुम्नेन चन्द्रमा [5]ज्योतिषस्तथा ।
उदिते च न दृश्यन्ते छादितान्य[स्य]रश्मिभिः ॥२५०॥
वरुणस्यैव कर्माणि तानि तस्मादसंशयम् ।
आयुष्मन्तमसौ कुर्याद् मामित्यत्र [6]प्रकल्प्यते ॥२५१॥
विचेता[7] विविधज्ञानो हस्कर्ता हासकृच्च सः ।
ह्रस्वत्वञ्चान्तलोपश्च [8]नैगमावत्र सम्मतौ ॥२५२॥
सर्वेषामेव यज्ञानां मध्ये गेहेष्ववस्थितः ।
अग्निर्हासस्य कर्तैव [9]तुष्टस्सम्यक्प्रयोगतः ॥२५३॥
प्रकाशो वाऽत्र हासस्स्यात् तस्य[क]र्तैव [10]स स्फुटम् ।
हस्तकृद्वा स यज्ञानां हस्तं तेभ्यः प्रयच्छति ॥२५४॥
गृह्णात्वेतानिति [11]त्वर्थंस्तलोपोऽत्रापि कल्पितः ।
द्युलोक इव नक्षत्रैर्द्योतते यः स्वरश्मिभिः ॥२५५॥

---

१. अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ ऋ० १।२४।१०॥

२. कोशे 'निहता ऋक्षाः उच्चा तूचैरव०' इत्यपपाठः ।

३. कोशे 'दिवैयुर्युच्यते' इत्यपपाठः ।

४. कोशे 'दृश्यन्ने' इत्यपपाठः ।

५. यथाकोशं पाठः !

६. यूपे नियुक्तस्य शुनःशेपस्येदम् आर्षम्, तस्मादयं वाक्यशेषः प्रकल्प्यत इत्यभिप्रायः ।

७. ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः ।
विश्वेषामध्वराणां हस्कर्तारं दमेदमे ॥ ऋ० ४।७।३॥

८. कोशे 'नैगमापत्र' इत्यपपाठः ।

९. कोशे 'तुष्टिस्स०' इति पाठः ।

१०. कोशे 'सत्स्फुटम्' इत्यपपाठः ।

११. कोशे 'त्वर्थः त्वलोपो०' इत्यपपाठः ।

तं पश्यन्तो वयं देवं भूयास्म इति कल्प्यते ।
साकाङ्क्षत्वादथान्यो[1] वा वाक्यशेषोऽस्य कल्प्यताम् ॥२५६॥
सप्तम्यर्थे द्वितीयान्यैर्द्यामित्येषोपवर्णिता ।
द्वितीयार्थे तृतीया च स्तृभिरित्यपि योजिता ॥२५७॥
दिवि[2] स्तृणीव पश्यन्तो यज्ञेषु बहुधा स्थितम्[3] ।
स्तुम इत्येव शेषोऽस्य यजाम इति वा भवेत् ॥२५८॥
नामनी [4]सीमिकानां तु वम्रीभिरुपजिह्विकाः[5] ।
इत्याम्नाये[समाम्नाते]वमनाद्वम्रच[6] ईरिताः ॥२५९॥
वमन्ति ता मृदं [7]क्षोदम् उदकं च तथा क्वचित् ।
वमते[8] रटि वम्र[चः]स्युः पुंसि वम्रोऽपि सिध्यति ॥२६०॥
स्त्रीपुंसयोरयं दृष्टो [9]वम्रीभिर्वम्र इत्यपि ।
सीमिकाजातिवाचित्वं शब्दस्यास्य प्रचक्षते ॥२६१॥
स्त्रीलिङ्गेन प्रयोगस्य लोके स्पष्टतरो यतः ।
अतो वम्रीभिरित्येव पाठोऽत्रास्योपपद्यते ॥२६२॥
स्यमतेर्वमनार्थस्य[10] यद्वा [11]वैक्लव्यकर्मणः ।
इके[12] यस्य तथैवेत्वे सीमिका इति सिध्यति ॥२६३॥
स्यमन्ति हि वमन्त्येता मृदं क्लेदमथोज्वलम् ।
यत्र क्व च खनामेति [13]तत्रासां श्रूयते रवः ॥२६४॥

---

१. कोशे 'साकाक्षत्वाद०' इत्यपपाठः ।

२. कोशे 'दिवस्तृणीव' इत्यपपाठः । ३. अग्निमिति शेषः ।

४. कोशे 'सीमितानान्तु' इत्यपपाठः । वम्रीभिरुपजिह्विका इति सीमिकानाम् । वम्रचो वमनात् । सीमिका स्यमनात् । उपजिह्विका उपजिघ्रयः । निरु० ३।२०॥

५. कोशे विसर्गरहितः पाठः । ६. कोशे 'वमनाद्वम्यं' इत्यपपाठः ।

७. कोशे 'क्षोभं' इत्यपपाठः । ८. धा० १।८३४॥

९. कोशे 'वर्मीभिर्वम्र' इत्यपपाठः ।

१०. कोशे 'समतेवमना०' इत्यपपाठः । पाणिनीयधातुपाठे स्यमतिः शब्दार्थकः, निघण्टौ (२।१४) च गतिकर्मा । ११. पाणिनीयधातुपाठे समतिर्वैक्लव्ये पठ्यते ।

१२. कोशे 'ईके यस्य तथैवत्वे' इत्यपपाठः ।

१३. कोशे 'तथा सां श्रयते' इति पाठः ।

उपजिघ्रचो[1] विनिर्दिष्टास्ता एवोपजिह्विकाः ।
उपजिघ्रन्ति[2] ता नित्यम् उपलिहन्ति संगतम् ॥२६५॥
पटु घ्राणेन्द्रियं तासां बलवत्किल सर्वदा ।
जिघ्रादेशस्य दृष्टत्वात् न संज्ञावचनं त्विदम् ॥२६६॥
उपघ्र इति संज्ञायां व्याघ्रवत्ते प्रसज्यते ।
ईकारान्तत्वतश्चायं[3] जातिशब्दः प्रतीयते ॥२६७॥
जातेरस्त्रीति[4] वाक्येन तदन्तत्वं तथोदितम् ।
पाघ्राध्मेत्यादिसूत्रेण[5] ततः शप्रत्यये त्वतः ॥२६८॥
जिघ्रादेशस्य[6] युक्तत्वाद् उपजिघ्र[च]इतीष्यते ।
पाद्युपक्षरणाद्वैवं[7] पर्यायेणोपजिह्विकाः ॥२६९॥
इत्यस्यार्थो विनिर्दिष्टो निरुक्तं तत्पदं तथा ।
उपजिघ्रीपदस्थस्य[8] घकारस्य हकारतः ॥२७०॥
रेफस्यापि वकारत्वमिकारत्वं तथा कनि ।
ईकारस्य तु संज्ञायाम् एवं ता उपजिह्वका[:] ॥२७१॥
लाघवार्थं द्वयोरेकामृचं[9] भाष्यकृदब्रवीत् ।
गव्यमाज्यं[10] दृढं दारु प्रयोगो भार्गवोत्थितः ॥२७२॥
उक्त्वा न हि म[11] इत्यादि[12] यदत्तीत्यग्निमब्रवीत् ।
यदत्ति भक्षयत्येषा काष्ठमत्रोपजिह्वका ॥२७३॥

---

१. कोशे 'उपजीघ्रयोविनिर्दिष्टास्त' इत्यपपाठः ।
२. कोशे 'उपजिघ्रति ता नित्यं उपसंहन्ति' इति पाठः ।
३. कोशे 'इकार०' इत्यपपाठः ।
४. जातेरस्त्रीविषयादयोपधात् । अष्टा० ४।१।६३॥
५. अष्टा० ३।१।१३७॥
६. अष्टा० ७।३।७८॥
७. कोशे 'पाद्य्पक्षर०' इति पाठः ।
८. कोशे 'उपजिघ्रिपद०' इत्यपपाठः ।
९. वम्रीभिः पुत्रमग्रुवो अदानम् (ऋ० ४।१९।९) इति क्वचिदुपलभ्यमानो मूलपाठो दुर्गनीलकण्ठाभ्यां न दृष्टः । स्कन्दग्रन्थोऽत्र नोपलभ्यते ।
१०. कोशे 'दृढान्दारु' इति पाठः ।
११. ऋ० ८।१०२।१९॥
१२. यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतम् ॥ ऋ० ८।१०२।२१॥

प्रसिद्धोद्देहिकेत्येव यच्च वम्रोऽतिसर्पति ।
सारमुद्देहको [1]गच्छेदगत्यात्तुमशक्नुवन् ॥२७४॥
तदु[2] ते सर्वमेवास्तु घृतं ते प्रीतिवर्धनम् ।
ऊर्दरं[3] कृदरं चेति स्याताभावपनस्य तु ॥२७५॥
नामनी पठिते शास्त्रे ओप्यतेऽस्मिन्यवादिकम् ।
इत्यावपनमित्युक्तं कुसूलं [4]गोणिकादि वा ॥२७६॥
कस्मादेवोर्दरं[5] प्रोक्तमुद्दीर्णं तु भवत्यतः ।
उत्पूर्वस्य [6]दृणेस्सिद्धमुकारस्य [7]तु दैर्ध्यतः ॥२७७॥
दकारस्यापि रेफत्वे [8]प्रत्ययेऽकार एव तत् ।
तदुच्छ्रितञ्च दीर्णेऽर्थे मध्यमो विपुलत्वतः ॥२७८॥
यद्वोर्ध्वदरमेवैतद्[9] उक्तमुद्दीर्णमित्यपि ।
उपर्यस्य [10]दरं छिद्रमस्तीत्येवमुदीरितम् ॥२७९॥
यद्वेर्तेरूर्जपूर्वस्य[11] जकारस्य दकारतः ।
ईकारस्य तथैवात्वे [12]भवत्यपि तथाविधम् ॥२८०॥
उर्जयद्बलवद् ध्ये[व]मीर्ण[13] प्रेरितमिष्यते ।
कुर्वन् बलवदात्मानं धान्यपूर्णतयेरितम् ॥२८१॥

---

१. कोशे 'गच्छेदकित्याकूमशक्नुवत्' इत्यपपाठः ।

२. कोशे 'दुदतेस्सर्व०' इत्यपपाठः ।

३. ऊर्दरं कृदरमित्यावपनस्य । ऊर्दरमुद्दीर्णं भवति, ऊर्जे दीर्णं वा ।...कृदरं कृतदरं भवति । निरु० ३।२०॥

४. कोशे 'वोष्ण्यकादि' इति पाठः ।

५. कोशे '०वोद्दृत्प्रोक्तमुदीणन्तु तुवत्यतः' इत्यपपाठः ।

६. दृणातेरित्यर्थः । धा० ९।२३॥

७. कोशे 'तदैघ्यत' इत्यपपाठः । ८. कोशे 'प्रत्ययोकार' इति पाठः ।

९. कोशे 'यद्वोर्ध्वतरमैवतत् उक्तमुदीर्णं०' इत्यपपाठः ।

१०. कोशे 'दरिच्छिद्रम०' इत्यपपाठः ।

११. 'धा० २।८॥ १२. कोशे 'दवत्यपि' इत्यपपाठः ।

१३. कोशे '०वध्येमदीर्णं' इत्यपपाठः ।

ऊर्जे दीर्णमिति त्वन्ये[1] दीर्णमन्नार्थमेव तत् ।
वसु[2] यत् त्रिषु लोकेषु राजा [3]यस्तस्य यः प्रभुः ॥२८२॥
सोमैः पूरयतेन्द्रं तं [4]यवेनेवोर्दरं क्रतौ ।
तदिन्द्रपूरणं सोमैरस्तु [5]वोऽध्वर्यवस्सदा ॥२८३॥
अन्तरिक्षं[6] पृथिव्यत्र [7]क्षमा भूमिः क्रमोक्तितः ।
उक्तं तत्कृदरं चापि तलोपेऽस्य कृतो दरः ॥२८४॥
यवादीनां निधानार्थं बिलमस्योपकल्पितम् ।
समिद्ध इति [8]मन्त्रोऽयम् अश्वस्याप्रीषु पठ्यते ॥२८५॥
यजुर्वेदे तथा चोक्तम्[9] इत्यश्वस्याप्रिय इति ।
एता एवेह युक्ताः स्युः प्रत्यक्षोक्तेति शेषतः ॥२८६॥
प्रत्यक्षं हि वचो नित्यम् अनुमेयस्य बाधकम् ।
समिद्धस्स[म्य]गिद्धस्सन् [10]यज्ञमञ्जन् प्रकाशयन् ॥२८७॥
कृदरं सर्वबुद्धीनां स्थानमावपनं च सन् ।
पिन्वमानः[11] पिबन्नाज्यमिव त्वं[12] मधुरं सदा ॥२८८॥

---

१. अयमेव प्रसिद्धः पाठः ।

२. कोशे 'वसु य त्रिषु' इत्यपपाठः । मन्त्रवर्णस्तु—
अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा ।
तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥ ऋ० २।१४।११॥

३. कोशे 'नस्तस्य' इत्यपपाठः ।

४. कोशे 'यवेपोर्दरं कृतौ' इत्यपपाठः ।

५. कोशे 'वोध्वर्यव०' इत्यपपाठः ।

६. कोशे 'आन्तरिक्षं' इत्यपपाठः । पृथिवी पदम् 'अन्तरिक्षनामसु' (निघ० १।३) पठितम् ।

७. कोशे 'कषणा भूमिक्रमो०' इत्यपपाठः ।

८. समिद्धो अञ्जन् कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः ।
वाजी महन्वाजिनं जातवेदो देवानां वक्षि प्रियतमा सधस्थम् ॥ मा० सं० २९।१॥ तै० सं० ५.१।११॥

९. कोशे 'चोक्त इत्यश्वस्याप्य इत्यपि' इत्यपपाठः । तै० ब्रा० ३।९।४।८॥

१०. कोशे 'यजसन्' इत्यपपाठ ।

११. कोशे 'पिबमानः' इत्यपपाठः ।

१२. कोशे 'त्वां' इत्यपपाठः ।

वाजी वेजनवांश्चापि [1]वाजिनं प्रापयन् भयम् ।
प्रियमिष्टं सुरेशानां त्वमग्ने भगवन्निमम् ॥२८९॥
अवदानत्वमापन्नं[2] जातवेदो [3]वह स्वयम् ।
सधस्थं[4] प्रति देवानां समानं स्थानमाश्रयम् ॥२९०॥
आकारोऽत्र प्रतीत्यर्थे स्थानमौत्तरवेदिकम् ।
स्वर्गाख्यं वा द्वयं तेषां भवेत्साधरणं स्फुटम् ॥२९१॥
क्रूदरं सर्वबुद्धीनाम् इत्येतदुपपद्यते ।
रम्भः पिनाकमित्येते[5] स्यातां दण्डस्य नामनो ॥२९२॥
कदलीगर्भदण्डोऽपि लोके रम्भोऽभिधीयते ।
एषा [6]रम्भोरूरित्यादौ दण्डमात्रं परे विदुः ॥२९३॥
आरभन्ते[7] यतश्चैनमवष्टम्भाय [8]दुर्बलाः ।
आलभन्ते ततो दण्डो रम्भ इत्यभिधीयते ॥२९४॥
दण्डं[9] जीर्णा [10]इवात्र त्वामाररम्भारभामहे ।
अलभन्ते यथा जीर्णा दण्डमात्मावलम्बनम् ॥२९५॥
आश्रयामो वयं [11]तद्वत् त्वामेव शवसस्पते ।
शवो बलमिह प्रोक्तम् इन्द्रश्चास्य पतिः स्मृतः ॥२९६॥
क्रिञ्चोश्मसि[12] वयं देवं सधस्थे [13]त्वेति लक्षणे ।
समाने सर्वदेवानां यष्टुं त्वां कामयामहे ॥२९७॥

---

१. वहेत्यनया क्रिययास्यान्वयः । २. कोशे 'अपदानत्व०' इत्यपपाठः ।
३. कोशे 'वनस्वयम्' त्यपपाठः । ४. कोशे 'सवस्तं' इत्यपपाठः ।
५. रम्भः पिनाकमिति दण्डस्य । रम्भ आरभन्त एनम् ।...पिनाकं प्रतिपिनष्टयनेन । निरु० ३।२१॥
६. कोशे 'रंभोरुरित्यादौ' इत्यपपाठः ।
७. कोशे 'अरभन्ते' इत्यपपाठः । ८. कोशे 'दुर्बलम्' इत्यपपाठः ।
९. आ त्वा रम्भं न जिव्रयो ररम्भा शवसस्पते ।
उश्मसि त्वा सधस्थ आ ॥ ऋ० ८।४५।२०॥
१०. कोशे 'इव त्रा त्वामा०' इत्यपपाठः ।
११. कोशे 'तच्च त्वामेव शवसंस्पते' इत्यपपाठः ।
१२. कोशे '०चोग्मसि' इत्यपपाठः । १३. 'कोशे 'सत्रस्थे वेति' इत्यपपाठः ।

आङाभिमुख्यवाच्यत्र यष्टुमित्यभिनाश्रितम् ।
रम्भं[1] नेत्युपमार्थोऽयं जिघ्निशब्देन योजितः ॥२९८॥
जीर्णा इति तु [2]पाष्कल्यम् उपमानस्य [2]पश्यता ।
एवं जीर्णगतस्त्वत्र [3]प्रयत्नः ख्यापितोऽन्यथा ॥२९९॥
दण्डगतः[4] प्रसज्येत तद्वदिन्द्रगतस्तथा ।
एनेनानेन[5] दण्डेन शत्रुं प्रतिपिनष्टयतः ॥३००॥
दण्डः [6]पिनाकम् इत्युक्तः पिनाकं स्यात्पिषेरतः ।
प्रत्ययोऽस्यान्तलोपी स्यात् करणे नाकमित्ययम् ॥३०१॥
प्रातिकूल्ये प्रतीत्यत्र तच्च निर्दयतात्मकम् ।
हिनस्ति यो हि दण्डेन [7]निर्दयं तं प्रचक्षते ॥३०२॥
त्रैयम्बकाः[8] पुरोडाशा[वस्]त्रे प्रग्रथिता भृशम् ।
स्थाप्यन्तेऽनेन[9] मन्त्रेण [10]स्थाणौ[शु]ष्के [11]विधानतः ॥३०३॥
एष[12] ते रुद्र भागोऽयं[13] [प]त्रस्थोऽपूपलक्षणः ।
तत्त्वं[14] जुषस्व सेवस्व गृहाणास्माभिराहृतम् ॥३०४॥
तेन पथ्यदनेनैव [15]परो मूजवतो गिरेः ।
याहि[16] देशमतीत्येमं [प्र]क्र[ष्य धनुरा]त्मनः ॥३०५॥

---

१. कोशे 'रंभणेत्युपमा०' इत्यपपाठः ।
२. यथाकोशं पाठः । शुद्धः पाठोऽत्रोहनीयः ।
३. कोशे विसर्गरहितः पाठः ।
४. कोशे 'दण्डाग्रतः' इत्यपपाठः ।
५. कोशे 'एतेनानेन' इत्यपपाठः ।
६. कोशे 'पिनाक इत्युक्तः पिनाकस्योत्पिषेरतः' इत्यपपाठः । धा० ७।१५॥
७. कोशे 'निर्दयन्त' इत्यपपाठः ।
८. कोशे 'त्रयंबकाः' इत्यपपाठः ।
९. कोशे 'स्थाप्यन्ते तेन' इति पाठः ।
१०. कोशे 'स्थाणो···ष्क विधा०' इत्यपपाठः ।
११. साकमेधाख्ये चातुर्मास्ये पर्वणि त्रैयम्बकेष्टाविति शेषः ।
१२. एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतिहि ।
अवततधन्वा पिनाकहस्तः कृत्तिवासाः ॥ तै० सं० १।८।६॥
१३. कोशे 'भागोय त्रस्थो०' इत्यपपाठः ।
१४. कोशे 'तत्वण्डुषस्त्व' इत्यपपाठः ।
१५. कोशे 'परिरामूचतो' इत्यपपाठः ।
१६. कोशे 'यानि' इत्यपपाठः ।

प[ाणि]ना धारयन्[1] दण्डं चर्मवामा महेश्वरः ।
आज्यमेव धनुः [2]कैश्चित् पिनाकं मन्यते बुधैः ॥३०६॥
धनुर्माहेश्वरं प्राहुः पिनाकं शब्दकोविदाः ।
मेना[3] ग्ना इति स्त्रीणां [4]नामनी पठिते त्विह ॥३०७॥
स्त्रियस्तु[5] [स्त्यायतेर्] धातो[ड्रंटच]पत्रपवाचिनः ।
टिलोपे[6] ङीपि सिद्धं [7]स्याद् लोपो व्योर्वलि यस्य च ॥३०८॥
तस्यापत्रपणार्थत्वं तद्वाच्ये तस्य भावतः ।
लज्जोत्पादनशक्तेर्हि स्त्रीदेहः [8]क्रियतेऽणभिः ॥३०९॥
लज्जावन्त्योऽथ[9] [वा]नार्यो दृश्यन्ते प्रायशो भुवि ।
मेना [10]मानयतेर्धातोः कर्मण्यप्रत्यये कृते ॥३१०॥
आकारस्य [11]तथैवैत्वे पूजार्थस्योपपादिताः[12] ।
श्वशुरेण तथा [13]श्वश्र्वा भर्त्रा पित्रादिभिस्तथा ॥३११॥
नित्यं [14]पूजयितव्यास्ता वस्त्रालङ्कारभोजनैः ।
गमेर्ग्ना[15] इति रूपं [16]स्यात् प्रत्यये नसि[17] कर्मणि ॥३१२॥

---

१. कोशे 'प···नाधरयत्' इति भ्रष्टः पाठः ।

२. कोशे 'केचित् गिनाकं मयते बुधाः' इत्यपपाठः ।

३. कोशे 'मेन···ना इति' भ्रष्टः पाठः । मेना ग्ना इति स्त्रीणाम् । स्त्रियः स्त्यायतेरपत्रणकर्मणः । मेना मानयन्त्येनाः । ग्ना गच्छन्त्येनाः । निरु० ३।२१॥

४. कोशे 'नामनि' इत्यपपाठः ।

५. कोशे 'स्त्रियन्तु···धातो ··पत्रवाचिनः' इति भ्रष्टः पाठः । धा० १।६५६॥

६. कोशे 'टिलोपि' इत्यपपाठः ।

७. कोशे 'स्या लोपो व्योर्विल' इत्यपपाठः । अष्टा० ६।१।६४॥

८. शुद्धः पाठोऽत्रोहनीयः ।

९. कोशे 'लज्जवत्यथ' इत्यपपाठः ।

१०. धा० १०।२६६॥

११. कोशे 'तथैवत्वें' इत्यपपाठः ।

१२. कोशे '०पादिता' इति पाठः ।

१३. कोशे 'श्वश्रोः भत्रा' इत्यपपाठः ।

१४. कोशे 'पूजयितव्यंस्तं' इत्यपपाठः ।

१५. कोशे 'गमेग्ना' इत्यपपाठः । धा० १।१०३१॥

१६. कोशे 'स्याः' इत्यपपाठः ।

१७. कदाचिदत्र 'ङ्नसि' इति पाठः स्यात् ।

गच्छन्त्येना[1] हि रत्यर्थम् अपत्यार्थं च मानवाः ।
आ[2] प्र द्रवाभिमुख्येन प्रगच्छास्मान्प्रति[3] प्रभो ॥३१३॥
हरिवो हरिवन्निन्द्र मा वि वेनः कथञ्चन ।
गतौ विलम्बने वापि कान्तौ वा [4]वेनतिस्त्विह ॥३१४॥
मा गास्त्वं मा विलम्बिष्ठाः शीघ्रमायाहि नोऽध्वरम् ।
विगतेच्छो[5] हि मा त्वं भूर्यज्ञं प्रत्यथवा स्तुतिम् ॥३१५॥
पिशङ्गविषया रातिर्यस्य [6]यत्कर्तृका त्विह ।
उक्तः पिशङ्गरातिस्स पिशङ्गं काञ्चनादिकम् ॥३१६॥
दानं[7] रातिरिति प्रोक्तं [8]दायकः काञ्चनादिनः ।
पिशङ्गस्य हिरण्यादेर्दातरागत्य[9] सत्वरम् ॥३१७॥
आभिमुख्येन सेवस्व कृपयानुगृहाण नः ।
कस्मात्त्वं प्रार्थ्यसे यत्नादिति चेदभिधीयते ॥३१८॥
वस्योऽन्यद्वसनीयं त्वत् त्वत्तो नास्ति परं क्वचित् ।
नानुग्रहपरं किञ्चित्त्वत्तोऽन्यद्दैवतान्तरम्[10] ॥३१९॥
यद्वा वस्यो वसीयोऽत्र वसुमत्तरमीप्सितम् ।
त्वमेव वसुमान्यस्मात् तस्मादेवमुदीर्यसे ॥३२०॥
वसुमानाश्रयो वापि त्वमेवेहेति निश्चितम् ।
यतश्च कत्थदेव त्वम् अमेनानपि मानवान् ॥३२१॥

---

१. कोशे 'गच्छन्त्येता' इति पाठः ।
२. आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते अभि नः सचस्व ।
न हि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ ॥ ऋ० ५।३१।२॥
३. कोशे 'प्रगच्छास्मात्प्रति' इत्यपपाठः ।
४. कोशे 'पेनतिन्त्विह' इत्यपपाठः । निघ० २।१४॥ २।६॥
५. कोशे 'विगतेच्छा मा गता भू यज्ञं' इत्यपपाठः ।
६. कोशे 'यत्कर्तृतास्त्विह' इत्यपपाठः । ७. कोशे 'दानाराति०' इत्यपपाठः ।
८. कोशे 'ज्ञातो कः' इत्यपपाठः ।
९. कोशे '०दातारं गत्य सत्वरः' इत्यपपाठः ।
१०. कोशे 'देववतात्तरम्' इत्यपपाठः ।

अस्त्रीकान्[1] जनिसंयुक्तान् कृतवान्वा करोषि वा ।
जनयो[2] नेति वाक्यादौ [3]भार्य्यः स्युर्जनयः स्फुटम् ॥३२२॥
ता[ए]वेहापि निर्दिष्टा उक्तोऽर्थो युक्तिमानिति ।
त्वमेव [4]प्रार्थ्यसे तस्मात्सर्वथानुगृहाण नः ॥३२३॥
वासःप्रतिग्रहे[5] मन्त्रे [6]देवस्य त्वेति पठ्यते ।
ऋत्विक्त[7] प्रतिगृह्णातु वक्त्येवं विकृतौ क्वचित् ॥३२४॥
देवो [8]दानादिधर्मत्वात् सवितादित्य उच्यते ।
प्रसवस्य तु [9]कर्तृत्वाद् अनुज्ञा प्रसवस्त्विह ॥३२५॥
हे[10] वासः प्रतिगृह्णामि त्वा त्वां तत्प्रसवे स्थितः ।
स्वतन्त्रो न[हि]गृह्णामि बा[हुभ्यामश्वि]नोस्तथा ॥३२६॥
गृह्णामि न स्वहस्ताभ्यां हस्ताभ्यां [11]पूष्ण एव च ।
गृह्णामि न स्वहस्ताभ्याम् इति ध्यानमिहेप्सितम् ॥३२७॥
मन्त्रवर्णोत्थितं ज्ञानं विधिना चानिवारितम् ।
[स्त्रिभिस्त्वं कर्त्तितं पूर्वम् अपसैरल्पकैस्ततः] ॥३२८॥
विस्तारितं[12] पुनस्ताने वाययित्वा प्रसारितम् ।
[धियोऽ]न्तर्णीतमत्वर्थो धीमन्तो बुद्धिमत्तमाः ॥३२९॥

---

१. कोशे 'अस्त्रीकञ्जनिसंयुक्ता' इत्यपपाठः । २. ऋ० १।६२।१०॥
३. कोशे 'भय्य' इत्यपपाठः । ४. कोशे 'प्राथ्यसे' इत्यपपाठः ।
५. सोमयागे माध्यन्दिनसवने वासोदक्षिणा भवति । तत्प्रतिग्रह इत्यर्थः ।
६. देवस्या त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ग्नास्त्वा कृन्तन्नपसोऽतन्वत धियोऽवयन्वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे । क इदं कस्मा अदात् कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते । मै० सं० १।९।४। अयं सन्दर्भो दुर्गेणोद्ध्रियते । तत्र 'कामः समुद्र०···कामेन' इत्यंशो दुर्गनीलकण्ठाभ्यां न व्याख्यायते, मैत्रायणीयके तदभावात् । अत्र स्कन्दव्याख्यानं नष्टम् ।
७. कोशे 'ऋत्विक्तं प्रतिगृह्णस्तु' इत्यपपाठः । अत्र 'ऋत्विक्तत्' इति स्यात् ।
८. द्र०—निरु० ७।५॥ ९. कोशे 'कतृत्वात्' इत्यपपाठः ।
१०. कोशे 'स ह वासः' इत्यपपाठः । ११. कोशे 'पूर्ण' इत्यपपाठः ।
११. कोशे 'विस्तारिता पुनस्थाने' इत्यपपाठः ।

कुविन्दास्तेऽवयन्त [1]त्वामुतवन्तो यथाविधि ।
तद्[2] बृहस्पतये मह्यं त्वा त्वामेवं प्रसारितम् ॥३३०॥
ददाति वरुणो [देव यज]मानात्मना स्थितः ।
बृहस्पत्यात्मना[3] चाहं [गृह्णामि] न स्वरूपतः ॥३३१॥
सोऽहमेवं गृहीत्वा त्वां विशिष्टज्ञानसंपदम्[4] ।
अमृतत्वं तु [5]दीर्घायुरश्यां सम्यगवाप्नुयाम् ॥३३२॥
अथवा देवताभावमशीय ज्ञानसंपदा ।
प्रतिग्रहकृतो[6] दो[षो मा]भूदित्यथवेरितम्[7] ॥३३३॥
यजमानाय [8]दात्रेऽस्तु मयः सुखमनन्तकम् ।
सुखं [9]प्रतिग्रहीत्रेऽस्तु मह्यञ्च सततं तथा ॥३३४॥
केवलं वरुणो दाता नैवेष्टः कोऽपि [स]म्मतः ।
त[था बृहस्प]तिश्चैव संप्रदानं न केवलम् ॥३३५॥
दाता[10] प्रतिग्रहीता च कोऽपि स्यादस्य वाससः ।
प्रजापतिः[11] कशब्दोक्तः तौ[12] च स्यातां तदात्मकौ ॥३३६॥
प्राजापत्यं जगत्सर्वम् इति [13]वेदानुशासनम् ।
[कामस्तु पुष्क]लेच्छादात्[14] कामायैतज्जिघृक्षवे ॥३३७॥

---

१. कोशे 'त्वाभूतलन्तो यथा०' इत्यपपाठः ।
२. कोशे 'मद्' इत्यपपाठः ।
३. कोशे 'बृहस्पत्यात्माञ्चाहं' इत्यपपाठः ।
४. कोशे '०संपदाम्' इत्यपपाठः ।
५. कोशे 'दीर्घायुरस्यां गम्यगवा०' इत्यपपाठः ।
६. कोशे 'प्रतिगृहकृतो' इत्यपपाठः ।
७. कोशे '०वेपितम्' इत्यपपाठः ।
८. कोशे 'दात्रेस्तमयं' इत्यपपाठः ।
९. कोशे 'प्रतिगृहीत्रे०' इत्यपपाठः ।
१०. कोशे 'दानप्रतिगृहीता' इत्यपपाठः ।
११. कोशे 'प्रजपती' इत्यपपाठः ।
१२. दाता प्रतिग्रहीता च प्रजापत्यत्मकौ भवत इत्युक्तं भवति ।
१३. तथा च श्रूयते—क ईषते तुज्यते कः (ऋ० १।८४।१७) ।
१४. कोशे '...लेच्छादान्' इत्यपपाठः ।

दाता प्रतिग्रहीता[1] च काम एव तदात्मकः ।
तस्माद् ब्रवीमि हे[2] काम वास एतत्तवेत्यहम् ॥३३८॥
प्रतिग्रहकृतो दोषो नैव [3]मेऽत्र भविष्यति ।
इतीदं याजुषं[4] प्रोक्तं [व्याख्यातं] तद्यथोदितम् ॥३३९॥
शेपो वैतस इत्येते[5] पुंलिङ्गस्य तु नामनी ।
करणे प्रत्ययेऽकारे विशिष्टस्पर्शवाचिनः ॥३४०॥
उपधैत्वे सशत्वे च [6]सपतेश्शेप इष्यते ।
विपूर्वस्य [7]तसेर्धातोस्तस्मिन्[8] [इत्वस्य चैत्वतः] ॥३४१॥
वैतसोऽपि निरुक्तोयम् इहोपक्षयवाचिनः ।
वितस्तः क्षीण इत्यर्थः प्राक्संभोगप्रवृत्तितः ॥३४२॥
अवितस्तोऽथवा प्रोक्तः संहिताया[ः स]मत्वतः ।
प्रतिषेधे विशब्दोऽत्र[तस्तूप]क्षय एव सः[9] ॥३४३॥
शतायुः पुरुषः प्रोक्तः शतवीर्यः शतेन्द्रियः ।
सर्वदा सेकसामर्थ्यम् एतेन प्रतिपादितम् ॥३४४॥
वधूपगमने मन्त्रस्तां पूषन्निति[10] पठ्यते ।
आधारो बीजवापस्य सप्तम्य[त्र प्रचो]दितः । ॥३४५॥
साक्षादाधारता योन्या इति [11]यस्यामितीर्यते ।
रत्यपत्यार्थिनो यस्यां योन्यां बीजं वपन्ति ताम् ॥३४६॥

---

१. कोशे 'प्रतिगृहीता' इत्यपपाठः । २. कोशे 'ते' इत्यपपाठः ।
३. कोशे 'मैत्र' इत्यपपाठः । ४. कोशे 'यजुषं' इत्यपपाठः ।
५. शेपो वैतस इति पुंस्प्रजननस्य । शेपः शपतेः स्पृशतिकर्मणः । वैतसो वितस्तं भवति । निरु० ३।२१॥
६. धा० १।४२७ (समवाये) । आकरे 'शपतेः' इति पाठः । धा० १।१०४९ (आक्रोशे) । ७. कोशे 'सतेर्धातोः' इत्यपपाठः । ८. अप्रत्यये इत्यर्थः ।
९. कोशे 'सम्' इत्यपपाठः ।
१०. तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति ।
या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ॥ ऋ० १०।८५।३७॥
११. कोशे 'धातामितीर्यते' इत्यपपाठः ।

ईरयस्वाभिमुख्येन[1] पूषन्नद्य[2] शिवां भृशम् ।
गर्भग्रहण[शक्तां तां] सुमुखां सुखपुष्टिकृत् ॥३४७॥
कृमिभिर्व्याधिना[3] चापि कर्मणा दुष्कृतेन वा ।
दूषिता नैव शक्नोति [4]योनिर्गर्भं समीहितुम् ॥३४८॥
निहत्य सकलं विघ्नं कुरु [यत्नं यथो]दितम् ।
कीदृश्या इति तत्प्राह या न[5] ऊरू इति त्वृषिः ॥३४९॥
या नः कामयमानोरू[6] रत्यपत्यार्थिनी सती ।
करोति[7] विवृतौ हृष्टा तस्या योनिं तथा कुरु ॥३५०॥
यस्यामिति[तथा यो]न्याः पुष्कलं स्याद्विशेषणम् ।
यस्या[8] योन्यां वयं शेपम् उशन्तः प्रहराम ताम् ॥३५१॥
वधूरेवोच्यते यद्वा तामित्यप्यादिनाञ्जसा ।
[या]न इत्यादिनोक्ता तु सैव स्यादुशतीश्रुतेः ॥३५२॥
[तामादी]न्यपि[9] शिष्टानि तथैकाधिकरण्यतः ।
तद्वाचीन्येव[10] युक्तानि बीजं चास्यां प्रकीर्यते ॥३५३॥
योन्यां प्रक्षिप्यमाणोऽपि योस्यां प्र······ ।
························क्षिप्यते ध्रुवम्[11] ॥३५४॥
तिष्ठेत्युक्त्वाब्र[वीत्तत्र प्रिय]मिष्टं[12] च यत्तव ।

---

१. कोशे 'इयरस्वा०' इत्यपपाठः ।
२. कोशे 'पूषन्नध्व शिवा' इत्यपपाठः ।
३. कोशे 'कृमिभिर्व्यापिना' इत्यपपाठः ।
४. कोशे 'योनिगर्भं' इत्यपपाठः ।
५. कोशे 'यानं ऊरू इति त्वृषि' इत्यपपाठः ।
६. कोशे '०मानोरु' इत्यपपाठः ।
७. कोशे 'करौति विवृतो' इत्यपपाठः ।
८. कोशे 'यस्यों' इत्यपपाठः ।
९. कोशे 'घी···न्यपि' इति भ्रष्टः पाठः ।
१०. कोशे 'तद्वापीन्येव' इत्यपपाठः ।
११. कोशे इतोऽग्रे 'त्रिःस्म···इति नपुंसकस्य' (निरु० ३।२१) इति भाष्यांशस्य व्याख्या लुप्ता ।
१२. कोशे 'मिष्टन्न यत्तव' इति पाठः ।

प्रजया[1] सह तत्सर्वं [2]सम्यगृद्धि प्रपद्यताम् ॥३५५॥
प्रविश्य च गृहेऽस्मिंस्त्वं स्वामिभावाय [3]जागृहि ।
अप्रमत्ता भवेत्यर्थो गृहोपस्करपालने ॥३५६॥
एनानेनैव भर्त्रा त्वं तनुं संयोजय स्वकाम् ।
रत्यपत्यप्रसिद्ध्यर्थं न त्वन्येन कथञ्चन ॥३५७॥
यौवनं [4]चाभिनीयैवम् अन्योऽन्यवशवर्त्तिनौ[5] ।
जिव्री[6] जीर्णौ पुनस्सन्तौ संभोगे विगतस्पृहौ ॥३५८॥
विदथं वेदितव्यं हि यज्ञमेवाभिमुख्यतः ।
वदाथो[7] वदतं कार्यं कुरुतं विधिना युवाम् ॥३५९॥
अधिकारो हि वार्धक्ये पुंसामत्यन्तकामिनाम् ।
स्त्रीणाञ्चैवेति मन्त्रेण सम्यगेवमुदीरितम् ॥३६०॥
युवानावतिकामौ[8] हि यागे नाधिकृतौ स्फुटम् ।
व्रतवृत्तेरशक्यत्वाद् दशमेऽह्नि यत्पुनः ॥३६१॥
आधानं चोद्यते तत्तु युज्यते जितकामयोः ।
विदथं वेदनं वा स्याद् आत्मवस्तुसमाश्रयम् ॥३६२॥
कामाद्यभिगुणे शान्ते कषाये क्षयमागते ।
प्रसादे मनसो जाते तद्विज्ञानं प्रवर्तते ॥३६३॥
मैत्रेयी[9] याज्ञवल्क्यश्च तथान्ते ज्ञानमापतुः ।
सिषक्त्वित्येतदाख्यातं[10] तथा स्यात् सचते पदम् ॥३६४॥

---

१. एना पत्या तन्वं संसृजस्वेति पुंसः । निरु० ३।२१॥ तथा च मन्त्रः—
इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं संसृजस्वाधा जिव्री विदथ मा वदाथः ॥ ऋ० १०।८५।२७॥

२. कोशे 'सम्यक्त्वृद्धि' इति पाठः । ३. कोशे 'जागहि' इत्यपपाठः ।

४. कोशे 'चानिनीयैव' इत्यपपाठः । ५. कोशे '०वशवनिनौ' इत्यपपाठः ।

६. कोशे 'जिहि' इत्यपपाठः । ७. कोशे 'पदं थो' इत्यपपाठः ।

८. कोशे 'युवानावति कामा' इत्यपपाठः । ९. कोशे 'मैत्रेयि' इत्यपपाठः ।

१०. कोशे 'सिषक्तीत्ये०' इत्यपपाठः । सिषक्तु सचत इति सेवमानस्य । निरु० ३।२१॥

भावप्राधान्यता तस्माद् नामनी ते न कस्यचित् ।
नामनी सेवमानस्य कथं भाष्यकृतोदिते[1] ॥३६५॥
सिषक्ति सचते चेति धातू[2] सेवाभिधायिनौ ।
इति वक्तव्यमत्रापि[3] सेवमानग्रहो वृथा ॥३६६॥
कर्तैव वाच्य इष्टश्चेद् न पूर्वोक्तविरोधतः ।
पौर्वापर्यविशिष्टो हि भावो वाच्यः[4]पुरोदितः ॥३६७॥
भयवेपनरूपस्य [5]भावस्यैवेह भाष्यकृत् ।
भ्यसते रेजते चेति वाच्यतां [6]वक्ष्यति स्फुटम् ॥३६८॥
वैलक्षण्ये न हेतुश्च कर्तृवाच्यत्वसंश्रये ।
अत्रोक्तवक्ष्यमाणेभ्यः कश्चिदप्यवगम्यते ॥३६९॥
अथापवाद उक्तस्य वक्ष्यमाणस्य चाप्ययम् ।
न प्रतीतिविरुद्धत्वाद् रूढिर्नाप्यस्य लौकिकी ॥३७०॥
भ्यसते रेजसे चेति पाठश्चाप्यनयोरतः[7] ।
सिषक्तु[8] सचते चेति द्वाभ्यामाभ्यां[9] प्रसज्यते ॥३७१॥
अथ शब्दविदां पक्षमाश्रित्याहात्र भाष्यकृत् ।
नानर्थक्यादनेनेह[10] नास्ति किञ्चित्प्रयोजनम् ॥३७२॥
आत्मशास्त्रोपयोग्येव वक्तुं युक्तं हि पण्डितैः ।
इहैव किं विशेषेण [11]कर्तृवाचित्वमुच्यते ॥३७३॥
शब्दशास्त्रविदामेतत् सर्वाख्यातेषु [12]सम्मतम् ।
अथ चेन्न विना [13]कर्त्रा क्रियासिद्धिरितीर्यते ॥३७४॥

---

१. मूले 'नामनी' इति नोपलभ्यते । २. कोशे 'धातु' इत्यपपाठः ।
३. कोशे 'वक्तव्यमात्रापि' इत्यपपाठः ।
४. निरु० १।१॥ ५. कोशे 'भावस्येवेह' इत्यपपाठः ।
६. अत्रैवानुपदम् । ७. कोशे 'पाठश्चाप्यनयो रसः' इत्यपपाठः ।
८. कोशे 'सिषक्ति' इत्यपपाठः । ९. पूर्वम् इति शेषः ।
१०. कोशे 'नानार्थक्या०' इत्यपपाठः । ११. कोशे 'कतृ०' इत्यपपाठः ।
१२. कोशे 'सम्मितम्' इत्यपपाठः । १३. कोशे 'कत्रा' इत्यपपाठः ।

नैतत्सामर्थ्यसिद्धत्वाद् अपि चैतत् [1]पुरेरितम् ।
भावप्रधानमित्यत्र [2]कर्तृकालादि चापरम् ॥३७५॥
साधनस्यापि सर्वस्य क्रियया पेक्षितस्य च ।
एकशब्दाभिधेयत्वे न्यायो नैवास्ति कश्चन ॥३७६॥
सामर्थ्याद् गम्यते [3]किञ्चित् किञ्चिच्छब्दान्तरेण तु ।
किञ्चित्तेनैव [4]शब्देन विरोधो नैव विद्यते ॥३७७॥
न चोदाहरणे कर्ता प्राधान्येन हि विद्यते ।
सेवां प्रति गुणत्वेन प्रतीतत्वेन हेतुना ॥३७८॥
अतश्च प्रकृते नैवं हृतबुद्धेरिदं वचः ।
प्रकृते नामनी द्वे द्वे एकैकस्येह वस्तुनः ॥३७९॥
संभवत्यपहारोऽपि बुद्धेरभ्यस्तवस्तुनः ।
अध्याहृत्याथवा नेयं यथैतन्न विरुध्यते ॥३८०॥
नामनी इति नानेन सेवमानस्य संगतिः ।
आख्याते सेवमानस्य व्यापारं वदतस्त्विमे ॥३८१॥
इति व्याख्यायमाने हि विरोधो नैव विद्यते ।
व्यापारस्सेवमानस्य [5]सैव चेह प्रतीयते ॥३८२॥
भवेन्मन्दफलस्त्वेव सेवमानस्य संग्रहः ।
शब्दाधिक्यविरोधाच्चेद् युक्तमत्र विचार्यताम् ॥३८३॥
शब्दाधिक्यविरोधोऽस्तु[6] किं वा न्यायविरोधिता ।
शब्दाधिक्यं वरं तावद् न तु न्यायविरोधिता ॥३८४॥
नामनी सेवमानस्य यदि स्यातामसंशयम् ।
तदोदाहरणं न स्यात् [7]सिषक्तु च सचस्व च ॥३८५॥

---

१. निरु० १।१॥ २. कोशे 'कतृकालादि' इत्यपपाठः ।
३. कोशे 'केचित्' इत्यपपाठः । ४. कोशे 'शब्दैन' इत्यपपाठः ।
५. सोऽचि लोपे चेत् पादपूरणम् (अष्टा० ६।१।१३०) इति सुलोपः ।
६. कोशे 'विरोधेस्तु' इत्यपपाठः । ७. कोशे 'सिषक्त' इत्यपपाठः ।

सेवस्व सेवतां चेति[1] व्याख्या चैवं[2] विरुध्यते ।
तस्मान्न नामनो[3] त्वेते आख्याते उक्तकर्मणि ॥३८६॥
आहतुस्सेवमानस्य[4] नैव ते वदतः स्फुटम् ।
अप्रसिद्धमिदं यस्य [तं] प्रत्येतदिहोच्यते ॥३८७॥
अप्रसिद्धमिदं कस्य यस्य नास्ति [5]विविक्तधीः ।
एवं सर्वत्र वक्तव्यम् ईदृशायाल्पबुद्धये ॥३८८॥
इतीदन्तु सुहृद्भूत्वा भाष्यकारेण वर्णितम् ।
अथवा सेवमानस्य व्यापारोऽनुक्त एव हि ॥३८९॥
इहैष[6] इति निर्देष्टुमेवं भाष्यकृतोदितम् ।
तच्चोदाहरणेनैव यथेष्टमुपवर्ण्यते ॥३९०॥
यो[7] रेवान्[8] रयिमान्देवो मध्यमो ब्रह्मणस्पतिः ।
तथा योऽमीबहामीवा रोगः कृमिरथापि वा ॥३९१॥
तस्य हन्ताथवा हाता निरातङ्कः सुरात्मकः ।
वसुविद्वसुनश्चापि लब्धा [9]पुष्टेः [प्रवर्धनः] ॥३९२॥
[पुष्टेः]सर्वप्रकाराया वर्धनो वृष्टिकर्मणा ।
सिषक्तु[10] सेवतां नोऽस्मान् अनुगृह्णातु स प्रभुः ॥३९३॥
स्वामिनो भृत्यवत्सेवा गुणत्वेनेह नाश्रिता ।
प्रभुत्वे वर्तमानस्य एवानुग्रह एव नः ॥३९४॥

---

१. स नः सेवतां यस्तुरः । ---सेवस्व नः स्वस्तये । निरु० ३।२१॥
२. कोशे 'यैवं' इति पाठः । ३. कोशे 'नामनीत्येते' इत्यपपाठः ।
४. कोशे 'सव्यमानस्य' इत्यपपाठः ।
५. कोशे 'विवक्तधीः' इत्यपपाठः ।
६. कोशे 'इहेव इति निर्दिष्टमेवं' इति पाठः ।
७. यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्धनः ।
स नः सिषक्तु यस्तुरः ॥ ऋ० १।१८।२॥
८. कोशे 'रेवानमियिमान्देवो' इत्यपपाठः ।
९. कोशे 'पुष्टैः' इति पाठः । १०. कोशे 'सिषक्त' इत्यपपाठः ।

इत्यर्थं सेवमानस्य ग्रहणं त्विह [1]युज्यते ।
[य]श्चासौ भग[व]ान् [2]देवस्तुरः क्षिप्रः स्वकर्मणि ॥३९५॥
भजतां सोऽचिरेणास्मान्[3] अनुग्राह्यानितीप्सितम् ।
धनवान्धनदश्चैव निरातङ्कोऽथ पोषकः ॥३९६॥
पुत्रो वा भजतामस्मान् प्रसादाद् ब्रह्मणस्पतेः ।
पुत्रोऽध्याहार्य एवं स्याद् इत्यर्थोऽयं न [4]पुष्कलः ॥३९७॥
स[5] नउ त्तःगुणोऽग्ने[6] त्वं सूपगम्यः पितेव नः ।
षष्ठयर्थे तु चतुर्थ्यत्र [7]सूनोरित्येव सूनवे ॥३९८॥
पुत्रो हि पितरं नित्यं निश्शङ्कमुपसर्पति ।
तथैव[8] त्वोपसर्पामि पितृस्थानीयमञ्जसा ॥३९९॥
स्वस्तये [9]चाविनाशाय सेवस्वास्मान् दयापरः ।
स्वस्तीत्येतदनाख्यातं [10]नामार्थस्याविनाशिनः ॥४००॥
चतुर्थ्यन्तस्य[11] दृष्टत्वाद् नहि तद्युज्यतेऽन्यथा ।
पूजार्थत्वात् सुशब्दस्य सुनाऽस्तिरिति पूजितः ॥४०१॥
अविनाश्यर्थवाचित्वात्[12] तेन पूजास्य युज्यते ।
इहाविनाशनामेति[13] पाठे तस्यैव नाम तत् ॥४०२॥

---

१. कोशे 'युज्यय' इत्यपपाठः । २. कोशे 'देवः स्तरः' इत्यपपाठः ।
३. कोशे '०णास्मात् अनुग्राह्यानिकीप्सितम्' इत्यपपाठः ।
४. स्कन्दप्रस्तुतं पक्षान्तरमिह प्रत्याख्यायत इति स्पष्टम् ।
५. स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥ ऋ० १।१।९॥
६. कोशे '०गुणो ग्नेथं' इत्यपपाठः । ७. कोशे 'सुनो०' इत्यपपाठः ।
८. कोशे 'तथैवञ्चोप०' इति पाठः ।
९. कोशे 'चापिनाशाय स्वेवस्वा०' इत्यपपाठः ।
१०. स्वस्तीत्यविनाशिनाम । अस्तिरभिपूजितः स्वस्तीति । निरु० ३।२१॥
११. कोशे '०तस्य च दृष्ट०' इत्यपपाठः ।
१२. कोशे 'आविनाश्यर्थ०' इत्यपपाठः ।
१३. कोशे 'इहाविशिनामेति' इत्यपपाठः । तस्य=अविनाशस्य । तत्=स्वस्ति ।

भ्यसते रेजते चेति[1] भयवेपनयोरिमौ ।
सिद्धयोर्वाचकौ धातू आख्याते साध्यमानयोः ॥४०३॥
पूर्वोक्तस्याविरोधार्थं[2] विचित्राक्षरमेव[3] वा ।
द्रष्टव्यं[4] पूजनीयं वा मन्त्रं स्तुत्यात्मकं शुभम् ॥४०४॥
भरध्वमृत्विजो[5] यूयमग्ने त्वं चापि हौत्रकृत् ।
गृणते [6]गीर्यमाणाय स्तूयमानाय [7]कर्मणि ॥४०५॥
यज्ञे[8] वास्तु वने यद्वा गर्जतेऽम्बरवर्तिने ।
मारुताय समूहाय तुराय क्षिप्रकारिणे ॥४०६॥
तूर्वित्रे[9] चापि शत्रूणां हिंसित्रे स्वबलाय च ।
तवस्तु [10]तवतेर्धातोर्गुणावादेशयोरसि ॥४०७॥
वृद्धयर्थस्य बलं तच्च तेन [11]तद्वान् हि वर्धते ।
स्वं[12] स्वाधीनं तवो यस्य तस्मै प्रापयतोदितम् ॥४०८॥
अन्नं [13]वाप्यर्कशब्दोक्तं [14]हविस्तस्मै प्रयच्छति ।
कीदृशां[15] तु समूहोऽयं मरुतामभिधीयते ॥४०९॥

---

१. भ्यस्ते रेजत इति भयवेपनयोः । निरु० ३।२१॥

२. इतः पूर्वं कश्चिद् ग्रन्थो नष्टः । 'यो जात एव' (ऋ० २।१२।१) इत्युपरिष्टाद् (निरु० १०।१०) व्याख्यास्यते इति निर्देशोऽप्यावश्यकः ।

३. प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥ ऋ० ६।६६।९॥

४. कोशे 'भृष्टव्यं' इत्यपपाठः । ५. कोशे 'भरस्वमृत्यजो' इत्यपपाठः ।

६. कोशे 'गृणतेर्गीर्यिमाणाय स्तूयमाणाय' इत्यपपाठः ।

७. 'गृणते' इति कर्मणि शतृप्रत्ययान्त इत्यर्थः ।

८. कोशे 'यज्ञं' इति पाठः ।

९. कोशे 'तुवित्रे' इत्यपपाठः । तूर्वते (धा० १।६०१) तृचि ।

१०. धा० १।२५॥ सौत्रोऽयं (द्र०—माधवीयधातुवृत्ति १।२४ रु शब्दे इत्यत्र) धातुः (अष्टा० ७।३।९५) । ११. कोशे 'तद्वा हि' इत्यपपाठः ।

१२. कोशे स्व स्वाधीनं तपो यस्य' इत्यपपाठः ।

१३. कोशे 'वाप्यकशब्दोक्तं' इत्यपपाठः । १४. कोशे 'हविस्तस्तै' इत्यपपाठः ।

१५. कोशे 'कीदृशन्तु समूहाय मरुता०' इत्यपपाठः ।

सहसा ये स्वकीयेन बलेन मरुतो मृधेः ।
सहन्तेऽभिभवन्त्युग्राः [1]सहांस्यरिबलानि हि ॥४१०॥
रेजते कम्पते येभ्यो बिभेत्येवाथवा मही ।
मखेभ्यो मखवद्भ्यो हि [2]मत्वर्थे मरुतो मखाः ॥४११॥
मखशब्दाण्णिचीष्टं[3] वा तत्करोतीत्यचीदृशम् ।
मखवन्तो[4] मखं यज्ञं कुर्वन्तीति मखाः स्मृताः ॥४१२॥
महद्भ्य[5] इति वास्यार्थः समूहायेदृशामिदम् ।
भरणं हविषो दानं मन्त्रस्योच्चारणं विदुः ॥४१३॥
चत्वारि विंशति[श्चैव ना]मधेयान्यतः परम् ।
इह[6] द्यावापृथिव्योस्स्युः स्वधे इत्यादिकानि वै ॥४१४॥
कतरेति[7] तु नैतस्यां तयोर्नामानि कानिचित् ।
प्रदृश्य[न्ते कथं] त्वेषा[8] तयोरित्युपवर्ण्यते ॥४१५॥
साहचर्येण माहात्म्यं द्वयोरस्यामितीरितम् ।
घृतवती[9] [10]असश्चन्ती भूरिधारे [11]प्र पूर्वजे ॥४१६॥

---

१. कोशे 'सहांस्यभिभवेम' इति पाठः ।

२. अर्शआदित्वाद (अष्टा० ५।२।१२७) इत्यचीत्यर्थः ।

३. कोशे '०मखशब्दाण्णिचिष्टं' इत्यपपाठः । मखशब्दात् तत्करोति (महाभाष्य वा० ३।१।२६) इति णिचि, अजपि सर्वधातुभ्यः (महाभाष्य वा० ३।१।१३४) इत्यचि, टिलोपणि-लोपयोः 'मख' इति निष्पद्यते ।

४. कोशे 'मखवती मखा यज्ञं कुर्वतीति' इत्यपपाठः ।

५. कोशे 'महभ्य' इत्यपपाठः । तथा च स्कन्दः—'मह इत्यस्य महन्नाम्नो हकारस्य खकारः, महद्भ्य इत्यर्थः' ।

६. द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिः । निरु० ३।२१॥

७. कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ।
विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥ ऋ० १।१८५।१।

८. तयोरेषा भवति । निरु० ३।२१॥ कोशे 'त्थषा' इत्यपपाठः ।

९. ऋ० ६।७०।१॥ १०. ऋ० ६।७०।२॥

११. ऋ० ७।५३।२॥

इत्य [मूर्वर्णायन्त्येव] माहात्म्यातिशयं तयोः ।
यथा[1] त्वेषा तथा नान्या [2]इत्येषैवोपवर्ण्यते ॥४१७॥
साहचर्येण माहात्म्यं स्वधे इत्यादिभिर्द्वयोः ।
००० ........................त्ते वस्तुरित्युपवर्ण्यते ॥४१८॥
अनयोरिति योऽस्यार्थः स एवायोरितीर्यते ।
अनयोः कतरा पूर्वा पूर्वजाताभिधीयताम् ॥४१९॥
[जाता वा कतरा] पश्चात् जाते वा कथमुच्यताम् ।
ब्रूत हे कवयस्सर्वे यत् पृष्टं [3]कुम्भयोनिना ॥४२०॥
मया बुभुत्सुना तत्त्वं [4]ये केचिन्मेधयान्विताः ।
अन्या[5] वा कोऽपि वेदैतद् न कश्चिदिति मे मतिः ॥४२१॥
न पूर्वा न परा काचित् न च जाते कथञ्चन ।
नित्ये एव सदैव स्त इत्येतदृषिरब्रवीत् ॥४२२॥
विश्वमाधारभावेन बिभृतश्चात्मना स्वयम् ।
अन्येनाधार्यमाणे च सर्वं धारयतो यतः ॥४२३॥
ततश्च नैतयोर्जन्म कुतश्चिदुपपद्यते ।
यद्धेति हेतुमेवाह कर्म नामेति भाषितम् ॥४२४॥
कथं नामेति कर्मोक्तं नामेह नतमुच्यते ।
नतं [हि] [6]वारि संजातं कार्यं कर्मेत्यभाषत ॥४२५॥
हेत्वर्थोऽयं हशब्दोऽत्र यस्माद्यन्नाम किञ्चन ।
कार्यं[7] तच्चानयोरेव सर्वस्योत्पादिके इमे ॥४२६॥
नतिरेवाथवा नाम क्रिया कर्मेति भाषिता ।
क्रियापि विक्रियैवेष्टा सा यस्यैवेह वस्तुनः ॥४२७॥

१. कोशे 'अथा वर्ति' इति पाठः ।
२. कोशे 'इत्यैषैवो०' इत्यपपाठः ।
३. कुम्भयोनिरगस्त्योऽस्या ऋचो द्रष्टा ।
४. कोशे 'माकिञ्चित्तयान्विताः' इत्यपपाठः ।
५. कोशे 'अन्या' इत्यपपाठः ।
६. कोशे 'वरिणं जातं' इत्यपपाठः । नामेति वारिनामसु (निघ० १।१२) पठितम् ।
७. कोशे 'कार्यंन्तच्चा०' इत्यपपाठः ।

या नाम या नतिर्यस्य तस्य सर्वस्य सानयोः ।
स्थितस्य दृश्यते ... ... ... ... ... ... ॥४२८॥
न[1] वनाजिनिरेतस्य कस्य चित्संप्रतीयते ।
तस्मादेते समस्तस्य कारणे इति निश्चयः ॥४२९॥
अहनी च [2]विवर्तेते अहोरात्रे तथैनयोः ।
तयोराधारभूतत्वाद् [3]नाधारोऽस्त्यपरस्तयोः ॥४३०॥
इह[4] द्विवचनस्यार्थे [5]चक्रशब्दादियाडयम् ।
रथे चक्रे यथा युक्ते विवर्तेते पुनः पुनः ॥४३१॥
पुनः [6]पुनर्विवर्तते अहोरात्रे तथैनयोः ।
सर्वस्याधारभूतत्वात् कार्यस्यापि च हेतुतः ॥४३२॥
स्वजन्माभावतश्चापि[7] पौर्वापर्यं हि [8]नानयोः ।
ब्रह्माण्डादनयोर्जन्म पुराणे यद्यपि स्थितम् ॥४३३॥
कर्मणैव[9] तथाप्यस्य संभेदो [10]यौगपद्यतः ।
महिमानमृगाचष्टे[11] आचष्टेऽगस्त्य एव वा ॥४३४॥
गार्ग्येण[12] नीलकण्ठेन सूनुना [13]कीरशर्मणः ।
नैघण्टुकमिदं[14] काण्डं व्याख्यातमनुपूर्वशः ॥४३५॥

---

१. साधीयान् पाठोऽत्रोहनीयः, २. कोशे 'ववर्त्तते' इत्यपपाठः ।

३. कोशे 'नाधारोस्त्वपरं तयोः' इति पाठः ।

४. कोशे 'इह न द्विवचन०' इत्यपपाठः ।

५. कोशे 'चक्रुशब्दा' इत्यपपाठः । इयाडियाजीकाराणामुपसंख्यानम् (महा० ७।१।३९) ।

६. कोशे 'पुनर्त्रि०' इत्यपपाठः । ७. कोशे 'स्वजन्मा भवत०' इत्यपपाठः ।

८. कोशे 'नाननयोः' इत्यपपाठः । ९. कोशे 'कर्मो नैव' इत्यपपाठः ।

१०. कोशे 'योनवद्यतः' इत्यपपाठः । तथा चोक्तं दुर्गेण—'ते आण्डकपाले रजतं च सुवर्णं चाभवताम् । तद्यद्रजतं सेयं पृथिवी, यत्सुवर्णं सा द्यौः' (छा० उप० ३।१९।१-२) इति । तेन ज्ञायते युगपदेवैते उत्पन्ने स्यातामिति ।

११. कोशे '०मृगाचष्टे' इत्यपपाठः । द्यावापृथिव्योर्महिमानमाचष्टे । निरु० २।२२।

१२. कोशे 'गार्ग्येन' इत्यपपाठः । १३. कोशे 'किर कर्मणः' इत्यपपाठः ।

१४. कोशे 'नैघण्डुक०' इत्यपपाठः ।

जामदग्न्येन रामेण गार्ग्याय प्रतिपादिते ।
कोण्डयूरिति विख्याते ग्रामे केरल पूजिते ॥४३६॥
ब्राह्मणानां सहस्रेण जुष्टे [1]शिष्यजनार्चिते ।
याज्ञिकैर्वेदविद्भिश्च सर्वदैवोपशोभिते ॥४३७॥
अव्यवच्छिन्नयज्ञानां यजुर्वेदविदां कुले ।
कुले महति गर्गाणां नीलकण्ठोऽप्यजायत ॥४३८॥
कीरशर्मा पिता यस्य [2]यज्वा यज्ञविशारदः ।
नीलकण्ठश्चतुर्वेदः[3] पितृव्यो यस्य धार्मिकः ॥४३९॥
बहुयाजी चतुर्वेदो रुद्रशर्मा पितामहः ।
भारद्वाजी च कौबेरी नोली माता बहुप्रजा ॥४४०॥
रुद्राद्या भ्रातरो यस्य दत्ताद्या [4]जामयस्तथा ।
किञ्चित्सोऽधीत्य वेदस्य मस्करी समपद्यत ॥४४१॥
पद्म इत्यपरां संज्ञां लब्धवान् स गुरोः पुनः ।
श्रुत्वा किञ्चित्स शास्त्राणां वेदान्तेषु कृतश्रमः ॥४४२॥
अकरोत् श्रद्धया युक्तो निरुक्तश्लोकवार्त्तिकम् ।
पदवाक्यप्रमाणज्ञः [5]श्रद्धवाननसूयकः ॥४४३॥
गुरुभक्तस्तपस्वी[6] च शक्तो वोद्धुमिदं यतः ।
तस्मिन्नैघण्टुकं[7] काण्डं समाप्तमिदमञ्जसा ॥४४४॥
बोद्धव्यं हि प्रयत्नेन [8]वेदार्थं बोद्धुमिच्छता ।
नमो[9] नारायणायास्तु नमोऽस्तु ब्रह्मणे[10] सदा ।
नमो महेश्वरायास्तु गुरुभ्यश्च सदा नमः ॥४४५॥

---

१. कोशे 'रिष्यजना०' इत्यपपाठः । २. कोशे 'यज्व' इति पाठः ।
३. कोशे 'चतुर्वेदे' इत्यपपाठः । ४. कोशे 'जमयस्तथा' इत्यपपाठः ।
५. व्याकरण-मीमांसा-न्यायशास्त्राणां विद्वानित्यर्थः ।
६. कोशे 'गुरुभक्तिस्तप०' इति पाठः । ७. कोशे '०नैघण्डुकं' इत्यपपाठः ।
८. कोशे 'वेदार्थ बोद्धु०' इत्यपपाठः ।
९. आद्ये मङ्गलाचरणेऽग्निवायुसूर्याणां स्मरणम् ।
१०. कोशे 'ब्रह्मणस्सदा' इत्यपपाठः ।

इति [1]भवार्णवदीर्णसदात्मता
प्रथनवेदशिरोन्मयलक्षणः ।
करदृग्बन्धमुनिग्रथितागमं
गमितवान् भगवान् मुनिशंकरः ॥४४६॥

श्रीमति विजयादित्ये वल्लभराजे जयत्यराजरिपौ ।
भाष्यमिदं भगवच्छंकरमुखारविन्दात् प्रवृत्तमिदम् ॥४४७॥

शुभमस्तु

[ ॥ इति पद्मभगवत्प्रणीते निरुक्त-श्लोकवार्त्तिके
तृतीयोऽध्यायः समाप्तः ॥ ]

---

१. अस्य पद्यद्वयस्यैतद्ग्रन्थाङ्गत्वं सन्दिग्धमित्युपोद्घाते प्रतिपादितम् ।

# चतुर्थोऽध्यायः

## प्रथमः पादः[1]

शुक्लं[2] कृष्णविशिष्टं तु श्याममित्यभिधीयते ।
अथवा [3]शितिमांसस्य मेदसस्स्याच्छितामतः ॥१॥
शिशब्दस्य समानत्वं शितिमांसे शिताम्नि[4] च ।
तिशब्दस्य[5] त[था]तात्वं माशब्दो मत्वमृच्छति ॥२॥
अनुस्वारो [6]नकारं च सशब्दश्चैव लुप्यते ।
शितिः[7] श्यतेरिति प्रोक्तं[8] तनूकरणवाचिनः ॥३॥
शुक्लो [9]वर्णः शितिः प्रोक्तः कृष्णादिभ्यस्तनुश्च सः ।
स्वच्छत्वाद्बहुलं ह्यन्यत् शुक्लात् कृष्णादि गृह्यते ॥४॥
चेतसः[10] प्रीणनं मांसं मेदो गालवभाषितम् ।
तामन्येव[11] श्यतेरेतदाकारस्येत्वतोऽथवा ॥५॥
तामनि[12] प्रत्यये रूपं शितामेत्युपपादितम् ।

---

१. कोशे 'निरुक्तवार्त्तिकैकपदिकं प्रथमः पादः' इत्यपपाठः ।

२. कोशे 'उक्त्यकृष्ण०' इत्यपपाठः । इतः पूर्वं 'एकार्थमनेकशब्दम्'...'यकृद् यथा कथा च कृत्यते' (निरु० ४ १-३)इत्यर्द्धतृतीयखण्डविवरणात्मकः पाठो नष्टः । श्लोकसंख्या यथोपलब्ध ग्रन्थस्यैव लिपिकरलिखिता इति स्पष्टम् ।

३. शितिमांसतो मेदस्त इति गालवः । निरु० ४।३॥

४. कोशे 'शिताम्निचि' इत्यपपाठः ।

५. कोशे 'शिशब्दस्य ततात्वम्मशब्दोत्राशमृच्छति' इत्यपपाठः ।

६. कोशे 'नकारस्य' इत्यपपाठः ।

७. कोशे 'शीतिम्येतरिति' इत्यपपाठः । धा० ४।३७॥

८. शितिः श्यतेः । मांसं माननं वा मानसं वा मनोऽस्मिन् सीदतीति वा । मेदो मेद्यतेः । निरु० ४।३॥

९. कोशे 'वण शितः' इत्यपपाठः ।

१०. कोशे 'स्तुचोः प्रोर्णत्वनं मांसः मेदो गोपालव भाषितम्' इति पाठः ।

११. कोशे 'तामन्ये पश्यते०' इत्यपपाठः ।

१२. कोशे 'तमति' इत्यपपाठः ।

मंहनीयं धनं चेह [1]मेहनेत्यपि मंहतेः ॥६॥
अकारस्यायमेकारो[2] मकारः स्वस्य कल्पितः ।
अनुनासिकलोपेन [3]यशब्दस्यापि लोपतः ॥७॥
ईकारस्य तथात्वेन मेहनेत्यवतिष्ठते[4] ।
मंहतेर्ल्युटि[5] वा रूपमुपधेत्वे[6] गुणे कृते ॥८॥
सुपः[7] स्थाने तथाकारे मेहनेति श्रुतौ भवेत् ।
आदेर्निघातभावेन[8] निपातो[9] नायमिष्यते ॥९॥
नाख्यातकल्पना युक्ता मन्त्रे तस्यापि भावतः ।
राधोविशेषणत्वेन नामैवेत्युपपद्यते ॥१०॥
त्रीणीत्युक्त्वा यदुक्तं तु [10]मध्यमानीति तत्कथम् ।
छन्दोगापेक्षयेत्येके[11] तेषां पाठो हि तादृशः ॥११॥
अस्मिन्नेवाथवा पाठे पदानि त्रीण्यकल्पयत् ।
मे इत्येकमिहेष्टं स्याद् अपरं ह इतीदृशम् ॥१२॥

---

१. कोशे 'धनम्मेहननेत्यपि' इति पाठः । तथा च मन्त्रः—
यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ऋ० ५।३९।१॥
भाष्यं च—यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति । निरु० ४।४॥

२. कोशे 'अकारस्य यमकारो' इत्यपपाठः ।

३. कोशे 'यश्शब्दस्य विलोपतः' इत्यपपाठः ।

४. मंहनीयशब्दस्याद्याकारस्यैकारेऽनुस्वारयशब्दयोर्लोप ईकारस्याऽऽत्वे मेहनारूपं निष्पद्यत इति भावः ।

५. कोशे 'मंहतेर्लिटि' इत्यपपाठः ।

६. अकारानुस्वारयोरित्वमित्यर्थः ।

७. कोशे 'सुपस्थाने' इत्यपपाठः । अष्टा० ७।१।३९।।

८. कोशे 'अदेर्निदाघभा०' इत्यपपाठः ।

९. निपाता आद्युदात्ताः । फिट् ८० ॥

१०. यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि । निरु० ४।४॥

११. द्र०—अत्र दुर्गस्कन्दव्याख्यानम् ।

ना[1] इत्येव परं प्रोक्तम् इहेत्यस्यादिलोपतः ।
इहेत्येतद्विनिर्दिष्टमेवमर्थोपपत्तितः ॥१३॥
षष्ठ्याः[2] स्थानेऽथवाकारो मे इत्यस्य [3]प्रकल्पितः ।
अर्थज्ञानविहीनानां[4] दुर्ज्ञेयत्वादिदं पदम् ॥१४॥
समाम्नातं समाम्नाये तस्यापि गतिरीरिता ।
दमेरूनसि[5] वाच्येऽग्नौ दमूना[6] दममनास्त्विति ॥१५॥
ददातेर्वापि[7] विज्ञेयं तथा निर्वचनेक्षणात् ।
दमादिशब्दवाच्येऽर्थे यस्य नित्यं [8]मनो भवेत् ॥१६॥
दमूनास्सोऽग्निरेवेष्टो[9] मन्त्रे[10] तस्य विशेषणात् ।
मुषेस्तु[11] मूष इत्येतद् भाषायां नैव संस्कृतम् ॥१७॥
क्विबन्तस्यादिदीर्घत्वे[12] वैदिके मूष्प्रसिध्यति ।
किकनि[13] प्रत्यये दैर्घ्यं [14]मुषेरौणादिकेऽस्ति हि ॥१८॥
मूषिका इति तेनाह भाषिकं भाष्यकृत्स्वयम् ।
ईषते:[15] किर[ज]न्तस्य ह्रस्वत्वे गतिकर्मणः ॥१९॥

---

१. कोशे 'ता' इत्यपपाठः । २. कोशे विसर्गरहितः पाठः ।

३. 'यत् मे इह न अस्ति' इति पञ्चपदे वाक्ये 'मे इह न' इति त्रीणि मध्यमानीति दुर्गप्रकल्पना । 'चित्र म इह न अस्ति' इति पञ्चपद्यां 'म इह न' इति त्रीणि मध्यमानीति स्कन्दप्रकल्पना । ४. कोशे 'अर्थज्ञावितिहाना' इत्यपपाठः ।

५. कोशे 'दमेरुनंसि' इत्यपपाठः ।

६. कोशे 'दमूनात्मनस्विति:' इत्यपपाठः । दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यात् । निरु० ४।४॥ ७. धा० ३।१०॥

८. कोशे 'सनो' इत्यपपाठः । ९. कोशे 'दमुनस्सो०' इत्यपपाठः ।

१०. ऋ० ५।४।५॥

११. कोशे 'मूषेस्तु' इत्यपपाठ । धा० ९।५८॥ मूषो मूषिका इत्यर्थः । मूषिकाः, पुनर्मुष्णातेः । मूषोऽप्येतस्मादेव । निरु० ४।५ ।

१२. कोशे 'क्विबन्तस्यादिति दीर्घत्वे वैदिके मुष्प्रसि०' इयपपाठः ।

१३. कोशे 'किंकनि' इत्यपपाठः ।

१४. कोशे 'मूषेरौणादिके०' इत्यपपाठः । उणा० २।४३॥

१५. कोशे 'कषतेः किरन्तस्य' इत्यपपाठः । धा० १।६४२॥ उणा० १।५१॥

इषिरस्त्विति निर्दिष्टम् [1]इषेर्वेच्छाभिधायिनः ।
ऋषेर्वा[2] दर्शनार्थस्य [3]तस्मिन्नादेरपीत्वतः ॥२०॥
ईषणेनेति[4] पूर्वस्य तथा स्यादेषणेन च ।
द्वितीयस्य तृतीयस्य तथा [5]स्यादर्षणेन तु ॥२१॥
न्याय्यं[6] रूपं तथा प्रोक्तं भाष्यकारेण [7]तत् त्रिधा ।
एवञ्चैतदनेकार्थं तथैवाज्ञातसंस्कृतिः[8] ॥२२॥
त्वां गत्नेनेच्छता वापि पश्यता मनसाथवा ।
मनो[9] विशेष्यते त्वेवमिषिरेणेति[10] मन्त्रतः[11] ॥२३॥
यत्तत्कुरुतनेत्यादि[12] भाषायां नैव विद्यते ।
तस्मादिह समाम्नातं कर्तनाद्यपि तत्समम् ॥२४॥
छान्दसेष्वपि[13] नन्वेषु [14]तप्तनेत्यादिसूत्रतः ।
संस्कारः सिद्ध एवेति पाठो नैवोपपद्यते ॥२५॥
संस्कारावबोधार्थं[15] नेत्याद्यर्थस्य नास्तिताम् ।
वक्तुमस्येदमाम्नातं[16] क्वचित्संस्कारक्लृप्तये ॥२६॥
अधिकोऽप्यस्ति[17] संस्कारः [18]कर्तनेत्यादिके पदे ।
लोपो विकरणस्यापि [19]कल्प्योऽस्याद्ये तने गुणे ॥२७॥

---

१. धा० ६।५६॥ २. धा० ६।७ (गत्यर्थे स्मर्यते) ॥
३. कोशे 'तस्मिन्नादेरपित्वतः' इत्यपपाठः । किरचि प्रत्यय ऋकारस्येकार इत्यर्थः ।
४. ईश्णेन वैषणेन वार्षणेन वा । निरु० ४।७॥ ५. कोशे 'स्यादेषणेन' इत्यपपाठः ।
६. कोशे 'न्यय्यं' इत्यपपाठः । ७. कोशे 'तत्रिधम्' इत्यपपाठः ।
८. कोशे '०ज्ञानसंस्कृतिः' इत्यपपाठः । अविदितसंस्कार इत्यर्थः ।
९. कोशे 'मने विशेष्यतेत्येव०' इत्यपपाठः ।
१०. इषिरेण ते मनसा सुतस्य (ऋ० ८।४८।७) । ११. कोशे 'मन्त्रितः' इत्यपपाठः ।
१२. कुरुतनेत्यनर्थका उपजना भवन्ति, कर्त्तन हन्तन यातनेति । निरु० ४।७॥
१३. कोशे 'छन्दसे०' इत्यपपाठः ।
१४. कोशे 'तप्तेनेत्या०' इत्यपपाठः । अष्टा० ७।१।४५॥
१५. तनेत्यादिषु तादिशब्दा अर्थवन्तो नेत्यादयस्त्वनर्थका इति भावः ।
१६. कोशे '०माम्नातां' इत्यपपाठः । १७. कोशे 'अधिद्धोप्यन्ति' इत्यपपाठः ।
१८. कोशे 'क्रतंनेत्यादिते वदे' इत्यपपाठः । १९. कोशे 'कल्प्यस्याद्यतने' इति पाठः ।

असुग्यगादयस्सर्वे[1] [ये] नामस्वप्यकृत्स्वपि ।
नार्थस्य वाचका ज्ञेयाः स्वाध्यायार्थं भवन्ति ते ॥२८॥
ध्रियते [2]धीयते वास्मिन् जग्धमित्युदरं स्फुटम् ।
उक्तं [3]जठरशब्देन [4]पिबेत्याद्युपपत्तितः ॥२९॥
प्रसिद्धं यद्यपि त्वेतद् उदरे [3]जठरं सदा ।
प्रकृतिप्रत्ययावस्य[5] न सिद्धाविति पठ्यते ॥३०॥
जग्धशब्दाज्जमादाय [6]धृञश्चैव ततः परम् ।
ततोऽधिकरणे कुर्याद् अकारे प्रत्यये गुणम् ॥३१॥
धकारस्य ठकारेण सिद्धं [7]स्याज्जठरं पदम् ।
जपूर्वादथवा[8] धाञो डरे त्वद्वत्प्रसिध्यति[9] ॥३२॥

॥ [इति] निरुक्त-[श्लोक]-वार्तिके ऐकपदिके प्रथमाध्यायस्य प्रथमः पादः ॥

---

१. कोशे 'असुग्यदादय०' इत्यपपाठः । अष्टा० ७।१।३९—५०॥
२. कोशे 'ध्रीयते' इत्यपपाठः । जठरमुदरं भवति । जग्धमस्मिन् ध्रियते धीयते वा । निरु० ४।७॥
३. कोशे 'जाठर०' इत्यपपाठः ।
४. कोशे 'पिबेद्यात्यपप०' इत्यपपाठः । ऋ० ३।४७।१॥
५. कोशे 'प्रकृति प्रत्ययो वास्य' इत्यपपाठः ।
६. कोशे 'प्रज्ञश्चैव' इत्यपपाठः ।
७. कोशे 'स्याज्जाठरं' इत्यपपाठः ।
८. कोशे '०थवाणोडरे' इत्यपपाठः ।
९. पूर्वोक्ताकारप्रत्ययवदित्यर्थः ।

# द्वितीयः पादः

यत्तित्तितउशब्दोऽयं[1] किन्तु कथं स सिध्यति ।
पवनं परिपूर्वं तु प्रसिद्धं चालने स्फुटम् ॥१॥
चालनं [2]वैदलं वा [3]स्याद् यद्वा चर्ममयं भवेत् ।
मध्यदेशे [4]सच्छिद्रं तत् सक्तुशोध[न]साधनम् ॥२॥
ततवद्वेति संस्कारस्तुन्नवद्वेत्युदाहृतः[5] ।
तनोतेरिह[6] निष्ठायां मतोर्वत्वे तथा कृते ॥३॥
उपधाया इकार[:]स्याद् वकारस्य प्रसारणम् ।
नलोपे चान्त्यलोपे च ततवत्तितउ[7] मतम् ॥४॥
तुदेश्च[8] तुन्नवत्सिद्धमुकारस्येत्वमत्र[9] तु ।
संयोगस्य तथा तत्वमन्त्यलोपप्रसारणे ॥५॥
ततं विस्तीर्णमस्यास्ति [10]सन्ति तुन्नानि वा यतः ।
तिलमात्राणि [11]वा तानि [12]ततस्तत्तितउ स्मृतम् ॥६॥
तिलशब्दात्तिशब्दोऽत्र तुदेस्तुस्तत्वमागतः ।
उत्वञ्चाप्यवशिष्टस्य [13]तुन्नं छिद्रमिहोच्यते ॥७॥

---

१. कोशे 'यत्तत्तिकउशब्दोयं किन्नुकवास्य सिध्यति' इति पाठः । तितउ परिपवनं भवति । ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा । निरु० ४।८॥ २. वंशमयम् ।

३. कोशे 'स्यादुद्वा' इत्यपपाठः ।

४. कोशे 'प्रसिद्धं' इत्यपपाठः ।

५. कोशे '०वद्वेत्यूदाहृतः' इत्यपपाठः । ६. धा० ८।१॥

७. कोशे 'ततवत्तितउन्मतः' इत्यपपाठः ।

८. धा० ६।१॥ ९. कोशे '०मुकारे मन्त्र' इत्यपपाठः ।

१०. कोशे 'सन्नितुन्नानि' इत्यपपाठः ।

११. 'कोशे 'पातानि' इत्यपपाठः ।

१२. कोशे 'ततस्तत्तितत स्मृतम्' इत्यपपाठः ।

१३. कोशे 'तन्नछिद्र०' इत्यपपाठः ।

तनोतेर्डउः[1] सन्वच्च कल्पितं त्वेव [2]नाश्रितम् ।
सिद्धं तेनापि रूपं स्याद् अर्थोऽनेन तु पुष्कलम् ॥८॥
शिप्रे[3] इत्येतदुत्कृष्टं [4]षष्ठे व्याख्यास्यते ततः ।
हनू[5] वा नासिके वेति [6]मादयस्वेति वक्ष्यति ॥९॥
मध्या[7] इत्ययमाकारः सुपां [8]सुलुगितीरितः ।
सप्तम्यर्थे स विज्ञेयो [9]मध्या कर्तोरिति त्वृचि ॥१०॥
ताच्छीलिके[10] [11]मदेर्मन्दू [12]मरुद्गणविशेषणम् ।
आदित्याश्वस्तुतावेतदीर्मान्तास[13] इतीदृशम् ॥११॥
विशेषणं यथाश्वानां तथैवैतत्प्रकल्पितम् ।
समीरितान्तता[14] तच्च [15]पृथ्वन्तत्वमथापि वा ॥१२॥
निष्ठास्थाने मकारोऽयमीर्त्तेस्तु[16] गतिकर्मणः ।
समीरिता[17] हि ये तेऽन्ते चत्वारो विरलीकृताः ॥१३॥
त्रयस्तु मध्यमा येऽश्वास्ते समुत्पीडिता भृशम् ।
पृथूरस्काश्च[18] वा ते स्युः विस्तीर्णजघनास्तथा ॥१४॥

---

१. कोशे 'तनोतेर्वातु सन्वच्च' इत्यपपाठः । उणा० ५।५२॥
२. कोशे 'न श्रुतम्' इत्यपपाठः ।
३. शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः । निरु० ४।१०॥
४. कोशे 'षष्ठस्याख्या०' इत्यपपाठः । द्र०—निरु० ६।१७॥
५. कोशे 'तरु' इत्यपपाठः । निरु० ६।१७॥
६. ऋ० १।१०१।१०॥ निरु० ६ १७॥ ७. कोशे 'मध्यये इत्ययमा' इत्यपपाठः ।
८. कोशे 'सुयुगिति०' इत्यपपाठः । अष्टा० ७।१।३९॥
९. कोशे 'मध्या कतोरिति' इत्यपपाठः । ऋ० १।११५।४॥
१०. कोशे 'तच्छीलिके' इत्यपपाठः । मन्दू मदिष्णू युवां स्थः । निरु० ४।१२॥
११. धा० ४।९९॥ १२. मन्दू=इन्द्र-मरुद्गणौ । ऋ० १।६।७॥
१३. ईर्मान्तासः सिलिकमध्यमासः (ऋ० १।१६३।१०) ॥
१४. इर्मान्ताः समीरितान्ताः पृथ्वन्ता वा । सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा । निरु० ४।१३॥ १५. कोशे 'पृथ्यन्त०' इत्यपपाठः ।
१६. कोशे '०यमित्तेस्तु' इत्यपपाठः । धा० २।८॥
१७. कोशे 'समीहिता' इत्यपपाठः । १८. कोशे 'पृथुरस्काश्च पाते' इत्यपपाठः ।

एवं विशेषितास्सर्वे भवेयुस्सूर्यवाजिनः[1] ।
भवेत्कामयमानस्तु[2] कायमानो [3]मलोपतः ॥१५॥
चायमानोऽथवाग्निः[4] स्यात् पश्यन् [5]आदिविकारतः ।
लुब्धमित्यस्य शब्दस्य [6]बलोपश्छान्दसो भवेत् ॥१६॥
उकारस्य [7]तथैवौत्वं [8]लोधस्तेन प्रसिध्यति ।
शेतेर्वाप्यथवाश्नातेः[9] शीरमित्यप्युदाहृतम्[10] ॥१७॥
अनुशाय्यथवाशी स्याद् [11]अग्निस्तच्छील उच्यते ।
अनुप्रविश्य सर्वाणि शेते भूतानि पावकः ॥१८॥
जाठरेणैव रूपेण जङ्गमानि [12]तरूणि तु ।
अनभिव्यक्तया शक्त्या सन्मात्राधारया विभुः ॥१९॥
अशेरप्यादिलोपेन शीरमित्यवतिष्ठते ।
अश्नाति सर्वमेवामौ[13] नातो भोक्ता परः क्वचित् ॥२०॥
विद्रधे[14] द्रुपदे चेति तथानवगते पदे ।
सप्तम्येकवचोरूपे बहुवागर्थसंभवे ॥२१॥

---

१. कोशे '०सूर्यवाचिनः' इत्यपपाठः ।

२. कायमानो वना त्वं यत् (ऋ० ३।९।२) ॥ कायमानश्चायमानः कामयमान इति वा । निरु० ४।१४॥ ३. कोशे 'मलोमतः' इत्यपपाठः ।

४. कोशे 'कायमानोथवाग्नि स्यात् पशुन्नादि०' इत्यपपाठः ।

५. चायतिर्दर्शनार्थकः । तस्यादिचकारः कत्वमापद्यत इत्यर्थः ।

६. कोशे 'बालोप०' इत्यपपाठः ।

७. कोशे 'तथैवेत्वं' इत्यपपाठः ।

८. कोशे 'लोधन्तेन' इति पाठः । लुब्धं नयन्ति (ऋ० ३।५३।२३) ॥ लुब्धमृषिं नयन्ति । निरु० ४।१४॥ ९. धा० २।२२॥९।५१॥

१०. कोशे 'शीरमीरत्युदाहृतम्' इत्यपपाठः । शीरं पावकशोचिषम् (ऋ० ८।१०२।११) ॥ पावकदीप्तिम् । अनुशायिनमितिवाशिनमिति वा । निरु० ४।१४॥

११. कोशे 'अग्निस्तछल' इत्यपपाठः । १२. 'स्थिराणि' इति पाठोऽत्र स्यात् !

१३. कोशे 'सर्वमेवाना' इत्यपपाठः ।

१४. कोशे 'विदधे' इत्यपपाठः । तथा च मन्त्रवर्णः—

कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ॥ ऋ० ४।३२।२३॥

विद्रधं[1] तु विदृब्धं स्याद् द्रुपदं दारवं पदम् ।
निष्ठान्तस्य विपूर्वस्य [2]दृभेर्हिंसार्थवाचिनः ॥२२॥
रत्वे कृते त्वृकारस्य बकारस्य च लोपतः ।
तदेवं[3] विद्रधं जातं पदं स्यात्पादुकात्मकम् ॥२३॥
हिंसा [4]तक्षणरूपैव पादुका [5]द्रोश्च निर्मिताः ।
नवत्वञ्चार्भकत्वञ्च पादुकानां विशेषणम् ॥२४॥
मन्यते [6]शाकपूणिस्तु यास्कः कन्याविशेषणम् ।
प्रथमाद्विवचोरूपे नवार्भकपदे मते ॥२५॥
यास्कस्यातश्च ते स्यातां प्रगृह्ये तु पदे उभे ।
द्वे[7] एकवचने त्वेव सप्तम्यास्ते तथापि तु ॥२६॥
प्रथमाद्विवचोऽर्थे तु विभक्ते[:]परिणामतः ।
तूर्णशब्दस्य तुत्वेन तत्पूर्वस्य [8]गमेर्ड्वनि ॥२७॥
तुग्वेति[9] नैगमं रूपं तीर्थं सारस्वतञ्च तत् ।
तूर्णं हि गम्यते तच्च स्नानदानादिकामिभिः ॥२८॥
नमेर्नंसन्त[10] इत्येतत् प्रह्वीभावाभिधायिनः ।
सुगागमे मकारस्य [11]परस्ताद् नैगमं पदम् ॥२९॥

---

१. कोशे 'विद्रथन्त विदब्धं' इत्यपपाठः ।

२. कोशे 'द्रभेर्हिंसा०' इत्यपपाठः । पाणिनीयधातुपाठेऽयं धातुर्ग्रन्थे (धा० ६।३४५) भये (धा० १०।२७८) च पठ्यते ।

३. कोशे 'तदेव विद्रथञ्जातं' इत्यपपाठः ।

४. कोशे 'तत्क्षण०' इत्यपपाठः । ५. कोशे 'गोचरमाः' इत्यपपाठः ।

६. कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति शाकपूणिः । निरु० ४।१५॥

७. कोशे 'द्वैकवचने०' इत्यपपाठः ।

८. कोशे 'गमेर्वनि' इत्यपपाठः । धा० १।१०३१॥

९. कोशे 'तवेति' इत्यपपाठः । सुवास्त्वा अधि तुग्वनि (ऋ० ८।१९।३७) । तुग्व तीर्थं भवति । तूर्णमेतदायन्ति । निरु० ४।१५॥

१०. कोशे 'नमर्नासन्त' इत्यपपाठः । धा० १।१०३०॥ कुविन्नंसन्ते मरुतः पुनर्नः (ऋ० ७।५८।५) । पुनर्नो नमन्ते मरुतः । निरु० ४।१५॥ ११. कोशे 'परस्ता' इत्यपपाठः ।

उत्कृष्टं तु [1]नसन्तेति सप्तमे विवरिष्यते ।
अभि [2]प्रवन्त मन्त्रे हि पूर्वपक्षप्रसिद्धये ॥३०॥
आपूर्वस्य[3] वचोऽर्थस्य [4]हन्तेरप्रत्यये कृते ।
ल्युडर्थे[5] तु भवेद्रूपमाहन्नित्येव वैदिकम् ॥३१॥
भवेदाहनसस्तस्मात् [6]मत्वर्थे प्रत्यये जसि ।
अदेर्मन्प्रत्ययान्तस्य[7] कर्मण्यद्मेति सिध्यति ॥३२॥
अन्नमद्मेति[8] निर्दिष्टम् अद्यते हि बुभुक्षितैः ।
सदेरुपपदे[9] तस्मिन् [10]सनोतेर्वाद्मसद् भवेत् ॥३३॥
ताच्छीलिकः [11]क्विबत्रेष्टो बाच्यान्नस्य प्रसाधिका ।
सा ह्यन्नसादिनी[12] चोक्ता तथैवोक्तान्नसानिनी[13] ॥३४॥
सनोतेश्च नकारस्य [14]दत्वेन क्विपि सिध्यति ।
ईषेरिषेर्ऋषेर्वा[15] स्याल्ल्युडर्थे क्विबलौकिकम् ॥३५॥

---

१. नसन्त इत्युपरिष्टाद (निरु० ६।१७) व्याख्यास्यामः । निरु० ४।१५॥

२. कोशे 'प्रवत्त' इत्यपपाठः । ऋ० ४।५८।८॥ निरु० ७।१७॥

३. कोशे 'अपूर्वस्य मचो०' इत्यपपाठः । आपूर्वो हन्धातुर्वचनार्थे प्रसिद्धः—ब्राह्मण इदमाहतमिति ।    ४. कोशे 'हन्तेर्डप्रत्यये' इत्यपपाठः । धा० २।२॥ अप्रत्यये क्विपीत्यर्थः ।

५. कोशे 'लुडर्थे' इत्यपपाठः ।

६. ये ते मदा आहनसो विहायसः (ऋ० ८।७५।५) । ये ते मदा आहननवन्तो वचनवन्तः । निरु० ४।१५॥

७. कोशे 'अदेर्मप्रत्ययेन्तस्य कर्मण्यर्मेति' इत्यपपाठः । धा० २।१॥ उणा० ४।१४६॥

८. कोशे 'अन्तर्मर्मेति' इत्यपपाठः । अद्मसदद्मान्नं भवति, अद्मसादिनीति वान्नसानिनीति वा । निरु० ४।१६॥

९. धा० १।९०७॥    १०. कोशे 'सनोतेर्वामुसद०' इत्यपपाठः । धा० ८।२॥

११. कोशे 'किबन्तेष्टो वाच्यान्नस्य प्रसाधिता' इत्यपपाठः ।

१२. कोशे 'ह्यन्नसादीनी' इत्यपपाठः ।

१३. कोशे '०न्नसाहिनी' इत्यपपाठः ।

१४. कोशे 'नत्वेन' इत्यपपाठः ।

१५. कोशे 'ईषेरिषेरुषेर्वा स्याल्युडर्थे' इत्यपपाठः । धा० १।६४२॥ ४।१९॥ १।९४०॥

ह्रस्वत्वमीषतेरिष्टमृषेरित्वमृतस्तथा[1] ।
ततस्स्यान्मिनि मत्वर्थे रूपमीष्मिण इत्यपि ॥३६॥
तत्रेषणिन[2] इत्यादि भाष्यकारेण दर्शितम् ।
अयुक्तामिव तद्भान्ति [3]कृदन्तादिन्निषेधतः ॥३७॥
एकाक्षरात्कृतो[4] जातेः सप्तम्याञ्च न तौ स्मृतौ ।
इत्युक्तत्वादिनिर्न स्यादीषणादेः[5] कृदन्ततः ॥३८॥
व्रीह्यादित्वात्[6] कृदन्ताच्च [7]केचिदाहुरिनिं बुधाः ।
कार्यी भार्यीति वा दृष्टेर्भाष्यमप्युपपद्यते ॥३९॥
वहेर्णसि[8] कृते [9]वाहः स्तोत्रं वा चर्म वोच्यते ।
चर्माप्यभिषवार्थं यद्वाहका[का]रमोप्सितम् ॥४०॥
प्रसिद्धो वाहको लोके गवां [10]पानाय कल्पितः ।
रसपूर्णत्वमामान्याद् वाहश्चर्मेह लक्ष्यते ॥४१॥
परितक्म्येति[11] चाकृष्टं रात्रिरित्यभिधास्यते[12] ।
तकतेः[13] परिपूर्वस्य मनौ कर्तरि कारके ॥४२॥

---

१. कोशे '०रिष्टमिषेरित्व०' इत्यपपाठः ।

२. ते वाशीमन्त इष्मिणः (ऋ० १।८७।६) । ईषणिन इति वैषणिन इति [?]वार्षणिन इति वा । निरु० ४।१६॥

३. कोशे 'कृदन्तादीन्निबोधतः' इत्यपपाठः ।

४. कोशे 'एकाक्षरान्तते' इत्यपपाठः । महाभाष्य ५।२।११५॥

५. कोशे '०दीषणाते' इत्यपपाठः ।

६. अष्टा० ५।२।११६॥

७. दुर्गस्कन्दाभ्यामन्ये ते, तन्निर्देशाभावात् । ८. धा० १।१०५३॥

९. कोशे 'वाहन्तोत्रा वा चर्म चोच्यते' इत्यपपाठः । अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्ते । निरु० ४।१६॥

१०. कोशे 'वानाय' इत्यपपाठः ।

११. कोशे 'परितक्ष्येति' इत्यपपाठः ।

१२. परितक्म्येत्युपरिष्टाद् (निरु० ११।२५) व्याख्यास्यामः । निरु० ४।१६॥ परितक्म्या रात्रिः परित एनां तक्म । तक्मेत्युष्णनाम तकत इति सतः । निरु० ११।२५॥

१३. धा० १।१२०॥

परितक्मेति[१] रूपं स्यात् तच्चोष्णमभिधीयते ।
तद्रात्रिं परितो यस्मात् [२]परितक्म्या ततस्तु सा ॥४३॥
रात्रिं [च] परितस्तक्म[३] भवतीति विवक्षिते ।
यप्रत्यये टिलोपे च [४]परितक्म्या प्रसिध्यति ॥४४॥

॥ [इति] निरुक्तश्लोकवार्त्तिके [५]ऐकपदिके
प्रथम[ाध्याय]स्य द्वितीयः पादः ॥

—:०:—

१. कोशे 'परितज्येति' इत्यपपाठः ।
२. कोशे 'परितक्ष्यं' इत्यपपाठः ।
३. कोशे 'परितस्तक्य मावर्तीति' इत्यपपाठः ।
४. कोशे 'परितक्ष्यां' इत्यपपाठः ।
५. कोशे 'एकपदिके' इत्यपपाठः ।

# तृतीयः पादः

सुपूर्वस्य[1] तु निष्ठायामेते[2] [:]स्वितमितीष्यते ।
सुवितं त्विति रूपं [3]स्यादुवङि छान्दसे कृते ॥१॥
षूङः[4] स्याद्वर्तमानस्य प्राणिगर्भविमोचने ।
निष्ठायां सूतमित्येव सुवितं[5] त्विटच् वङ्यपि ॥२॥
सुगतं सुगतिस्थानम् अपत्यं सूतमुच्यते ।
दयतिः [6]पालनार्थः स्याद् दयमाना[7] इतीह तु ॥३॥
दानार्थो[8] वा विभागार्थो [9]दयते वस्वितीह तु ।
अथ[10] जिह्वेति मन्त्रेऽस्मिन् द[ह]त्यर्थः प्रतीयते ॥४॥
इन्द्रःपूर्भिरिति[11] त्वस्यां हिंसाकर्मावसीयते ।
इमे सुता इति[12] त्वस्यां विहायोगतिमाह सः ॥५॥
अनेकार्थतयैवेयमिहोक्ता[13] भाषिकत्वतः ।
अद्या चिन्नू[14] इति त्वस्यां पुराणार्थो[15]नुरिष्यते ॥६॥

---

१. कोशे 'स पूर्वस्य' इत्यपपाठः । सुविते सु इते सूते सुगते प्रजायामिति वा । निरु० ४।१७॥ २. धा० २।३६॥ ३. कोशे 'स्या उपन्दि छन्दसे' इत्यपपाठः ।

४. कोशे 'षूणंस्या०' इत्यपपाठः । धा० २।२१॥

५. कोशे 'सुवितन्त्वित्युव०' इत्यपपाठः ।

६. कोशे 'पायनार्थस्या०' इत्यपपाठः । धा० १।१०११॥

७. दयतिरनेककर्मा । नवेन पूर्वं दयमानाः स्याम (मै० सं० ४।१३।८) इत्युपदयाकर्मा । निरु० ४।१७॥ ८. धा० १।५१०॥

९. कोशे 'द्रयते बस्वतीह' इत्यपपाठः । य एक इद्विदयते वसु (ऋ० १।८४।७) इति दानकर्मा वा विभागकर्मा वा । निरु० ४।१७॥ १०. कोशे 'अथ' इत्यपपाठः । दुर्वर्तुर्भीमो वा दयते वनानि (ऋ० ६।३।५) इति दहतिकर्मा । निरु० ४।१७॥

११. कोशे 'इन्द्रःपूभिदिति' इत्यपपाठः । विदद्वसुर्दयमानो वि शत्रून् (ऋ० ३।३४।१) इति हिंसाकर्मा । निरु० ४।१७॥ १२. इमे सुता...दयमानो अबूबुधत् । दयमान इति । निरु० ४।१७। दयमानः=डयमानः । १३. कोशे '०तयैवायमिहोक्ता' इत्यपपाठः । १४. कोशे 'अद्यापिसू' इत्यपपाठः । ऋ० ६।३०।३॥

१५. नूचिदिति निपातः पुराणनवयोर्नू चेति च । निरु० ४।१७॥

अद्य [1]चेत्यस्य वैलोम्यान्नू चेत्यत्र नवाभिधः ।
पुरा चेत्यस्य वैलोम्याद् उपमादेश्च वाचकः ॥७॥
ददातेः[2] कर्मणीष्टं स्याद् दावने वह्निविश्रुतौ ।
दाव्न[3] इत्येव भाषायां कर्तर्येव [4]वनिप्तथा ॥८॥
द्वितीयार्थे चतुर्थ्येषा[5] षष्ठ्यर्थे वा समाश्रिता ।
विद्याम[6] तस्य ते मन्त्रे तथा वाक्यार्थसंभवात् ॥९॥
अकूपारस्त्वनेकार्थस्तथैवाज्ञातसंस्कृतिः[7] ।
पृणातेः[8] पालनार्थस्य पूरणार्थस्य वेष्यते ॥१०॥
परणं[9] त्विति भाषायां पालनं वाऽर्थपूरणम् ।
अकुत्सितं प्रभूतत्वात् [10]तच्चाकुपरणं भवेत् ॥११॥
कुपूर्वस्याणि [11]तस्य स्यादुकारस्यापि दैर्घ्यतः ।
रूपं कूपार इत्येतद् [12]अकूपारो नञान्वितः ॥१२॥
विशेषणञ्च [13]दानस्य [14]तथादित्योऽभिधीयते ।
अकुपारस्त्वकूपारो[15] दैर्घ्यं छान्दसमिष्यते ॥१३॥
घञि वाप्यणि वा ज्ञेयो योऽकूपारस्समीरितः ।
अकुत्सितं प्रशस्तं हि यस्य लोकस्य पालनम् ॥१४॥
अकूपारस्स निर्दिष्टो घञि विग्रह ईदृशः ।
अकुत्सितमयं लोकं [16]पालयत्येव सर्वदा ॥१५॥

---

१. कोशे 'चत्यस्य वैलोम्या सू चेत्यत्र भवा०' इत्यपपाठः । ऋ० १।१६।७॥

२. धा० ३।९॥ ३. कोशे 'दान्नु' इत्यपपाठः ।

४. अष्टा० ३।२।७४॥ ५. कोशे 'चतुर्थ्येषां' इत्यपपाठः । ६. ऋ० ५।३९।२॥

७. कोशे 'अक्तुपार०' इत्यपपाठः । विद्याम तस्य ते वयमकुपरणस्य दानस्य । निरु० ४।१८॥ ८. कोशे 'वृणातेः' इत्यपपाठः । धा० ९।१९॥

९. कोशे 'परणन्त्विरि' इत्यपपाठः । १०. कोशे 'तन्चाकूवरणं' इत्यपपाठः ।

११. तस्य=पृणातेः । १२. कोशे 'अरूपारो नणान्वितः' इत्यपपाठः ।

१३. 'दावने' इत्यस्येत्यर्थः ।

१४. कोशे 'तथादीन्योक्ति०' इत्यपपाठः । आदित्योऽप्यकूपार उच्यते । अकूपारो भवति दूरपारः । निरु० ४।१८॥

१५. कोशे '०रस्तुकूपारो' इत्यपपाठः । १६. कोशे 'वाचयत्येव' इत्यपपाठः ।

तेनाकूपार इत्येवमरिण चापि तु नैगमे ।
रश्मिभिः पालयन् सर्वं पूरयन्वैवमुच्यते ॥१६॥
दूरपारत्वनिर्देशः तत्सिद्धाविह[1] कल्पितः ।
बहुसत्त्वाश्रयत्वेन [2]महीवेष्टनतस्तथा ॥१७॥
समुद्रोऽप्युच्यते[3] ऽनेन महापार इतीरितः ।
अर्तेस्स्यात्[4] कूपपूर्वस्य [5]कर्मण्यण्प्रत्यये कृते ॥१८॥
न कूपमृच्छतीत्येवं [6]कूर्मोऽकूपार ईरितः ।
लोकेऽपि [7]न्याय्यमेवेदं रूपं कूर्मस्य वाचकम् ॥१९॥
श्यतेः[8] शिशीत[9] इत्येतत् तनूकरणवाचिनः ।
ओकारस्येत्वसंपत्त्या[10] शपश्श्लावात्मनेपदे ॥२०॥
छान्दसं तु भवेद्रूपं निश्यती[ति] तु भाषितम् ।
तकतेश्च[11] सुपूर्वस्य न्याय्यं [12]सुतकनस्त्विति ॥२१॥
सुगतिश्चाग्निरिष्टोऽसौ[13] सुतुग्वा सुप्रजो भवेत् ।
पचाद्यच्युपधोत्वेन[14] सुतुको वैदिको भवेत् ॥२२॥

---

१. कोशे '०विव' इति पाठः । २. कोशे '०वेष्टनकस्तथा' इत्यपपाठः ।
३. समुद्रोऽप्यकूपार उच्यते । अकूपारो भवति महापारः । निरु ४।१८॥
४. धा०३।१६॥
५. अष्टा० ३।२।१॥
६. कच्छपोऽप्यकूपार उच्यते । न कूपमृच्छतीति । निरु० ४।१८॥
७. कोशे 'न्यायमेवेदं कूपं' इत्यपपाठः ।
८. कोशे 'शीते शिशतीत' इत्यपपाठः । धा० ४।३७॥
९. शिशीते शृङ्गे रक्षसे विनिक्षे (ऋ० ५।२।९) । निश्यति शृङ्गे रक्षसो विनिक्षणाय । निरु० ४। ८॥
१०. कोशे 'ओकरेत्वसंपत्त्या शपश्शापात्मने०' इत्यपपाठः ।
११. कोशे 'ककतेश्च' इत्यपपाठः । निघ० २।१४॥
१२. कोशे 'सुकृतन०' इत्यपपाठः ।
१३. अग्निः सुतुकः सुतुकेभिरश्वैः (ऋ० १०।३।७) । सुतुकनः सुतुकनैरिति वा सुप्रजाः सुप्रजोभिरिति वा । निरु० ४।१८॥
१४. अजपि सर्वधातुभ्यः । महा० ३।१।१३४॥

अयतावुपसर्गस्य[1] लत्वाभावेन[2] वैदिकम् ।
सुप्रायणा इति [3]त्वेतद् न्याय्यं सुप्लायना इति ॥२३॥
एतेरवगतं[4] त्वेव भवेत्सुप्रायणा[5] अपि ।
तत्रानव[गते]ष्वस्य [6]फलीभूतं प्रयोजनम् ॥२४॥
प्रपूर्वस्य तु [7]यौतेस्स्याद् उवङ् कप्रत्यये कृते ।
प्रायुवित्यन्तलोपे स्याच् [8]छान्दसं [9]प्रायुवो जसि ॥२५॥
अथवा [10]क्विपि तस्यैव तुक्तकारस्य वत्वतः ।
नञ्पूर्वस्याप्रमाद्यन्त इत्यत्रार्थो निर्दशितः ॥२६॥
अनैकार्थ्याद्धि[11] धातूनां प्रमादे यौतिराश्रितः ।
मन्त्रार्थे तन्निषेधस्य समवायो हि पुष्कलः ॥२७॥
च्यवनश्च्यवतेः[12] सिद्धो भाषायां ल्युटि यद्यपि ।
इष्टो [13]च्यावयितेत्यर्थेऽप्रसिद्ध इति पठ्यते ॥२८॥
रजः[14] शब्दस्त्वनेकार्थः संस्कारोऽस्यास्ति भाषिकः ।
रञ्जेरसुनि[15] सिद्धोऽयं प्रत्यये लोकवेदयोः ॥२९॥

---

१. कोशे 'अयथावुप०' इत्यपपाठः ।

२. उपसर्गस्यायतौ (अष्टा० ८।२।१९) इति लत्वप्राप्तिः ।

३. कोशे 'त्वेतन्याय्यं सुप्लावना' इत्यपपाठः । ४. धा० २।३६॥

५. कोशे '०सप्रायणा' इत्यपपाठः । ६. कोशे 'पणीभूतं' इत्यपपाठः ।

७. कोशे 'योते०' इत्यपपाठः । धा० २।२३॥ देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे (ऋ० १।८९।१) । देवा नो यथा सदा वर्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाहन्यहनि । निरु० ४।१९॥ ८. उपसर्गदीर्घत्वमपि छान्दसम् ।

९. कोशे 'प्रायु वै' इत्यपपाठः ।

१०. कोशे 'क्वपि तस्यैव तप्तकार०' इत्यपपाठः । तस्य=प्रपूर्वस्य यौतेः ।

११. कोशे 'अनेका०'इत्यपपाठः । तु०—अनेकार्था अपि धातवो भवन्ति । महा० १।३।१॥

१२. च्यवन ऋषिर्भवति च्यावयिता स्तोमानाम् । निरु० ४।१९॥ धा० १।१००४॥

१३. कोशे 'च्यावयतेत्यर्थे न प्रसिद्ध' इत्यपपाठः ।

१४. रजो रजतेः । ज्योती रज उच्यते । उदकं रज उच्यते । लोका रजांस्युच्यन्ते । असृगहनी रजसी उच्येते । निरु० ४।१९॥

१५. कोशे 'रञ्ज०' इत्यपपाठः । धा० १।१०४८॥

रञ्जेरप्यसुनः[1] कित्वं सिद्धमौणादिके[2] विधौ ।
अनुनासिकलोपः[3] स्यात् [4]कित्वेनेति रजो भवेत् ॥३०॥
ज्योतिष्यप्युदके लोके रुधिरेऽहन्यपि स्मृतः ।
धूल्यां[5] चित्तस्य धर्मे च[ते]नानेकार्थ एव च ॥३१॥
हरस्तु[6] [7]हरतेरिष्टम् असि पूर्वेष्वपि त्रिषु[8] ।
जुहोतेर्ह्वयतेर्वा[9] स्याद् [10]जुहुरे वैदिकं पदम् ॥३२॥
इर योरे[11] तु पूर्वस्य परस्मैपदभावतः ।
आत्मनेपदभावोऽपि छान्दसः परिकल्पितः ॥३३॥
जुहोतेजुहुवुर्न्याय्यं[12] लिटि रूपं प्रतीयते ।
ह्वञोऽप्युभयभाषत्वात्[13] पक्षे तत्स्यात्पदं लिटि ॥३४॥
आत्मनेपदपक्षे तु भवेज्जुहुविरे[14] तथा ।

---

१. कोशे 'रञ्जे०' इत्यपपाठः । धा० १।१०४८॥

२. उणा० ४।२१८॥

३. अनिदितां हल उपधायाः क्ङिति । अष्टा० ६।४।२४॥

४. कोशे 'किन्त्वे०' इत्यपपाठः ।

५. एतदर्थद्वयं भाष्यकृता दुर्गस्कन्दाभ्यां च नोपसंगृहीतम् । अपि च 'रजांसि चित्रा विचरन्ति तन्यवः (ऋ० ५।६३।५) इत्यपि निगमो भवति' इति निरुक्तपाठो व्याख्याकृद्भिर्न स्पृष्ट इति संदिग्धः प्रतीयते ।

६. हरो हरतेः । ज्योतिर्हर उच्यते । उदकं हर उच्यते । लोका हरांस्युच्यन्ते । असृगहनी हरसी उच्येते । प्रत्यग्ने हरसा हरः शृणीहि (ऋ० १०।८७।२५) इत्यपि निगमो भवति । निरु० ४।१९॥

७. धा० १।६४७॥

८. 'असृगहनी'''निगमो भवति' इति निरुक्तसन्दर्भस्य दुर्गस्कन्दाभ्याम् अस्पृष्टत्वाद् नीलकण्ठकृतसंख्यानिर्देशाच्चायं निरुक्तसन्दर्भांशः सन्दिग्धः ।

९. कोशे 'अहोतेर्ज्वलेतर्वा' इत्यपपाठः । धा० ३।१॥ धा० १।१०५७॥

१०. जुहुरे विचितयन्तः (ऋ० ५।१९।२) जुह्विरे विचेतयमानाः । निरु० ४।१९॥

११. अष्टा० ६।४।७६॥ हु लिट् > हु झ > हु हु इरे > जुहुरे इति प्रक्रिया ।

१२. कोशे 'जुहतेः जुहुपु न्याय्यं' इत्यपपाठः ।

१३. कोशे 'वेञोप्युभयभाषत्वात् पक्षेतस्यात्' इत्यपपाठः ।

१४. कोशे 'जुहुविते' इत्यपपाठः ।

व्यन्त[1] इत्यत्र यो [2]धातुर्वेतीति [स] निगद्यते ॥३५॥
तस्यानेकार्थतेष्टैव भाष्यकारेण दर्शिता ।
यणादेशापवादत्वाद् इयङोऽप्यन्त इत्यचि[3] ॥३६॥
छान्दसत्वादविज्ञानं[4] वियन्तो न्याय्यमिष्यते ।
पदं देवस्य[5] मन्त्रे हि पश्यत्यर्थः प्रतीयते ॥३७॥
गत्यर्था[6] बुद्धिकर्माणस्तेनैवमिह संश्रितम् ।
नमसेत्यपि निर्देश एवमेवोपपद्यते ॥३८॥
वीहि शूर [7]पुरोडाशमित्यस्मिन्खादनार्थता ।
कठिनत्वात्पुरोडाशो[8] भक्ष्यते त्वेव नाश्यते[9] ॥३९॥
वीतं[10] पातमिति त्वस्यां भवेदशनगोचरः ।
कुर्वाणा इति तु न्याय्यं [11]करोतेरात्मनेपदे ॥४०॥
छान्दसे तु यणादेशे क्राणा [12]विकरणादृते ।
त्वामिन्द्र म[ति]भिः [13]सूते सुनीथासो वसूयवः ॥४१॥

---

१. कोशे 'ल्यन' इत्यपपाठः । व्यन्त इत्येषोऽनेककर्मा । निरु० ४।१९॥

२. कोशे 'धर्मा तुर्वितीति' इत्यपपाठः । धा० २।३९॥

३. कोशे 'इत्यपि' इति पाठः । अचि श्नुधातु० (अष्टा० ६।४।७७) इतीयङ्, इको यणचि (अष्टा० ६।१।७४) इत्यस्य यणादेशस्यापवादः ।

४. कोशे '०ज्ञातं वियन्तो न्याय०' इति पाठः ।

५. पदं देवस्य नमसा व्यन्तः (ऋ० ६।१।४) इति पश्यतिकर्मा । निरु० ४।१९॥

६. कोशे 'गत्यर्थों' इत्यपपाठः ।

७. वीहि शूर पुरोडाशम् (ऋ० ३।४१।३) इति खादतिकर्मा । निरु० ४।१९॥

८. कोशे 'पुरुडाशो' इत्यपपाठः ।

९. कठिनं भक्ष्यते, नातिकठिनं नातिद्रवमश्यत इति विशेषः ।

१०. कोशे 'पितापाता०' इत्यपपाठः । वीतं पातं पयसः उस्रियायाः (ऋ० १।१५३।४) अश्नीतं पिबतं पयस उस्रियायाः । निरु० ४।१९॥

११. धा० ५।७॥

१२. कोशे 'दिकरणा०' इत्यपपाठः ।

१३. मूले 'सुते' इति पाठः ।

गोभिः [1]क्राणा अनूषत[2] [मन्त्रोऽयं स्यादुदाहृतिः] ।
वासी [3]वाशीति निर्दिष्टा [4]सकारस्य तु शत्वतः ॥४२॥
वाङ्नामस्वपि[5] पाठो वा वागेवेष्टाथ वाशिनी ।
वसेरिञ्प्रत्यये[6] वाशी कर्मणि स्यात्तु वैदिकम् ॥४३॥
तक्षणार्थस्य[7] वाशेः[8] स्यात् वाशी च करणे तथा ।
विषुणस्येति[9] शब्देऽस्मिन् सशब्दस्य तु षत्वतः ॥४४॥
मकारस्यापि णत्वेन [10]विषुणस्येति वैदिकम् ।
जन्तोर्विशेषणं[11] चैतत् जन्तुरात्माभिधीयते ॥४५॥
विषमत्वन्तु तस्योक्तं दुर्विज्ञेयत्वहेतुतः ।
यज्ञो वा जन्तुरित्युक्तः फलस्य जनको ह्यसौ ॥४६॥
जामिरि[12] [त्य]प्यनेकार्थस्तथैवाज्ञातसंस्कृतिः ।
भगिन्यां बालिशे चैव पुनरुक्ते च वर्तते ॥४७॥

---

१. कोशे 'काणठि अनुषतः' इत्यपपाठः ।

२. अनुपलब्धमूलम् । तु०—ऋ० १।१३२।२॥ गोभिः कुर्वाणा अस्तोषत । निरु० ४।१९

३. कोशे 'वशीति' इत्यपपाठः । वाशीभिस्तक्षताश्मन्मयीभिः (ऋ० १०।१०१।१०) वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा । निरु० ४।१९॥

४. कोशे 'शकारस्य' इत्यपपाठः । स्कन्दोऽपि तथैव संस्कारं प्रदर्शयामास—'वाशी-शब्दः छेदनद्रव्यविशेषवचनस्तस्य सकारस्य शकारेण व्यापत्तिः । वासीभिरधिषवणग्रावाख्याभिः' ।

५. कोशे 'वाङ्नामस्वपि पाठोवां वागेवेष्टाथ वाग्मिनी' इत्यपपाठः । निघ० १।११॥

६. कोशे 'पशेरित्यप्रत्यये पश कर्मणि' इत्यपपाठः । 'सकारस्य तु शत्वतः' इति वचनादत्र 'वसेः' इति शोधः । तथा च वसधातोः(धा० १।१०५४॥ २।१३) इञि (उणा० ४।१२६), कृदिकारादक्तिनः (अष्टा० ४।१।४५ गणसूत्रम्) ङीषि, सशत्वे वाशीति रूपं निष्पद्यते ।

७. कोशे 'भक्षणा०' इत्यपपाठः ।

८. धा० ४।५४॥ पाणिनीयधातुपाठेऽयं शब्दार्थे पठ्यते ।

९. कोशे 'विषस्येति शब्देस्मिन् षशब्दस्य' इत्यपपाठः । स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः (ऋ० ७।२१।५) स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्या [शिश्नं श्नथतेः] अपि गुर्ऋतं नः । सत्यं वा यज्ञं वा । निरु० ४।१९॥

१०. कोशे 'विषण०' इत्यपपाठः । ११. कोशे 'जातो०' इत्यपपाठः ।

१२. कोशे 'जामरि···प्यनेकार्थं तदैवाज्ञात संस्मृतिः' इत्यपपाठः । जाम्यतिरेकनाम बालिशस्य वा समानजातीयस्य वोपजनः । निरु० ४।२०॥

जनेर्जायत[1] इत्येवं जा इत्येव प्रसिध्यति ।
छान्दसं हि विडन्तस्य [2]मिश्चास्योपजनः परः ॥४८॥
प्रत्ययो [3]वा जने[र्मिः] स्यात्संज्ञायां [4]नात्वमेव च ।
भगिनी जायते [5]त्वेव पिण्डदाने न वर्तते ॥४९॥
मूर्खोऽपि जायते त्वेव नैव धर्मे [6]व्यवस्थितः ।
पुनरुक्तं पुनर्जातम् अधिके कुरुते मतिम् ॥५०॥
पातेः[7] पातेति वै न्याय्यं लुकि [8]पालयितेति वा ।
आकारेत्वे [9]पितापि स्याद् रक्षिता भाषिकोऽप्ययम् ॥५१॥
रोगोपशमनार्थस्य[10] [11]शमित्येतत् क्विपोच्यते ।
शमनं च [12]शमो रूपं रोगोपशमनं च तत् ॥५२॥
डोप्रत्यये[13] कृते [14]यौतेर्यो इत्येतत्तु वैदिकम् ।
रूपं [15]यावनम् इत्येतद् णिजन्तस्य तु लौकिकम् ॥५३॥
अन्तोदात्तं पुनः [16]शंयोर्बार्हस्पत्यस्य वाचकम् ।
तच्छं योरिति [17]मन्त्रेऽस्मिन् शंयुरित्येतदिष्यते ॥५४॥

॥ [ इति पद्मभगवत्प्रणीते] निरुक्त-श्लोकवार्त्तिके ऐकपदिके प्रथम[ाध्याय]स्य तृतीयः पादः ॥

---

१. धा० ४।४१॥ २. कोशे 'विश्वास्योप०' इत्यपपाठः ।
३. कोशे 'पा' इत्यपपाठः । ४. नकारस्याकार इत्यर्थः ।
५. कोशे 'त्वेच पिण्डदाने च वर्त्तते' इत्यपपाठः । ६. कोशे 'व्यवस्थिते' इत्यपपाठः ।
७. द्यौर्मे पिता पाता वा पालयिता वा । निरु० ४।२१॥ धा० २।४७॥
८. कोशे 'पालशिते०' इत्यपपाठः । पातेलुंग्वचनम् । महाभाष्य ७।३।३७॥
९. कोशे 'पिकापि' इत्यपपाठः ।
१०. शमनं च रोगाणां यावनं च भयानाम् । निरु० ४।२०॥
११. कोशे 'शमीत्येत क्वपी०' इत्यपपाठः । १२. धा० ४।९२॥
१३. कोशे 'डोण प्रत्यये' इत्यपपाठः ।
१४. कोशे 'यौतेः यौ' इत्यपपाठः । धा० २।२३॥
१५. कोशे 'यौवनं इत्येतत् निजन्त०' इत्यपपाठः ।
१६. कोशे 'शयो०' इत्यपपाठः । बृहस्पतेः पुत्रः शंयुर्नामर्षिर्बभूवेत्यैतिहासिकाः ।
१७. कोशे 'मन्त्रोस्मिन् जंयुरि०' इत्यपपाठः । मै० सं० ४।१३।१०॥

## चतुर्थः पादः

द्यतिस्यतीति[1] सूत्रेण [2]दितिस्सिद्धोऽवगम्यते ।
तत्सिद्धावदिति[:]सिद्धा तेनानेकार्थमेव तत् ॥१॥
देवानां[3] जननीमाहुरदितिं[4] त्वैतिहासिकाः ।[5]
.................................................. ..................
.................................................. ..................

[ ॥ इति पद्मभगगवत्प्रणीते निरुक्तश्लोकवार्त्तिके ऐकपदिके प्रथमाध्यायस्य चतुर्थः पादः ॥ ]

[ ॥ इति पद्मभगवत्प्रणीते निरुक्तश्लोकवार्त्तिके ऐकपदिके प्रथमोऽध्यायः ॥ ]

---

१. द्यतेः (धा० ४।४०) क्तिनि, द्यतिस्यति० (अष्टा० ७।४।४०) इतीत्वम् ।

२. कोशे 'दति०' इत्यपपाठः ।  ३. अदितिरदीना देवमाता । निरु० ४।२२॥

४. कोशे '०रदिती त्स्वेति०' इत्यपपाठः ।

५. इतोऽग्रे कोशस्यैकविंशतिः पत्राणि नष्टानि ।

# पञ्चमोऽध्यायः

## द्वितीयः पादः

यथोक्तलक्षणादेष[1] देवः स्याच्छमिताद्रिगुः ॥४१॥
प्राधान्यात्तेन निर्देशः प्राधान्यं तद् द्विरुक्तितः ।
केनचिद् व्यपदेशे च सिद्धे नान्यदपेक्षिते ॥४२॥
अग्निरप्यद्रिगुः[2] प्रोक्तः तथेन्द्रोऽप्यभिधीयते ।
अधृतं गमनं यस्मात्तयोरव्याहता गतिः ॥४३॥
तस्मात्तावद्रिगू[3] प्रोक्तौ मुख्यौ लक्षणयेति नः ।
आङ्पूर्वस्य[4] [5]घुषेरिष्टं घकारस्य तु गत्वतः ॥४४॥
उकारस्यापि दीर्घत्वमाङ्गूष इति वैदिकम् ।
आघोष इति युक्तं स्याद् [6]घञि स्तोमोऽभिधीयते ॥४५॥
आपान्तमन्युरित्येतत्तिलोपे[7] स्यान्नुमागमे ।
आपातितपदस्येष्टं[8] मन्यूत्तरपदस्य हि ॥४६॥
मन्युरापातितो[9] यस्य दीप्तिर्वा क्रोध एव वा ।

---

१. कोशे '०लक्षगादोषा दैवास्याछमि०' इत्यपपाठः । अपि वा प्रशासनमेवाभिप्रेतं स्यात्तच्छन्दवत्त्वात्—अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगो (मै० सं० ४।१३।४) इति । निरु० ५।११॥

२. अग्निरप्यध्रिगुरुच्यते । तुभ्यं श्चोतन्त्यध्रिगो शचीव. (ऋ० ३।२१।४) अधृतगमन कर्मवन् । इन्द्रोऽप्यध्रिगुरुच्यते । निरु० ५।११॥ ३. कोशे 'तस्मातवध्रिगुप्रोक्तो' इत्यपपाठः ।

४. कोशे 'आं पूर्वस्य' इत्यपपाठः । ५. धा० १।६८३॥

६. कोशे 'घञस्तोमो' इत्यपपाठः । आङ्गूषः स्तोम आघोषः । निरु० ५।११॥

७. कोशे 'आचान्तमन्युरित्येतत्तिलोपस्योनुमा०' इत्यपपाठः । आपान्तमन्युस्तृपलप्रभर्मा (ऋ० १०।८९।५) आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी सृप्रप्रहारी सोमो वेन्द्रो वा । निरु० ५।१२॥ ८. कोशे 'आपादितपदस्येष्टं मन्युत्तर०' इत्यपपाठः ।

९. कोशे '०रापतिततो' इति पाठः ।

सोम[:] स्यादथवेन्द्रोऽसौ द्वयोर्मन्त्रे समन्वयात् ॥४७॥
दीप्तिः सोमस्य संस्कारः शास्त्रोक्तः परिगृह्यते ।
अप्रत्यये णिनेरर्थे [1]शुपूर्वस्याप्यशे[:]स्त्रियाम् ॥४८॥
उकारस्य तथा मत्वे श्मशेति छान्दसं पदम् ।
श्वाशिनीति[2] तु युक्तं स्यात् कुल्याशुव्यापिनी मता ॥४९॥
शरीरं वा [3]श्मेत्यप्युक्तमशेस्तत्पूर्वकस्य च ।
तस्मिन्नेव[4] श्मशेत्येतदकारस्यापि लोपतः ।
श्माशिनी देहनाडी[5] स्याद् देहं व्याप्य व्यवस्थिता ॥५०॥

॥ इति [पद्मभगवत्प्रणीते] निरुक्तश्लोकवार्त्तिके ऐकपदिके द्वितीय[ाध्याय]स्य द्वितीयः पादः ॥

—:०:—

१. श्मशा शु अश्नुत इति वा श्माश्नुत इति वा । निरु० ५।१२॥ धा० ५।१८॥
२. कोशे 'श्वशिनीति तु युक्तं स्यात् कल्या०' इत्यपपाठः ।
३. कोशे 'श्मशेत्युत्युक्तम०' इत्यपपाठः ।
४. कोशे 'तस्मिन्नेवा' इत्यपपाठः । तस्मिन्=अकारप्रत्यये ।
५. कोशे 'देहनाडिनी स्याद्देहं व्याप्यव्यवस्थितम्' इत्यपपाठः ।

# तृतीयः पादः

उर्वशी[1] त्वप्सरा वा स्यात् विद्युत्सन्ध्याथ वारुणी[2] ।
वाग्वा माध्यमिका ज्ञेया भवेदाध्यात्मिकाथवा ॥१॥
ऐलः पुरूरवा राजा वायुस्सूर्योऽथवा मतः ।
उत्तरा वारणिर्ज्ञेया तथेन्द्रः [3]प्राण एव वा ॥२॥
उरु [4]साम्यश्नुते सर्वं महत्स्थानं [5]प्रचक्षते ।
ततश्चोर्वाशिनी सा स्याद् उर्वशी कल्प्यलक्षणा ॥३॥
वारुणी[6] व्यापिनीत्यर्थ ऊरुभ्यामश्नुते त्विति ।
इतिहासं समाश्रित्य संभोगे पुरुषा[न्] हि सा ॥४॥
ऊरुभ्यामश्नुते तेन कथिता तूर्वशी पुनः ।
उरुर्वा[7] स्यान्महानस्या वश[:]कामिषु [जन्तुषु] ॥५॥
एवं चोरुवशी[8] सा स्यादितिहाससमाश्रये ।
ईकारे प्रत्ययेऽश्नोतेरुरुपूर्वस्य[9] कर्तरि ॥६॥
उर्वशीति पदं सिद्धम् उरुपूर्वस्य वा वशेः[10] ।
उरुशब्दान्तलोपेन [11]तस्मिन्नेवोर्वशी भवेत् ॥७॥
अकारो[12] हि यकारस्य [13]ह्युत्वं वेतेः प्रपद्यते ।
कान्तिरस्याभिधेयेष्टा[14] पक्षे प्रज्ञा समाश्रिता ॥८॥

---

१. उर्वश्यप्सरा उर्वभ्यश्नुत ऊरुभ्यामश्नुते उरुर्वा वशोऽस्याः । निरु० ५।१३॥
२. कोशे '०सन्ध्याथवरुणिः' इत्यपपाठः ।
३. कोशे 'पाण' इत्यपपाठः ।
४. कोशे 'सात्यश्नुते' इत्यपपाठः ।
५. यथाकोशं पाठः !
६. कोशे 'आरुणी' इत्यपपाठः ।
७. कोशे 'ऊरुर्वा' इत्यपपाठः ।
८. कोशे 'चारुवशा सा स्यादिति भास०' इत्यपपाठः ।
९. धा० ५।१८॥
१०. धा० २।७०॥
११. तस्मिन्=ईकारे प्रत्यये ।
१२. कोशे 'आकारो' इत्यपपाठः । वयुनं वेतेः कान्तिर्वा प्रज्ञा वा । निरु० ५।१४॥
१३. कोशे 'उत्वं वेदे' इत्यपपाठः । धा० २।३९॥
१४. कोशे '०भिपेयेष्टा' इत्यपपाठः ।

पततेर्वाजपूर्वस्य[1] [2]ल्युडर्थे यद्यदा भवेत् ।
आगमश्च सकारस्स्याद् [3]वाजपस्त्यं तदा भवेत् ॥९॥
सोमस्स्याद् अभिधेयोऽस्य[4] वाजमन्नमदन्त्विति ।
पतन्ति[5] देवता यस्मिन् तद्वाजपतनं भवेत् ॥१०॥
वाजगन्ध्यपदे गन्ध्यं[6] [7]गध्यतेः स्यान्नुमागमे ।
कर्मार्थे मिश्रणार्थस्य प्रत्यये यति नैगमे ॥११॥
सोमो मिश्रयितव्यः[8] स्याद्वाजेनान्नेन सक्तुना ।
पयसा वापि दध्ना वा वाजगन्ध्यमितीरितः ॥१२॥
ग्रहेर्यप्रत्यये[9] [10]गध्यं हकारस्य तु घत्वतः[11] ।
रेफस्याह तथा लोपो न्याय्यं ग्राह्यमिति स्फुटम् ॥१३॥
गध्यतीति [12]समाम्नातं मध्ये ये गधितेति यत् ।
तद्धातुप्रतिपत्त्यर्थं मिश्रीभावं वदत्यसौ ॥१४॥
अतो लोपे[13] यलोपे च निष्ठायां [14]गध्यतेरिति ।
भवेदागधितेत्येतदाङ्पूर्वस्यैव[15] नैगमम् ॥१५॥

---

१. धा० १।८९८॥ २. कोशे 'ल्युटर्थे यद्यता' इत्यपपाठः ।

३. वाजपस्त्यं वाजपतनम् । निरु० ५।१५॥

४. कोशे '०धेयोस्ये वाजमन्नमद्वन्त्विति' इत्यपपाठः ।

५. कोशे 'वदन्ति वेदता' इत्यपपाठः ।

६. वाजगन्ध्यं गध्यत्युत्तरपदम् । निरु० ५।१५॥

७. कोशे 'गन्ध्यते' इत्यपपाठः । पाणिनीयधातुपाठे गध्यतिर्न संगृह्यते । गध्यतिर्मिश्रीभावकर्मा (निरु० ५।१५) इति यास्कः ।

८. कोशे '०तव्या स्यात्द्वाजे०' इत्यपपाठः । ९. धा० ९।६१॥

१०. कोशे 'गन्ध्यं' इत्यपपाठः । गध्यं गृह्णातेः । निरु० ५।१५॥

११. कोशे 'घत्वतः' इत्यपपाठः ।

१२. कोशे 'गन्ध्यतीति समाम्नात' इत्यपपाठः । गध्यतिर्मिश्रीभावकर्मा । आगधिता परिगधिता (ऋ० १।१२६।६) इत्यपि निगमो भवति । निरु० ५।१५॥

१३. कोशे 'लोप' इत्यपपाठः ।

१४. कोशे 'गन्ध्यते०' इत्यपपाठः । १५. कोशे '०दां पूर्वं०' इत्यपपाठः ।

नुमागमावबोधार्थं वाजगन्ध्यं पुरोदितम् ।
धात्वर्थप्रतिपत्त्यर्थमाम्नातं [1]गध्यतीति च ॥१६॥
गध्यतीत्येष[1] निर्देशो[2] विनैव यं यदा भवेत् ।
गधिरेव[3] तदा धातुर्यलोपो नैव कल्प्यते ॥१७॥
रप्रत्यये[4] [5]करोतेस्स्याद् निष्ठार्थे त्वौ [6]यदा त्वृतः ।
कौरेत्येवं तदा रूपं नैगमं कृतवाचि तत् ॥१८॥
कृतयानपदस्यार्थः [7]कौरयाणपदेरितः ।
त्वरतेस्तूर्णयानः[8] स्यात् तौरयाणोऽपि नैगमः ॥१९॥
औकारस्तु[9] वशब्दस्य निष्ठार्थेऽचि समाश्रिते ।
कौरयाणपदेनापि [10]पाकस्थामा विशेषितः ॥२०॥
इन्द्रश्च तौरयाण[:]स्याच्छीघ्रयानः स ह्रीष्यते ।
ह्री[11] लज्जायामिति त्वस्य निष्ठार्थेऽचि समाश्रिते ॥२१॥
ईकारे लोपिते चैवमह्रयाणस्तु[12] नैगमः ।
अह्रीतयान इत्यर्थो गमनं यानमुच्यते ॥२२॥
वाहनं वापि यानं [13]स्याद्रोहितोऽश्वैरितीरणात् ।
माणशब्दस्य[14] लोपात्तु हरयाणोऽपि नैगमः ॥२३॥
यस्य स्याद्धरमाणं हि यानं सोऽनेन कथ्यते ।
राजा [15]वरुरितिख्यातो यद्वा स्यात्सूर्य एव सः ॥२४॥

---

१. कोशे 'गन्ध्यती०' इत्यपपाठः । २. कोशे 'निर्देशंन्त्यनैवत्य यदा' इत्यपपाठः ।
३. कोशे 'गतिरेव तदा धातुः यलोपे' इत्यपपाठः ।
४. कोशे 'रलत्यये' इत्यपपाठः । ५ धा० ५।७॥
६. कोशे 'यदत्वतः' इत्यपपाठः । ७. कौरयाणः कृतयानः । निरु० ५।१५॥
८. कोशे 'क्षरतेस्तुर्णया न' इत्यपपाठः । तौरयाणः तूर्णयानः । निरु० ५।१५॥ धा० १।८१२॥ ९. कोशे 'श्रोकारस्तु प्रशब्दस्य निष्ठार्थेऽपि' इत्यपपाठः ।
१०. ऋ० ८।३।२१॥ ११. धा० ३।३॥
१२. कोशे '०ह्रयानस्तु' इत्यपपाठः । अह्रयाणोऽह्रीतयानः । निरु० ५।१५॥
१३. कोशे 'स्यात् दोहितो शैरि०' इति पाठः ।
१४. कोशे 'माणयो ॰॰ल्लावत हरायणो०' इत्यपपाठः । हरयाणो हरमाणयानः । निरु० ५।१५॥ १५. स्कन्दव्याख्यायामुक्तमाख्यानमत्रानुसन्धेयम् ।

अर्तेराङोपसृष्टस्य[1] [2]निष्ठायामिटि नैगमे ।
आरितस्त्विति रूपं स्याद् आर्त्त इत्येव भाषिकम् ॥२५॥
प्रत्यृतस्त्विति[3] तस्यार्थः प्रत्यर्थे [4]चाङिहेष्यते ।
छान्दसे [5]पुगभावे वा णिजन्तस्यारितो भवेत् ॥२६॥
निष्ठायां सेटि[6] णेर्लोपे [7]वृद्धावप्यारितोऽन्यथा ।
व्रन्दी स्याद् व्रन्दतेर्धातोर्भाष्यकारेण[8] निश्चितः ॥२७॥
विनिर्गतपसा[9] यस्तु स्त्रीकामो [10]निष्षपी हि सः ।
निष्पूर्वस्य [11]सपेर्धातोः करणेऽचि तु [12]निष्षपः ॥२८॥
तस्मादिनौ कृते वापि निष्षपी वैदिकं पदम् ।
गत्यर्थो हि निसा लब्धः पसः शेपोऽभिधीयते ॥२९॥
आद्यन्तविपरीतस्य [13]सपते[:]स्पृशिकर्मणः ।
सकारस्थोऽप्यकारोऽत्र पकारं प्रतिपद्यते ॥३०॥
अस् प्रत्यये पसः सिद्धं स्पृशिर्भोगसुखे[14] त्विह ।
अजितेन्द्रिय इत्यर्थो दृष्टान्तस्स हि संभवेत् ॥३१॥

---

१. कोशे 'अतोराजोप०' इत्यपपाठः । धा० ३।१६॥

२. कोशे 'मिष्टायमिटि' इत्यपपाठः ।

३. कोशे 'प्रस्कृत०' इत्यपपाठः । प्रत्यृतः स्तोमान् । निरु० ५।१५॥

४. कोशे 'वाजिहे०' इत्यपपाठः ।

५. कोशे 'युगभावे' इत्यपपाठः । णिचि प्रत्यये अर्तिह्रीव्ली० (अष्टा० ७।३।३६) इति प्राप्तस्य पुकोऽभावश्छान्दसः ।

६. कोशे 'सेदि' इत्यपपाठः । अष्टा० ६।४।५२॥

७. कोशे '०वप्यथितो०' इत्यपपाठः ।

८. कोशे 'प्रन्दिस्यात्प्रन्देर्धातो भष्यकारेण निश्चिता' इत्यपपाठः । व्रन्दी व्रन्दतेर्मृदूभावकर्मणः । निरु० ५।१५॥ अयं धातुः पाणिनीयधातुपाठे न संगृह्यते ।

९. कोशे 'ता विनि०' इत्यपपाठः । निष्षपी स्त्रीकामो भवति विनिर्गतपसाः । निरु० ५।१६॥

१०. कोशे 'निष्यपी' इत्यपपाठः ।

११. धा० १।४२७॥

१२. कोशे 'निर्षपः' इत्यपपाठः ।

१३. पसः सपतेः स्पृशतिकर्मणः । निरु० ५।१६।

१४. कोशे '०सुते' इत्यपपाठः ।

शिश्नेन्द्रिये प्रसिद्धत्वात् कारणे वा प्रसिद्धितः ।
निष्षपीत्यस्य शब्दस्य वैदिकत्वं प्रतीयते ॥३२॥
तूर्णाशमुदकं[1] प्रोक्तं भाषयामपि तद् घञि ।
बहुव्रीहौ भवेद्रूपं [2]तूर्णमाशोऽस्य विद्यते ॥३३॥
पचाद्यच्यथ[3] चेद्रूपमश[:]स्यादश्नुते[4] त्विति ।
तूर्णश्चैव तथैवाश इत्येवं विग्रहस्तथा ॥३४॥
तूर्णाशमिति निर्देश उदकं भवतीति यः ।
नपुंसके न युज्येत भाष्येऽजन्तत्वहेतुतः[5] ॥३५॥
तस्मात्ताच्छीलिकोऽन्योऽयम् अकारः प्रत्यय[:]श्रुतौ ।
णिनौ[6] तूर्णाशि युक्तं स्याद् अर्थोऽप्यस्य न लौकिकः ॥३६॥
क्षुभेः[7] क्षोभ्यमिति प्राप्ते [8]कृत्यार्थेऽचि नुमागमे ।
भकारस्य[9] पकारत्वे [10]क्षुम्पमित्यपि नैगमः ॥३७॥
तच्चाहिच्छत्रकं प्रोक्तं छत्राकमिति यद्विदुः ।
सोमो [11]निचुम्पुणः प्रोक्तः [12]समुद्रोऽवभृथस्तथा ॥३८॥
ऋजीषात्मा[13] च सोम[:]स्यादपां[14] जग्मिरितीरितः ।
निचान्तो[15] भक्षितः[16] सोमः पृणातीति निदर्शितः ॥३९॥
निचान्तपृणशब्दे[17] हि चाशब्दश्चुत्वमश्नुते ।

---

१. तूर्णाशमुदकं भवति तूर्णमश्नुते । निरु० ५।१६॥ २. तूर्णमिति क्रियाविशेषणम् ।
३. अजपि सर्वधातुभ्यः । महाभाष्य वा० ३।१।१३४॥
४. धा० ५।१८॥ ५. तथा च घाजन्तश्चेति लिङ्गानुशासनम् ।
६. कोशे 'तौणिनौ तूर्णाशि युक्तां' इत्यप गाठः । ७. धा० १।७८७॥
८. कोशे 'कृत्यर्थ चि' इत्यपपाठः । ९. कोशे 'भगारस्य' इत्यपपाठः ।
१०. कोशे 'क्यंपमीत्यपि' इत्यपपाठः । क्षुम्पमहिच्छत्रकं भवति यत्क्षुभ्यते । निरु० ५।१६॥
११. कोशे 'निचुंबणः' इत्यपपाठः । १२. कोशे 'समुद्रोवाभृथ०' इत्यपपाठः ।
१३. कोशे 'ऋजिषा०' इत्यपपाठः । १४. ऋ० ८।९३।२२॥
१५. निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति । निरु० ५।१७॥
१६. कोशे 'दक्षितः सोमः वृणा०' इत्यपपाठः ।
१७. कोशे 'निचान्तवृण०' इत्यपपाठः ।

नकारोऽपि[1] मकारत्वं तकारो लोपमृच्छति ॥४०॥
उकारत्वमृकारोऽपि तथासौ स्यान्निचुम्पुणः[2] ।
चमनं नियमेनैव यत्तत्सोमस्य भक्षणम् ॥४१॥
शास्त्रोक्तेन विधानेन तेन प्रीणाति देवताः ।
ऋ[त्विजो]यजमानांश्च[3] सोम इत्युपपद्यते ॥४२॥
पृणातेश्चमिपूर्वस्य[4] नङ्च्युत्वेऽन्त्यस्य[5] कर्तरि ।
उपधायाश्चमेरुत्वे नणत्वे स्यान्निचुम्पुणः[6] ॥४३॥
चम्यते नियमेनेति चमनं तूदकं स्मृतम् ।
समुद्रः[7] पूर्यतेऽनेन तस्मादुक्तो निचुम्पुणः ॥४४॥
निपूर्वं चमनं पूर्वं पूरणस्येष्यते यदा ।
चशब्दस्य तदा चुत्वमनशब्दोऽपि लुप्यते ॥४५॥
ऊकारो ह्रस्वतां याति रशब्दो लोपमश्नुते ।
पृणातेः[8] पूरणार्थस्य समुद्रोऽपि निचुम्पुणः ॥४६॥
पूर्ववद्योजनीयः स्याच्छान्दसत्वप्रक्लृप्तितः ।
अवाचो दुःखभावेन यत्र [9]पात्राणि कर्मणि ॥४७॥
ध्रियन्ते[10] सोमलिप्तानि [11]तत्कर्मावभृथं विदुः ।
नीचैरस्मिन्पृणन्तीति[12] भवेन्नीचैःपृणो[13] ह्यसौ ॥४८॥

---

१. कोशे 'नकाको०' इत्यपपाठः । २. कोशे '०चुंपणम्' इत्यपपाठः ।
३. कोशे 'ऋ०...यजमानानांश्च' इत्यपपाठः ।
४. कोशे 'वृणाते०' इत्यपपाठः । म्रा० ६।१७॥
५. कोशे 'नङ्चत्वेन्यस्य' इत्यपपाठः । ६. कोशे '०चुंपणः' इत्यपपाठः ।
७. समुद्रोऽपि निचुम्पुण उच्यते । निचमनेन पूर्यते । निरु० ५।१८॥
८. कोशे 'वृणाते' इत्यपपाठः ।
९. कोशे 'पत्राणि' इत्यपपाठः । १०. कोशे 'क्रियते' इत्यपपाठः ।
११. कोशे '०कर्मा च भृथं' इत्यपपाठः । १२. कोशे '०वृण०' इत्यपपाठः ।
१३. कोशे '०वृणो०' इत्यपपाठः । अवभृथोऽपि निचुम्पुण उच्यते । नीचैरस्मिन् क्वणन्ति नीचैर्दधतीति वा । अवभृथ निचुम्पुण (ऋ० सं० ३।४८) इत्यपि निगमो भवति । निचुम्पुण निचुङ्कुणेति च । निरु० ५।१८॥

ऐकार[1] उत्वमाप्नोति [2]तत्परो मत्वमृच्छति ।
पुणः [3]पृणः पुरैवोक्तो [4]नोनित्वं प्रतिपद्यते ॥४९॥
नीचैरुपांशु कुर्वन्तस्तस्मिन्कर्माणि याज्ञिकाः ।
पृणन्ति[5] देवतास्तेन निरुक्तोऽसौ निचुम्पुणः[6] ॥५०॥
अभिमन्ताऽथवा तस्य [7]वरुण[:]स्यान्निचुम्पुणः ।
पूरयेदुदकेनाप्सौ[8] तर्पयेच्च जगत्सदा ॥५१॥
नीचैस्तु क्वणनादन्यैर्निरुक्तोऽसौ निचुम्पुणः ।
पदेरिप्रत्यये[9] पक्षी [10]पदिः कर्तर्युदाहृतः ॥५२॥
गन्तैव[11] गन्तुरित्युक्तः पदस्तु स्यात्पचाद्यचि[12] ।
सिनातिकर्मनिर्देशाद्[13] मुक्षीजाकरणश्रुतेः[14] ॥५३॥
कुमारकर्तृको[15] बन्धः पक्षिणो युज्यते स्फुटम् ।
पद्यते[16] [:]पाद इत्येतत् घञि न्याय्यं विदुर्बुधाः ॥५४॥
उप्रत्यये[16] [भवेत्] पादुर्वैदिके भाववाचिनि ।
स पादुरिति[17] सामर्थ्यात्[18] सूर्यस्य गतिरिष्यते ॥५५॥

॥ इति [पद्मभगवत्प्रणीते] निरुक्त[श्लोक]वार्त्तिके ऐकपदिके
द्वितीय[ाध्याय]स्य तृतीयः पादः ॥

---

१. कोशे 'एकार' इत्यपपाठः । २. सकारः (विसर्जनीयः) इत्यर्थः ।
३. कोशे 'वृण' इत्यपपाठः । ४. कोशे 'नोनित्वं' इति पाठः ।
५. कोशे 'वृणन्ति' इत्यपपाठः । ६. कोशे 'निचुपणः' इत्यपपाठः ।
७. अवभृयेष्टौ वरुणः प्रधानदेवता । ८. कोशे '०दुभकेना०' इत्यपपाठः ।
९. धा० ४।६०॥ १०. पदिर्गन्तुर्भवति यत्पद्यते । निरु० ५।१८॥
११. कोशे 'गन्तेव' इति पाठः । १२. महाभाष्य ३।१।१३७॥
१३. कोशे 'सीनाति०' इत्यपपाठः । १४. कोशे 'मुक्षिजा०' इत्यपपाठः ।
१५. मुक्षीजयेव पदिमुत्सिनाति (ऋ० १।१२५।२) "मुक्षीजयेव पदिमुत्सिनाति कुमारः । निरु० ५।१९॥ १६. कोशे 'अप्रत्यये' इत्यपपाठः । पादुः पद्यतेः । निरु० ५।१९॥
१७. ऋ० १०।२७।२४॥ १८. कोशे 'सामथ्यात् सूर्यस्य गतिरीति' इत्यपपाठः ।

# चतुर्थः पादः

वृकश्चन्द्रो वृकस्सूर्यो [1]वृकश्श्वाप्यभिधीयते ।
शिवा [2]क्वचिद् वृकी प्रोक्ता सैवोक्ता [3]वृद्धवाशिनी ॥१॥
विवृतज्योतिरित्येतत्[4] कान्तं[5] चन्द्रस्य वाचकम् ।
स्याद्वा [6]विकृतपूर्वं तद् यद्वा विक्रान्तपूर्वकम् ॥२॥
विवृतं स्पष्टरूपत्वाद् विकृतं शैत्यभावतः ।
विनिस्सृत्य रवेः [7]क्रान्तं सौषुम्नं सर्वतोऽथवा ॥३॥
वर्णत्रयं विशब्दश्च त्यक्त्वा पूर्वं प्रवर्तते ।
अनेकाक्षरलोपेन परे चापि तथा पदे ॥४॥
दृष्टार्थस्यानुगुण्येन बहुवर्णविलोपनम् ।
आश्रितं भाष्यकारेण यथार्थं त्वित्युपक्रमात् ॥५॥
आवृङ्क्ते[8] व्यवृणोत्येष प्रकाशेन जगद्रविः ।
वृणक्तेर्वा[9] हिंसार्थस्य[10] तमसां हिंसको वृकः ॥६॥
आवृङ्क्ते[11] भजते यद्वा रसं भौमं स्वरश्मिभिः ।
तेन[12] सूर्यो वृकः प्रोक्तः श्वा[13] वृकस्स्याद्विकर्तनात् ॥७॥

---

१. कोशे 'वृकश्चाप्य०' इत्यपपाठः । २. कोशे 'क्वचिद्वकी' इत्यपपाठः ।

३. कोशे '०वादिनी' इत्यपपाठः ।

४. वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा । निरु० ५।२०॥

५. कोशे 'कान्तश्चन्द्र०' इत्यपपाठः । समासान्तकप्प्रत्ययान्तम् इत्यभिप्रायः ।

६. कोशे 'पिकृतपूर्वन्तत् यद्वा पिक्रान्त०' इत्यपपाठः ।

७. कोशे 'कान्ता' इति पाठः ।

८. कोशे 'आप्लंक्ते व्यपृणो०' इत्यपपाठः । आदित्योऽपि वृक उच्यते यदावृङ्क्ते । निरु० ५।२१॥ ९. निघ० २।१९॥

१०. कोशे 'संसार्थस्य तमसां' इत्यपपाठः ।

११. कोशे 'आपृंक्त' इत्यपपाठः । १२. कोशे 'केन' इत्यपपाठः ।

१३. श्वापि वृक उच्यते विकर्तनात् । निरु० ५।२१॥

मृगोरणगवादीनां तस्मादेव शिवा[1] वृकी ।
चन्द्रोऽपि ज्योत्स्नयावृङ्क्ते[2] वृणोतीदं[3] रविर्यथा ॥८॥
पद्मिनीश्च हिमैर्हन्ति भजते तारकास्तथा ।
कप्रत्यये ककारादौ वृक[:]सिद्धो [4]वृधातुतः ॥९॥
जुषेर्जोषो[5] [6]वचेर्वाको घञि यद्यपि सिध्यति ।
तथापि [7]समुदायस्य नार्थो लोके निरूपितः ॥१०॥
प्रकृतिप्रत्ययौ सिद्धौ घञन्तस्य [8]जुषेर्यतः ।
अविज्ञातार्थनामत्वं तेनायुक्तमुदाहृतम् ॥११॥
समुदायस्य [9]नार्थोऽत्र तयोः कश्चिन्निरूपितः ।
तस्माज्जोषयितव्योऽसौ [10]स्पष्टत्वायोपपत्तितः ॥१२॥
तस्य यद्वचनं तत्स्यात् [11]जोषवाकपदेरितम् ।
अस्पष्टार्थो [12]जपस्यार्थे तस्मिन्धातोरसिद्धता ॥१३॥
मन्त्रार्थं[13] यस्त्वविज्ञाय जपेद् दुष्टेन चेतसा ।
विजञ्जपो[14] विनिर्दिष्टो जोषवाकः वदन्नसौ ॥१४॥
जोषो जोषयितव्योऽर्थो बोद्धव्यः परिकीर्तितः ।
तस्य वाकस्य [15]मन्त्रस्य तेनासावुच्यते यतः ॥१५॥
कृन्ततेः[16] [17]कृत्तिरित्येतत् करणादावकर्तरि ।
तिप्रत्यये कृते सिद्धं किमर्थं पठ्यते त्विदम् ॥१६॥

---

१. वृद्धवाशिन्यपि वृक्युच्यते । निरु० ५।२१॥ २. कोशे 'ज्योत्स्नया पृक्ते' इत्यपपाठः ।
३. इदं जगदित्यर्थः । ४. कोशे 'वृथा कृतः' इत्यपपाठः । धा० ५।८॥
५. धा० ६।८॥ ६. कोशे 'वृकेर्वाको' इत्यपपाठः ।
७. जोषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति । निरु० ५।२१॥
८. कोशे 'जुषोर्यतः' इत्यपपाठः । ९. कोशे 'नार्थोस्त्री' इत्यपपाठः ।
१०. कोशे 'स्पषत्वाय' इत्यपपाठः । ११. कोशे 'ज्योष०' इत्यपपाठः ।
१२. कोशे 'जपेस्या०' इत्यपपाठः । १३. कोशे 'मन्त्रर्थं' इत्यपपाठः ।
१४. कोशे 'विजजेपो' इत्यपपाठः । १५. कोशे 'मन्त्रं स्या' इत्यपपाठः ।
१६. धा० ६।१४१॥
१७. कोशे 'कृन्ति०' इत्यपपाठः । कृत्तिः कृन्ततेर्यशो वान्नं वा । निरु० ५।२२॥

अनैकार्थ्याद् यशोऽन्नञ्च [1]चर्मकन्था च कथ्यते ।
यशसा कृत्यते [2]पापं द्विषतां च बलं तथा ॥१७॥
दीयमानेन [3]वान्नेन क्षुच्च भुक्तेन नाश्यते ।
विकृत्तत्वात्[4] पशो[ः]कृत्तिस्तथा [5]चर्ममयी स्मृता ॥१८॥
कृत्तवस्त्रोपक्लृप्तत्वात् कृत्तिः [6]कल्प्योपमानतः ।
श्वघ्नीति[7] कितवो ज्ञेयः स्वं धनं हन्ति देवने ॥१९॥
स्वघातीति [8]स्थितस्यात्र सकारस्य शकारतः ।
तकारस्य नकारत्वे भवेदाकारलोपतः ॥२०॥
त्वनेमसमवाक्येन[9] त्वादिनाम्नामनुच्चता [10] ।
विहिता[11] तेन बाध्येत नाम्नामौत्सर्गिकः स्वरः ॥२१॥
अनुच्च मध्यतो[12] सर्वस्यैव समस्त्विवति ।
व्ययदृष्टिर्निपातत्वे न च स्यात्प्रथमादिषु ॥२२॥
तद्रू षु समनेत्यस्यां[13] सम[14] इत्यपि दृश्यते ।
स नो बोधि श्रुधीत्यस्यां[15] समस्मादितिपञ्चमी ॥२३॥
मा नः समस्य मन्त्रे[16] च षष्ठी स्पष्टं प्रदृश्यते ।

---

१. कोशे 'कर्मकथ्या' इत्यपपाठः ।
२. कोशे 'पापापिषताञ्च बलन्नथा' इत्यपपाठः ।
३. कोशे 'वान्येन' इत्यपपाठः । ४. कोशे 'विकृतत्वात्' इत्यपपाठः ।
५. कोशे 'चर्ममया' इत्यपपाठः ।
६. कोशे 'कल्लोप०' इत्यपपाठः । जीर्णवस्त्रखण्डनिर्मिता कन्थाप्युपमानतः कृत्तिरिति कल्प्यत इत्याशयः । ७. श्वघ्नी कितवो भवति । स्वं हन्ति । निरु० ५।२२॥
८. कोशे 'स्थितस्याः' इत्यपपाठः ।
९. कोशे 'त्वनेकसम०' इत्यपपाठः । द्र०—पृ० १३३ टि० ५॥
१०. सममिति परिग्रहार्थीयं सर्वनामानुदात्तम् ।...तत्कथमनुदात्तप्रकृति नाम स्यात् ? दृष्टव्ययं तु भवति । निरु० ५।२३॥
११. कोशे 'पिहिता तेनु' इत्यपपाठः । १२. भ्रष्टः पाठः ।
१३. तु०—ऋ० ५।७३।४॥ १४. कोशे 'साम' इत्यपपाठः ।
१५. ऋ० ५।२४।३॥ १६. कोशे 'मन्त्रो' इत्यपपाठः । ऋ० ८।७५।९॥

विद्मा[1] सखित्वमित्यस्यां समस्मिन् इति सप्तमी ॥२४॥
अकारस्तु [2]गमेर्धातोः समः स्यात् तु यदा परः ।
सममित्यादिरूपं स्यात् सर्वस्यार्थस्य वाचकम् ॥२५॥
संभूय हि गतं सर्वं वाच्यते [यत्] समं पदम् ।
तस्मात्तत्सममित्युक्तं निपातो नेति साधितम् ॥२६॥
निष्ठार्थे तु [3]करोतेः स्यात् प्रत्ययो [4]ड्डुट इत्ययम् ।
कुटस्येति[5] तदा रूपं कृतस्येत्यर्थ एव तत् ॥२७॥
चायतेर्दर्शनार्थस्य[6] प्रत्ययस्तु सनिर्यदा ।
रेफता च यकारस्य ह्रासं [7]यात्युपधा तथा ॥२८॥
आदित्यश्चर्षणिस्सिद्धो[8] द्रष्टा सर्वस्य कर्मणः ।
शमः[9] [10]शदेः [11]शतेर्वास्याच्छम्बो[12] बप्रत्यये कृते ॥२९॥
परयोरन्तयोर्मत्वे वज्रस्तेनाभिधीयते ।
केपयस्तु[13] कपूयास्स्युः कपूया [14]दुष्पवाः स्मृताः ॥३०॥
ऋदोरपि[15] पुनातेस्तु [16]दुष्पवाः पापकारिणः ।
कुत्सितार्थकपूर्वस्य [17]पुनातेर्यकि कर्मणि ॥३१॥

---

१. कोशे 'विद्या' इत्यपपाठः । ऋ० ८।२१।८॥
२. कोशे 'गमेरातः समस्यास्तु' इत्यपपाठः । धा० १।१०३१॥
३. धा० ५।७॥ ४. कोशे 'स्फुट' इत्यपपाठः ।
५. पिता कुटस्य चर्षणिः (ऋ० १।४६।४)…पिता कृतस्य कर्मणश्चायितादित्यः । निरु० ५।२४॥ ६. कोशे 'चायते दर्श०' इत्यपपाठः । धा० १।६२१॥
७. कोशे 'यास्युरुपधा' इत्यपपाठः ।
८. कोशे '०चर्वणिस्सिद्धो दृष्ट सर्वस्य' इत्यप्रपाठः ।
९. धा० ४।१२॥ १०. धा० १।६०८॥
११. कोशे 'शकेर्वा स्यात' इत्यप्रपाठः । शदिर्ण्यन्तो निर्दिश्यते ।
१२. शम्ब इति वज्रनाम शमयतेर्वा शातयतेर्वा । निरु० ५।२४॥
१३. केपयः कपूया भवन्ति । कपूयमिति पुनातिकर्म कुत्सितम् । दुष्पूयं भवति । निरु० ५।२४॥ १४. कोशे 'दुषवा स्मृता' इत्यपपाठः ।
१५. अष्टा० ३।३।५७॥ १६. कोशे 'दुष्टपाः' इत्यपपाठः ।
१७. धा० ९।१२॥

कपूयम् इति रूपं स्यात् केपयस्तद्विकारतः ।
कशब्दस्य तु के भावः पूयस्यापि तथा पयः ॥३२॥
कुत्सनावाचिकेपूर्वात्[1] पुनातेर्डिर्यदा भवेत् ।
तदा स्यात्केपिरित्येतत् जसि स्यात्केपयस्तथा ॥३३॥
क्षिप्रार्थे वर्तमानस्य[2] तवतेः प्रत्ययस्तुमा ।
निष्ठार्थे वैदिकः क्लृप्तो धात्वन्तस्यापि दीर्घता ॥३४॥
तूतुमेति[3] ततो रूपं तूर्णमित्यस्य वाचकम् ।
त्वरतेरूठि[4] वा [5]तस्मिन् रे[6] [लुप्ते च प्रसिध्यति] ॥३५॥
अनयोर्नह्यु दात्तत्वं[7] क्वचिदप्युपलभ्यते ।
हस्त्यङ्कुशः [8]सृणिः प्रोक्तो दात्रञ्च सरणात्क्वचित् ॥३६॥
निप्रत्यये[9] सृणिः [10]सर्त्तेर्वेदे कर्तरि सिध्यति ।
न्याय्यं [11]सर्त्तेति रूपं स्याद् यद्वा सारयितेत्यपि ॥३७॥
सृण्येव जर्भरीमन्त्रे[12] हस्तिनोऽङ्कुश ईरितः ।
दात्रं युनक्त सीरेति [13]मन्त्रे तस्योपपत्तितः ॥३८॥

॥ इति [पद्मभगवत्प्रणीते] निरुक्त-[श्लोक]वार्त्तिके ऐकपदिके द्वितीयोऽध्यायः ॥

—:o:—

१. कोशे '०वाचकेपूर्वात् पुनातेर्घीयंदा०' इत्यपपाठः ।
२. कोशे 'तपतेः' इत्यपपाठः । सौत्रो धातुः द्र०—अष्टा० ७।३।६५॥
३. कोशे 'तूतूमेति' इत्यपपाठः । एता विश्वा सवना तूतुमा कृषे (ऋ० १०।५०।६) एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे । निरु० ५।२५॥
४. धा० १।८१२॥ अष्टा० ६।४।२०॥ ५. तुमाप्रत्यय इत्यर्थः ।
६. कोशे 'त्रे' इत्यपपाठः । अतोऽग्रे 'अंसत्रादि—सीमान्तानां पदानां व्याख्यानं नष्टम् ।
७. अनयोरेनमेनामित्यनयोरित्यर्थः ।
८. सृणिरङ्कुशो भवति सरणात् । निरु० ५।२८॥ ९. कोशे 'निप्रत्यये' इत्यपपाठः ।
१०. कोशे 'सत्ते वेदे' इत्यपपाठः । धा० १।९८२॥
११. कोशे 'सत्तेति' इत्यपपाठः । २१. ऋ० १०।१०६।६॥ निरु० १३।५॥
१३. ऋ० १०।१०१।३॥

# षष्ठोऽध्यायः

## प्रथमः पादः

शोचतेराशुपूर्वस्य[1] क्षणोत्यन्तस्य[2] कर्तरि ।
इप्रत्यये कृतेरूपम् एवं स्यादाशुशुक्षणिः[3] ॥१॥
सनोत्यन्तस्य[4] वा तस्य वाच्योऽग्निः कर्मयोगतः ।
आशु क्षिप्रं शुचा दीप्त्या क्षणोत्यथ सनोति वा ॥२॥
आधानं वापि काष्ठादि क्रियां वा पाकलक्षणाम् ।
आशुशुक्क्षणिता[5] वा स्याद् आशुशुक्सनितापि वा ॥३॥
आङ्पूर्वस्य शुचेरेव यद्वा स्यादाशुशुक्षणि[:] ।
मनुष्योऽत्राभिधेयस्स्याद् [6]आशुशोचयिषुस्तु यः ॥४॥
पञ्चम्यर्थोपपत्तेश्च मन्त्रे स्यात्प्रथमा [7]सणिः ।
अन्तर्णीत णिजर्थात्तु शुशुक्षेति सनन्ततः ॥५॥
निप्रत्यये कृते रूपं [8]चाङि स्यादाशुशुक्षणिः ।
आशुशोचयिषुर्न्यर्थ्य[9] आदिदीपयिषुश्च सः ॥६॥
दिशश्चोपदिशश्चोक्ता[10] आशा [11]अप्रत्यये शदेः ।
आङ्पूर्वस्याथवाश्नोतेः[12] अकारे कर्तृकर्मणोः ॥७॥

---

१. धा० १।१९८॥ २. कोशे 'क्षणोत्यन्तन्नकर्तरि' इत्यपपाठः ।

३. आशु इति च शु इति च क्षिप्रनामनी भवतः । क्षणिरुत्तरः क्षणोतेः । आशु शुचा क्षणोतीति वा सनोतीति वा । निरु० ६।१॥ ४. कोशे 'सतोत्य०' इत्यपपाठः ।

५. कोशे 'आशुशुक्षणिना वा स्यात् आशुशुत्सनि०' इत्यपपाठः ।

६. कोशे 'आशुशेषयिषु०' इत्यपपाठः ।

७. कोशे 'नणिः' इत्यपपाठः । ८. कोशे 'चादि' इत्यपपाठः ।

९. कोशे '०शुशोबयिषुर्न्यर्थ्य' इत्यपपाठः ।

१०. कोशे '०चोक्त' इत्यपपाठः । आशा दिशो भवन्त्यासदनात् । आशा उपदिशो भवन्त्यभ्यशनात् । निरु० ६।१॥

११. कोशे 'उप्रत्यये शदेः' इत्यपपाठः । धा० १।९०८॥ १२. धा० ५।८॥

शदेराशदना[1] न्याय्यमश्नोतेरशना इति ।
आश इत्यपि रूपं तु न्याय्यमेव प्रसिद्धितः ॥८॥
काशेरिप्रत्यये[2] काशिर्मुष्टिः[3] कर्मण्युदाहृतः ।
किमस्मिन्निति सन्देहे प्रकाश्यस्तन्निवृत्तये ॥९॥
क्वणेरारुनि[4] रूपं स्यात्ताच्छील्ये संप्रसारणे ।
कुणारुर्नैगमं[5] मेघो न्याय्य[ः स्य]ात्क्वणनस्त्विति ॥१०॥
अलमाङुपसृष्टस्य [6]ल्युडन्तस्य [7]तृदेरिदम् ।
अलमातर्दनो[8] मेघ इति स्याल्लौकिकं पदम् ॥११॥
दकाराकारलोपेन[9] स्यात्तु तत्प्रत्यये श्रुतौ ।
अत्वेऽलमो मकारस्य [10]गुणाभावे त्वलातृणः ॥१२॥
संपूर्वस्य[11] [12]लुभेर्धातोर्निष्ठायामिति भाषिकम्[13] ।
भवेत्संलुभितं[14] मोहे [15]सललूकं तु नैगमम् ॥१३॥
संपूर्वस्य लुभेः[16] कूके निष्ठार्थे प्रत्यये कृते ।

---

१. आसदनादिति दुर्गाभिमतो, मूलपाठः, आशदनादिति तु स्कन्दाभिमतः । नीलकण्ठः स्कन्दानुसारीति स्पष्टम् ।

२. धा० १।६७८॥

३. कोशे 'काशिमुष्टिः' इत्यपपाठः । काशिर्मुष्टिः प्रकाशनात् । निरु० ६ ।१॥

४. कोशे 'क्षणेरारुति' इत्यपपाठः । धा० १।४४४॥

५. कोशे 'कणारु' इत्यपपाठः । अहस्तमिन्द्र सं पिणक् कुणारुम् (ऋ० ३।३०।८) अहस्तमिन्द्र कृत्वा संपिण्ढि परिक्वणं मेघम् । निरु० ६।१॥

६. कोशे 'ल्युडस्तस्य' इत्यपपाठः ।

७. धा० ७।६॥

८. कोशे 'अतमातद्नो' इत्यपपाठः ।

९. कोशे '०काललोपेन स तु प्रत्ययो' इत्यपपाठः ।

१०. कोशे 'गणभावे त्वलातृण' इत्यपपाठः । अलातृणोऽलमातर्दनो मेघः । निरु० ६।२॥

११. कोशे 'सपूर्वस्य' इत्यपपाठः ।

१२. धा० ४।१२८॥

१३. कोशे 'भाषितम्' इति पाठः ।

१४. कोशे '०लुहितं' इत्यपपाठः ।

१५. कोशे 'सललुगन्तु' इत्यपपाठः । सललूकं संलुब्धं भवति पापकमिति नैरुक्ताः । सररुकं वा स्यात् सर्तेरभ्यस्तात् । निरु० ६।३॥

१६. कोशे 'कूते' इत्यपपाठः ।

उकारस्य कृते [1]त्वत्वे भकारस्यापि लत्वतः ।
समो[2] मकारलोपेन सललूकं प्रसिध्यति ॥१४॥
सर्त्तेस्ताच्छीलिके[3] तस्मिन्[4] गुणेऽभ्यासे च नैगमे ।
उदरत्वे[5] सकारस्य धातोर्लत्वे रलत्वतः ॥१५॥
कम्पया[6] इति युक्तं स्याद् [7]मेघः सुखपयास्त्वसौ ।
स्रवतेस्तु[8] विपूर्वस्य [9]ताच्छील्ये हकि नैगमे ॥१६॥
हकारे केवले शिष्टे [10]जसि स्याद् विस्रुहस्त्विति ।
आपोऽनेनाभिधीयन्ते विस्राविण्यो [11]हि ताः स्रुहः ॥१७॥
स्रुहिर्वा[12] नैगमो धातुरुत्स्रवणार्थवाचकः ।
क्विपि [13]ताच्छीलिके तस्य विस्रुहो जसि सिध्यति ॥१८॥
विपूर्वस्य[14] [15]रुहेर्धातोः [16]क्विपि हस्य तु धत्वतः ।
उपसर्गस्य दीर्घत्वे [17]वीरुधो जसि सिध्यति ॥१९॥
लोके प्रयुज्यमानत्वात् विरुहा[18] इति सिध्यति ।
विरोहिण्यो गुणाविष्टं वाच्या ओषधयाऽस्य तु ॥२०॥

---

१. कोशे 'कृते त्वेते' इत्यपपाठः ।
२. कोशे 'समामकारलोपेन सललुकं' इत्यपपाठः ।
३. कोशे 'सत्तेस्ताछीके' इत्यपपाठः । धा० ३।१७॥
४. तस्मिन्=क्रुके प्रत्यये ।
५. यथाकोशं पाठः । ६. कोशे 'रक्षो या' इति पाठः ।
७. त्वं चिदित्था कत्पयं शयानम्(ऋ० ५।३२।६)सुखपयसं सुखमस्य पयः । निरु० ६।३॥
८. धा० १।९८७॥ ९. कोशे 'ताछील्ये भकि' इत्यपपाठः ।
१०. कोशे 'जहि स्यास्मिस्स्रुह०' इत्यपपाठः । विस्रुह आपो भवन्ति विस्रवणात् । निरु० ६।३॥ ११. कोशे 'हिता स्रुहि' इत्यपपाठः ।
१२. कोशे 'स्तुहिर्वा नैगमे धातुरुकारस्यार्थ०' इत्यपपाठः ।
१३. कोशे 'ताछीलिते तस्य विस्रुहो जहि०' इत्यपपाठः ।
१४. कोशे 'निपूर्वस्य' इत्यपपाठः । १५. धा० १।९१२॥
१६. कोशे 'किहस्य' इत्यपपाठः ।
१७. वीरुध ओषधयो भवन्ति विरोहणात् । निरु० ६।३॥
१८. मूलविभुजादित्वात् (महाभाष्य ३।२।५) इति के प्रत्यये ।

नक्षतेर्व्याप्तिकर्मत्वं [1]व्याप्तिकर्मसु पाठतः ।
हिंसार्थस्य [2]दम्भेर्धातोस्तत्पूर्वस्याणि[3] कर्मणि ॥२१॥
नलोपे दीर्घभावे च [4]नक्षद्दाभो भवेच्छ्रुतौ ।
नक्षद्दम्भ इति त्वेवं न्याय्यं रूपं प्रतीयते ॥२२॥
नक्षतोऽरिगणानिन्द्रो[5] दम्नोतीत्येवमुच्यते ।
दम्नोत्यभ्यशनेनेति भाष्ये पक्षान्तरश्रुतेः ॥२३॥
भावार्थत्वं [6]शतुर्वेदे मतमित्यभिधीयते ।
नक्षता [7]नक्षणेनासौ व्याप्त्या हन्ति सुरेतरान् ॥२४॥
असुरान्व्याप्तिमात्रेण हन्त्यर्थोऽपि विवक्षितः ।
नक्षदित्यस्य पक्षेऽस्मिन् कर्मताया अभावतः ॥२५॥
पचाद्यचि[8] भवेद्रूपं [9]दम्भ इत्यपि लौकिकम् ।
न्याय्यो[10] नक्षणदम्भस्तु नक्षद्दाभोऽपि वैदिकः ॥२६॥
अपि वाभ्यशनेनेति [11]नैव भावार्थता शतुः ।
अभ्यश्नुते बलं [12]यस्माच्छत्रूनात्मीयमञ्जसा ॥२७॥
तस्मादभ्यशनं प्रोक्तं बलं ल्युट् [13]कर्तरि श्रितः ।
नक्षताभ्यशनेनासौ व्याप्त्या [14]दम्नोति शात्रवान् ॥२८॥

---

१. निघ० २।१८॥
२. कोशे 'हिंसार्थस्यादद्दूहे०' इत्यपपाठः । निघ० २।१९॥ धा० ५।२३॥
३. कर्मण्यण् । अष्टा० ३।२।१॥
४. कोशे 'नक्षद्दाहो' इत्यपपाठः । नक्षद्दाभमश्नुवानदाभमभ्यशनेन दम्नोतीति । निरु० ६।३॥
५. कोशे 'हक्षतो रिगणानिन्द्रो दह्नोती०' इत्यपपाठः ।
६. 'नक्षद्' इत्यत्र नैगमे शतृप्रत्ययो भावार्थ इत्यभिप्रायः ।
७. कोशे 'नक्षतेनासौ' इत्यपपाठः ।
८. महाभाष्य ३।१।१३४॥
९. कोशे 'न्नभ' इत्यपपाठः ।
१०. कोशे 'न्याय्ये' इत्यपपाठः ।
११. कोशे 'नैवाभा०' इत्यपपाठः ।
१२. कोशे 'यस्माछत्रुना०' इत्यपपाठः ।
१३. कृत्यल्युटो बहुलम् । अष्टा० ३।३।११३॥
१४. कोशे 'दाह्वाति शात्रवात्' इत्यपपाठः ।

कालस्य [1]त्वविवक्षार्थं नक्षतेति न भाषितम् ।
व्याप्तिमात्रसमर्थेऽसौ[2] बले हन्तीति गम्यते[3] ॥२९॥
अस्कृधोयुरकृध्वायुर्दीर्घायुरभिधीते[4] ।
कृतेरुक्प्रत्यये[5] धत्वे तकारस्य भवेत् [6]कृधु ॥३०॥
ह्रस्वस्य वाचकं तच्च [7]ह्रस्वश्चाल्पमिहेप्सितम् ।
कृत्तत्वात् कृध्विति प्रोक्तमल्पं [8]कृत्तमिव स्थितम् ॥३१॥
ओकार[ः]स्यादुकारस्य [9]नञ्पूर्वस्य कधोस्सुटि ।
आयुश्शब्दादिलोपेन [10]त्वस्कृधोयुरलौकिकः ॥३२॥
श्रन्थतेर्हरतेश्चैव[11] निशृम्भा[12] वर्णसाम्यतः ।
अर्थस्याप्युपपन्नत्वाद् उक्ता निश्रथ्यहारिणः ॥३३॥
निश्रथ्या हारिणश्चैव [13]निश्रथ्याः श्रमवर्जिताः ।
हारिणो[14] वृद्धिशीलास्स्युरजाः [15]पूष्णो विशेषिताः ॥३४॥
श्रथ्या हि निर्गता येषां [16]श्रथ्यः शिथिलता श्रमः ।
निश्रथ्यास्ते[17] ततः प्रोक्ताः शोभना हारिणोऽथवा ॥३५॥

---

१. कोशे '०वक्षथं नक्षतेति न भाषिकम्' इत्यपपाठः ।
२. कोशे 'व्यप्तिमात्रसमर्थेन्तो लले' इत्यपपाठः ।
३. कोश इतोऽग्रे प्रक्षिण्याद्यमूरान्तपदव्याख्या न्यस्ता, ततः पुनरस्कृधोयुरादिपदव्याख्यानुक्रम्यते । अस्माभिरयं व्यत्यासो निराकृतः ।
४. कोशे 'अस्तुपोयुरशुध्वायुं०' इत्यपपाठः । अस्कृधोयुरकृध्वायुः । कृध्विति ह्रस्वनाम निकृत्तं भवति । निरु० ६।३॥
५. कोशे 'कृतेरुत्प्रत्यये' इति पाठः । धा० ६।१४१॥
६. कोशे 'क्रधु' इत्यपपाठः ।
७. कोशे 'प्रस्व०' इत्यपपाठः ।
८. कोशे 'क्रतुमिव' इत्यपपाठः ।
९. कोशे 'नर्जपूर्वस्य कृधेस्सुटि' इत्यपपाठः ।
१०. कोशे 'क्वस्तुधो०' इत्यपपाठः ।
११. कोशे 'श्रद्धसेर्हरते०' इत्यपपाठः । धा० १।३५॥ धा० १।९४७॥
१२. निशृम्भा निश्रथ्यहारिणः । निरु० ६।३॥
१३. कोशे 'निश्रित्या श्रमवर्जिता' इत्यपपाठः ।
१४. कोशे 'हारिणो वो वृद्धि०' इत्यपपाठः ।
१५. कोशे 'पुष्णो' इत्यपपाठः । ऋ० ६।५५।६॥
१६. कोशे 'श्रद्धः' इत्यपपाठः ।
१७. कोशे 'विश्रथ्यास्ते:' इत्यपपाठः ।

अन्ये:[1] क्विप्यन्तलोपेन रेफस्यापि प्रसारणे ।
ङप्रत्यये हकारस्य भत्वे स्याद्धरतेर्जसि[2] ॥३६॥
निशृम्भा[3] इति रूपं तु वैदिकं [4]न्याय्यमीरितम् ।
खेदार्थस्य[5] [6]श्रमेर्यद्वा [7]संपदादित्वतः क्विपि ॥३७॥
नैगमे [8]संप्रसारेण निपूर्वस्य निशृ भवेत् ।
निर्गतं [9]शृ श्रमो येषां निशृमो [10]निश्रमास्तु ते ॥३८॥
निश्रमश्चैव ते [11]भाश्च भातेः कप्रत्यये कृते ।
बृहेर्बत्वे[12] हकारस्य शत्रन्तस्य बृबद् भवेत् ॥३९॥
ब्रवीतेर्वा[13] ब्रूशब्दत्वे कृत्यार्थे प्रत्यये बति ।
थक्प्रत्यये [14]वचेर्धातोरुक्थं स्यात्संप्रसारणे ॥४०॥
शस्त्रं वाप्यथवा स्तोत्रं सर्वथा[15] तु निरुच्यते ।
बृबद्[16] बृहन्म[ह]द्यस्य शस्त्रं वक्तव्यमेव वा ॥४१॥
स्तोत्रं[17] वा बृबदुक्थोऽसाविन्द्रस्यैतद्विशेषणम्[18] ।
मृदुशब्दे मकारस्य लोपेन स्यादृदूदरः[19] ॥४२॥
सोमो मृदूदरः प्रोक्तः [20]सुषिस्तस्योदरं भवेत् ।

---

१. कोशे 'अस्थ कुप्यन्त०' इत्यपपाठः । धा० १।३५॥
२. कोशे '०हरते जसि' इत्यपपाठः ।
३. कोशे 'निशृभा' इत्यपपाठः ।
४. कोशे 'वैदिक न्यायमी०' इत्यपपाठः ।
५. कोशे 'वेदार्थस्य' इत्यपपाठः ।
६. धा० ४।४५॥
७. महाभाष्य ३।३।१०८॥
८. कोशे 'संप्रसारे च' इति पाठः ।
९. कोशे 'श्मा' इत्यपपाठः ।
१०. कोशे 'निश्रमोस्तु' इत्यपपाठः ।
११. कोशे 'ताश्च तेः' इत्यपपाठः ।
१२. धा० १।७२७॥
१३. धा० २।३५॥
१४. कोशे 'पचे०' इत्यपपाठः । धा० २।५४॥
१५. कोशे 'सर्वथास्तु' इत्यपपाठः ।
१६. कोशे 'बृहद्' इत्यपपाठः ।
१७. कोशे 'स्तोत्रा वा बृहदुक्थो०' इत्यपपाठः । बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थमिति बृबदुक्थो वा । निरु० ६।४॥
१८. ऋ० ८।३२।१० इत्यस्मिन् मन्त्रे ।
१९. कोशे 'स्याददूदरः' इत्यपपाठः । ऋदूदरः सोमो मृदूदरो मृदुरुदरेष्विति वा । निरु० ६।४॥
२०. कोशे 'सुखिस्त०' इत्यपपाठः । तु०—'ऋदूदरस्यान्तःसुषिरत्वात्' इति स्कन्दः ।

पातॄणामुदरे[1] यद्वा मृदुराशास्यतेऽस्त्वति ॥४३॥
वमनादिनिवृत्त्यर्थं तस्मादुक्तो मृदूदरः ।
ऋदूपे[2] इति तूत्कृष्टं वाच्यं मर्मेति [3]वक्ष्यति ॥४४॥
हिंसार्थस्याद्र्दतेर्धातोर्भावे[4] उप्रत्यये कृते ।
अकारस्य सरेफस्य [5]ऋत्वे स्याद्द्वितीदृशम् ॥४५॥
डप्रत्यये [6]पतेः पेति श्रौते ताच्छीलिके भवेत् ।
ऋदूपं स्यात्समासे तु दैर्घ्यं [7]सांहितिके तयोः[8] ॥४६॥
अदर्दनेनात्मनस्तस्य देहिनं देहमेव वा ।
शीलं पातयितुं ह्यस्ति तस्माददर्दनपाति तत्[9] ॥४७॥
पुरु[:]कामो [10]बहुर्यस्य पुरुकाम[:]स उच्यते ।
स एव [11]पुलुकामोऽपि रलत्वापत्तितो भवेत् ॥४८॥
सनोतेर्वा[12] सिनातेर्वा[13] [14]खादनार्थात् प्रसिद्धितः ।
इत्वभावाच्च[15] पूर्वस्य नुत्वभावात् परस्य च ॥४९॥
असिन्वती[16] भवेद्द्वे तथा [17]पूर्वसवर्णतः ।
असन्वत्यौ सनोतेस्स्यादसिन्वत्या[18] षिञस्तथा ॥५०॥

---

१. कोशे 'पात्रूणामुदरे यद्वा मृदूरा०' इत्यपपाठः ।
२. कोशे 'ऋतुपे इति रुत्कृष्टं' इत्यपपाठः । ऋदूपे इत्युपरिष्टाद व्याख्यास्यामः । निरु० ६।४॥ ३. निरु० ६।३३॥
४. कोशे 'हिसार्थंस्स्याद्दते०' इत्यपपाठः । धा० १।५६॥
५. कोशे 'कृत्वे' इत्यपपाठः । ६. कोशे 'पतेर्वेति' इत्यपपाठः ।
७. कोशे 'सिहितिके' इत्यपपाठः ।
८. तयोः ऋदुशब्द-पशब्दयोः समासे अन्येषामपि दृश्यते (अष्टा० ६।३।१३६) इति दीर्घ इत्याशयः । ९. तत्=ऋदूपं मर्मेति यावत् । १०. कोशे 'बहिर्यस्य' इत्यपपाठः ।
११. कोशे 'पुरुकामो०' इत्यपपाठः । पुलुकामः पुरुकामः । निरु० ६।४॥
१२. धा० ८।२॥ १३. धा० ९।५॥ १४. कोशे 'खादिनार्थां' इत्यपपाठः ।
१५. कोशे 'इत्वाभावाच्च पूर्वस्य अत्वाभावा परस्य च' इत्यपपाठः ।
१६. असिन्वती असङ्खादन्त्यौ । निरु० ६।४॥
१७. कोशे 'पूर्णसव०' इत्यपपाठः । सुपां सुलुक्पूर्वसवर्णा०(अष्टा० ७।१।३९) इति ।
१८. कोशे '०दसिनत्यौ षिणस्तथा' इत्यपपाठः ।

अप्सिन्वतीपदेनापि हनू [1]वह्ने विशेषिते ।
अचर्वणमसंखादो[2] दन्तैरत्र विवक्षितम् ॥५१॥
इदित्वेन [3]कपेर्धातोश्चलनार्थस्य कंपना[ः] ।
इत्येव युक्तरूपं स्यात् [4]कपना इति वैदिकम् ॥५२॥
अकारश्च जस[ः]स्थाने [5]कपनेवेति वैदिकम् ।
घुणाख्याः[6] कृमयो वाच्या वृक्षसारविनाशिनः ॥५३॥
ऋजुका यस्य [7]भा दीप्तिर्भवेदृजुकभास्त्वसौ ।
उकारस्त्वीत्वमागच्छेद्[8] भा इत्यादौ प्रयुज्यते ॥५४॥
यदा तदा निरुक्तोऽत्र [9]भाऋजीकः प्रसिद्धभाः ।
रुजाना[10] इति नद्यः स्युः परस्मैपदभावतः ॥५५॥
शानचोऽप्राप्तिरत्रेति [11]रुजन्तीत्यभिभाषितम् ।
क्तिन्प्रत्यये कृते रूपं [12]जवतेर्गतिकर्मणः ॥५६॥
रेफागमादुकारस्य[13] दैर्घ्ये [14]जूर्णिः श्रुतौ भवेत् ।
उरेफयोर्विपर्यासो दकारस्यापि जत्वतः ॥५७॥
उकारस्य च दीर्घत्वे [15]द्रवतेर्वापि पूर्ववत् ।
जीर्यतेरथवा[16] तस्मिन् उत्वे [17]श्रौते प्रसिध्यति ॥५८॥

---

१. ऋ० १०।७९।१ इत्यत्र ।
२. कोशे 'अपर्वण०' इत्यपपाठः । ३. धा० १।४००॥
४. कोशे 'कंपना' इत्यपपाठः । कपना कम्पनाः क्रिमयो भवन्ति । निरु० ६।४॥
५. कोशे 'तपनेवेति' इत्यपपाठ । ऋ० ५।५४।६॥
६. कोशे 'घूणा०' इति पाठः । ७. कोशे 'हा दीप्इित भवे०' इत्यपपाठः ।
८. कोशे 'अकारस्वित्व०' इत्यपपाठः ।
९. कोशे 'भाऋजिकः' इत्यपपाठः । भाऋजीकः प्रसिद्धभाः । निरु० ६।४॥
१०. रुजाना नद्यो भवन्ति, रुजन्ति कूलानि । निरु० ६।४॥
११. कोशे 'रुज इत्यभि०' इत्यपपाठः । १२. श्रौत्रौ धातुः । अष्टा० ३।२।१५०॥
१३. कोशे 'रेफागमानुकारस्य' इत्यपपाठः ।
१४. जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वा । निरु० ६।४॥ १५. धा० १।९९२॥
१६. धा० ४।२२॥ 'दूनोतेर्वा' इति प्रसिद्धो मूलपाठः । दुर्गपाठश्च तथैव । स्कन्दस्तु 'जीर्यतेर्वा' इति व्याख्याय 'दुनोतेर्वेत्यपपाठः' इत्यवोचत् । १७. कोशे 'श्रोते' इत्यपपाठः ।

शक्तिर्वाप्यथवा सेना जूर्णिरित्यभिधीयते ।
जवनाद् द्रवणा[द्]वा स्याद् जरणाद्वा यथेप्सितम् ॥५९॥
जवनं द्रवणं चैव गतिरेव रिपून्प्रति ।
जरणं[1] नाशनं तेषां जरयत्येव सा रिपून् ॥६०॥
अवतेरवनं[2] रूपं ल्युटि न्याय्यं प्रतीयते ।
प्रसारणे [3]गुणे तस्य [4]मनावोमन्निति श्रुतौ ॥६१॥
आकारस्तु[5] चतुर्थ्यर्थे तस्मात्स्यादोमना पुनः ।
अवनं[6] तर्पणं [कर्तुम्] अवनायेत्युदाहृतम् ॥६२॥

॥ इति [पद्मभगवत्प्रणीते] निरुक्त[श्लोक]वार्त्तिके ऐकपदिके तृतीय[ाध्याय]स्य प्रथमः पादः ॥

—:०:—

१. कोशे 'जरणन्नाहनन्तेषां जयत्येव' इत्यपपाठः ।
२. कोशे 'अपेतरपनं' इत्यपपाठः । धा० १।६३१॥
३. कोशे 'गणे' इत्यपपाठः ।
४. परि अं समोमना वां वयो गात् (ऋ० ७।६६।४) पर्यगाद् वां अं समहरवनायान्नम् । निरु० ६।४॥ ५. कोशे 'अकारस्तु चतुर्थ्यर्थे कस्मा०' इत्यपपाठः ।
६. कोशे 'अवन्तर्पणं यौवना०' इत्यपपाठः ।

# द्वितीयः पादः

प्रपूर्वस्योपलाग्रस्य[1] क्षिणुतेर्वधकर्मणः[2] ।
ताच्छीलिके[3] णिनाविष्टं यत्तत् [4]प्रक्षायिणी पदम् ॥१॥
तदेव विकृतं वेदे प्रक्षिणीति प्रयुज्यते ।
प्रक्षायिणीपदस्थस्य[5] यकारस्यापि लोपतः ॥२॥
क्षाशब्दान्तस्य लोपे च [6]प्रक्षिणीति प्रसिध्यति ।
णिनौ धात्वन्त लोपे वा प्रक्षिणीत्येव जायते ॥३॥
उपलप्रोपसृष्टस्य[7] [8]तस्मिन्नेवाथवा [9]क्षिपेः ।
प्रक्षेपिणीति युक्तत्वात् प्रक्षिणीत्यपि वैदिकम् ॥४॥
पकारैकारलोपेन यद्वा [10]स्यादिपि लोपिते ।
उपलेषूपतप्तेषु[11] बालुकालक्षणेषु हि ॥५॥
प्रोप्य [12]भृष्टान्यवान् हन्ति सक्त्वर्थं सक्तुकारिका ।
दुष्टदुर्घटरूपेषु[13] यद्वान्यत्रोपलेषु सा ॥६॥
भृष्टान्[14] क्षिणाति सक्त्वर्थांश्चूर्णयत्येव सूक्ष्मतः ।
प्रक्षिपेदथवा[15] तेषु भृष्टांश्चूर्णयितुं यवान् ॥७॥

---

१. कोशे 'पूर्वस्योपलान्तस्य' इति पाठः । २. धा० ८।४॥
३. कोशे 'तच्छीलिके' इत्यपपाठः । ४. कोशे 'प्रक्षयिणी' इत्यपपाठः ।
५. कोशे 'प्रक्वायणी०' इत्यपपाठः ।
६. उपलप्रक्षिण्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वा । निरु० ६।५॥
७. कोशे '०प्रदिष्टस्य' इत्यपपाठः ।
८. णिनि प्रत्यय इत्यर्थः । ९. धा०४।४४॥
१०. कोशे 'स्यपि' इत्यपपाठः । क्षिपेष्टिलोप इत्यर्थः ।
११. कोशे 'उपलेषु पतप्तेषु चायुका०' इत्यपपाठः ।
१२. कोशे 'भ्रष्दन्य वा हन्ति' इत्यपपाठः ।
१३. कोशे '०दुघटरूपेषु यद्वान्यद्वोपलेषु' इत्यपपाठः ।
१४. कोशे 'भ्रष्टात् क्षिणाति सक्त्वर्थांश्चूर्णं०' इत्यपपाठः ।
१५. कोशे 'थमातेष्ठ हृष्टं श्चूर्णं०' इत्यपपाठः ।

उपलान्[1] प्रक्षिपेद्यद्वा यवेभ्यस्तांस्ततोऽपि वा ।
उपलप्रक्षिणी तेन कथिता सक्तुकारिका ॥८॥
तिष्ठतेरुपपूर्वस्य[2] कृते [3]कप्रत्यये पुनः ।
सप्तम्यां तु थशब्दस्य लापेनोपसि नैगमः ॥९॥
उपस्युपस्थ[4] इत्यर्थस्त्वन्तरिक्षं विवक्षितम् ।
उपस्यापो[5] हि तिष्ठन्ति तस्मिन्देवाश्च[6] केचन ॥१०॥
वणिक्प्रकलवित्[7] प्रोक्तो ह्रस्वत्वं छान्दसं भवेत् ।
प्रकलाविदिति [8]न्याय्यं प्रकला गणितादिकाः ॥११॥
मानोन्मानादिकाश्चापि[9] कला भाष्यकृतेरिता[ः] ।
तद्विदोऽत्र विनिर्दिष्टा जस[ः]स्थाने हि सु[ः]स्मृतः ॥१२॥
अभिपूर्वादृधेर्धातोः[10] शतर्यभ्यर्धयन्निति ।
यजेङ्र्वनिपि[11] यज्वा स्याद् दानार्थस्य तयोः पुनः ॥१३॥
समासे वैदिके लापे [शतुः] पूर्वस्य यस्य च ।
भवेद् [12]अभ्यर्धयज्वेति [13]पूषानेनाभिधीयते ॥१४॥
न्याय्यमभ्यर्धयद्यज्वा यजत्यभ्यर्धयन्नसौ ।
रसान्[14] भौमान् समाकृष्य पूषा तानभिवर्धयन् ॥१५॥

---

१. कोशे 'उपला प्रक्षिपद्यद्वा यवेभ्यस्तास्तत०' इत्यपपाठः ।
२. धा० १।९७५॥
३. कोशे 'तप्रत्यये' इत्यपपाठः ।
४. कोशे 'उपस्युपथ' इत्यपपाठः । निरु० ६।६॥
५. कोशे 'उपम्यापो' इत्यपपाठः ।
६. कोशे '०देवाय' इत्यपपाठः ।
७. कोशे '०प्रकलवि प्रोक्ता' इत्यपपाठः । प्रकलविद् वणिग् भवति, कलाश्च वेद प्रकलाश्च । निरु० ६।६॥
८. कोशे 'न्याय्यां प्रकला गणिकादिकाः' इत्यपपाठः ।
९. कोशे 'मानोत्मानादिताश्चापि' इत्यपपाठः ।
१०. कोशे 'अभिपूर्वो धृतेर्धातोः' इत्यपपाठः । धा० ४।१३५॥ ५।२४॥
११. कोशे 'यजेध्वनिविज्यज्वा' इत्यपपाठः । अष्टा० ३।२।१०२॥
१२. अभ्यर्धयज्वाभ्यर्धयन्यजति । सिषक्ति पूषा अभ्यर्धयज्वा (ऋ० ६।५०।५) इत्यपि निगमो भवति । निरु० ६।६॥
१३. कोशे 'पुषा०' इत्यपपाठः ।
१४. कोशे 'रसात् होमात्' इत्यपपाठः ।

मध्यमाय ददातीति दानं वृद्धिपुरस्सरम् ।
हवींषि वाभ्युपादाय[1] फलं यागस्य वर्धयन् ॥१६॥
यष्टृभ्यो[2] विधिवत्पूषा ददातीति विवक्षितम् ।
ईक्षे:[3] स्यादीक्ष इत्येतन्न्याय्यमेव तथापि तु ॥१७॥
तदर्थानुपपत्तेस्स्याद्[4] ईशेरैश्वर्यकर्मणः ।
नैगमेनेडभावेन [5]शषत्वेनापि कत्वतः ॥१८॥
ईक्ष इत्यपि रूपं स्यादीशिषे[6] न्याय्यमिष्यते ।
क्षियतेर्ल्युटि[7] रूपं स्यात् [8]क्षयणस्येति भाषितम् ॥१९॥
अस्योत्वे यस्य लोपे च [9]क्षोणस्येत्यपि नैगमम् ।
ओत्वमेवाऽथवा पूर्वमिकारस्य गुणो भवेत् ॥२०॥
पूर्वरूपे [10]त्वकारस्य क्षोणस्येति प्रसिध्यति ।
आदिष्टः [11]शे सुपां स्थाने [12]सुपां स्वित्यादिसूत्रतः ॥२१॥
तस्यानेकार्थता सिद्धा छान्दसत्वादिहोच्यते ।
अस्म इत्यस्य शब्दस्य [13]वयमाद्यर्थवाचिता ॥२२॥
व्याख्याता भाष्यकारेण [14]युष्मे तेनोपवर्णितम् ।

---

१. कोशे 'हविर्भ्योप्युपपादाय' इति पाठः ।
२. कोशे 'यष्टव्यो' इत्यपपाठः ।
३. कोशे 'इक्षे स्यादिक्ष इत्येतन्नयय्यमेव' इत्यपपाठः । धा० १।६०२॥ ईक्ष ईशिषे निरु० ६।६॥ ४. कोशे '०स्यादीशैरैश्वर्य०' इत्यपपाठः । धा० २।१०॥
५. कोशे 'शेषते नधि' इत्यपपाठः ।
६. कोशे '०दीशिते न्यायमि०' इत्यपपाठः ।
७. कोशे 'क्षिपते०' इत्यपपाठ । धा० ६।११४॥
८. कोशे 'क्षपण०' इत्यपपाठः ।
९. क्षोणस्य क्षयणस्य । निरु० ६।६॥
१०. कोशे 'तकारस्य' इत्यपपाठः ।
११. कोशे 'गे सुपा०' इत्यपपाठः ।
१२. अष्टा० ७।१।३९॥ १३. निरु० ६।७॥
१४. कोशे 'युषे' इत्यपपाठः ।

पाथोऽन्तरिक्षमित्युक्तम्[1] उदकञ्चान्नमेव च ॥२३॥
व्याख्यातं [2]तत्पथेत्युक्तं तथाप्यत्रोपवर्ण्यते ।
पततेः[3] पद्यतेश्चैव[4] थादेश[:]स्याद्यदा [5]तदोः ॥२४॥
एस्प्रत्यये[6] तदा वृद्धौ पाथ इत्यवतिष्ठते ।
पन्थतेस्तु[7] नलोपेन [8]तस्मिन्नेव प्रसिध्यति ॥२५॥
उदके च [9]तथैवान्ने [10]पिबतेस्थसि सिध्यति ।
सौतेरीमनि[11] भावे स्याद् [12]गुणावादेशभावतः ॥२६॥
श्रौतं [13]सवीमनीत्येतत् प्रसवेत्यपि भाषिकम् ।
सर्वशब्दसपूर्वस्य [14]प्रथेरस्प्रत्यये कृते ॥२७॥
सप्रथा इति रूपं स्यात् [15]सर्वतः पृथुरुच्यते ।
ज्ञानार्थस्य [16]विदेर्धातोल्युडर्थे प्रत्यये कथे ॥२८॥
विदथानीति[17] वेदे स्यात् वेदनानीति भाषिकम् ।
श्रयते[18] [:] शतृयुक्तस्य गुणायादेशतश्शपि ॥२९॥
श्रयन्त इति भाषायां [19]श्रायन्तो दीर्घतः श्रुतौ ।
इकार[:]श्रयतेर्धातोः शकारस्य यदोपरि ॥३०॥

---

१. पाथोऽन्तरिक्षं पथा व्याख्यातम् ।...उदकमपि पाथ उच्यते पानात् ।...अन्नमपि पाथ उच्यते पानादेव । निरु० ६।७॥ २. कोशे 'तत्पदेत्युक्तं' इत्यपपाठः । निरु० २।२८॥
३. धा० १।८६८॥ ४. धा० ४।६०॥
५. कोशे 'तयोः' इत्यपपाठः । ६. कोशे 'नस्प्रत्यये तदा वृद्धो' इत्यपपाठः ।
७. कोशे 'पस्थतेस्तु' इत्यपपाठः । धा० १०।३६॥ ८. णस्येव ।
९. कोशे 'तथैवात्वे' इत्यपपाठः । १०. धा० १।६७२॥
११. कोशे 'सुतेरिमनि' इत्यपपाठः । धा० २।३२॥
१२. कोशे 'गुणवादेन' इत्यपपाठः । १३. सवीमनि प्रसवे । निरु० ६।७॥
१४. कोशे 'पथेरुस्' इत्यपपाठः । धा० १।८०२॥
१५. कोशे 'सर्वथः' इत्यपपाठः । सप्रथाः सर्वतः पृथुः । निरु० ६।७॥
१६. कोशे 'विदेर्धातोद्धुडर्थे प्रत्यये कृते' इत्यपपाठः । धा० २।५५॥
१७. विदथानि वेदनानि । निरु० ६।७॥ १८. धा० १।६४५॥
१९. कोशे 'श्रायन्तः दीर्घतो' इत्यपपाठः । श्रायन्त इव सूर्यम् (ऋ० ८।६६।३) समाश्रिताः सूर्यमुपतिष्ठन्ते । निरु० ६।७॥

आङ्पूर्वस्य[1] क्विबन्तस्य रेफान्तं तत्तथा भवेत् ।
उपधायाश्च दीर्घत्वेऽसावाशीर्दधि[2] तद्विदुः ॥३१॥
सोमस्य श्रयणार्थं तत् प्रसिद्धं यज्ञकर्मणि ।
आशीराश्रयणं प्रोक्तं श्रयणं मिश्रणं विदुः ॥३२॥
श्रपणम्[3] इति वाकार ईत्वमासाद्य शं व्रजेत् ।
क्विप्येव पूर्ववत्सिद्धमाशीराश्रयणं[4] दधि ॥३३॥
श्रपणं[5] पयसस्त्वेव परेऽवद्योतनं विदुः ।
आशास्ते[6] प्रार्थनार्थस्य [7]क्विपीत्वमुपधा व्रजेत् ॥३४॥
आशीरिति सकारान्तं लोके वेदे च विद्यते ।
नैरुक्तस्य तु [8]जोगर्तेर्गिरत्यर्थस्य शब्लुकि ॥३५॥
गृह्णात्यर्थस्य [9]वाजोगर्लङि सिप्यटि सिध्यति ।
अगारीरग्रहीर्वापि[10] तस्यार्थोऽत्र विवक्षितः ॥३६॥
मुहेर्मूढेति[11] सिद्धस्य निष्ठायां तु [12]ढरत्वतः ।
मूरा[13] इति भवेद्वेदे [14]मूढा मुग्धाश्च लोकतः ॥३७॥

---

१. कोशे 'आंपूर्वस्य तिबन्तस्य' इत्यपपाठः ।

२. कोशे '०सावाशिर्दधि' इत्यपपाठः । आशीराश्रयणाद्वाश्रपणाद्वा । अथेयमितराशीराशास्तेः । निरु० ६।८॥

३. कोशे 'श्रापका इति पाकारः इत्वमासाद्य सं व्रजेत्' इति पाठः ।

४. कोशे '०माशिराश्रयणन्दधि' इत्यपपाठः ।

५. कोशे 'श्रयण पयस वत्व परे' इति पाठः ।

६. कोशे 'आशस्ते' इत्यपपाठः । धा० २।१२॥

७. कोशे 'क्विपित्वमुपधा' इत्यपपाठः ।

८. कोशे 'जीगते गिरित्यर्थस्य' इत्यपपाठः । जिगर्त्तिगिरतिकर्मा वा गृणातिकर्मा वा गृह्णातिकर्मा वा । निरु० ६।८॥

९. कोशे 'वाजीर्ग लीहिं सिप्यटि' इत्ययपाठः ।

१०. कोशे 'अगारिरग्रही०' इत्यपपाठः ।

११. कोशे 'मुहे मुडेति' इत्यपपाठः । धा० ४।९०॥

१२. कोशे 'डरत्वतः' इत्यपपाठः । ढकारस्य रेफत्वादित्यर्थः ।

१३. कोशे 'मुरा' इत्यपपाठः । १४. कोशे 'मूढो' इत्यपपाठः ।

मुहेरेवाथवा रस्स्याद् निष्ठार्थेऽप्रत्यये[1] श्रुतौ ।
उपधायाश्च दीर्घत्वममूरो[2] नञि सिध्यति ॥३८॥
अनुनासिकलोपेन [3]शं[सेः शानचि नैगमे] ।
सकारस्य शकारत्वे शशमानो मुकीष्यते ॥३९॥
परस्मैपदभावात्तु शंसन्नित्येव लौकिकम् ।
देवान्प्रत्यर्चयेत्यर्थे [4]देवाच्येत्यञ्चतेः क्विपि ॥४०॥
उगितश्चेति ङीपि स्यात्[5]नलोपे वैदिकं पदम् ।
अञ्चतेरनपादाने[6] निष्ठानत्वविधानतः ॥४१॥
सिद्धमेवाक्तयेत्येतत्[7] गतयेति विवक्षितम् ।
क्रपतेर्वा[8] क्लृपेर्वा[9] स्यात् छान्दसे क्विपि कर्मणि ॥४२॥
क्रपेर्यदा[10] भवेदेतद् [11]रत्वमृत्वं तदा व्रजेत् ।
क्लृप्ता स्तुतिः [12]क्रृपेत्युक्ता देवाच्येति विशेषिता ॥४३॥
देवशब्दस्य पाठोऽत्र सुखेन प्रतिपत्तये ।
पदयोरुक्तयोरेव न संस्कारप्रक्लृप्तये ॥४४॥
संस्कारस्य प्रक्लृप्त्यर्थमथवा पठ्यतेऽत्र सः ।
देवता देवशब्दोक्ता [13]दिवेर्देवः [14]पचाद्यचि ॥४५॥

---

१. निष्ठार्थे अप्रत्यये हकारस्य रेफादेशः कल्प्यत इत्यर्थः ।

२. कोशे '०मुरो नङि सि०' इत्यपपाठः । मूरा अमूर (ऋ० १०।४।४) मूढा वयं स्मोऽमूढस्त्वमसि । निरु० ६।८॥

३. कोशे 'श ...' इति त्रुटितः पाठः । शशमानः शंसमानः । निरु० ६।८॥ धा० १।७६४॥

४. कोशे 'देवाच्चेत्यञ्चतेः' इत्यपपाठः । धा० १।२०३॥ देवो देवाच्या कृपा (ऋ० १।१२७।१) देवो देवान् प्रत्यक्तया कृपा । निरु० ६।८॥ ५. अष्टा० ४।१।६॥

६. कोशे 'अंचतेरन वादाने' इत्यपपाठः । अष्टा०, ८।२।४८॥

७. कोशे '०वाग्नयेत्येतत्' इत्यपपाठः ।

८. कोशे 'कृपूर्वे वा' इत्यपपाठः । धा० १।८०८॥ ९. धा० १।७६६॥

१०. कोशे 'कपे०' इत्यपपाठः । ११. कोशे 'अत्वम्नत्व०' इत्यपपाठः ।

१[२]. कोशे 'कृपत्युक्ता' इत्यपपाठः । १३. कोशे 'दिवेर्देवे' इत्यपपाठः ।

१४. महाभाष्य ३।१।१३७॥

दानाद्वेत्यादिभाष्येण[1] संस्कारो वक्ष्यतेऽन्यथा ।
विजामातृपदेनोक्तस्त्वसंपूर्णगुणो[2] वरः ॥४६॥
अस[मा]प्तपदेनापि नान्योऽतोऽर्थो विवक्षितः ।
असंपूर्णगुणत्वञ्च विशब्देन विवक्षितम् ॥४७॥
जायते जन्यते [3]वेति [4]जनेर्नस्यात्वता विटि ।
जा[5] इत्यपत्यमेवोक्तं माता वोढा [6]तु भण्यते ॥४८॥
निर्मातेति हि [7]यास्कोक्तो माता संस्कारको मतः ।
स्त्रीरूप[स्य]त्वपत्यस्य विवाहं [8]संस्कृतिं विदुः ॥४९॥
विजामाता[9] न संस्कर्तुं शक्नुयान्निर्गुणत्वतः ।
निर्गुणत्वमविद्यत्वाद् अरूपत्वादिना तथा ॥५०॥
धर्मबाह्यो [9]विजामाता धनक्रीतापतित्वतः ।
मप्रत्ययेऽवतेरोमा[10] नैगमे संप्रसारणे ।
गुणे[11] लोकेऽवितारः स्युरिति [12]वक्ष्यति भाष्यकृत् ॥५१॥

॥ इति [पद्मभगवत्प्रणीते] निरुक्त-[श्लोक]वार्त्तिके ऐकपदिके तृतीय[ाध्याय]स्य द्वितीयः पादः ॥

—:o:—

---

१. निरु० ७।१५॥

२. विजामातुरसुसमाप्ताज्जामातुः । विजामातेति शश्वत् । दाक्षिणाजाः क्रीतपतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतः । निरु० ६।९॥ ३. कोशे 'नेति' इत्यपपाठः ।

४. जनेः (धा० ४।४१) जनसन० (अष्टा० ३।२।६७) इति विटि, विड्वनोरनुनासिकस्यात् (अष्टा० ६।४।४१) इत्यात्वम् ।

५. जामाता जा अपत्यं तन्निर्माता । निरु० ६।९॥ ६. कोशे 'ह' इत्यपपाठः ।

७. कोशे 'यास्कोक्ता माता संस्कारतो' इत्यपपाठः ।

८. कोशे 'संस्कृतिर्विदुः' इत्यपपाठः ।

९. कोशे 'द्विजामाता' इत्यपपाठः । १०. धा० १।६३१॥

११. कोशे 'गुणलोके विकारस्यु०' इत्यपपाठः ।

१२. अवितारो वावनीया वा । निरु० १२।४०॥

# तृतीयः पादः

मन्प्रत्यये[1] [2]सुनोतेस्स्यात् सोता सोमाभिधीयते ।
द्वितीयान्तं ततस्तस्मात् [3]सोमानमिति वैदिकम् ॥१॥
षष्ठीबहुवचोरूपं [4]सोमानामिति यत्पदम् ।
ह्रसितं तु तदेवेदमिति केचित्प्रचक्षते ॥२॥
पदेऽनवयवेत्यस्मिन् वकारेऽन्त्ये[5] विलोपिते ।
वकाराकारदीर्घत्वेऽप्यनवायं[6] प्रसिध्यति ॥३॥
सकलस्त्विति तस्यार्थो यस्मान्नावयवस्त्वसौ ।
अनवेयपदार्थो[7] वा [8]त्वनवायपदेरितः ॥४॥
एकारस्यात्वमत्र स्याद् अविनाश्यन्तु तद्भवेत् ।
अयतेरवपूर्वस्य[9] [10]त्ववायो घञि सिध्यति ॥५॥
तन्निषेधोऽनवायश्च[11] [12]पादैस्यातो न युज्यते ।
द्वेषो विशेषणत्वेन[13] पक्षेऽन्त्येऽप्युपपद्यते ॥६॥

---

१. कोशे 'मप्रत्यये' इत्यपपाठः । २. धा० ५।१॥
३. सोमानं सोतारम् । निरु० ६।१०॥
४. कोशे 'सामाना०' इत्यपपाठः ।
५. कोशे 'वकारेन्त्यवि०' इति पाठः ।
६. कोशे 'परिराकारदीर्त्वेप्यनपायं' इत्यपपाठः । अनवायमनवयवं यदन्ये न व्यवेयुरद्वेषस इति वा । निरु० ६।११॥
७. कोशे 'अनपेय०' इत्यपपाठः ।
८. कोशे 'त्वनवापपदेरिता' इत्यपपाठः ।
९. धा० १।५३०॥
१०. कोशे 'त्वायापे' इत्यपपाठः ।
११. कोशे '०नपायश्च' इत्यपपाठः ।
१२. यथोकोशं पाठः ! 'पापस्यायो' इति पाठशोधः स्यात् ?
१३. कोशे 'द्वेषाविशेष०' इत्यपपाठः ।

किमिदानीं भवेत्कस्य[1] छिद्रमित्येव यश्चरेत् ।
किमिदं किमिदं वेति [2]किमीदी सोऽभिधीयते ॥७॥
उक्तेऽर्थे किमिदं शब्दात् प्रत्यये [3]डिनि नैगमे ।
मिशब्दस्य[4] च दीर्घत्वे किमीदी पिशुनः स्मृतः ॥८॥
[तद्धितेऽ]मात्यशब्दस्य लुप्ते मा ह्रसितो यदा ।
तदा स्यादम इत्येव [5]तद्वानुक्तस्त्वमात्यवान् ॥९॥
रोगार्थस्यामतेर्यद्वा[6] ल्युडर्थेऽप्रत्यये[7] कृते ।
अम इत्येव रूपं स्यात् [8]तद्वानमनवान् भवेत् ॥१०॥
शत्रूणां क्रियमाणश्च [9]रोगोऽत्राभ्यमनं भवेत् ।
आकारे ह्रसिते यद्वा तकारे लोपिते तथा ॥११॥
आत्मशब्दे[10] मतौ रूपमम‌न्नित्येव शिष्यते ।
आत्मवानमवानुक्तः[11] सोऽप्रमत्तोऽभिधीयते ॥१२॥
अमीवाप्यमतेरेव[12] [13]कर्तरीवनि वैदिके ।
अमीवा रोगकृत्[14] प्रोक्तः कृमिर्गर्भविनाशकः ॥१३॥

---

१॰ कोशे '॰कर्मस्य छिन्द्र॰' इत्यपपाठः ।

२. कोशे 'किमिदी' इत्यपपाठः । किमीदिने किमिदानीमिति चरते, किमिदं किमिदमिति वा पिशुनाय चरते । निरु॰ ६।११।

३. कोशे 'घिनि' इत्यपपाठः ।

४. कोशे 'निशब्दस्य च दीर्घं किमिति पशुन स्मृत तद्धिते' इत्यपपाठः । अत्रत्यः 'तद्धिते' इति पाठोऽग्रिमश्लोकस्याद्यः स्यात् ।

५. कोशे '॰क्तस्तमात्यवान्' इत्यपपाठः । याहि राजेवामात्यवान् अभ्यमनवान् स्ववान् वा । निरु॰ ६।१२।

६. कोशे 'रोगर्थं॰' इत्यपपाठः । धा॰ १०।१८०।

७. कोशे 'ल्युडथे प्रत्यये' इत्यपपाठः ।

८. कोशे '॰नमलवान्' इत्यपपाठः ।

९. कोशे 'रोगोत्रच्यमनं' इत्यपपाठः ।

१०. कोशे 'आमशब्दे मते रूप॰' इत्यपपाठः ।

११. कोशे 'आत्मवामनवानुक्तः' इत्यपपाठः ।

१२. अमीवाभ्यमनेन व्याख्यातः । निरु॰ ६।१२।

१३. कोशे 'कर्तरीपीन' इत्यपपाठः ।

१४. कोशे 'रोगकृतत् प्रोक्ता कृमि गर्भविनाशनम्' इत्यपपाठः ।

रोगार्थादमशब्दाद्वा [1]मत्वर्थे त्वीबनीदृशम् ।
अमीवेति भवेद्रूपं [2]उक्तोऽप्यमनवान्क्रमिः ॥१४॥
एतेद्रोपसृष्टस्य[3] भावे क्ते [4]दुरितं त्विति ।
लोकेऽपि [5]सिद्धमेवेति किमर्थमिह पठ्यते ॥१५॥
[मैवं]दुरितवाच्याया दुर्गतेः कारणं तु यत् ।
पापं दुरितमत्रेष्टं तत्रेदं न प्रसिध्यति ॥१६॥
दुराक्षिप्ता[6] गतिर्दुष्टा येन पापेन गम्यते ।
गमनं त्विति तच्छ्रेयं वक्तुं [7]वै दुरितं त्विति ॥१७॥
अन्तर्णीत णिजर्थस्य [8]वेतेडंप्रत्यये कृते ।
अप्वा[9] स्यादपपूर्वस्य त्वपेत्यस्यान्त्यलोपतः ॥१८॥
व्याधिजातिस्तु[10] वाच्येष्टा भीतिरित्यपरे विदुः ।
प्राणान्भोगान्सुखं वापि सा देहादपवाययेत् ॥१९॥
तेन साप्वेति निर्दिष्टा न्याय्या स्यादपवायना ।
ततिशब्दात्तिमादाय मतिशब्दादथापि वा ॥२०॥
आत्मशब्दादमेत्येतद् [11]अमतिः परिकल्प्यते ।
आत्मशब्दादमेत्यस्य[12] निष्पत्तिः [13]पूर्वमीरिता ॥२१॥

---

१. कोशे 'रोगार्थोदमशब्दाद्वा मत्वर्थे त्ववनीदृशम्' इत्यपपाठः ।

२. कोशे 'उक्तो व्यमनवानूकूमी' इत्यपपाठः ।  ३. धा० २।३६॥

४. कोशे 'दरितं' इत्यपपाठः । अतिक्रामन्तो दुरितानि विश्वा । अतिक्रममाणा दुर्गतिशमनानि सर्वाणि । निरु० ६।१२॥  ५. कोशे 'सिद्धिमेवेति' इत्यपपाठः ।

६. कोशेऽयं श्लोकः प्रकरणं विच्छिद्याग्रिम 'अन्तर्णीत' इत्यादि श्लोकेन विपयस्यते । स विपर्यासोऽत्र परिहृतः ।  ७. कोशे 'ग' इत्यपपाठः ।

८. कोशे 'त्ववेतेडं०' इत्यपपाठः । धा० २।३९॥

९. कोशे 'अपा स्यादवपूर्वस्य' इत्यपपाठः । अप्वा यदेनया विद्धोऽपवीयते व्याधिर्वा भयं वा । निरु० ६।१२॥

१०. कोशे 'व्यधिजतिस्तु' इत्यपपाठः ।

११, अमतिरमामयी मतिरात्ममयी । निरु० ६।१२॥

१२. कोशे 'आमशब्दा०' इत्यपपाठः ।  १३. द्र०—श्लोक १२ ।

अमामयीति[1] निर्दिश्य [2]ततिरित्यभिधाय यत् ।
मतिरित्यथवोक्त्वोक्तं यास्केनात्म[म]यीत्यपि ॥२२॥
आ[त्म]शब्दादमाशब्दं सञ्चस्कारेति तद्विदुः ।
अकारञ्च मकारञ्च विपर्यस्य [3]तलोपतः ॥२३॥
मकारात्परमाकारं कृत्वेत्येवं प्रचक्षते ।
तथा [4]चामामयीत्युक्तममते[:]स्पष्टसिद्धये ॥२४॥
ततः स्पष्टतयोक्तं[च] पुनरात्ममयीति तु ।
ततिश्चैव मतिश्चैव विज्ञप्तिश्चात्मगोचरा ॥२५॥
श्रुष्टीवरीरिति[5] त्वस्यां सुखं श्रुष्टीत्युदाहृतम् ।
गिरा[6] च श्रुष्टिरित्यत्र [7]शलाका सस्यनिश्रिता ॥२६॥
तां[8] अध्वर इति त्वस्यां [9]श्रुष्टीति क्षिप्रमुच्यते ।
आशुशब्दादिलोपेन [10]त्वशेरादेश्च [11]रेफिते ॥२७॥
रेफोकारविपर्यासे[12] क्तिनि श्रुष्टिः प्रसिध्यति ।
आशु [13]अष्टीति निर्देशः कथं भाष्यकृता कृतः ॥२८॥
क्तिनन्तत्वेऽष्टिरित्येव नैवाष्टीति प्रसिध्यति ।
निर्देशस्याविभक्तित्वं [14]कैश्चिदत्र समाश्रितम् ॥२९॥

---

१. कोशे 'अमाम इति' इत्यपपाठः ।

२. कोशे 'तितिरित्य०' इत्यपपाठः । अत्र 'अमतिरमामयी ततिर्मतिर्वात्ममयी' इति भाष्यपाठो नीलकण्ठाभिमतः प्रतीयते । स्कन्दव्याख्याप्यत्रानुसंधेया ।

३. कोशे 'तुलोपतः' इत्यपपाठः । ४. कोशे 'श्यामायमयी०' इत्यपपाठः ।

५. कोशे 'श्रुटी परि०' इत्यपपाठः । श्रुष्टीवरीभूर्तनास्मभ्यमापः (ऋ० १०।३०।११) सुखवत्यो भवतास्मभ्यमापः । निरु० ६।२२॥ ६. ऋ० १०।१०१।३॥

७. कोशे 'गलाका' इत्यपपाठः । अयमर्थः स्कन्दानुसारी ( द्र०—स्कन्दटीका निरु० ५।२८), दुर्गस्तु 'क्षिप्रम्' इत्येवार्थमास्थित ।

८. कोशे 'तं' इत्यपपाठः । ऋ० ७।३९।४॥

९. कोशे 'सृष्टीति' इत्यपपाठः । श्रुष्टीति क्षिप्रनामाशु अष्टीति । निरु० ६।१२॥

१०. धा० ५।१८॥ ११. कोशे 'रोफतम्' इत्यपपाठः ।

१२. कोशे 'रेफाकारविपर्यासे क्तिनिः' इत्यपपाठः ।

१३. कोशे 'श्रुष्टीति' इत्यपपाठः । १४. दुर्गस्कन्दाभ्यां नैतद् विचारितम् ।

आश्वष्टिरिति वा पाठः कार्यं इत्यपरे विदुः ।
क्तिजन्तमपरे[1] प्राहुर्लिङ्गं चानियतं तथा ॥३०॥
आशु अष्टचा[2] क्तिजन्तेन कथितं क्षिप्रधर्मकम् ।
आशु अष्टीति[3] यद्वेदम् आख्यातमिति गम्यते ॥३१॥
अदादावपि पाठोऽस्य शब्दशास्त्रान्तरे किल ।
पुरन्धिर्बहुधीः[4] प्रोक्तो भगोऽसाविन्द्र एव वा ॥३२॥
वरुणो वा बहुप्रज्ञो बहुकर्माथवा भवेत् ।
अकारत्वमुकारस्य नकारस्य तथागमः ॥३३॥
पुरुधीस्सन् [5]पुरन्धिस्स्याद् एतच्छान्दसवृत्तितः ।
पुरान्दारयितृत्वाद्वा तच्चेन्द्रस्योपपद्यते ॥३४॥
इप्रत्यये [6]दृणाते[:] स्यादृकारस्यापि लोपतः ।
दकारस्य[7] तथा धत्वे पुरन्धिः [8]पुरदीर्मतः ॥३५॥
धाञः[9] किप्रत्यये [10]धित्वमाधारे पुरुपूर्वकम् ।
सिद्धं पुरुधिरित्येतद् बहु तस्मिन् [11]त्रि धीयते ॥३६॥
कर्म वाप्यथवा ज्ञानं पुरुधिस्तेन [12]भाषितम् ।
रुशदित्युच्यते [13]वर्णो ज्वलत्यर्थस्य [14]रोचते[:] ॥३७॥

---

१. कोशे 'क्तजन्त०, इत्यपपाठः ।

२. कोशे 'आशु श्नुष्टचा' इत्यपपाठः ।

३. कोशे 'आशुश्नुष्टीति' इत्यपपाठः ।

४. कोशे 'पुरधीः बहुवीः' इत्यपपाठः । पुरन्धिर्बहुधीः । तत्कः पुरन्धिः ? भगः पुरस्तात् तस्यान्वादेश इत्येकम् । इन्द्र इत्यपरम्, स बहुकर्मतमः पुरां च दारयितृतमः । वरुण इत्यपरम्, तं प्रज्ञया स्तौति । निरु० ६।१३॥

५. कोशे 'पुरुन्धि०' इत्यपपाठः ।

६. धा० ६।२३॥

७. कोशे 'तकार०' इत्यपपाठः ।

८. कोशे 'पुरधुर्वतः' इत्यपपाठः ।

९. कोशे 'धाणः' इत्यपपाठः । धा० ३।१०॥

१०. कोशे 'ङीत्वमुपमाधारे पुरुपूर्वकः' इत्यपपाठः ।

११. कोशे 'जि' इत्यपपाठः ।

१२. कोशे 'भूषितम्' इति पाठः ।

१३. रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः । निरु० ६।१३॥

१४. धा० १।७८१॥

शत्रन्तस्य चकारस्य [1]शकारत्वेन नैगमम् ।
भाषायां रोचमान[:]स्यात्तच्च [2]पाजो विशेषणम् ॥३८॥
अग्निज्वालासमूहस्य [3]वर्णः स्याद्भास्वरात्मकः ।
घ्नतोऽस्यन्त[4] इति त्वर्थे यद्वा घातयतो [5]रिशेः ॥३९॥
कादसि प्रत्यये रूपं नैगमे स्याद्रिशादसः ।
रिशदासिन एवोक्ता यद्वा [6]रेशयदासिनः ॥४०॥
रिशतो[7] ह्यसितुं शीलं यद्वा रेशयतो रिपून् ।
येषां ते भाष्यकारेण यथोक्तमुपवर्णिताः[8] ॥४१॥
सुदत्र[:] स्यात् सुपूर्वस्य [9]ददातेष्ट्रनि नैगमे ।
आकारे ह्रसिते चैव [10]सुदानो वाच्य इष्यते ॥४२॥
वेत्तेः[11] कत्रे सुपूर्वस्य [12]सुविदत्रोऽपि नैगमः ।
कल्याणविद्य[13] इत्यर्थः [14]सुविद्यः स्यात्तु लौकिकः ॥४३॥
निष्ठार्थेऽनूपसृष्टस्य[15] सञ्जे[: क्विप्प्रत्यये कृते] ।
[उपसर्गादिदीर्घत्व आनुषगनु]वर्तिनि ॥४४॥

---

१. कोशे 'शृगारत्वेन' इत्यपपाठः ।
२. कोशे 'वाज्ञो' इत्यपपाठः । ऋ० ५।१।२॥
३. कोशे 'वर्णस्यादभास्वरात्मका' इत्यपपाठः ।
४. कोशे 'घतोस्यन्नित्यर्थे' इत्यपपाठः ।    ५. धा० ६।१२६॥
६. कोशे 'रेशयदासिगः' इत्यपपाठः । 'रेशयदारिणः' (निरु० ६।१४) इत्येव मूलपाठः प्रसिद्धः । दुर्गः 'रेशयदासिनः' इति पाठं व्याख्याय 'रेशयदारिणः' इति पाठभेदत्वेन स्वीकरोति । स्कन्दः 'रिशदासिनः' 'रेशयदासिनः इति पाठद्वयं विवृणोति । तस्यैवानुकरोति नीलकण्ठः ।
७. कोशे 'शिरतो ह्यसितुं रूप शीलं' इत्यपपाठः ।
८. कोशे '०वर्णितिम्' इत्यपपाठः ।
९. कोशे 'ददातेष्टवि' इत्यपपाठः । धा० ३।९॥
१०. सुदत्रः कल्याणदानः । निरु० ६।१४॥
११. धा० २।५५॥    १२. कोशे 'सुषिदत्रो०' इत्यपपाठः ।
१३. कोशे 'कलाणविद्य' इत्यपपठः । सुविदत्रः कल्याणविद्यः । निरु० ६।१४॥
१४. कोशे 'सुविद्या स्यात्तु लौकिका' इत्यपपाठः ।
१५. कोशे 'विकृतं रूपसृष्टस्य सज्ञे' इत्यपपाठः । धा० १।१०३६॥

आनुपूर्वस्य नामेदम् [1]अनुषक्तमितीरितम् ।
वनोतेस्तूर्णपूर्वस्य[2] कर्तरीप्रत्यये कृते ॥४५॥
ऊकारे ह्रसिते चैव [णलोपे] [3]तुर्वणिर्भवेत् ।
क्षिप्रं संभजते यस्तु स [4]तूर्णवनिरुच्यते ॥४६॥
गीःपदं[5] ह्रसितं कृत्वा वनोतेरादितो यदा ।
कर्मण्यस्प्रत्यये[6] कुर्याद् गिर्वणा नैगमं तदा ॥४७॥
अभिधेयस्तु देवोऽस्य गीर्वाणो लौकिक[:]स्मृतः ।
गी[ः]स्तुतिर्यस्य बान[:]स्याद् गीर्वाणोऽसौ [7]वनेर्घञि ॥४८॥
असूर्ते [8]सूर्त्ते इत्येते यस्मिन् मन्त्रे[9] व्यवस्थिते ।
रजसीति पदं तत्र सप्तम्यां लोकवाचि तत् ॥४९॥
तुल्याधिकरणस्तेन सूर्ते इत्यपि लक्ष्यते ।
सुपूर्वस्य तु निष्ठायाम् [10]ईर्त्तेर्नैगमवृत्तितः ॥५०॥
इडभावेन सूर्ते स्याद्धात्वादेः पूर्वरूपतः ।
सुसमीरित[11] [12]इत्यर्थो रजसस्तद्विशेषणम् ॥५१॥
विस्तीर्णे[13] लोक इत्यर्थस्तस्याधारत्वकीर्तनात् ।
अपेक्षितमिहाधेयम् असूर्ते त्विति कथ्यते ॥५२॥

---

१. कोशे 'अनुशक्तिमिती०' इत्यपपाठः । आनुषगिति नामानुपूर्वस्यानुषक्तं भवति । निरु० ६।१४॥

२. कोशे 'वनौतेस्तूर्णपूर्वस्य कर्तरि' इत्यपपाठः । धा० ८।८॥

३. कोशे 'तुर्बणीमिवेत्' इत्यपपाठः । तुर्वणिस्तूर्णवनिः । निरु० ६।१४॥

४. कोशे 'तूशवनि०' इत्यपपाठः ।

५. कोशे 'निः पदं हसितं' इत्यपपाठः ।

६. कोशे 'कर्मण्यणप्रत्ययं कुर्यात् निर्वा नैगमं' इत्यपपाठः । गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति । निरु० ६।१४॥

७. कोशे 'वने घञि' इत्यपपाठः ।

८. कोशे 'सूर्यं' इत्यपपाठः ।

९. असूर्त्ते सूर्त्ते रजसि निशत्ते (ऋ० १०।८२।४) ।

१०. कोशे 'ईर्तो नैगम०' इत्यपपाठः । धा० २।८॥

११. असुसमीरिता सुसमीरिते वाततसमीरिता माध्यमिका देवगणाः । निरु० ६।१५॥

१२. कोशे 'जत्वर्थो' इत्यपपाठः ।

१३. कोशे 'विस्तीर्णो' इत्यपपाठः ।

वात[:]पूर्वस्य [1]वाच्यस्तु निष्ठायामे जसो यदा ।
असूर्ते[2] पूर्ववत्सिद्धमसुना ये समीरिताः ॥५३॥
प्रेरिता वायुना ते स्युर्मरुतो माध्यमाः स्फुटम् ।
अमेत्येतत्[3] पदं तावद् आत्मवाचीत्युदाहृतम्[4] ॥५४॥
अमामयीपदस्यार्थं [5]वदतात्ममयीति तु ।
अमापूर्वाञ्चतेर्धातोः[6] कर्तरि क्विपि नैगमम् ॥५५॥
अमाकारयकारत्वे [7]ह्यम्यक् कुत्वे नलोपतः ।
अमाक्तेति[8] ततश्चार्थं[9] आत्मावर्तेत्यर्थ एव सः ॥५६॥
आत्मनैव गता [10]शत्रुं नाक्षिप्ता स्वयमेव सा ।
शत्रूणामथवात्मानम्[11] [12]ऋष्टेरेतद्विशेषणम् ॥५७॥
अभिपूर्वस्य वाञ्चेः [13]स्याद् भकारस्य मकारतः ।
इकारस्य[14] यणादेशाद् [15]अभ्यक्ताम्यगुदाहृता ॥५८॥
शत्रूनभिगतेत्यर्थस्त्वन्यथा [16]कैश्चिदिष्यते ।
अञ्चेरकार[17] आदिः स्याद् माशब्दस्यात्मवाचिनः ॥५९॥
आकारस्य यकारत्वं [18]चकारश्च ततः परः ।
पूर्वेणान्यत्समानं[19] स्याद् अम्यगेवं प्रसिध्यति ॥६०॥

---

१. कोशे 'वाच्यासु' इत्यपपाठः ।
२. कोशे 'असूर्त्तेः' इत्यपपाठः ।
३. कोशे 'अमेत्येकपद०' इत्यपपाठः ।
४. द्र०—श्लोक १२,२१।
५. कोशे 'पदता०' इत्यपपाठः ।
६. कोशे 'अमांपूर्वा०' इत्यपपाठः । धा० १।२०३॥
७. कोशे 'ह्यमकुत्वेन लोपितः' इत्यपपाठः ।
८. अम्यक् सा त इन्द्र ऋष्टिः (ऋ० १।१६९।३) अमाक्तेति वाम्यक्तेति वा । निरु० ६।१५॥
९. कोशे '०चार्थं आमाक्ते०' इत्यपपाठः ।
१०. कोशे ऽनुस्वाररहितःपाठः ।
११. गतेति शेषः ।
१२. कोशे 'ऋषेरेत०' इत्यपपाठः ।
१३. कोशे 'स्या भकारस्य' इत्यपपाठः ।
१४ कोशे "उकारस्य' इत्यपपाठः ।
१५. कोशे 'अह्यक्ता०' इत्यपपाठः ।
१६. स्कन्दव्याख्यानमत्रानुसन्धेयम् ।
१७. कोशे 'अञ्चेरकार' इत्यपपाठः ।
१८. कोशे 'अकारश्च' इत्यपपाठः ।
१९. कोशे '०समनं स्यात् सम्यगेवं' इत्यपपाठः ।

याम्मामक्तेति मन्यन्ते प्रत्येकं रिपवस्सदा ।
सा माक्ताम्यगिति[1] प्रोक्ता परोक्षतमवृत्तितः ॥६१॥
यादृशेत्यस्य शब्दस्य सप्तम्यां [2]मिनि नैगमे ।
यादृश्मिन्निति[3] रूपं स्याद् [4]अकारस्यापि लोपतः ॥६२॥
यादृगित्यस्य [5]च न्याय्यं यादृशे यादृशीत्यपि ।
जारस्सन्याति यो नित्यमुस्रो गाः प्रति कामतः ॥६३॥
स लोके जारयायी स्यात् जारयायि तु वैदिकम् ।
आरपूर्वस्य[6] यातेस्स्याद् णिनौ [7]ताच्छीलिके युकि ॥६४॥
उस्रशब्दस्य पुंभावात् लिङ्गमेव तु नैगमम् ।
उस्रः पितेव मन्त्रे[8] हि तस्यैतस्माद्विशेषणम् ॥६५॥
जारयायिपदं [9]केचिद् आख्यातमिति मन्वते ।
अजनीत्येव युक्तं स्याद् अग्निर्यज्ञेषु जायते ॥६६॥
चिणः[10] स्थाने [11]जनेरिष्टमजायीति हि वैदिकम् ।
नकारस्य [12]यकारत्वमुपधायाश्च दीर्घता ॥६७॥

---

१. कोशे 'समाक्ता०' इत्यपपाठः ।

२. कोशे 'स्मिनि' इत्यपपाठः ।

३. कोशे 'यादृशस्मिन्निति' इत्यपपाठः ।

४. कोशे 'आकार०' इत्यपपाठः ।

५. कोशे 'चान्याय्ययादृशे योदृशी०' इत्यपपाठः ।

६. कोशे 'जा पूर्वस्य तु याते०' इत्यपपाठः । धा० २।४०॥

७. कोशे 'तच्छीलिके' इत्यपपाठः ।

८. कोशे 'उस्र' वितेव मन्त्रो' इत्यपपाठः । उस्रः पितेव जारयायि यज्ञैः (ऋ० ६।१२।४) उस्र इव गोपिताजायि यज्ञैः । निरु० ६।१५॥

९. दुर्गोऽत्र 'अजायि' इति यथाभाष्यं व्याचख्यौ । स्कन्दोऽपि 'अन्ये तु' इति पक्षान्तरं प्रदर्शयति ।

१०. कोशे 'चिणस्थाने' इत्यपपाठः । चिणः प्रसङ्गे, विकरणे चिणीति यावत् ।

११. कोशे 'जनेरिष्टमयायीति' इत्यपपाठः ।

१२. कोशे 'तकार०' इत्यपपाठः ।

अनिघातादयुक्तं[1] चेच् छान्दसत्वान्न दुष्यति ।
अग्रपूर्वस्य [2]यातेस्स्याद् [3]भाष्येऽग्रगमनेन तत् ॥६८॥
अर्हार्थे वाग्रशब्द[ात्] स्यात् [4]घस्तस्मिन्नग्र इत्यपि ।
आकारश्च जस[ः]स्थाने तस्मात्तेनाग्रिया भवेत् ॥६९॥
अग्राहास्त्वग्राः प्रोक्ता अग्रसंपा[दिनश्च ते] ।
अग्रशब्दान्तलोपोऽपि[5] पक्षेऽस्मिन्परिकल्प्यते ॥७०॥
इयेति तद्धितो यद्वा स्वार्थे स्यादग्रशब्दतः ।
पचेर्ल्युटि[6] [7]चनोऽन्नं स्यात् [8]कर्मण्येव पलोपतः ॥७१॥
पचनं[9] त्विति युक्तं स्यात् पच्यते तद्धि भुक्तये ।
निष्ठायां तु पचेर्धातोः कुत्ववत्वविवर्जनात् ॥७२॥
आकारे च [10]सुपः स्थाने [11]पचता वैदिकं पदम् ।
पक्वः पक्वौ तथा [12]पक्वा इत्येवं न्याय्यमिष्यते ॥७३॥
शुक्पूर्वस्य[13] रुधेर्धातोः क्विपि पूर्वान्तलोपतः ।
शुरुधस्त्विति[14] वेदे स्यात् शुग्रुधस्त्विति लौकिकम् ॥७४॥
आपोऽनेनाभिधीयन्ते शुचो दीप्तेर्निरोधनात् ।
माङो[15] निष्ठातकारस्य नञ्पूर्वस्य तु नत्वतः ॥७५॥

---

१. कोशे 'अग्निघाता०' इत्यपपाठः । तिङ्ङतिङः (अष्टा० ८।१।२८) इति निघातप्रसङ्गादयुक्तम् इत्यर्थः । २. धा० २।४०॥

३. अग्रगमनेनेति वा, अग्रगरणेनेति वा, अग्रसम्पादिन इति वा । अपि वाग्रमित्येतदनर्थकमुपबन्धमाददीत । निरु० ६।१६॥ ४. कोशे 'ह्यस्तस्मिन्नग्र' इत्यपपाठः ।

५. कोशे 'अत्रशब्दन्त०' इत्यपपाठः ।

६. कोशे 'पचेर्ल्यटि' इत्यपपाठः । धा० १।१०४५॥

७. चन इत्यन्ननाम । पचतिर्नामीभूतः । निरु० ६।१६॥

८. कोशे 'कर्मण्यैव' इत्यपपाठः । ९. कोशे 'पचनस्त्विति' इत्यपपाठः ।

१०. कोशे 'सुवस्थाने' इत्यपपाठः । निष्ठाया अडागमोऽप्यत्रानुष्ठेयः ।

११. सात्त्वं द्विवचनं स्याद् यत्र ह्येकवचनार्थः प्रसिद्धं तद् भवति । निरु० ६।१६॥

१२. कोश 'पस्व' इत्यपपाठः । १३. कोशे 'शुत्पूर्वस्य रुद्धे०'इत्यपपाठः । धा० ७।१॥

१४. कोशे 'शुरूध०' इत्यपपाठः । शुरुध आपो भवन्ति । शुचं संरुधन्ति । निरु० ६।१६॥

१५. धा० ३।६॥

अमिनो[1] यदि वेदे स्याद् अमितो लौकिको भवेत् ।
न विद्यते मितं यस्य प्रमाणं सोऽमितः स्मृतः ॥७६॥
अमितोऽहिंसितो वा [2]स्यान् मिनोतेर्वधकर्मणः ।
उक्तमप्यमितो वेति भाष्यकारेण [3]तत्तथा ॥७७॥
अनैकार्थ्याच्च[4] धातूनां मिनोतेर्वधकर्मता[5] ।
मीनातेस्तु[6] यदा रूपं ह्रस्वत्वं कल्प्यते तदा ॥७८॥
पाठोऽप्यमोत[7] इत्येवं तदा भाष्यस्य गम्यताम् ।
जज्झतीरिति[8] शब्दस्य वाच्या आपः प्रकीर्तिताः ॥७९॥
जज्झज्जज्झिति[9] शब्दात् ताः कुर्वन्त्यो यन्ति मेघतः ।
जज्झन्त्यस्तास्ततः[10] प्रोक्ता एवंशीलाः पतन्ति ताः ॥८०॥
नाम्नामाख्यातजत्वाद्वा प्रकृतिप्रत्ययाविह[11] ।
कल्प्यावित्युज्झतिर्धातुः[12] शत्रन्तोऽक्षरसाम्यतः ॥८१॥
शपः श्लावा[दि]लोपेन त्वभ्यास[कार्यतस्ततः] ।
[स्त्रियां ङीप्प्रत्ययेनैव जज्झतीति प्रसिध्यति] ॥८२॥
उज्झन्त्यो[13] हि यथामेघानापो यान्ति दिवं प्रति ।
तथैव विद्युतो[14] भानुरित्येवमुपपद्यते ॥८३॥

---

१. कोशे 'अमिनं' इति पाठः । अमिनोऽमितमात्रो महान् भवत्यप्यमितो वा । निरु० ६।१६॥
२. कोशे 'स्याम्मिनोतो०' इत्यपपाठः । निघ० २।१९॥
३. कोशे 'तन्तथा' इत्यपपाठः । ४. कोशे 'अनेकार्थ्याच्च' इत्यपपाठः ।
५. कोशे '०वधकर्मणा' इत्यपपाठः ।
६. कोशे 'मीनतेस्तु' इत्यपपाठः । धा० ९।४॥
७. कोशे 'पाठो ह्यमित' इत्यपपाठः ।
८. कोशे 'जर्जतीरिति' इत्यपपाठः । जज्झतीरापो भवन्ति शब्दकारिण्यः । निरु० ६।१६॥
९. कोशे 'जझर्जटित्ति' इत्यपपाठः ।
१०. कोशे 'जझत्यन्तास्ततः' इत्यपपाठः ।
११. कोशे '०प्रत्ययापिह' इत्यपपाठः ।
१२. कोशे '०वित्यझतिधातुः' इत्यपपाठः । धा० ६।२१॥
१३. कोशे 'उझन्त्यो हि यदा मेवावागो' इत्यपपाठः । १४. ऋ० ५।५२।२॥

स्कुञ[1] आप्रवणार्थस्य निष्ठायामप्रतिष्कुतः ।
प्रवतेर्गतिकर्मत्वात्[2] स्कुनातेश्च[3] तदर्थता ॥८४॥
इन्द्रोऽप्रतिष्कुतः[4] कैश्चिद् युद्धेनाभिगतो बलात् ।
अप्रतिस्खलितो यद्वा शूरत्वेनाप्रमादतः ॥८५॥
शदेस्तु[5] नैगमं रूपं [6]शाशदानो यङो लुकि ।
परस्मैपदवृत्तित्वाद् नित्यमेव यङो लुकि ॥८६॥
शाशाद्यमान[7] इत्येतद् यङन्तस्यास्य भाषिकम् ।
शातयन्निति तस्यार्थः [8]शदेश्शातनकर्मतः ॥८७॥

॥ इति [पद्मभगवत्प्रणीते] निरुक्त[श्लोक]वार्त्तिके ऐकपदिके तृतीय[ाध्याय]स्य तृतीयः पादः ॥

—:०:—

१. कोशे 'कुञ आप्रप्रेणा०' इत्यपपाठः । धा० ६।१६॥
२. धा० १।१००६॥ ३. कोशे 'कुनातेश्च' इत्यपपाठः ।
४. अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा । निरु० ६।१६॥ स्कन्द-नीलकण्ठाभ्याम् 'अप्रतिष्कृतः' स्थाने 'अप्रतिस्कुतः' पदं व्याख्यातम् ।
५. कोशे 'शतेस्तु' इत्यपपाठः । धा० १।६०८॥
६. कोशे 'शाशदाने यजो युकि' इत्यपपाठः ।
७. कोशे 'शाशरयमान' इत्यपपाठः । शाशदानः शाशाद्यमानः । निरु० ६।१६॥
८. कोशे 'शादेश्शादन०' इत्यपपाठः ।

# चतुर्थः पादः

सर्पतीति [1]सृपेर्धातोर्युचि स्यात्सर्पणस्त्विति ।
रकि[2] तु प्रत्यये तस्य [3]सृप्र इत्यपि वैदिकम् ॥१॥
करस्नशब्दवाच्योऽसौ[4] सर्पिर्वेत्याह भाष्यकृत् ।
सुशिप्रं[5] पुनरेतेन सृप्रेणैवोपवर्णितः ॥२॥
सकारस्य सृपेश्चुत्वे [6]तस्मिन्नेवोपधेत्वतः ।
हनू च नासिके चैव [7]शिरस्त्राणं तथा क्वचित् ॥३॥
शिप्रशब्दाभिधेयानि[8] सर्पणेनैव हेतुना ।
शोभने हि हनू यस्य नासिके वाथवेतरत् ॥४॥
सुशिप्रस्स तु विज्ञेयः........................पर: ।
[रमेरे]तद्भवेद्रूपं रामः कर्मणि [9]कारके ॥५॥
क्विप्प्रत्यये[10] कृते रंसु रम्येषु देशेषु[11] ।
..............................संपद्यते दहन् ॥६॥
अस्प्रत्यये द्विपूर्वस्य [12]बृहतेर्वृद्धिकर्मण ।
गुणे चैव[13] .................................... ॥७॥

---

१. कोशे 'स्पपेर्धातोः लिटि स्या' इत्यपपाठः । धा० १।१०३२॥

२. कोशे 'रिकि' इत्यपपाठः ।

३. कोशे 'सृप इत्यचि' इत्यपपाठः । सृप्रः सर्पणादिदमपीतरत् सृप्रमेतस्मादेव सर्पिर्वा तैलं वा । निरु० ६।१७॥

४. कोशे 'करस्सुशब्दवाचो सौ वार्पिर्वे०' इत्यपपाठः ।

५. कोशे 'सुशिप्रः पुनरेतेन सृपेनैवो०' इत्यपपाठः । सुशिप्रमेतेन व्याख्यातम् । निरु० ६।१७॥

६. तस्मिन्=रकि प्रत्यये ।

७. अयमर्थो भाष्यकृता नोदलेखि, न च दुर्गेण समग्राहि, स्कन्देन तु निरदेशि ।

८. शिप्रे हनू नासिके वा । निरु० ६।१७॥

९. कोशे 'कारणे' इत्यपपाठः ।

१०. कोशे 'क्षिप्रत्यये कृते रासु' इत्यपपाठः । रंसु रमणात् । निरु० ६।१७॥

११. यथाकोशं पाठः ।

१२. कोशे '०कर्मणा' इत्यपपाठः । धा० १।७७१॥

१३. द्विबर्हा द्वयोः स्थानयोः परिवृढो मध्यमे च स्थाने उत्तमे च । निरु० ६।१७॥

..................................................प्रभुः ।
विद्युत्सूर्यात्मना यद्वा परिवृद्धस्तयोरिति ॥८॥
क्रमेर्डप्रत्ययेऽक्रः[1] स्यादाङि निर्ह्सिते श्रुतौ ।
भवेदाक्रम.................................................... ॥९॥
[आक्रम्य] ते ह्यसौ [2]योद्धुम् आक्रमो[ऽपि] घञोष्यते ।
लुप्तान्तमुरुशब्दञ्च[3] कुर्वाणादानमेव च ॥१०॥
आदायोराण इत्येतत्संस्कार्यं वैदिकं पदम् ।
उरु कुर्वाण इत्यर्थे उराण इति वर्तते ॥११॥
स्वल्पं [4]चोपहृतं हव्यं बहु कुर्वन् [5]हुताशनः ।
देवस्थानानि सर्वाणि यातीत्यर्थो विवक्षितः ॥१२॥
स्त्यायतेर्ल्युटि[6] रूपं [7]स्यात् स्त्यानं संघातकर्मणः ।
स्त्यापना वा णिजन्तस्य पुक्यापोऽत्र समीरिता: ॥१३॥
संहता हिमभावेन [8]मृदं संघातयत्यपि ।
इकारस्तु यदाप्यन्यस्तकारस्योपरि स्थितः ॥१४॥
स्तियानां[9] पदमापन्नं छान्दसं [10]पुक्च लुप्यते ।
स्तियाशब्दाभिधेयानाम् अपां पालयिता हि यः ॥१५॥

---

१. कोशे 'सौकुमेर्डप्रत्यये क्र स्यादाङि निर्ह्सिते' इत्यपपाठः । अक्र आक्रमणात् । निरु० ६।१७॥

२. कोशे 'योद्धु आक्रमो घञिष्यते' इत्यपपाठः ।

३. कोशे 'लुप्तान्तमरुशब्द०' इत्यपपाठः । उराण उरु कुर्वाणः । निरु० ६।१७॥

४. कोशे 'चापहृतं हव्य बहु कुर्वत्' इत्यपपाठः ।

५. ऋ० ४।७।८॥ ६. धा० १।६५६॥

७. कोशे 'स्या स्त्यान संघात०' इत्यपपाठः । स्तिया आपो भवन्ति स्त्यायनात् । निरु० ६।१७॥

८. कोशे 'मृदा' इत्यपपाठः ।

९. कोशे 'स्तियाना पदमापन्त' इत्यपपाठः । निघण्टौ 'स्तियानाम्' इत्येव षष्ठ्यन्तं पदमाम्नायते, उदाहरणे ( ऋ० ६।४४।२१) च ।

१०. कोशे 'पुल्च' इत्यपपाठः ।

स्तियापस्सन्नसावग्निः[1] स्तिपा[2] यालोपतः क्विपि ।
स्तिपात्वं [3]प्रकृतान्यज्ञान् पालयन्नङ्गभावतः ॥१६॥
स्थितपस्सन्नसौ[4] प्रोक्तस्थकारस्य तु तत्वतः ।
लोपतश्चैव निष्ठायाः क्विप्येव स्यात् [5]स्तिपा इति ॥१७॥
स्तिपं[6] रूपं वदन्त्यन्ये [7]यथोक्तार्थोपपत्तितः ।
जवतेश्च[8] [9]रुहेश्चैव [10]ज[बा]र्वादित्यमण्डलम् ॥१८॥
जरतेर्वा[11] रुहेश्चैव [12]गिरतेर्वा रुहेरपि ।
जवतेर्वस्य [13]बत्वं स्याद्रेफस्य [14]जरतेरपि ॥१९॥
गिरतेश्च गकारस्य जत्वं चाप्यधिकं भवेत् ।
........................................ ॥२०॥

[इतोऽग्रे ग्रन्थो नोपलभ्यते]

—:o:—

१. कोशे '०सन्नस्सावग्नि स्तिपा' इत्यपपाठः ।

२. स्तिपा स्तियापालन उपस्थितान् पालयतीति वा । निरु० ६।१७। दुर्गमतेन कूपोऽभिधेयः, स्कन्दमतेन त्वग्निर्वाच्यः । नीलकण्ठः स्कन्दमतमनुसरति ।

३. कोशे 'स्तिपात्वं प्रकृतान्यज्ञात्' इत्यपपाठः ।

४. कोशे 'स्थितवस्सन्नसौ प्रोक्तस्तन्थकरस्य' इत्यपपाठः ।

५. कोशे 'सनिपा' इत्यपपाठः ।

६. कोशे 'स्त्विपं' इत्यपपाठः ।

७. कोशे 'यथोक्तोर्थो०' इत्यपपाठः ।

८. कोशे 'जपन्तश्च' इत्यपपाठः ।

९. धा० १।६१२।

१०. जबारु जवमानरोहि जरमाणरोहि गरमाणरोहीति वा । निरु० ६।१७।

११. धा० १।८६३।

१२. कोशे 'निरतेर्वा' इत्यपपाठः । धा० ६।११७।

१३. कोशे 'न्वत्वं' इत्यपपाठः ।

१४. कोशे 'जवतेरपि' इत्यपपाठः ।

# शोधन-पत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ४ | २३ | निघटवः | निघण्टवः | ७३ | १८ | वतुनः | वस्तुनः |
| १४ | १९ | निपातस्तू | निपातास्तु | ७३ | २७ | १ | ६ |
| १६ | १ | समुक्तो | समुक्तौ | ७५ | १९ | उत्पन्नस्यव | उत्पन्नस्यैव |
| १६ | १५ | वाम्युपे व्यं | वाम्युपेतव्यं | ७७ | १ | तिरोभा | तिरोभाव |
| १७ | १२ | सप्रतीयते | संप्रतीयते | ७७ | १० | पुनव | पुनर्व |
| १८ | ६ | घटाऽपी | घटोऽपी | ७९ | १ | भन्न | भिन्न |
| २३ | ७ | प्रवृत्यर्थः | प्रकृत्यर्थः | ८७ | १९ | रात्मा | रात्मा६ |
| २४ | १ | चैतदेवास्य | चैतदेवास्य | ८९ | ४ | भदेतः | भेदतः |
| २५ | ४ | निष्पन्न | निष्पन्नं | ९३ | ७ | सम्बन्धः | सम्बद्धः |
| ३५ | २३ | क्रियभि | क्रियाभि | ९४ | ६ | गयन | गमन |
| ३५ | २४ | विभक्तिव्यय | विभक्त्यव्य | ९७ | १४ | दावश्वर्यें | दावैश्वर्यें |
| ३८ | २३ | व्रजात | व्रजति | ९८ | ८ | इषदर्थं | ईषदर्थं |
| ३९ | १९ | नामौ | नामो | ११२ | १० | तमसा | तमसो |
| ४२ | २५ | चतुष्ठुवं | चतुष्ट्वं | १२१ | ८ | असम्यम्यं | अस्मभ्यं |
| ४४ | २ | यौ पद्येन | यौगपद्येन | १२४ | १७ | विसृजत्यव | विसृजत्येव |
| ४६ | १६ | कालद्य | कालाद्य | १२८ | १८ | सर्व नम | सर्वनाम |
| ४७ | ६ | नव | नैव | १२९ | ४ | पाषः | पोषः |
| ४७ | १० | शाक्तलक्षणः | शक्तिलक्षणः | १२९ | २८ | एमाहुः | एवमाहुः |
| ४७ | २३ | प्राथः | प्रायः | १३२ | ४ | स्याध्वरा | स्याध्वरो |
| ४७ | २६ | प्रति | प्राति | १३४ | ९ | र्घाता | र्घातो |
| ५१ | २१ | ४४८ | ४४९ | १३८ | २० | उह्यते | ऊह्यते |
| ५४ | २० | निषेघा | निषेधो | १४४ | ११ | चावते | चावचे |
| ५६ | ११ | शब ा | शब्दा | १४६ | १ | निश्वत्य | निश्चित्य |
| ५८ | २५ | कोमे | कोशे | १४९ | २४ | वाङ्नमसु | वाङ्नामसु |
| ६४ | ३ | षण्णा | षण्णा | १५० | २ | वाच्यार्ा | वाच्यापि |
| ६५ | २४ | ६५५ | ५६५ | १५० | ७ | गाचरा | गोचरा |
| ६६ | १८ | ६७४ | ५७४ | १५२ | २६ | पृथिवो | पृथिवी |
| ६७ | १८ | दमत्राच्यते | दसत्रोच्यते | १५३ | १८ | समादय | समादाय |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १५८ | ६ | मब्वगा | मब्वयो | २८० | २७ | प्रमत्तं | प्रमत्तं |
| १५८ | १८ | स्यतातां | स्यातां | २८० | २७ | ब्रह्मचर्यं | ब्रह्मचर्यं |
| १६० | ६ | काकाटि | काकोटि | २८० | २८ | ब्र ुया | ब्रूया |
| १६१ | ६ | घाते | घातो | २८३ | १८ | द्वंश्यते | द्रंश्यते |
| १६५ | १४ | भ्र ुणहे | भ्रूणहे | २८३ | २५ | इन्त्रवर्णः | मन्त्रवर्णं |
| १६६ | २-४ | विल्व | बिल्व | २८४ | २७ | अभिमत | अभिमत्त |
| १७० | ७ | प्रस्वेति | प्रथस्वेति | २८५ | ३ | लोते | लोपे |
| १७० | १६ | अषवे | ओषधे | २८६ | ५ | योद्ध | योद्धु |
| १७८ | १८ | सांकुल्येन | साकल्येन | २८६ | १३ | प्रयागे | प्रयोगे |
| १७६ | १४ | ब्र ुवीत् | ब्रवीत् | २६० | २० | काशे | कोशे |
| १८३ | १६ | शासनान् | शासनम् | २६२ | १५ | क्वचिल्कं | क्वाचिल्कं |
| १८७ | १८ | पक्षिके | पाक्षिके | २६८ | ६ | वाच्यानम् | वाच्यानाम् |
| १६५ | २८ | शकल्या | शाकल्या | ३०३ | १३ | मिधीयते | भिधीयते |
| २०१ | ८ | वाऽयते | वाऽर्यते | ३०४ | २२ | कोवे | कोशे |
| २०४ | २ | शृणयात् | शृणुयात् | ३११ | १३ | परोहित | पुरोहित |
| २०४ | ४,७ | ह्यप | ह्यूप | ३१२ | १ | प्राहु | प्रादु |
| २०७ | १४ | कमान् दुग्धे | कामान् दुग्धे | ३१६ | ५ | देहा | देहो |
| २२७ | २५ | स्मन्द | स्कन्द | ३२४ | १३ | निवत्ति | निवृत्ति |
| २४६ | २० | क्षन्ति | शान्ति | ३२६ | १२ | सडागमे | सुडागमे |
| २५७ | २३ | महाभाभाष्य | महाभाष्य | ३२६ | २२ | १।३।२१० | १।३२।१० |
| २६७ | १४ | परिशाद | पुरिशाद | ३३० | ५ | शृणास्ते | शृणाते |
| २६७ | २८ | षत्वे | षत्वे | ३४१ | २० | कन्त | क्रन्त |
| २६६ | १६ | भिष्यते | मिष्यते | ३४३ | ४ | निर्दशः | निर्देशः |
| २६६ | १७ | मिवास्यते | भवास्यते | ३४३ | १३ | कन्त | क्रन्त |
| २७२ | ८ | माऽहात्म्यात् | माहात्म्यात् | ३४५ | १८ | ३।२।७८ | २।२।१७८ |
| २७४ | १ | मिधीयते | भिधीयते | ३४६ | १ | प्रत्यययेे | प्रत्यये |
| २७४ | २२ | बलकः | फलकः | ३४६ | ६ | ममो | समो |
| २७४ | ४ | चोपन्नो | चोपपन्नो | ३४६ | ६ | दात्वद | दात्वमुद |
| २७८ | २७ | ह ब्राह्मण | ह वै ब्राह्मण | ३४६ | ६ | व्यत्मुयये | व्यत्यये |
| २७८ | २८ | असूयाका | असूयका | ३४७ | १३ | विाद्याद् | विद्याद् |
| २७६ | २६ | असमर्द | असमर्थ | ३४७ | १३ | ऋषि | ऋषिः |
| २८० | १८ | मतसा | मनसा | ३४८ | १० | कराति | करोति |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ३५० | १ | मब्रीत् | मब्रवीत् | ४४४ | २ | नात्मन | नात्मान |
| ३५१ | १८ | कमणः | कर्मणः | ४४८ | १६ | ज्यायसा | ज्यायसो |
| ३५३ | ३ | दरात् | दूरात् | ४५० | २१ | ब्रायु | जरायु |
| ३५६ | १६ | सिरु० | निरु० | ४५४ | ४ | वत्तत्वा | वृत्तत्वा |
| ३६४ | ११ | समुद्वः | समुद्भव० | ४६७ | १३ | मकारौ | मकारो |
| ३७६ | २१ | स्थाणः | स्थाणः | ४६७ | १६ | दीप्तेज | दीप्ततेज |
| ३७६ | २२ | गणातेः | गुणातेः | ४९३ | १४ | दष्टान्त | दृष्टान्त |
| ३७६ | २२ | तत्राणोघ्न | तत्राक्षैराघ्न | ५०२ | १५ | उर्जयद्वल | ऊर्जयद्वल |
| ३८९ | १४ | सृग्यम् | मृग्यम् | ५१६ | ७ | नउ क्तगुणो | न उक्तगुणो |
| ३९३ | ७ | धनि | घनि | ५१७ | १० | तेघातो | तेर्घातो |
| ४०६ | १५ | रादभवा | रोद्भवा | ५४४ | ५ | निर्दशः | निर्देशः |
| ४०८ | २ | पादिम् | पादितम् | ५५० | २३ | हिच्छकं | हिच्छत्रकं |
| ४१० | ३ | रफस्य | रेफस्य | ५५३ | १५ | वक | वृक |
| ४१० | ८ | ददादिना | ददातिना | ५६० | १४ | ग्राषधयो | ग्रोषधयो |
| ४१५ | ६ | संसष्टं | संसृष्टं | ५६२ | ७ | कवो | कूवो |
| ४२४ | २ | नाशाऽस्ति | नाशोऽस्ति | ५६८ | १३ | लापे | लोपे |
| ४४२ | १ | सादस्य | सादृस्य | ५७४ | २६ | यथो | यथा |

—:०:—